मण्डपं तत्र कुर्व्वीत चतुर्भिस्तोरणैर्युतम् ॥
वितानपुष्पमालादि पताकाध्वजशोभितम् ।
अङ्कुरार्पणपूर्व्वेण यज्ञवेदिञ्च कल्पयेत् ॥
ऋत्विग्भिः सार्द्धमाचार्य्यो दीक्षितो मङ्गलस्वनैः ।
रथमारोप्य देवेशं छत्रचामरसंयुतम् ॥
पठन्वै शाकुनान् मन्त्रान् यज्ञशालां प्रवेशयेत् ।
स्वस्तिवाचनपूर्व्वेण कुर्य्यात्कौतुकबन्धनम् ॥
पूर्णकुम्भान् शस्ययुतान् पालिकाः परितः क्षिपेत् ।
अभ्यर्च्य गन्धपुष्पाद्यैः पश्चादावरणं यजेत् ॥
वासुदेवमनन्तञ्च सत्यं यज्ञं तथाच्युतम् ।
महेन्द्रं श्रीपतिं विश्वं पूर्णकुम्भेषु पूजयेत् ॥
पालिकाः सद्गिगीशांश्च दीपिकास्तथ हेतयः ।
तोरणेषु च चण्डाद्याः पूजनीया यथाक्रमम् ॥
वेद्याश्च दक्षिणे भागे कुण्डं कुर्य्यात्सलक्षणम् ।
निक्षिप्याग्निं विधानेन इध्माधानात्समाचरेत् ॥
आचार्य्योपासनाग्नौ वा लौकिके वा नृपोत्तम ! ।
आधानं पूर्व्ववत् कृत्वा पश्चात्कर्म्म समाचरेत् ॥
प्रातः स्नात्वा विधानेन पूजयित्वा सनातनम् ।
प्रत्यृचं पावमानीभिर्जुहुयात्पायसं शुभम् ॥
वैष्णवैरनुवाकैश्च मन्त्रैः शक्त्या पृथक् पृथक् ।
चतुर्भिर्व्यापकैश्चान्यैः प्रत्येकं जुहुयाद् घृतम ॥
वैकुण्ठं पार्षदं हुत्वा होमशेषं समाचरेत् ।
ताभिरेव च पुष्पाणि दद्याच्च जगताम्पतेः ॥
उद्बोधयित्वा शयने देवदेवं जनार्दनम् ।

पश्चात् सर्वमिदं कुर्य्यादुत्सवार्थं द्विजोत्तमः ॥
अथ नावं सुविस्तीर्णां कृत्वा तस्मिन् जले शुभे।
पुष्पमण्डपचिह्नादि समाकीर्णसमन्विताम् ॥
सुतोरणवितानाद्यां पताकाध्वजशोभिताम्।
तस्मिन् कनकपर्य्यङ्के निवेश्य कमलापतिम् ॥
अर्च्चयित्वा विधानेन लक्ष्म्या सार्द्धं सनातनम्।
पुष्पाञ्जलिशतं तत्र मन्त्ररत्नेन कारयेत् ॥
श्रीपौरुषाभ्यां सूक्ताभ्यां दद्यात्पुष्पाञ्जलिं ततः।
परितः शक्तयः पूज्या स्तथावरणदेवताः ॥
दीपैर्नीराजनं कृत्वा बलिं दद्यात् समन्ततः।
नौभिः समन्ताद्बहुभि र्गीतवादित्रसंयुतम् ॥
दीपिकाभिरनेकाभिः स्तोत्रैरपि मनोरमैः।
प्लावयन्तो जगन्नाथं तत्र तत्र जलाशये ॥
फलैर्भक्ष्यैश्च ताम्बूलैः कलशैर्दधिमिश्रितैः।
कुङ्कुमैः कुसुमैर्लाजैर्विकिरन्तः परस्परम् ॥
गानैर्वेदैः पुराणैश्च सेवेत निशि केशवम्।
ऋत्विजो वारुणान् सूक्तान् जपेयुस्तत्र भक्तितः ॥
जपेच्च भगवन्मन्त्रान् शान्तिपाठैश्चरैस्तथा।
एवं संसेव्य बहुधा रात्रावस्मिन् जलाशये ॥
प्रदेवत्रेति सूक्तेन यज्ञशालां प्रवेशयेत्।
तत्र नीराजनं दत्त्वा कुर्य्यादर्घ्यादिपूजनम् ॥
घृतवतीति सूक्तेन तत्र नीराजनं द्विजः ॥
स्नात्वा पूर्ववदभ्यर्च्य हुत्वा पुष्पाञ्जलिं तथा।
आशिषोवाचनं कृत्वा भोजयेद्ब्राह्मणान् शुभान् ॥

स्नापयित्वाथ देवेशं भुञ्जीयाद्वाग्यतः स्वयम् ।
एवं प्रतिदिनं कुर्य्यादुत्सवं पञ्चवासरम् ॥
अन्ते चावभृथेष्टिं च पुष्पयागञ्च कारयेत् ।
आचार्य्यं ऋत्विजो विप्रान् पूजयेद्दक्षिणादिभिः ॥
एवं क्षीराब्धियजनं प्रत्यब्दं कारयेन्नृप ! ।
स्वसम्यगर्थवृद्ध्यर्थं भोगाय कमलापतेः ॥
वृद्ध्यर्थमपि राष्ट्रस्य शत्रूणां नाशनाय च ।
सर्व्वधर्म्मविवृद्ध्यर्थं क्षीराब्धियजनं चरेत् ।
तत्र दुर्भिक्षरोगाग्निपापबाधा न सन्ति हि ॥
गावः पूर्णदुघा नित्यं बहुलस्य फलाधरा ।
पुष्पिताः फलिता वृक्षा नार्य्यो भर्त्तृपरायणाः ॥
आयुष्मन्तश्च शिशवो जायते भक्तिरच्युते ।
यः करोति विधानेन यजनं जलशायिनः ॥
क्रतुकोटिफलं तत्न प्राप्नोत्येव न संशयः ।
यस्त्विदं शृणुयान्नित्यं क्षीराब्धियजनं हरेः ॥
सर्व्वान् कामानवाप्नोति विष्णुलोकञ्च विन्दति ।
पुष्पिते तु रसाले तु तत्राप्युत्सवमात्मनः ॥
त्रिवासरं प्रकुर्वीत दोलानाम महोत्सवम् ।
उपोषितः संयतात्मा दीक्षितो माधवं हरिम् ॥
छत्रचामरवादित्रैः पताकैः शिविकां शुभाम् ।
आरोप्यालङ्कृतं विष्णुं स्वयञ्च समलङ्कृतः ॥
हरिद्रां विकिरन्तो वै गायन्तः परमेश्वरम् ।
गच्छेयुराद्रुमं प्रातर्नरनारीजनः सह ॥
तत्राम्रवृक्षच्छायायां नवेद्यम्य जयेद्धरिम् ।

चूतपुष्पैः सुगन्धीभिर्माधवीभिश्च यूथिकैः॥
मरीचिमिश्रं दध्यन्नं मोदकञ्च समर्पयेत्।
अपूपयादीनि भक्ष्याणि पानकञ्च निवेदयेत्॥
सकर्पूरञ्च ताम्बूलं पूगीफलसमन्वितम्।
सर्वमावरणं पूजां होमं पश्चात्समाचरेत्॥
कृत्वे ध्यानादिपर्यन्तं विष्णुसूक्तेन च यजेत्।
माधवेनैव मनुना शर्करासंयुतान् तिलान्॥
सहस्रं जुहुयाद्भक्तो भक्त्या वैष्णवसत्तमः।
वैकुण्ठं पार्षदं हुत्वा होमशेषं समापयेत्॥
प्रत्यृचं पावमानीभिर्दद्यात् पुष्पाञ्जलिं हरेः।
अथ दोलां प्रभाकारां बद्ध्वास्मिन् समलङ्कृताम्॥
वज्रवैदूर्यमाणिक्यमुक्ताविद्रुमभूषिताम्।
तस्यां निवेश्य देवेशं लक्ष्म्या सार्द्धं प्रपूजयेत्॥
गन्धैः पुष्पैर्धूपदीपैः फलैर्भक्ष्यैर्निवेदनैः।
कुसुमाक्षतदूर्वाग्रतिलसर्पिर्मधूदकम्॥
सर्पपाणि च निक्षिप्य अष्टाङ्गार्घ्यं निवेदयेत्।
पादेषु चतुरो वेदान् मन्त्राण्योकेषु चास्तरे॥
नागराजञ्च दोलायाः पीठे सर्वस्वरैरपि।
व्यजनैर्वैनतेयञ्च सावित्रीं चामरे तथा॥
दिग्निग्रामर्चयेद्दिक्षु ऊर्ध्वं ब्रह्मबृहस्पतिः।
अधस्ताच्चण्डिकां रुद्रं क्षेत्रपालविनायकौ॥
विताने चन्द्रसूर्यौ च नक्षत्राणि ग्रहास्तथा।
वेदाश्च सेतिहासाश्च पुराणं देवता गणाः॥
भूधराः सागराः सर्वे पूजनीयाः समन्ततः।

एवं सम्पूज्य दोलायां लक्ष्म्या सह जनार्दनम् ॥
दोलयेच्च ततो दोलां चतुर्वेदैश्चतुर्दिनम् ।
सूक्तैश्च ब्राह्मणोऽपत्यैः सामगानैः प्रबन्धकैः ॥
नामभिः कीर्तयन् देवमेव मन्दं प्रदोलयेत् ।
स्त्रियं स्वलङ्कृताः सर्व्वा गायन्त्यो विभुमच्युतम् ॥
चरितं रघुनाथस्य कृष्णस्य चरितं तथा ।
दोलयेयुर्मुदा भक्त्या दोलायां परमेश्वरम् ॥
दोलाया दर्शनं विष्णोर्महापातकनाशनम् ।
भक्तिप्रसादनं नृणां जन्ममृत्युनिकृन्तनम् ॥
देवाः सर्वे विमानस्था दोलायामर्चितं हरिम् ।
दर्शयन्ति ततः पुण्यं दोलानामोत्सवं हरेः ॥
भक्त्या नीराजनं दद्यात् श्रीसूक्तेनैव वैष्णवः ।
ब्राह्मणान् भोजयेत्पश्चाद्दक्षिणाभिश्च तोषयेत् ॥
एवं त्रिवासरं कुर्य्यादुत्सवं वैष्णवोत्तमः ।
प्रद्युम्नमेवं कुर्व्वीत तत्तत्काले तु वैष्णवः ॥
श्रौतेनैव च मार्गेण जपहोमपरःसरम् ।
उत्सवं वासुदेवस्य यथाशक्त्या समाचरेत् ॥
यत्र यत्रोत्सवं विष्णोः कर्त्तुमिच्छति वैष्णवः ।
होमं कुर्य्यात्तत्र मन्त्रैस्तथाविष्णुप्रकाशकैः ॥
अतो देवेतिसूक्तेन तथा विष्णोर्नुकेन च ।
परोमात्रेति सूक्ताभ्यां पौरुषेण च वैष्णवः ॥
नारायणानुवाकेन श्रीसूक्तेनापि वैष्णवः ।
प्रत्यृचं जुहुयाद्वह्नौ चरुणा पायसेन वा ॥
चतुर्भिर्वैष्णवैर्मन्त्रैः पृथगष्टोत्तरं शतम् ।

आज्यहोमं प्रकुर्व्वीत गायत्र्या विष्णुसंज्ञया ॥
वैकुण्ठपार्षदं हुत्वा शेषं पूर्व्ववदाचरेत् ।
अनादिष्टेषु सर्वेषु कुर्यादेवं विधानतः ॥
ब्राह्मणान् भोजयेद्विप्रान् सर्वं सम्पूर्णतां व्रजेत् ।
अथ वा मन्त्ररत्नेन सहस्रं प्रतिवासरम् ॥
हुत्वा पुष्पाणि दत्त्वा च शेषं पूर्व्ववदाचरेत् ।
होमं विना न कर्त्तव्य मुत्सवं परमात्मनः ॥
जपहोमविहीनन्तु न गृह्णाति जनार्दनः ।
तस्माच्छीतं प्रवक्ष्यामि विष्णोराराधनं नृप ! ॥
अश्वयुक्कृष्णपक्षे तु सम्यगभ्युदिते रवौ ।
आदर्शात् सप्तरात्रन्तु पूजयेत्प्रभुमव्ययम् ॥
स्नात्वा नद्यां विधानेन कृतकृत्यः समाहितः ।
गृहीत्वा जलकुम्भन्तु वारुणान् प्रवरान् व्रजेत् ॥
पञ्चत्वक्पल्लवान् पुष्पाण्यभिमन्त्र्य विनिक्षिपेत् ।
सौरभेयीं तथा मुद्रां दर्शयित्वा च पूजयेत् ॥
त्रिवारं वैष्णवैर्मन्त्रैः शङ्खेनैवाभिषेचयेत् ।
पूजयित्वा विधानेन गन्धपुष्पाक्षतादिभिः ॥
अपूपान् पायसं शक्तून् कृसरञ्च निवेदयेत् ।
मन्त्रैरष्टोत्तरशतं दत्त्वा पुष्पाणि चक्रिणः ॥
पश्चाद्धोमं प्रकुर्वीत साज्येन चरुणा ततः ।
कस्य वा नैतिसूक्तेन वैष्णवैरपि वैष्णवः ॥
हुत्वा तु मन्त्ररत्नेन घृतमष्टोत्तरं शतम् ।
वैकुण्ठं पार्षदं हुत्वा वैष्णवान् भोजयेत्ततः ॥
सकृद्भोजनसंयुक्तः क्षितिशायी भवेन्निशि ।

सायाह्नेऽपि समभ्यर्च्य जातिपुष्पैः सुगन्धिभिः ॥
बहुभिर्दीपदण्डैश्च सेवेरन् पुरवासिनः।
एवं महोत्सवं कृत्वा धनधान्ययुतो भवेत् ॥
तत्तत्कालोचितं विष्णोरुत्सवं परमात्मनः।
द्रव्यहीनोऽपि कुर्व्वीत पत्रपुष्पैः फलादिभिः ॥
समिद्भिर्विल्वपत्रैर्व्वा होमं कुर्व्वीत वैष्णवः।
सन्तर्पयेच्च विप्रांस्तु कोमलैस्तुलसीदलैः ॥
भक्त्या वै देवदेवेशं परितुष्टो भवेद्ध्रुवम्।
आस्तिक्यः श्रद्दधानश्च वियुक्तमदमत्सरः ॥
पूजयित्वा जगन्नाथं यावज्जीवमतन्द्रितः।
इह भुक्त्वा मनोरम्यान् भोगान् सर्व्वान् यथेप्सितान् ॥
सुखेन देहमुत्सृज्य जीर्णत्वच मिवोरगः।
स्थूलसूक्ष्मात्मिकाञ्चेमां विहाय प्रकृतिन्द्रुतम् ॥
सारूप्यमीश्वरस्याशु गत्वा तु स्वजनैः सह।
दिव्यं विमानमारुह्य वैकुण्ठं नाम भास्करम् ॥
दिव्याप्सरोगणैर्युक्तो दिव्यभूषणभूषितः।
स्तूयमानः सुरगणैर्गीयमानश्च किन्नरैः ॥
ब्रह्मलोकमतिक्रम्य गत्वा ब्रह्माण्डमण्डपम्।
विष्णुचक्रेण वै भित्वा सर्व्वानावरणान् घनान् ॥
अतीत्य वीरजामाशु सर्ववेदस्रवां नदीम्।
अभ्युद्गच्छद्भिरर्घ्यैः पूज्यमानः सुरोत्तमैः ॥
सम्प्राप्य परमं धाम योगिगम्यं सनातनम्।
यद्गत्वा न निवर्तन्ते तद्धाम परमं हरेः ॥
तद्विष्णोः परमं धाम सदा पश्यन्ति योगिनः।

शीतांशुकोटिसङ्काशैः सर्वैश्च भवनैर्युतम् ॥
आरूढयौवनैर्दिव्यैः पुंभिः स्त्रीभिश्च सङ्कुलम् ।
सर्वलक्षणसम्पन्नैर्दिव्यभूषणभूषितैः ॥
अक्षरं परमं व्योम यस्मिन्देशा अधिष्ठिताः ।
इरावती धेनुमती व्यक्ताश्चासूयवासिनी ॥
यत्र गावो भूरिशृङ्गाः सायोध्या देवपूजिता ।
अनन्तव्यूहलोकैश्च तया तुल्यप्रभावहैः ॥
सर्ववेदमयं तत्र मण्डपं सुमनोहरम् ।
सहस्रस्थूणसदसि ध्रुवे रम्योत्तरे शुभे ॥
तस्मिन् मनोरमे पीठे धर्माद्यैः सूरिभिर्वृते ।
सहासीनं कमलया दृष्ट्वा देवं सनातनम् ॥
स्तुतिभिः पुष्कलाभिश्च प्रणम्य च पुनः पुनः ।
प्रहर्षपुलको भूत्वा तेन चालिङ्गितः क्रमात् ॥
पूजितः सकलैर्भोगैः श्रिया चापि प्रपूजितः ।
अनन्तविहगेशाद्यैरर्चितः सर्वदैवतैः ॥
तेषामन्यतमो भूत्वा मोदते तत्र देववत् ।
एषु केषु च लोकेषु तिष्ठते कमलापतिः ॥
तेषु तेष्वपि देवस्य नित्यदासो भवेत्सदा ।
दासवत्पुत्रवत्तस्य मित्रवद्बन्धुवत् सदा ॥
अश्नुते सकलान् कामान् सह तेन विपश्चिता ।
इमान् लोकान् कामभोगः कामरूप्यनुसञ्चरन् ॥
सर्वदा दूरविध्वस्तदुःखावेशलवांशकः ।
गुणानुभवजप्रीत्या कुर्याद्दानमशेषतः ॥
इममेव परं मोक्षं विदुः परमयोगिनः ।

काङ्क्षन्ति परमं ह्यासां मुक्तिमेकं महर्षयः ॥
हरेर्दास्यैकपरमां भक्तिमालभ्य मानवः ।
इहैव मुक्तो राजर्षे ! सर्वकर्मनिबन्धनैः ॥

इति हारीतस्मृतौ विशिष्टपरमधर्मशास्त्रे नानाविधोत्सवविधानं नाम सप्तमोऽध्यायः ॥

---

हारीत उवाच ।

अथ वक्ष्यामि राजेन्द्र ! विष्णुपूजाविधिं परम् ॥
श्रौतं महर्षिभिः प्रोक्तं वशिष्ठाद्यैः पुरातनैः ।
वैखानसैश्च भृग्वाद्यैः सनकाद्यैश्च योगिभिः ॥
वैष्णवैर्वैदिकैः पूर्वैर्यद्यदाचरितं पुरा ।
तस्से वक्ष्यामि राजेन्द्र ! महाप्रियतमं हरेः ॥
ब्राह्मे मुहूर्त्ते उत्थाय सम्यगाचम्य वारिणा ।
ध्यात्वा हृत्पङ्कजे विष्णुं पूजयेन्मनसैव तु ॥
तं प्रत्नथेति सूक्तेन बोधयेत्कमलापतिम् ।
वनस्पतेति सूक्तेन तूर्यघोषं निनादयेत् ॥
कुर्यात्प्रदक्षिणं विष्णोरतोदेवेत्यनेन तु ।
तद्विष्णोरिति मन्त्राभ्यान्तिः प्रणम्याचारेत्ततः ॥
कृतशौचस्तथाचान्तो दन्तधावनपूर्वकम् ।
स्नानं कुर्याद्विधानेन धात्रीश्रीतुलसीयुतम् ॥
नारायणानुवाकेन कृत्वा तत्राघमर्षणम् ।
कृतकृत्यः शुचिर्भूत्वा तर्पयित्वा च पूर्ववत् ॥
धृतोर्ध्वपुण्ड्रदेहश्च पवित्रकर एव च ।
प्रविश्य मन्दिरं विष्णोः संमार्जन्या विशोधयेत् ॥

वास्तोष्पतेति वै सूक्तं जपन् संमार्जयेद्गृहम्।
आगाव इति सूक्तेन गोमयेनानुलेपयेत्।
आनोभद्रेति सूक्तेन रङ्गवल्लिञ्च निक्षिपेत्॥
ततः कलशमादाय जपन्वै शाकुनीरृचः।
गत्वा जलाशयं रम्यं निर्म्मलं शुचि पाण्डुरम्॥
इमं मे गङ्गेति ऋचा जलं भक्त्याभिमन्त्रयेत्।
आपो अस्मानिति ऋचा कलशं क्षालयेद्द्विजः॥
समुद्र ज्येष्ठमन्त्रेण गृह्णीयात्प्रयतो जलम्।
उतस्मैनं वस्तुभिरिति वस्त्रेणाच्छाद्य वैष्णवः॥
प्रसम्राजेति सूक्तं वै जपन् सम्प्रविशेद्गृहम्।
धान्योपरि तथा कुम्भं न्यसेद्दक्षिणतो हरेः॥
इमं मे वरुणेत्यृचा मङ्गलद्रव्यसंयुतम्।
आञ्जन्ति मित्रत्वेति सूक्तेन कुर्य्यात्पुष्पस्य सञ्चयम्॥
पर्व्वांश्च सुभगे द्वाभ्यां गन्धांश्च पेषयेत्तथा।
वाग्यतः प्रयतोभूत्वा श्रीसूक्तेनैव वैष्णवः।
विश्वानिन इति ऋचा दीपं दद्यात्सुदीपितम्॥
ततस्त्पात्रेषु सलिलं दत्त्वा गन्धांस्तु निक्षिपेत्।
शन्नोदेव्या च सलिलं गायत्र्या च कुशांस्तथा॥
आयनेति च पुष्पाणि यवोऽसीति ऋचाऽक्षताम्।
गन्धद्वारेति वै गन्धान् औषध्या तिलसर्षपान्॥
काण्डात्काण्डेति दूर्वाग्रान् सहिरण्येति रत्नकम्।
हिरण्यरूपेति ऋचा हिरण्यं निक्षिपेत्तथा॥
एवं द्रव्याणि निक्षिप्य तुलस्या च समर्पयेत्।
सवितुश्चेत्यादि ऋचा दद्यादर्घ्योदकं हरेः॥

श्रियेति पादेति ऋचा दद्यात् पादजलं तथा।
भद्रन्ते हस्तेत्यनेन हस्तप्रक्षालनं चरेत्॥
वयः सुपर्णेति ऋचा मुखसम्मार्जनं तथा।
आपो अस्मानिति ऋचा वस्त्रगण्डूषमेव च॥
हिरण्यदन्तेत्यनेन दन्तकाष्ठं निवेदयेत्।
बृहस्पते प्रथमेति जिह्वालेखनमेव च॥
आपयित्वा उभेषजैरिति गण्डूषमाचरेत्।
आपोहिष्ठा इत्यनेन कुर्य्यादाचमनीयकम्॥
मूर्धामव इत्यनेन तैलाभ्यङ्गं समाचरेत्।
मूर्धानन्दीव इत्यनेन गन्धान् केशेषु लेपयेत्॥
तद्वियस्तस्थौ केशवन्ते केशान् वै चालयेत्पुनः।
श्रिये पूर्ण्णेति ऋचा तदुर्चोद्वर्त्तनादिकम्॥
आपोयम्बः प्रथममिति सूक्तेनाभ्यङ्गसूचनम्।
कृत्वादः स्नापयेत्सूक्तैर्वैष्णवैर्गन्धवारिणा॥
ततः पञ्चामृतैर्गव्यैः स्नापयेत्तत्प्रकाशकैः।
आपप्रायस्वेत्यृचा क्षीरं दधिक्राव्णेति वै दधि॥
घृतमामिक्षेति घृतं मधुवातेति वै मधु।
तन्ते वयं यथा गोभिरित्यृचेक्षुरसं शुभम्॥
एभिः पञ्चामृतैः स्नाप्य चन्दनञ्च निवेदयेत्।
श्रीसूक्तपुरुषसूक्ताभ्यां पुनः संस्नापयेद्धरिम्॥
वनस्पतेति सूक्तेन कुर्य्याद्घोष समन्वितम्।
श्रिये जात इति ऋचा दद्यान्नीराजनं ततः॥
युवा सुवासेति ऋचावस्त्रेणाङ्गं प्रमार्जयेत्।
प्रवेनानेति मन्त्रेण वस्त्रं सम्वेष्टयेत्ततः॥

युवं तस्त्राणीति ऋचा उत्तरीयं तथैव च।
सर्वत्राचमनं दद्याच्छन्नो देवीत्यृचा च तु॥
उपवीतं ततो दद्याद् ब्राह्मणानिति वै ऋचा।
ऋतस्यतन्तु वितते दद्यात्कुशपवित्रकम्॥
पश्चादाचमनं दद्यादभूषणैर्भूषयेद्धरिम्।
विश्वजित्सूक्तेन दद्यादभूषणानि शुभानि वै॥
हिरण्यकेशेति ऋचा केशान् संशोधयेत्तथा।
सुपुष्पैः कवरीं दद्याद्धिहिसीतेत्यनेन वै॥
त्वपायमिन्द्र ते रथ इत्यृचा तिलकं शुभम्।
गन्धञ्च लेपयेद्गात्रे गन्धद्वारेति वै ऋचा॥
त्रातारमिन्द्र इत्यृचा पुष्पमालां समर्पयेत्।
चक्षुषः पितेति ऋचा चक्षुषो रञ्जनं शुभम्॥
सहस्रशीर्षेति ऋचा किरीटं शिरसि क्षिपेत्।
ऋक्सामाभ्यामिति श्रोत्रे कुण्डले मा करेऽर्पयेत्॥
दमूनसो अपस इति केयूरादिविभूषणम्।
आश्विते यस्येति ऋचा हाराणि विमलानि च॥
हस्ताभ्यां दशशाखाभ्या मित्यृचा चाङ्गुलीयकम्।
अस्य त्रिपूर्णमनुना सूर्य्याके विन्यसेच्छुभे॥
इन्द्रश्चदुत्तर इति कटिसूत्रं सुरोचिषम्।
स्वस्तिदाविशस्पतिरित्यायुधानि समर्पयेत्॥
यौनंय इन्द्रेति दद्याच्छत्रं सुविमलं तथा।
सोमः पवतेत्यृचा चामरं हेममुत्तमम्॥
सोमापूषणेत्यृचा तालवृन्तौ सुवर्चसौ।
रूपं रूपमिति ऋचा दद्यादादर्शनं शुभम्॥

इन्द्रमेव धीषणेति ऋचा त्वासने विनिवेशयेत् ।
इहैवास्तमेति ऋचा दद्याच्च कुशविष्टरम् ॥
अपस्वन्तरिति ऋचा पाद्यं दद्याच्च भक्तितः ।
गौरीमिमाय सूक्तेन अर्घ्यं हस्ते निवेदयेत् ॥
न तमं होनदुरितमित्याचमनं समर्पयेत् ।
पिबासोममित्यनेन मधुपर्कञ्च प्राशयेत् ॥
अपस्वग्ने सधिष्टवेति पुनराचमनं चरेत् ।
अर्चन्तस्त्वाह वाहेत्यक्षतैरर्चयेच्छुभैः ॥
तण्डुलाः सहरिद्रास्तु अक्षता इति कीर्तिताः ।
विष्णोर्नुकमिति सूक्तेन धूपं दद्याद्घृतान्वितम् ॥
भावामितेति सूक्तेन दीपान्नीराजयेच्छुभान् ।
इन्द्र ते पात्रमिति भाजनं विन्यसेच्छुभम् ॥
तस्मा अरङ्गमाममेति पात्रप्रक्षालनं चरेत् ।
अस्मिन् पदे परमेतच्छिवांसमिति गवाज्येनाभिपूरयेत् ।
पितुन्नुस्तोषमिति सूक्तेन दद्यादान्नादिकं हविः ॥
तदस्यानिकमिति ऋचा सहिरण्यं घृतं तथा ।
तस्मिन् रायवतय इति दद्यादापोशनं घृतम् ॥
ततः प्राणाद्याहुतयो होतव्याः परमात्मनि ।
अग्ने विवस्वदुषस इति पञ्चभिश्च यथाक्रमम् ॥
समुद्रा ऊर्मीति सूक्तेन घृतधाराः समाचरेत् ।
परोमात्रेति सूक्तेन भोजयेत्तु श्रियं हरिम् ॥
तुभ्यं हिन्वान इत्यनेन वयः सर्वं निवेदयेत् ।
इन्द्र पीबेत्यनेन दद्यादापोशनं पुनः ॥
प्रत आश्विनि पवमानेत्यृचा हस्तप्रक्षालनं चरेत् ।

सरस्वतीं देवयन्त इति तिसृभिगण्डूषमेव च ॥
वृष्टिं दिवीयः तद्वारेति द्वाभ्यां दद्यादाचमनं ततः ।
शिशुं जिज्ञाग्निमिति ऋचा मुखहस्तौ च मार्जयेत् ॥
दक्षिणावतामिति ऋचा दद्यात्ताम्बूलमुत्तमम् ।
स्वादुः पवस्वेति ऋचा दद्यादाचमनं पुनः ।
अयं गौरिति सूक्ताभ्यां दद्यात् पुष्पाञ्जलिं ततः ॥
दीपश्रीराजयेत्पश्चादूघृतसूक्तेन वैष्णवः ।
यतइन्द्रेत्यादि षड्भिर्दिक्षु रक्षां प्रदापयेत् ॥
यज्ञो देवानामितिसूक्तेन उपस्थानजपं चरेत् ।
तद्विष्णोरिति द्वाभ्यां प्रणमेच्चैव भक्तितः ॥
गौरिमिमायेति ऋचा दद्यादाचमनन्ततः ।
सहस्रनामभिः स्तुत्वा पश्चाद्धोमं समाचरेत् ॥
प्रातरौपासनं हुत्वा तस्मिन्नग्नौ जनार्दनम् ।
ध्यात्वा संपूज्य जुहुयाद्वैष्णवैः प्रत्यृचं हविः ॥
श्रीभूसूक्ताभ्यामपि च हुत्वा घृतयुतं हविः ।
याभिः सोमो मोदतेत्यनेन मात्रभ्यां जुहुयाद्धविः ॥
किं स्विद्वनमित्यावन्त जुहुयाद्धविः ।
सुपर्णं विप्रा इति ऋचा सुपर्णायमहात्मने ॥
चमूषु श्येन इति च सेनेशायापि हूयताम् ।
पवित्रन्त इति द्वाभ्यांश्चक्रायामिततेजसे ॥
स्वादुषं स इति ऋचा हेतिभ्यो जुहुयाद्धविः ।
इन्द्रश्रेष्ठानितीन्द्राय अग्निमूर्धेति पावकम् ॥
यमाय सोमेति यमन्नैर्ऋतं व्योषुणेत्यृचा ।
यच्छिन्दितेति वरुणं वायवामेति मारुतम् ।

द्रविणोदाददातुना द्रविणाद्यायमेव च ॥
त्र्यम्बकऋचा रुद्रं आनः प्रजां प्रजापतिम्।
यज्ञेनेत्यृचा साध्येभ्यो मरुतो यज्ञवेति च ॥
ये नः सपत्नेति ऋचा वसुरुद्रेभ्यएव च।
विश्वेदेवाः स चतसृभिर्ये देवा स ऋचा तथा ॥
सर्वेभ्यश्चैव देवेभ्यो जुहुयादन्नमुत्तमम्।
नासत्याभ्यामिति ऋचा अश्विच्छन्दोभ्यएव च ॥
सोमपूषेति ऋचा सूर्य्याचन्द्रमसोस्तथा।
संसमिद्युदसूक्तेन वैष्णवेभ्यस्तथा पुनः ॥
ततः स्विष्टकृतं हुत्वा भूतेभ्यश्च बलिं क्षिपेत्।
नमो महद्भ्य ऋचा बलिं भुवि विनिक्षिपेत् ॥
आचम्य वारिणा पश्चान्मन्त्रयागं समाचरेत्।
एतच्छ्रौतं नृपश्रेष्ठ! मुनिभिः सम्प्रकीर्त्तितम् ॥
सम्यगुक्तं मया तेऽद्य निश्चितंमतमुत्तमम्।
एतत्प्रियतमं विष्णोः श्रियोनाथस्य सर्वदा ॥
श्रौतेनैव हरिं देवमर्चयन्ति मनीषिणः।
श्रौतस्मार्त्तागमैर्तेषां स्त्रिविधं पूजनं स्मृतम् ॥
एतच्छ्रौतं ततः स्मार्त्तं पौरुषेण च यत् स्मृतम्।
मन्त्रैरष्टाक्षराद्यैस्तु तद्दिव्यागममुच्यते ॥
श्रौतमेव विशिष्टं स्यात्तेषां नृपवरोत्तम!।
श्रौतमेव तथा विप्राः प्रकुर्वन्ति जनार्द्दने ॥
यजन्ति केचित्त्रितयन्त्रिसन्ध्यासु च देशिकाः।
यजन्ति केचिन्नितयन्त्रयो वर्णा द्विजोत्तमाः ॥
शुश्रूषा च तथा नामकीर्त्तनं शूद्रजन्मनः।

अपि वा परमैकान्ति बालकृष्णवपुर्हरिम् ॥
स्त्रीणामप्यर्चनीयः स्यात्स्ववर्णस्यानुरूपतः।
मन्त्ररत्नेन वै पूज्यो हित्वा श्रौतं विधानतः ॥
एवमभ्यर्चनं विष्णोर्मुनिभिः सम्यकीर्त्तितम्।
श्रौतस्मार्तागमोक्ताश्च नित्यनैमित्तिकाः क्रियाः ॥
प्रायश्चित्तमकृत्यानां दण्डमप्याततायिनाम्।
अधुना सम्प्रवक्ष्यामि वृत्तिमैकान्तिलक्षणाम् ॥
नारीणामपि कर्तव्या मद्भक्त्यहनि शाश्वतीम्।
उत्थाय पश्चिमे यामे भर्त्तुः पूर्वमतन्द्रिताः ॥
कृत्वा शौचं विधानेन दन्तधावनमाचरेत्।
कृत्वाथ मङ्गलस्नानं धृत्वा धृताम्बरं तथा ॥
भालस्य धारयेदूर्ध्वपुण्ड्रं शुभ्रं सुधैव तु।
चन्दनेनापि कस्तूर्य्या कुङ्कुमेनापि वा सती ॥
जप्त्वा मन्त्रं गुरुं पश्चादभिनम्य च वैष्णवान्।
नमस्कृत्वा जगन्नाथं जप्त्वा च शरणागतिम् ॥
आत्मानं समलङ्कृत्य चिन्तयेन्मधुसूदनम्।
गृहभाण्डादिकं सर्वं वाग्यता नियतेन्द्रियाः ॥
संशोधयेत्प्रतिदिनं यज्ञार्थं परमात्मनः।
मार्जयित्वा गृहं पश्चाद् गोमयेनानुलिप्य च ॥
रङ्गवल्यादिभिः पश्चादलङ्कृत्य समन्ततः।
चतुर्विधानां भाण्डानां क्षालनन्तु समाचरेत् ॥
पाचकानि वहिष्ठानि जलस्यानयनानि च।
स्थापनानि जलार्थं वा चतुर्विधं मुदाहृतम् ॥
पृथक् पृथगुदस्थानि तेषु तेष्वपि विन्यसेत्।

नान्योन्यं सङ्करं कुर्याद्भाण्डानां सर्वकर्मसु ॥
तानि तानि स्पृशेत्पाणिं प्रक्षाल्यैव पुनः पुनः।
सम्यक् प्रक्षाल्य भाण्डानि दाहयेद्यज्ञीयैस्तृणैः ॥
पुनः प्रक्षाल्य सन्तप्ता पश्चात्पचनमाचरेत्।
रसभाण्डानि सर्व्वाणि क्षालयेदुष्णवारिणा ॥
चतुर्भिः पञ्चभिर्धौत्वा स्रुक्स्रुवौ क्षालयेत्तदा।
वह्निं न निष्क्रामयीत पाचकानि गृहान्तिकात् ॥
ताभिरेव न दद्यात्तु भुञ्जतां हि कथञ्चन।
दत्त्वा पात्रान्तरे दद्यात्कांस्ये वा मृण्मयेऽपि वा ॥
पुटे पर्णमये वापि दद्यादन्नतु वैष्णवे।
स्रुवं दारुमयं कांस्यं कुर्व्वीतायोमयं नतु ॥
न दद्यादारनालस्य घटं तस्मिन् महावने।
आरनालस्य यत् कुम्भन्त्यजेम्मध्यघटं यथा ॥
आरनालक्षारशाकं करञ्जं तिलपिष्टकम्।
लशुनं मूलकं शिग्रुं छत्रां कोशातकीफलम्।
अलावुञ्चान्यशाकञ्च करनिर्मथितं दधि ॥
बिम्बं विड्जञ्च निर्यासं पीलुं श्लेष्मातकं फलम्।
आरग्वधञ्च निर्गुण्डीं कालिङ्गन्नालिकां तथा ॥
नालिकेर्याख्यशाकञ्च श्वेतवृन्ताकमेव च।
उष्ट्राविमानुषीक्षीरमवत्सानिर्दशाहगोः ॥
एतान्यकामतः स्पृष्ट्वा सवासा जलमाविशेत्।
मत्या जग्ध्वा व्रतं कुर्याद्भुजं जग्ध्वा पतेदधः ॥
केशानां रञ्जनार्थं वा न स्पृशेदारनालकम्।
चन्दनं घनसारं वा मकरन्दमथापि वा ॥

आम्रमुद्रादिचूर्णं वा तक्रं जाम्बीरमेव वा ।
तिन्तिड़ञ्च कलायं वा केशरञ्जनमाचरेत् ॥
ऊर्द्ध्वं मासात्त्यजेत्सर्वं मृद्भाण्डं वैष्णवोत्तमः ।
न त्यजेल्लौहभाण्डानि तापयेच्च हुताशने ॥
दारुणां सन्त्यजेद्वापि तक्षणं वा समाचरेत् ।
अश्मनामश्मभिर्घात्वा गोवालैर्घर्षयेत्तथा ॥
सूतके मृतके वापि शुनादिस्पर्शने तथा ।
स्पर्शने वापरभक्ष्याणां सद्य एव परित्यजेत् ।
एवं संशोध्य भाण्डानि यज्ञार्थं वाचयेद्धविः ॥
सम्प्रोक्ष्याद्भिः शुचौ देशे धान्यं संशोधयेद्भुवि ।
अवहन्याच्छुभतरं गायन्ति मधुसूदनम् ॥
संशोध्य तण्डुलान् पश्चादद्भिः संक्षालयेत्त्रिभिः ।
अथ त्रिवारं वस्त्रेण शोधयित्वा घटान्तरे ॥
कुशेनैव पवित्रेण तण्डुलान् निर्वपेच्छुभान् ।
अन्तर्धाय कुशं तत्र मन्त्ररत्नमनुस्मरन् ॥
पाचयेत्सपवित्रेण वाग्यतो नियतेन्द्रियः ।
उपविश्य शुभे कुण्डे वह्निं प्रज्वालयेत्ततः ॥
अवैष्णवस्य शूद्रस्य पतितस्य तथैव च ।
पाषण्डस्याप्यशुद्धस्य गृहेष्वग्निं विवर्जयेत् ॥
सम्प्रोक्ष्य मन्त्ररत्नेन वह्निं कुशजलैस्त्रिभिः ।
यज्ञीयैर्विमलैः काष्ठैर्व्यजनेन प्रदीपयेत् ॥
सान्तर्धानमुखेनापि धमयन्वा प्रदीपयेत् ।
पालाशैर्खादिरैर्बिल्वैर्गोमयोत्पिटकैरपि ॥
अन्यैर्वा यज्ञीयैः काष्ठैस्तृणैर्वा यज्ञीयैः शुभैः ।
वर्जयेन्मद्यदिग्धानि तथा वैभितकीनि च ॥

आरण्यधानि मौमूषि तथा नैगुण्डिकानि च।
नैपानि च कपित्थानि कार्पासैरण्डकानि च॥
अमेध्यानि सकीटानि दौर्गन्ध्यानि तथैव च।
असद्दाहानि चैत्यानि काकखट्वासनानि च॥
देवालयानि यौप्यानि तथोपकरणानि च।
महिषोष्ट्रखरादीनां करीषपीठकानि च॥
अन्यानां पाकयोग्यानि वर्जयेद्यज्ञकर्म्मणि।
प्रदीप्याग्निं ततो नाद्यं पचान्नियतमानसः॥
चिन्तयन् परमात्मानं जपन्मन्त्रद्वयं तथा।
शुद्धं हृद्यं तथा रुच्यं पचाद्रम्यतरं शुभम्॥
निषिद्धानि च शाकानि फलमूलानि वर्जयेत्।
अतिरूक्षञ्चातिदुष्टमतिरक्तञ्च वर्जयेत्॥
भावदुष्टं क्रियादुष्टं कालदुष्टं तथैव च।
संसर्गदुष्टमपि च वर्जयेद्यज्ञकर्म्मणि॥
रूपतो गन्धतो वापि यच्चाभक्ष्यैः समश्नुवेत्।
भावदुष्टञ्च यच्चोक्तं मुनिभिर्धर्म्मपारगैः॥
आरनालञ्च मद्यञ्च करनिर्म्मथितं दधि।
हस्तदत्तञ्च लवणं क्षीरं घृतपयांसि च॥
हस्तेनोद्धृत्य यत्तोयं पीतं वक्त्रेण वै कदा।
शब्देन पीतं भुक्तञ्च मद्यं ताम्रेण संयुतम्॥
क्षीरञ्च लवणोन्मिश्रं क्रियादुष्टमिहोच्यते।
एकादश्यां तु यच्चान्नं यच्चान्नं राहुदर्शने।
सूतके मृतके चान्नं शुष्कं पर्युषितं तथा॥
अनिर्दशाहगोक्षीरं षष्ठ्यां तैलं तथापि च।

मद्योच्चसमुद्भूताश्च सिंघककर्कटयोर्जलम्॥
निःशेषजलवापयादौ यत्रविष्टं नवोदकम्।
नातीतपञ्चरात्रं तत्कालदुष्टमिहोच्यते॥
शैवपाषण्ड पतितैर्विकर्मस्थैर्निरीश्वरैः।
अवैष्णवैर्द्विजैः शूद्रैर्हरिवासरभोक्तृभिः॥
श्वकाकशूकरोष्ट्राद्यैरुदक्यासूतिकादिभिः।
पुंश्चलीभिश्च नारीभिश्च पत्नीपतिभिस्तथा॥
दृष्टं स्पृष्टं च दत्तं च भुक्तशेषं तथैव च।
अभक्ष्याणां च संयुक्तं संसर्गदुष्टमुच्यते॥
बिम्बं शिग्रु च कालिङ्गं तिलपिष्टञ्च मूलकम्।
कोशातकीमलाबुञ्च तथा कट्फलमेव च॥
नालिका नालिकेत्यादिजातिदुष्टमिहोच्यते।
एवं सर्वाण्यभक्ष्याणि तत्सङ्गान्यपि संत्यजेत्॥
तथैवाभक्ष्यभोक्तृणां हरिवासरभोजिनाम्।
लोकायतिकविप्राणां देवतान्तरसेविनाम्॥
अवैष्णवानामपि च संसर्गं दूरतस्त्यजेत्॥
पक्वान्नाद्यं यथा पक्वं वाग्यतो नियतेन्द्रियः।
सम्मार्जयेच्छुभतरं वारिणा वाससैव च॥
करकैरपिधायाथ चक्रेणैवाङ्कयेत्ततः।
गन्धेन वा हरिद्रेण जलेनापरथ वा लिखेत्॥
सुदर्शनं पाञ्चजन्यं भाण्डानां यन्त्रयोगिनाम्।
कुशोत्तरे शुचौ देशे विन्यस्य कुशवारिणा॥
संप्रोक्ष्य मन्त्ररत्नेन वस्त्रेणाच्छादयेत्ततः।
क्षालयित्वाथ देवस्य भाजनानि शुभैर्जलैः॥

अभिपूज्य ततो दद्याद्भोजयेच्च विशेषतः ।
भोजयेदागतान् काले सखिसम्बन्धिबान्धवान् ॥
बालान् वृद्धान् भोजयित्वा भर्त्तारं भोजयेत्ततः ।
स्वयं हृष्टा ततोऽश्नीयाद्भर्त्तुर्भुक्तावशेषितम् ॥
पैशाचिकानां यक्षाणां शक्तानां लिङ्गधारिणाम् ।
द्वादशीविमुखानां च सल्लापादिविवर्जयेत् ॥
शैववौद्धस्कान्दशाक्तस्थानानि न विशेत् क्वचित् ।
वर्जयेत्तत्समीपस्थं जलपुष्पफलादि च ॥
न निरीक्षेत देवानामुत्सवानि कदाचन ।
स्तुतिं वाप्यन्यदेवानां न कुर्याच्छृणुयान्न च ॥
कामप्रसङ्गसल्लापान् परिहासादि वर्जयेत् ।
अन्यचिह्नाङ्कितं वस्त्रं भूषणासनभाजनम् ॥
वृक्षं पशुं कूपगृहान् भाण्डं चैव विवर्जयेत् ।
अन्यालये हरिं दृष्ट्वा देवतान्तरसंसदि ॥
नार्चयेन्नप्रमाणे च तीर्थसेवां विवर्जयेत् ।
अवैष्णवस्य हस्तात्तु दिव्यदेशादुपागतम् ॥
हरेः प्रसादतीर्थाद्यं यत्नेन परिवर्जयेत् ।
आकारत्रयसम्पन्नो नवेज्याकर्म्मणि स्थितः ॥
विष्णोरनन्यशेषत्वं तथैवानन्यसाधनम् ।
तथैवानन्यभोग्यत्वमाकारत्रयमुच्यते ॥
अर्चनं मन्त्रपठनं ध्यानं होमश्च वन्दनम् ।
स्तुतिर्योगं समाधिश्च तथा मन्त्रार्थचिन्तनम् ॥
एवं नवविधा प्रोक्ता चेज्या वैष्णवसत्तमैः ।
प्राप्यस्य ब्रह्मणोरूपं प्राप्तश्च प्रत्यगात्मनः ॥

प्राप्युपायं फलञ्चैव तथा प्राप्तिविरोधि च।
ज्ञातव्यमेतदर्थस्य पञ्चकं मन्त्रवित्तमैः॥
जगतः कारणत्वं च तथा स्वामित्वमेव च।
श्रीशत्वं सगुणत्वञ्च ब्रह्मणो रूपमुच्यते॥
देहेन्द्रियादिभ्योऽन्यत्वं नित्यत्वादिगुणौघता।
श्रीहरेर्दास्यधर्म्मत्वं स्वरूपं प्रत्यगात्मनः॥
उपायाध्यवसायेन त्यक्त्वा कर्म्मौघमात्मनः।
हरेः कृपावलम्बित्वं प्राप्युपायमिहोच्यते॥
सर्वैश्वर्यफलं त्यक्त्वा शब्दादिविषयानपि।
दास्यैकसुखसङ्गित्वं विष्णोः फलमिहोच्यते॥
तज्जनस्यापराधित्वं शब्दादिष्वनुरक्तता।
कृत्यस्य च परित्यागः अकृत्यकरणं तथा॥
द्वादशीविमुखत्वं च विरोधि स्यात् फलस्य हि।
अर्थपञ्चकमेतद्धि ज्ञातव्यं स्यान्मुमुक्षुभिः॥
विहितं सकलं कर्म्म विष्णोराराधनं परम्।
निबोध तन्नृपश्रेष्ठ! भोगार्थं परमात्मनः॥
वृत्त्याख्यस्य तरोरस्य सुदृढं मूलमुच्यते।
त्यागेन चैव धर्म्मस्य निषिद्धाचरणेन च॥
आज्ञातिक्रमणाद्विप्रः पतत्येव न संशयः।
ज्योतिष्टोमादयः सर्वे यज्ञा वेदेषु कीर्तिताः॥
पुण्यव्रताः पुराणोक्ता दाना नैमित्तिकादिषु।
विष्णोर्भोगतया सर्वाः कर्त्तव्या वैष्णवोत्तमैः॥
यस्तूपायतया कृत्यं नित्यनैमित्तिकादिकम्।
सत्कृत्यं कुरुते विष्णोर्वैष्णवः स उदीरितः॥

विष्णौ रमतया यस्तु सत्कृत्यं कुरुते बुधः।
स एकान्तीति मुनिभिः प्रोच्यते वैष्णवोत्तमः॥
यस्तु भोगतया विष्णोः सत्कृत्यं कुरुते सदा।
स भवेत्परमैकान्तिमहाभागवतोत्तमः॥
वर्जनीयमकृत्यन्तु सर्वेषां करणैस्त्रिभिः।
अकामतस्तु यत्प्राप्तं प्रायश्चित्ताद्विनश्यति॥
अकृत्यं वैष्णवैः पापबुद्ध्या शास्त्रविरोधितः।
एकान्ति परमैकान्ति रूपभावाच्च सन्त्यजेत्॥
श्रुतिस्मृत्युदितं धर्मं यस्त्यजेद्वैष्णवाधमः।
स पाषण्डीति विज्ञेयः सर्वलोकेषु गर्हितः॥
अकृत्यकरणाद्वापि कृत्यस्याकरणादपि।
द्वादशीविमुखत्वेन पतत्येव न संशयः॥
तस्मात्सर्वप्रयत्नेन सत्कृत्यं सर्वदा चरेत्।
आज्ञातिक्रमणाद्विष्णोर्मुक्तोऽपि विनिबध्यते॥
समस्तयज्ञभोक्तारं ज्ञात्वा विष्णुं सनातनम्।
दैवं पैत्रं तथा यज्ञं कुर्यान्नतु परित्यजेत्॥
त्रिदण्डमवलम्बन्ते यतयो ये महाधियः।
तेषामपि हि कर्तव्यं सत्कृत्यमितरेषु किम्॥
ब्रह्म ब्रह्मा ब्राह्मणश्च त्रितयं ब्राह्ममुच्यते।
तस्माद्ब्राह्मणविधिना परं ब्रह्माणमर्चयेत्॥
समस्तयज्ञभोक्तारमज्ञात्वा विष्णुमव्ययम्।
वेदोदितं यः कुरुते स लोकायतिकः स्मृतः॥
यस्तु वेदोदितं धर्मन्त्यक्त्वा विष्णुं समर्चयेत्।
स पाषण्डत्वमापन्नो नरकं प्रतिपद्यते॥

वेदाः प्राणा भगवतो वासुदेवस्य सर्वदा।
तदुक्तकर्म्माकुर्व्वाणः प्राणहर्त्ता भवेद्धरेः॥
विष्णोराराधनाद्वेदं विना यस्त्वन्यकर्म्मणि।
प्रयुञ्जीत विमूढात्मा वेदहन्ता न संशयः॥
वत्सं माता लेढि यथा तथा लेढि स मातरम्।
श्रुतं विष्णोः प्रियं ज्ञात्वा विष्णुं वेदेन वै यजेत्॥
तस्माद्वेदस्य विष्णोश्च संयोगो यस्तु दृश्यते।
स एव परमो धर्मो वैष्णवानां यथा नृप!॥
कश्चित् पुरा नृपश्रेष्ठ! काश्यपो ब्राह्मणोत्तमः।
शाण्डिल्य इति विख्यातः सर्वशास्त्रविशारदः॥
स तु धर्म्मप्रसङ्गेन विष्णोराराधनं प्रति।
अवैदिकेन विधिना कृतवान् धर्म्मसंहिताम्॥
अवलम्ब्य मतं तस्य केचिदत्र महर्षयः।
अवैदिकेन मार्गेण पूजयन्ति स्म केशवम्॥
अशास्त्रविहितं धर्मं सर्वे कुर्वन्ति मानवाः।
स्वाहास्वधावषट्कारवर्जितं स्यान्महीतलम्॥
ततः क्रुद्धो जगन्नाथः शङ्खचक्रगदाधरः।
इदमाह मुनिश्रेष्ठं शाण्डिल्यममितौजसम्॥
दुर्बुद्धे! मामकं धर्मं परमं वैदिकं महत्।
अवैदिकक्रिया जुष्टं प्रागल्भ्यात् कृतवानसि॥
यस्मादवैदिकं धर्मं प्रवर्त्तयसि मां द्विज!।
तस्मादवैदिकं लोकं निरयं गच्छ दारुणम्॥
तद्वाक्यादेव देवस्य शाण्डिल्योऽभूद्दयाकुलः।
स्तुवन् प्राह जगन्नाथं प्रणिपत्य पुनः पुनः॥

त्राहि त्राहीहि लोकेश ! मां विभो ! सापराधिनम्।
ततः स कृपया विष्णुर्भगवान् भूतभावनः॥
दिव्यवर्षशतं विप्र ! भुक्त्वा नरकयातनाम्।
उत्पत्स्यसे भृगोर्वंशे जमदग्निरितीरितः॥
तत्राराध्य पुनर्मां तु वैदिकेनैव धर्मतः।
गच्छ तस्मिन् मुनिश्रेष्ठ ! मम लोकं सुनिर्मलम्॥
इत्युक्त्वा भगवान्विष्णुस्तत्रैवान्तरधीयत।
शाण्डिल्यो निरयं प्राप्य पुनरुत्पद्य भूतले॥
वेदोक्तविधिना विष्णुमर्चयित्वा सनातनम्।
विशुद्धभावात् सम्प्राप्य तद्धाम परमं हरेः॥
तस्मादवैदिकं धर्मं दूरतः परिवर्जयेत्।
वैदिकेनैव विधिना भक्त्या सम्पूजयेद्धरिम्॥
श्रौतेन विधिना चक्रं धृत्वा वै बाहुमूलयोः।
धृतोर्ध्वपुण्ड्रः शुद्धात्मा विधिनैवार्चयेद्धरिम्॥
कर्म्मणा मनसा वाचा न प्रमाद्येत् सनातनात्।
न प्रमाद्येत्परं धर्म्मात् श्रुतिस्मृत्युक्तगौरवात्॥
सुशीलन्तु परं धर्मं नारीणां नृपसत्तम !।
शीलभङ्गेन नारीणां यमलोकः सुदारुणः॥
मृते जीवति वा पत्यौ या नान्यमुपगच्छति।
सैव कीर्तिमवाप्नोति मोदते रमया सह॥
पतिं या नातिचरति मनोवाक्कायकर्म्मभिः।
सा भर्तृलोकमाप्नोति यथैवारुन्धती तथा॥
आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा।
मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता॥

या स्त्री मृतं परिष्वज्य दग्धा चेद्धव्यवाहने ।
सा भर्त्तृलोकमाप्नोति हरिणा कमला यथा ॥
ब्रह्मघ्नं वा सुरापं वा कृतघ्नं वापि मानवम् ।
यमादाय मृता नारी तं भर्त्तारं पुनाति हि ॥
साध्वीनामिह नारीणामग्निप्रपतनादृते ।
नान्यो धर्मोऽस्ति विज्ञेयो मृते भर्तरि कुत्रचित् ॥
वैष्णवं पतिमादाय या दग्धा हव्यवाहने ।
सा वैष्णवपदं याति यत्र गच्छन्ति योगिनः ॥
मृते भर्तरि या नारी भवेद्यदि रजस्वला ।
चिताग्निं संग्रहे तावत् स्नात्वा तस्मिन् प्रवेशयेत् ॥
गर्भिणी नानुगन्तव्या मृतं भर्त्तारमव्ययाः ।
ब्रह्मचर्यव्रतं कुर्याद्यावज्जीवमतन्द्रिता ॥
केशरञ्जनताम्बूलगन्धपुष्पादिसेवनम् ।
भूषितं रक्तवस्त्रञ्च कांस्यपात्रे च भोजनम् ॥
द्विवारभोजनञ्चाक्ष्णोरञ्जनं वर्जयेत्सदा ।
स्नात्वा शुक्लाम्बरधरा जितक्रोधा जितेन्द्रिया ॥
न कल्का कुहका साध्वी तन्द्रालस्यविवर्जिता ।
सुनिर्मला शुभाचारा नित्यं सम्पूजयेद्धरिम् ॥
क्षितिशायी भवेद्रात्रौ शुचौ देशे कुशोत्तरे ।
ध्यानयोगपरा नित्यं सतां सङ्गे व्यवस्थिता ॥
तपश्चरणसंयुक्ता यावज्जीवं समाचरेत् ।
तावत्तिष्ठेन्निराहारा भवेद्यदि रजस्वला ॥
सभर्तृका सती वापि पाणिपूरान्नभोजनम् ।
एकवारं समश्नीयाद्रजसा च परिप्लुता ॥

एवं सुनियताहारा सम्यग्व्रतपरायणा।
भर्त्रा सह समाप्नोति वैकुण्ठपदमव्ययम्॥
दग्धव्या साग्निहोत्रेण भर्त्तुः पूर्वं मृता तु या।
स्वाश्रमग्निं समादाय भर्त्ता पूर्ववदाचरेत्॥
कृत्वा कुशमयीं पत्नीं यावज्जीवमतन्द्रितः।
जुहुयादग्निहोत्रं तु पञ्चयज्ञादिकं तथा॥
अथ च प्रव्रजेद्विद्वान् कन्यां वापि समुद्वहेत्।
प्रव्रज्यामपि कुर्व्वीत कर्म्म वेदोदितं महत्॥
आत्मन्यग्निं समारोप्य जुहुयादात्मवान् सदा।
मनसा वा प्रकुर्व्वीत नित्यनैमित्तिकक्रियाः॥
गृहस्थो वा वनस्थो वा यतिर्वापि भवेद्द्विजः।
अनाश्रमी न तिष्ठेत यावज्जीवं द्विजोत्तमः॥
वर्णाश्रमेषु सर्व्वेषां पूजनीयो जनार्दनः।
न व्यापकेन मन्त्रेण सदैव च महीपते॥
व्यापकानां च सर्व्वेषां ज्यायानष्टाक्षरो मनुः।
अष्टाक्षरस्य जप्ता तु साक्षान्नारायणः स्वयम्॥
सन्न्यासं च समुद्दिश्य सपिण्डच्छन्दोऽपि दैवतम्।
न दीक्षा विधि न ध्यानं सार्थं मन्त्रमुदाहृतम्॥
ज्ञात्वा शुद्धः प्रसन्नात्मा सततात्यो जनार्दनम्।
मनसापार्चयित्वा वा जपेन्मन्त्रं सदा बुधः॥
दानप्रतिग्रहौ यज्ञं स्वाध्यायं पितृतर्पणम्।
पितृक्रियाष्टाक्षरस्य जप्ता कुर्यादतन्द्रितः॥
धृतोर्ध्व पुण्ड्रदेहश्च चक्राङ्कितभुजस्तथा।
अष्टाक्षरं जपन्नित्यं पुनाति भुवनत्रयम्॥

जपेद्योगक्रमेण मन्त्रं सततं वैष्णवोत्तमः।
न सध्वनतया जप्यं कर्तव्यं विष्णुतत्परैः॥
अष्टोत्तरसहस्रं वा शतमष्टोत्तरन्तु वा।
त्रिसन्ध्यासु जपेन्मन्त्रं तदर्थं मनु चिन्तयन्॥
उपोष्य पूर्वदिवसे नद्यां स्नात्वा विधानतः।
आचार्यं संश्रयेत् पूर्वं महाभागवतं द्विजः॥
आचार्यो विष्णुमभ्यर्च्य पवित्रं चापि पूजयेत्।
पुरतो वासुदेवस्य ह्याधानात्ममाचरेत्॥
प्रजपेत् यस्य सूक्तेन पवित्रन्ते वतेत्यृचा।
पवमानस्य चाद्येन ऋग्भिस्तत्त्वभिः क्रमात्॥
आज्यं हुत्वा ततश्चक्रं तदग्नौ प्रतपेद्गुरुः।
चरणं पवित्रमिति यजुषा तच्चक्रमाङ्कयेद्भुजम्॥
वामं सम्यतपेत्यस्मात्ताच्च जन्येन देशिकः॥
अग्निमन्वेति यजुषा तद्धोमाग्नौ प्रतपयेत्।
ततस्तु पार्थिवे ऋग्भिर्हुत्वा पुण्ड्राणि धारयेत्॥
अतो देवेति सूक्तेन विष्णोर्नुकमणेन च।
पूजयेद्वादशभिर्वै केशवादीननुक्रमात्॥
कुषकन्यिषु संपूज्य जुहुयात्ताभिरेव तु।
हुत्वाथ चरुणा सम्यक् मृदा शुभ्रेण देशिकः॥
ललाटादिषु चाङ्गेषु ऋग्भिस्ताभिः क्रमेण वै।
नामभिः केशवाद्यैश्च सच्छिद्राण्येव धारयेत्॥
श्रिये जात इति ऋचा कुङ्कुमाङ्केषु धारयेत्।
परोमात्रेति सूक्तेन उपस्थाय जनार्दनम्॥
होमशेषं समापय्याथ मूर्त्युद्दापनमाचरेत्।

Digitized by Google

एवं पुण्ड्रक्रियां कृत्वा नाम दद्यात्ततः परम् ॥
प्रद्रः प्रान्तामितिसूक्तेन नाममूर्त्तिं समर्चयेत्।
गवाज्यं प्रत्यृचं हुत्वा नाम दद्याच्च वैष्णवः ॥
अभिप्रियाणीति सूक्तेन उपस्थाय जनार्दनम्।
प्रदक्षिण नमस्कारौ कृत्वा शेषं समाचरेत् ॥
मन्त्रदीक्षा विधानन्तु श्रौतं मुनिभिरीरितम्।
नैवाहिता भवेद्दीक्षा न पृथक्तेन वक्ष्यते ॥
अदीक्षितो भवेद्यस्तु मन्त्रं वैष्णवमुत्तमम्।
अर्चनं वापि कुरुते न संसिद्धिमवाप्नुयात् ॥
नादीक्षितः प्रकुर्वीत विष्णोराराधनक्रियाम्।
श्रौतं वा यदि वा स्मार्त्तं दिव्यागममथापि वा ॥
तस्मादुक्तप्रकारेण दीक्षितो हरिमर्चयेत्।
पूर्वाह्णे उपोष्य गुरुणा नद्यां स्नात्वा कृतक्रियः ॥
आचार्यः पूजयेद्विष्णुं गन्धपुष्पाक्षतादिभिः।
ईशान्यादि चतुर्दिक्षु संस्थाप्य कलशान् शुभान् ॥
तेषु गव्यानि निक्षिप्य चतुर्मूर्त्तीन् समर्चयेत्।
वाराहं नारसिंहञ्च वामनं कृष्णमेव च ॥
तद्विष्णोरिति च द्वाभ्यां वाराहं पूजयेत्ततः।
प्रतद्विष्णु इति ऋचा नारसिंहमनामयम् ॥
न ते विष्णो रित्यनेन वामनं पूजयेत्तथा।
वषट्तेविष्णव इति कृष्णं संपूजयेत् द्विजः ॥
संपूज्यावरणं सर्वं गन्धपुष्पैर्विधानतः।
प्रतिष्ठाप्य ततो वह्निमिध्माधानान्तमाचरेत्।
चतुर्भिर्वैष्णवैः सूक्तैः पायसं मधुमिश्रितम् ॥

हुत्वाज्यं जुहुयात्पश्चाच्चैरुणा न समाहितः।
अग्निमीड इत्यनुवाकेन सावित्र्या वैष्णवेन च॥
सर्वैश्च वैष्णवैर्मन्त्रैः पृथगष्टोत्तरं शतम्।
हुत्वा वेदसमाप्तिञ्च जुहुयाद्देशिकोत्तमः॥
ततो भद्रासने शिष्यमुपविश्याभिषेचयेत्।
चतुर्भिर्वैष्णवैर्मन्त्रैः सूक्तैः सत्कलशोदकैः॥
ऋत्विग्भिर्ब्राह्मणैः शिष्यमभिषिच्याथ देशिकः।
कौपीनं कटिसूत्रञ्च तथा वस्त्रञ्च धारयेत्॥
ऊर्द्ध्वपुण्ड्राणि पश्चाच्च तुलसीमालिकेऽपि च।
कुशोत्तरे समासीनमाचान्तं विनयान्वितम्॥
अध्यापयेद्वैष्णवानि सूक्तानि विमलानि च।
व्यापकान् वैष्णवान् मन्त्रानन्यांश्चापि विधानतः॥
तदर्थन्यासमुद्रादि सर्षिच्छन्दोऽधिदैवतम्।
तस्मिन्निवेश्य सद्वृत्तौ शासयेच्छासमाच्युतेः॥
शासितो गुरुणा शिष्यः सद्वृत्तौ सत्पथे स्थितः।
अर्चयेत्परमेकान्त्य सिद्धये हरिमव्ययम्॥
आचार्य्यात्समनु प्राप्तं विग्रहं सुमनोहरम्।
लब्ध्वाथ विधिना विष्णोः पूजयेत्तदनुज्ञया॥
पूर्वेऽह्नि पूर्ववत्पूज्यः श्रौतैस्तैरेवोपचारकैः।
ताभिरेव च हुत्वाथ ऋग्भिराज्यं तथाक्रमात्॥
शय्यासूक्तान्तमाज्येन हुत्वाग्निं वैष्णवत्तमः।
अध्यापयित्वा तान् मन्त्रान् वैदिकान् वैदिकोत्तमः॥
पूजाविधानं त्रिविधं तस्मै होमान्तमाविशेत्।
स्नानं तर्पणं होमार्चा जप्याद्या विविधाः क्रियाः॥

वैशिष्येण गुरोर्मत्वा भक्त्या सर्वं समाचरेत् ।
परमापन्नतो वापि न भुञ्जीत हरेर्दिने ॥
न तिर्यग्धारयेत्पुण्ड्रं नान्यं देवं प्रपूजयेत् ।
वैष्णवः पुरुषो यस्तु शिव ब्रह्मादिदेवतान् ॥
प्रणमेतार्चयेद्वापि विष्ठायां जायते क्रिमिः ।
रजस्तमोऽभिभूतानां देवतानां निरीक्षणात् ॥
पूजनाद्वन्दनाद्वापि वैष्णवो यात्यधोगतिम् ।
शुद्धसत्वमयो विष्णुः पूजनीयो जगत्पतिः ॥
अनर्चनीया रुद्राद्याः विष्णोरावरणं विना ।
यस्तु स्वात्मेश्वरं विष्णुमतीत्यान्यं यजेत हि ॥
स्वात्मेश्वराय हरये च्यवते नात्र संशयः ।
यज्ञाध्ययनकाले तु नमस्तानि वषट्कृता ॥
तानि वै यज्ञयान्यत्र यज्ञो वै विष्णुरव्ययः ।
तस्यैवावरणं प्रोक्तं यज्ञाद्ययनकर्मसु ॥
स्तुवन्ति वेदास्तस्यात गुणरूपविभूतयः ।
तस्मादावरणं हित्वा ये यजन्ति परान् सुरान् ॥
ते यान्ति निरयं घोरं कल्पकोटिशतानि वै ।
रुद्रः काली गणेशश्च कूष्माण्डा भैरवादयः ॥
मद्यमांसाशिनश्चान्ये तामसाः परिकीर्त्तिताः ।
शुद्धानामपि देवानां या स्वतन्त्रार्चनक्रिया ॥
सा दुर्गतिं नयत्येव वैष्णवं वित्तकल्मषम् ।
अर्चयित्वा जगन्नाथं वैष्णवः पुरुषोत्तमम् ॥
तदावरणरूपेण यजेद्देवान् समन्ततः ।
अन्यथा नरकं याति यावदाभूतसंप्लवम् ॥

वासुदेवं जगन्नाथमर्चयित्वैव मानवः।
प्राप्नोति महदैश्वर्यं ब्रह्मेन्द्रत्वादिकं क्षणात्॥
मनसापि जलेनापि जगन्नाथं जनार्दनम्।
सम्प्राप्नोत्यमलां सिद्धिं जगत्सर्वं समर्चितम्॥
हृषीकेशं श्रयीनाथं लक्ष्मीशं सर्वगं हरिम्।
तं विना पुण्डरीकाक्षं कोऽर्चयेदितरान् सुरान्॥
नारायणं परित्यज्य योऽन्यं देवमुपासते।
स्व पतिं नृपतिं हित्वा यथा स्त्री पुरुषाधमम्॥
विष्णोर्निवेदितं हव्यं देवेभ्यो जुहुयात् तथा।
पितृभ्यश्चैव तद्दद्यात्सर्वमानन्त्यमश्नुते॥
निर्माल्यमितरेषां तु यदन्नाद्यन्दिवौकसाम्।
उपभुज्य नरो याति ब्रह्महत्यां न संशयः॥
नैवेद्य भोजनं विष्णो स्तत्पादाम्बु निषेवणम्।
तुलसी खादनं नृणां पापिनामपिमुक्तिदम्॥
एकादश्युपवासश्च शङ्खचक्रादिधारणम्।
तुलस्या पूजनं विष्णो स्त्रितयं वैष्णवं स्मृतम्॥
अवैष्णवः श्वपाको विप्रो बहुशास्त्रश्रुतोऽपि वा।
सजीवन्नेव चण्डालो मृतः श्वासोऽभिजायते॥
क्रतुसाहस्रिणं वापि लोके विप्रमवैष्णवम्।
चण्डालमिव नेक्षेत वर्जयेत्सर्वकर्मसु॥
भगवद्भक्तिदीप्ताग्नि दग्धदुर्जातिकल्मषः।
चण्डालोऽपि बुधै श्लाघ्यो नतु पूज्यो ह्य वैष्णवः॥
शङ्खचक्रोर्ध्वपुण्ड्रादिरहितं ब्राह्मणाधमम्।
पूजयिष्यति यः श्राद्धे सर्वकर्मास्य निष्फलम्॥

तिर्यक्पुण्ड्रधरं विप्रं यः श्राद्धे भोजयिष्यति।
पितरस्तस्य यान्त्येव कालसूत्रं सुदारुणम्॥
ऊर्ध्वपुण्ड्रधरं विप्रं चक्राङ्कितभुजं तथा।
पूजयिष्यति यः श्राद्धे गयाश्राद्धायुतं लभेत्॥
शङ्खचक्रोर्ध्वपुण्ड्राद्यैरन्वितं वैष्णवं द्विजम्।
भक्त्या सम्पूजयेद्यस्तु दैवे पित्र्ये च कर्मणि॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च।
यास्यन्ति पितरस्तस्य विष्णुलोकं सुनिर्मलम्॥
ऊर्ध्वपुण्ड्रधरं विप्रं तप्तचक्राङ्कितांसकम्।
श्राद्धे सम्पूजयेद्यस्तु गयाश्राद्धायुतं लभेत्॥
तप्तचक्रेण विधिना बाहुमूलेन लाञ्छितः।
पुनाति सकलं लोकं नारायण इवाघभित्॥
अविद्यो वा सविद्यो वा शङ्खचक्रोर्ध्वपुण्ड्रधृत्।
ब्राह्मणः सर्वलोकेषु पूज्यमानो हरिर्यथा॥
दुराशी वा दुराचारी शङ्खचक्रोर्ध्वपुण्ड्रधृत्।
नृणां हन्ति समस्ताघं तमः सूर्योदये यथा॥
चक्राङ्कितस्य विप्रस्य पादप्रक्षालितं जलम्।
पुनाति सकलं लोकं यथा त्रिपथगा नदी॥
तिस्रः कोट्यर्द्धकोटी च तीर्थानि भुवनत्रये।
चक्राङ्कितस्य विप्रस्य पादे तिष्ठन्त्य संशयः॥
चक्राङ्कितस्य विप्रस्य पादप्रक्षालितं जलम्।
पीत्वा पातकसाहस्रैर्मुच्यते नात्र संशयः॥
श्राद्धे दाने व्रते यज्ञे विवाहे चोपनायने।
चक्राङ्कितं विप्रमेव पूजयेदितरान्नतु॥

विष्णुचक्राङ्कितो विप्रो भुञ्जानोऽपि यतस्ततः।
न लिप्यते न पापेन तमसेव प्रभाकरः॥
चक्राङ्कित भुजो विप्रः पङ्क्ति मध्ये तु भुञ्जते।
पुनाति सकलां पङ्क्तिं गङ्गे वेतरवाहिनीम्॥
चक्राङ्कित भुजं विप्रं यो भूम्यामभिवादयेत्।
ललाटे पांशु संख्यानि विष्णुलोके महीयते॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा वैष्णवः पुमान्।
अर्चयित्वेतरान् देवान् निरयं यान्त्य संशयम्॥
विष्णो रावरणं हित्वा पूजयित्वेतरान् सुरान्।
वैष्णवः पुरुषो याति कालसूत्रमधोमुखः॥
महापापी महापापैरन्वितो यदि वैष्णवः।
मन्वादि धर्म्मशास्त्रोक्तं प्रायश्चित्तं समाचरेत्॥
प्रायश्चित्त विशेषं तु पश्चात् कुर्व्वीत वैष्णवः।
वैयासिकीं वैष्णवीं च पवित्रीश्च समाचरेत्॥
वैष्णवानान्तु विप्राणां पश्चात्पादजलं पिवेत्।
तृप्तो न परिपूर्णोऽथ कर्म्मस्वधिकृतो भवेत्॥
मन्त्ररत्नार्थ विच्छान्तो नतेज्यो कर्म्मसंयुतः।
द्वादशी नियतो विप्रः स एव पुरुषोत्तमः॥
किमत्र बहुनोक्तेन सारं वक्ष्यामि ते नृप!।
एकादश्युपवासश्च शङ्खचक्रादिधारणम्॥
तदीयानां पूजनञ्च वैष्णवं त्रितयं स्मृतम्।
पुण्यादिष्णु दिनादन्यन्नोपोष्यं वैष्णवैः सदा॥
तथा भागवतादन्यो नार्चनीयो हि कुत्रचित्।
भगवन्तमनुद्दिश्य न दद्या न यजेत् क्वचित्॥

नावैष्णवान् भुञ्जीत दद्याद्वा वैष्णवाय च ।
नार्चयेदितरान् देवान् तिर्यग्धारयेत्तथा ॥
एकादश्यान्न भुञ्जीत वसेद्वा वैष्णवैः सह ।
अष्टाक्षरस्य जप्तारं शङ्खचक्रधरं द्विजः ॥
अवमत्य विमूढात्मा सद्यश्चण्डालतां व्रजेत् ।
वैष्णवं ब्राह्मणं गाश्च तुलसीं द्वादशीं तथा ॥
अनर्चयित्वा मूढात्मा निरयं दुर्गतिं व्रजेत् ।
विष्णोः प्रधानतनवो विप्रा गावश्च वैष्णवाः ॥
भक्त्या संपूज्य तानेव याति विष्णोः परम्पदम् ।
एकादश्युपवासश्च द्वादश्यां विप्र पूजनम् ॥
नित्यमामलक स्नानं पापिनामपि मुक्तिदम् ।
पक्षे पक्षे हरि दिने चक्राङ्कित भुजे द्विजे ॥
संपूज्यमाने विप्रेन्द्रे हरिस्तेषां प्रसीदति ।
अभावे वैष्णवे विप्रे संप्राप्ते हरि वासरे ॥
तद्वत्सम्पूजयेद् गावं तुलसीं वापि वैष्णवः ।
अग्निहोत्रन्तु जुहुयात्सायं प्रातर्द्विजोत्तमः ॥
पञ्चयज्ञांश्च कुर्व्वीत वैष्णवान् विप्रानर्चयेत् ।
तदर्पितं वै भुञ्जीत पिबेत्तत्पादवारि चै ॥
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
पूजयेद्वैष्णवं विप्रं द्वादश्यामपि वैष्णवः ॥
विष्णोः प्रसाद तुलसीं तीर्थं वापि द्विजोत्तमः ।
उपवासदिने वापि प्राशयेदविचारयन् ॥
उपवासदिने यस्तु तीर्थं वा तुलसीदलम् ॥
न प्राशयेद्विमूढात्मा रौरवं नरकं व्रजेत् ।

हर्य्यर्पितन्तु यच्चान्नं तीर्थं वा पितृकर्म्मणि ॥
दद्यात् पितॄणां यच्छ्रेयं गयाश्राद्धायुतं लभेत्।
हरेर्निवेदितं भक्त्या यो दद्याच्छ्राद्धकर्म्मणि ॥
पितरस्तस्य यान्त्येव तद्विष्णोः परमं पदम्।
तीर्थं वा तुलसीपत्रं यो दद्यात्पितृदैवतम् ॥
आकल्पकोटि पितरः परितृप्ता न संशयः।
यः श्राद्धकाले मूढात्मा पितॄणाञ्च दिवौकसाम् ॥
न ददाति हरेर्भुक्तं तस्य वै नारकी गतिः।
हर्य्यर्पितन्तु यच्चान्नं यच्च पादोदकं हरेः ॥
तुलसीं वा पितॄणाञ्च दत्त्वा श्राद्धायुतं लभेत्।
सर्व्वं यज्ञमयं विष्णुं मत्वा देवं जनार्द्दनम्।
आमन्त्र्य वैष्णवान् विप्रान् कुर्याच्छ्राद्धमतन्द्रितः ॥
प्रत्यब्दं पार्व्वणश्राद्धं कुर्यात्पित्रोर्मृतेऽहनि।
अन्यथा वैष्णवो याति ब्रह्महत्यां न संशयः ॥
अमायां कृष्णपक्षे च पित्रेऽ वाभ्युदये तथा।
कुर्यात् श्राद्धं विधानेन विष्णोराज्ञा मनुस्मरन् ॥
न कुर्यात् यो विधानेन पितृयज्ञं नराधमः ॥
आज्ञातिक्रमणाद्विष्णोः पतत्येव न संशयः।
शङ्खचक्रोर्ध्वपुण्ड्रादिचिह्नैः प्रियतमैर्हरेः ॥
अन्वितान् ब्राह्मणानेव पूजयेत्सर्व्वकर्म्मसु।
अश्राद्धिनोऽप्ययज्ञस्य कर्मत्यागिन एव च ॥
वेदस्याप्यनधीतस्य संसर्गं दूरतस्त्यजेत्।
पित्रोः श्राद्धं प्रकुर्व्वीत नैकादश्यां द्विजोत्तमः ॥
द्वादश्यान्तत्प्रकुर्व्वीत नोपवासदिने क्वचित्।

विष्णोर्जन्मदिने वापि गुरूणाञ्च मृतेऽहनि ॥
वैष्णवेष्टिं प्रकुर्व्वीत वैदिकं वैष्णवोत्तमः ।
अगम्यागमनं हिंसा मभक्ष्याणाञ्च भक्षणम् ॥
असत्य कथनं स्तेयं मनसापि विवर्जयेत् ।
तप्तचक्राङ्कनं विष्णोरेकादश्यामुपोषणम् ॥
धृतोर्ध्वं पुण्ड्रदेहत्वं तन्मन्त्राणां परिग्रहः ।
नित्यमामलकस्नानं देवतान्तरवर्जनम् ।
ध्यानं मन्त्रं जपो होमस्तुलस्याः पूजनं हरेः ॥
प्रमादस्तीर्थसेवा च तदीयानाञ्च पूजनम् ।
उपायान्तरसन्त्यागस्तथा मन्त्रार्थ चिन्तनम् ॥
श्रवणं कीर्त्तनं सेवा सत्कृत्यकरणं तथा ।
असत्कृत्य परित्यागो विषयान्तरवर्जनम् ॥
दानं दम स्तपः शौचं आर्जवं क्षान्तिरेव च ।
आनृशंस्यं सतांसङ्गः पारमैकान्त्यहेतवः ॥
वैष्णवः परमैकान्ती नेतरो वैष्णवः स्मृतः ।
नावैष्णवो व्रजेन्मुक्तिं बहुशास्त्र श्रुतोऽपि वा ॥
वैष्णवो वर्णवाह्योऽपि याति विष्णोः परं पदम् ।
एतत्ते कथितं राजन् ! पारमैकान्त्यसिद्धिदम् ॥
वैशिष्ट्यं वैष्णवं धर्मशास्त्रं वेदोपबृंहितम् ।
विष्वक्सेनाय धात्रे च सम्प्रोक्तं परमात्मना ॥
विष्वक्सेनाय सम्प्रोक्तमेतद्विखनसे पुरा ।
भृगोः प्रोक्तं विखनसा भृगुणा च महर्षिणा ॥
भृगुणा च मनोः प्रोक्तं मनुना च ममेरितम् ।
मनुस्तु धर्मशास्त्रन्तु सामान्येनोक्तवान् स्वयम् ॥

तदेव हि मया राजन् ! वैशिष्ठ्येन तवेरितम् ।
विशिष्टं परमं धर्मशास्त्रं वैष्णवमुत्तमम् ॥
य इदं शृणुयाद्भक्त्या कथयेद्वा समाहितः ।
पारमैकान्त्य संसिद्धिं प्राप्नोत्येव न संशयः ॥
सर्वपापविनिर्मुक्तो याति विष्णोः परं पदम् ।
यस्त्विदं शृणुयाद्भक्त्या नित्यं विष्णोश्च सन्निधौ ॥
अश्वमेधसहस्रस्य फलं प्राप्नोत्यसंशयः ।
हारीतमेतच्छास्त्रन्तु परमां धर्मसंहिताम् ॥
आलोक्य पूजयन् विष्णुं पारमैकान्त्यमश्नुते ।
एतच्छ्रुत्वाम्बरीषस्तु हारीतोक्तिं नृपोत्तमः ॥
ववन्दे परया भक्त्या तमृषिं वैष्णवोत्तमः ।
त्वमेव परमोधर्मस्त्वमेव परमं तपः ॥
त्वदङ्घ्रि युगलं प्राप्य सर्वसिद्धिमवाप्नुयाम् ।
महामुनिमिति स्तुत्वा राजर्षिः स महातपाः ॥
प्राप्तवान् परमैकान्त्यं तत्प्रसादात्सुसिद्धिदम् ।
वैशिष्ठ्यं पारमैकान्त्यं एतच्छास्त्रं समाश्रय ॥
भारद्वाजादयः सर्वे नृपाश्च जनकादयः ।
योगिनः सनकाद्याश्च नारदाद्याः सुरर्षयः ॥
वसिष्ठाद्या वैष्णवाश्च विष्वक् सेनादयः सुराः ।
एतच्छास्त्रानुसारेण पूजयामासुरच्युतम् ॥
परमं वैदिकं शास्त्रमेतद्वैष्णवमुत्तमम् ।
ज्ञात्वैव परमैकान्ती पूजयेद्विष्णुमीश्वरम् ॥

इति हारीतस्मृतौ विशिष्टधर्मशास्त्रे वृत्त्यधिको नाम
अष्टमोऽध्यायः ॥

गर्भाधानमृतौ पुंसः सवनं स्पन्दनात् पुरा ।
षष्ठेऽष्टमे वा सीमन्तः प्रसवे जातकर्म्म च ॥ ११ ॥
अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः ।
षष्ठेऽन्नप्राशनं मासि चूडा कार्य्या यथाकुलम् ॥ १२ ॥
एवमेनः शमं याति बीजगर्भसमुद्भवम् ।
तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः ॥ १३ ॥
गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम् ।
राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥ १४ ॥
उपनीय गुरुः शिष्यं महाव्याहृतिपूर्व्वकम् ।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥ १५ ॥
दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ।
कुर्य्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः ॥ १६ ॥
गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।
गन्धलेपक्षयकरं कुर्य्याच्छौचमतन्द्रितः ॥ १७ ॥
अन्तर्जानुः शुचौ देश उपविष्ट उदङ्मुखः ।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥ १८ ॥
कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ १९ ॥
त्रिःप्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत् ।
अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ॥ २० ॥
हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः ।
शुध्येरन् स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥ २१ ॥
स्नानमब्दैवतैर्मन्त्रैर्मार्ज्जनं प्राणसंयमः ।
सूर्य्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः ॥ २२ ॥

गायत्रीं शिरसा सार्द्धं जपेद्व्याहृतिपूर्व्विकाम् ।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥ २३ ॥
प्राणानायम्य सम्प्रोक्ष्य तृचेनाब्दैवतेन तु ।
जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् ॥ २४ ॥
सन्ध्यां प्राक्प्रातरेवं हि तिष्ठेदासूर्य्यदर्शनात् ॥
अग्निकार्य्यं ततः कुर्य्यात् सन्ध्ययोरुभयोरपि ॥ २५ ॥
ततोऽभिवादयेद्वृद्धानसावहमितिब्रुवन् ।
गुरुञ्चैवाप्युपासीत स्वाध्यायार्थं समाहितः ॥ २६ ॥
आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत् ।
हितं चास्याचरेन्नित्यं मनोवाक्कायकर्म्मभिः ॥ २७ ॥
कृतज्ञाद्रोहिमेधाविशुचिकल्याणसूचकाः ।
अध्याप्या धर्म्मतः साधुशक्ताप्तज्ञानवित्तदाः ॥ २८ ॥
दण्डाजिनोपवीतानि मेखलाञ्चैव धारयेत् ।
ब्राह्मणेषु चरेद्भैक्षमनिन्द्येष्वात्मवृत्तये ॥ २९ ॥
आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ।
ब्राह्मणक्षत्रियविशां भैक्षचर्य्या यथाक्रमम् ॥ ३० ॥
कृताग्निकार्य्योभुञ्जीत वाग्यतोगुर्व्वनुज्ञया ।
आपोशानक्रिया पूर्व्वं सत्कृत्यान्नमकुत्सयन् ॥ ३१ ॥
ब्रह्मचर्य्ये स्थितोनैकमन्नमद्यादनापदि ।
ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ॥ ३२ ॥
मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम् ।
भास्करालोकनाश्लीलपरिवादांश्च वर्जयेत् ॥ ३३ ॥
स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति ।
उपनीय ददद्वेदमाचार्य्यः स उदाहृतः ॥ ३४ ॥

एकदेशमुपाध्यायऋत्विग्यज्ञकृदुच्यते ।
एते मान्या यथापूर्व्वमेभ्योमाता गरीयसी ॥ ३५ ॥
प्रतिवेदं ब्रह्मचर्य्यं द्वादशाब्दानि पञ्च वा ।
ग्रहणान्तिकमित्येके केशान्तश्चैव षोड़शे ॥ ३६ ॥
आ षोड़शाब्दाद्द्वाविंशाच्चतुर्विंशाच्च वत्सरात् ।
ब्रह्मक्षत्रविशां कालश्रौपनायनिकः परः ॥ ३७ ॥
अत ऊर्द्धं पतन्त्येते सर्वधर्म्म वहिष्कृताः ।
सावित्री पतिता व्रात्याव्रात्यस्तोमादृते क्रतोः ॥ ३८॥
मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् ।
ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः ॥ ३९ ॥
यज्ञानां तपसाञ्चैव शुभानां चैव कर्म्मणाम् ।
वेदएव द्विजातीनां निःश्रेयसकरः परः ॥ ४० ॥
मधुना पयसा चैव स देवां स्तर्पयेद्द्विजः ।
पितृंश्च मधुसर्पिर्भ्यामृचोऽधीते तु योऽन्वहम् ॥ ४१ ॥
यजूंषि शक्तितोऽधीते योऽन्वहं स घृतामृतैः ।
प्रीणाति देवानाजीत मधुना च पितृंस्तथा ॥ ४
स तु सोमघृतैर्द्देवां स्तर्पयेद्योऽन्वहं पठेत् ।
सामानि तृप्तिं कुर्य्याच्च पितृणां मधुसर्पिषा ॥ ४
मेदसा तर्पयेद्देवानथर्व्वाङ्गिरसः पठन् ।
पितृंश्च मधुसर्पिर्भ्यामन्वहं शक्तितोद्विजः ॥ ४४ ॥
वाकोवाक्यं पुराणञ्च नाराशंसीश्च गाथिकाः ।
इतिहासां स्तथा विद्यां योऽधीते शक्तितोऽन्वहम् ।४५।
मांसक्षीरौदनमधुतर्पणं स दिवौकसाम् ।
करोति तृप्तिञ्च तथा पितृणां मधुसर्पिषा ॥ ४६ ॥

ते तृप्तास्तर्पयन्त्येनं सर्वकाम फलैः शुभैः ।
यं यं क्रतुमधीयेत तस्य तस्याप्नुयात् फलम् ॥ ४७ ॥
त्रिर्वित्तपूर्णं पृथिवीदानस्य फलमश्नुते ।
तपसश्च परस्येह नित्यं स्वाध्यायवान् द्विजः ॥ ४८ ॥
नैष्ठिको ब्रह्मचारी तु वसेदाचार्य्यसन्निधौ ।
तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा ॥ ४९ ॥
अनेन विधिना देहं साधयन् विजितेन्द्रियः ।
ब्रह्मलोकमवाप्नोति नचेह जायते पुनः ॥ ५० ॥
गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया ।
वेदं व्रतानि वापारं नीत्वाप्युभयमेव वा ॥ ५१ ॥
अविप्लुत ब्रह्मचर्य्यो लक्षण्यां स्त्रियमुद्वहेत् ।
अनन्यपूर्विकां कान्तामसपिण्डां यवयसीम् ॥ ५२ ॥
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ।
पञ्चमात् सप्तमादूर्ध्वं मातृतः पितृतस्तथा ॥ ५३ ॥
दशपूरुषविख्याताच्छ्रोत्रियाणां महाकुलात् ।
स्फीतादपि न सञ्चारिरोगदोष समन्वितात् ॥ ५४ ॥
एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियोवरः ।
यत्नात् परीक्षितः पुंस्त्वे युवा धीमान् जनप्रियः ॥ ५५ ॥
यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः ।
न तन्मम मतं यस्मात्तत्रात्मा जायते स्वयम् ॥ ५६ ॥
तिस्रोवर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् ।
ब्राह्मण क्षत्रिय विशां भार्य्याः स्वा शूद्रजन्मनः ॥ ५७ ॥
ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता ।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥ ५८ ॥

यज्ञस्थायर्त्विजे दैवमादायार्षस्तु गोद्वयम् ।
चतुर्दश प्रथमजः पुनात्युत्तरजश्च षट् ॥ ५९ ॥
इत्युक्ता चरतां धर्म्मं सह या दीयतेऽर्थिने ।
स कायः पावयेत्तज्जः षट्षड्वंश्यान् सहात्मना ॥६०॥
आसुरो द्रविणादानाद्गान्धर्वः समयान्मिथः ।
राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात् ॥६१॥
पाणिर्ग्राह्यः सवर्णासु गृह्णीयात् क्षत्रिया शरम् ।
वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मनः ॥ ६२ ॥
पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥ ६३ ॥
अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ ।
गम्यन्त्वभावे दातॄणां कन्या कुर्य्यात् स्वयम्वरम् ॥ ६४॥
सकृत् प्रदीयते कन्या हरं स्तां चौरदण्डभाक् ।
दत्तामपि हरेत् पूर्व्वाच्छ्रेयांश्चेद्वर आव्रजेत् ॥ ६५ ॥
अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसम् ।
अदुष्टाञ्च त्यजन् कन्यां दूषयंश्च मृषा शतम् ॥ ६६ ॥
अक्षता वा क्षता चैव पुनर्भूः संस्कृता पुनः ।
स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत् ॥६७॥
अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया ।
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ॥६८॥
आगर्भं सम्भवाद्गच्छेत् पतितस्त्वन्यथा भवेत् ।
अनेन विधिना जातः क्षेत्रजः स भवेत् सुतः ॥ ६९ ॥
हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ।
परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम् ॥ ७० ॥

सोमः शौचं ददौ तासां गन्धर्वाश्च शुभां गिरम् ।
पावकः सर्वमेध्यत्वं मेध्यावै योषितोह्यतः ॥ ७१ ॥
व्यभिचारादृतौ शुद्धिर्गर्भे त्यागो विधीयते ।
गर्भभर्तृवधादौ च तथा महति पातके ॥ ७२ ॥
सुरापी व्याधिता धूर्त्ता वन्ध्यार्थघ्न्यप्रियम्वदा ।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥ ७३ ॥
अधिविन्ना तु भर्त्तव्या महदेनोऽन्यथा भवेत् ।
यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्द्धते ॥ ७४ ॥
मृते जीवति वा पत्यौ या नान्यमुपगच्छति ।
सेह कीर्त्तिमवाप्नोति मोदते चोमया सह ॥ ७५ ॥
आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम् ।
त्यजन् दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः ॥७६ ॥
स्त्रीभिर्भर्तृवचः कार्य्यमेषधर्म्मः परः स्त्रियाः ।
आशुद्धेः संप्रतीक्ष्योहि महापातकदूषितः ॥ ७७ ॥
लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः ।
यस्मात्तस्मात् स्त्रियः सेव्या भर्त्तव्याश्च सुरक्षिताः ॥७८॥
षोड़शर्त्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत् ।
ब्रह्मचार्य्येव पर्व्वाण्याद्याश्चतस्रस्तु वर्जयेत् ॥ ७९ ॥
एवं गच्छन् स्त्रियं क्षामां मघां मूलञ्च वर्जयेत् ।
सुस्थ इन्दौ सकृत् पुत्रं लक्षण्यं जनयेत् पुमान् ॥ ८० ॥
यथा कामी भवेद्वापि स्त्रीणां वरमनुस्मरन् ।
स्वदारनिरतश्चैव स्त्रियोरक्ष्या यतः स्मृताः ॥ ८१ ॥
भर्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः ।
बन्धुभिश्च स्त्रियः पूज्याभूषणाच्छादनाशनैः ॥ ८२ ॥

संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी।
कुर्य्याच्छ्वशुरयोः पादवन्दनं भर्त्तृतत्परा॥ ८३॥
क्रीड़ां शरीरसंस्कारं समाजोत्सवदर्शनम्।
हास्यं परगृहे यानं त्यजेत् प्रोषित भर्त्तृका॥ ८४॥
रक्षेत् कन्यां पिता विन्नां पतिः पुत्रास्तु वार्द्धके।
अभावे ज्ञातयस्तेषां स्वातन्त्र्यं न क्वचित् स्त्रियाः॥८५
पितृमातृसुतभ्रातृश्वश्रूश्वशुरमातुलैः।
हीना न स्याद्विना भर्त्रा गर्हणीयान्यथा भवेत्॥८६॥
पतिप्रियहिते युक्ता स्वाचारा संजतेन्द्रिया।
इह कीर्त्तिमवाप्नोति प्रेत्य चानुपमं सुखम्॥ ८७॥
सत्यामन्यां सवर्णायां धर्म्मकार्य्यं न कारयेत्।
सवर्णासु विधौ धर्म्मे ज्येष्ठया न विनेतराः॥ ८८॥
दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः।
आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन्॥ ८९॥
सवर्णेभ्यः सवर्णासु जायन्ते वै सजातयः।
अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्द्धनाः॥ ९०॥
विप्रान्मूर्द्धाभिषिक्तोहि क्षत्रियायां विशः स्त्रियाम्।
अम्बष्ठः शूद्रां निषादोजातः पारशवोऽपिवा॥ ९१॥
वैश्याशूद्रोस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ।
वैश्यात्तु करणः शूद्रां विन्नास्वेषविधिः स्मृतः॥९२॥
ब्राह्मण्यां क्षत्रियात् सूतोवैश्याद्वैदेहकस्तथा।
शूद्राज्जातस्तु चाण्डालः सर्वधर्म्मवहिष्कृतः॥ ९३॥
क्षत्रिया मागधं वैश्याच्छूद्रात् क्षत्तारमेव तु।
शूद्रादायोगवं वैश्या जनयामास वै सुतम्॥९४॥

माहिष्येण करण्यान्तु रथकारः प्रजायते ।
असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः ॥ ९५ ॥
जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा ।
व्यत्यये कर्म्मणां साम्यं पूर्ववच्चोत्तराधरम् ॥ ९६ ॥
कर्म्म स्मार्त्तं विवाहाग्नौ कुर्व्वीत प्रत्यहं गृही ।
दायकालाहृतेनापि श्रौतं वैतानिकाग्निषु ॥ ९७ ॥
शरीरचिन्तां निर्वर्त्य कृतशौचविधिर्द्विजः ।
प्रातःसन्ध्यामुपासीत दन्तधावनपूर्व्वकम् ॥ ९८ ॥
हुत्वाग्नीन् सूर्य्यदैवत्यान् जपेन्मन्त्रान् समाहितः ।
वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च ॥ ९९ ॥
उपेयादीश्वरञ्चैव योगक्षेमार्थसिद्धये ।
स्नात्वा देवान् पितॄंश्चैव तर्पयेदर्चयेत्तथा ॥ १०० ॥
वेदाथर्व्वपुराणानि सेतिहासानि शक्तितः ।
जपयज्ञप्रसिद्ध्यर्थं विद्याञ्चाध्यात्मिकीं जपेत् ॥ १०१ ॥
बलिकर्म्मस्वधाहोमस्वाध्यायातिथिसत्क्रिया ।
भूतपितृमरब्रह्ममनुष्याणां महामखाः ॥ १०२ ॥
देवेभ्यश्च हुतादन्नाच्छेषाद्भूत बलिं हरेत् ।
अन्नं भूमौ श्वचाण्डालवायसेभ्यश्च निःक्षिपेत् ॥१०३॥
अन्नं पितृमनुष्येभ्यो देयमप्यन्वहं जलम् ।
स्वाध्यायमन्वहं कुर्य्यात् न पचेदन्नमात्मने ॥ १०४ ॥
बालं सुवासिनी वृद्ध गर्भिण्या तुरकन्यकाः ।
सम्भोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम् ॥१०५॥
आपोशानेनो परिष्टादधस्तादश्नता तथा ।
अनग्नममृतञ्चैव कार्य्यमन्नं द्विजन्मना ॥ १०६ ॥

अतिथित्वेन वर्णेभ्यो देयं शक्त्यानुपूर्वशः ।
अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः ॥१०७॥
सत्कृत्य भिक्षवे भिक्षा दातव्या सुव्रताय च ।
भोजयेच्चागतान् काले सखिसम्बन्धिबान्धवान् ॥१०८॥
महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् ।
सत्क्रियान्वासनं स्वादु भोजनं सूनृतं वचः ॥ १०९॥
प्रतिसम्वत्सरं त्वर्घ्याः स्नातकाचार्य्यपार्थिवाः ।
प्रियो विवाह्यश्च तथा यज्ञं प्रत्यृत्विजः पुनः ॥ ११० ॥
अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः ।
मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः ॥ १११ ॥
परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते ।
वाक्पाणिपादचापल्यं वर्जयेच्चातिभोजनम् ॥ ११२॥
अतिथिं श्रोत्रियं तृप्तमासीमान्तमनुव्रजेत् ।
अहःशेषं सहासीत शिष्टैरिष्टैश्च बन्धुभिः ॥ ११३ ॥
उपास्य पश्चिमां सन्ध्यां हुत्वाग्नीं स्तानुपास्य च ।
भृत्यैः परिवृतो भुक्त्वा नातितृप्तोऽथ संविशेत् ॥११४॥
ब्राह्मे मुहूर्त्ते उत्थाय चिन्तयेदात्मनोहितम् ।
धर्म्मार्थकामान् स्वे काले यथाशक्ति न हापयेत्॥११५॥
विद्याकर्म्मवयोबन्धुवित्तैर्मान्या यथाक्रमम् ।
एतैः प्रभूतैः शूद्रोऽपि वार्द्धके मानमर्हति ॥ ११६ ॥
वृद्धभारिनृपस्नातस्त्रीरोगिवरचक्रिणाम् ।
पन्था देयो नृपस्तेषां मान्यः स्नातस्तु भूपतेः ॥११७ ॥
इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च ।
प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा ॥ ११८ ॥

बहूनां यद्यकामासौ चतुर्विंशतिकः पृथक् ॥ २९४॥
गृहीतवेतना वेश्या नेच्छन्ती द्विगुणं वहेत् ।
अगृहीते समं दाप्यः पुमानप्येवमेव च ॥ २९५ ॥
अयोनौ गच्छतो योषां पुरुषं वापि मेहतः ।
चतुर्विंशतिको दण्डस्तथा प्रव्रजितागमे ॥ २९६ ॥
अन्त्याभिगमने त्वङ्क्य कुबन्धेन प्रवासयेत् ।
शूद्रस्तथान्त्य एव स्यादन्त्यस्यार्यागमे वधः ॥२९७॥

इति स्त्रीसंग्रहप्रकरणम् ॥

---

ऊनं वाप्यधिकं वापि लिखेद्यो राजशासनम् ।
पारदारिकचौरं वा मुञ्चतो दण्ड उत्तमः ॥२९८॥
अभक्ष्येण द्विजं दूष्यन् दण्ड्य उत्तमसाहसम् ।
क्षत्रियं मध्यमं वैश्यं प्रथमं शूद्रमर्द्धकम् ॥ २९९ ॥
कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी ।
त्र्यङ्गहीनस्तु कर्त्तव्यो दाप्यश्चोत्तमसाहसम् ॥ ३०० ॥
चतुष्पादकृतो दोषो नापेहीति प्रजल्पतः ।
काष्ठलोष्ट्रेषु पाषाणबाहुयुग्यकृतस्तथा ॥३०१ ॥
छिन्ननस्येन यानेन तथा भग्नयुगादिना ।
पश्चाच्चैवापसरता हिंसने स्वाम्यदोषभाक् ३०२ ॥
शक्तो ह्यमोचयन् स्वामी दंष्ट्रिणां शृङ्गिणां तथा ।
प्रथमं साहसं दद्याद्विक्रुष्टे द्विगुणं ततः ॥ ३०३ ॥
जारं चौरेत्यभिवदन् दाप्यः पञ्चशतं दमम् ।
उपजीव्य धनं मुञ्चंस्तदेवाष्टगुणीकृतम् ॥ ३०४ ॥
राज्ञोऽनिष्टप्रवक्तारं तस्यैवाक्रोशकारिणम् ।

तथान्नस्य च भेत्तारं जिह्वां छित्त्वा प्रवासयेत् ॥ २०५ ॥
मृताङ्गलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा ।
राजयानासनारोढुर्दण्ड उत्तमसाहसः ॥ २०६ ॥
द्विनेत्रभेदिनो राजद्विष्टादेशकृतस्तथा ।
विप्रत्वेन च शूद्रस्य जीवतोऽष्टशतो दमः ॥ २०७ ॥
दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु ।
सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं दमम् ॥ २०८ ॥
यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः ।
तमायान्तं पुनर्जित्वा दापयेद्द्विगुणं दमम् ॥ २०९ ॥
राज्ञाऽन्यायेन यो दण्डो गृहीतो वरुणाय तम् ।
निवेद्य दद्याद्विप्रेभ्यः स्वयं त्रिंशद्गुणीकृतम् ॥ २१० ॥

॥ इति श्रीयाज्ञवल्कीये धर्मशास्त्रे द्वितीयोऽध्यायः ॥

---

ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः ।
आ श्मशानादनुव्रज्य इतरो ज्ञातिभिर्वृतः ॥ १ ॥
यमसूक्तं यमीं गाथां जपद्भिर्लौकिकाग्निना ।
स दग्धव्य उपेतश्चेदाहिताग्न्यावृतार्थवत् ॥ २ ॥
सप्तमाद्दशमाद्वापि ज्ञातयोऽभ्युपयन्त्यपः ।
अप नः शोशुचदघमनेन पितृदिङ्मुखाः ॥ ३ ॥
एवं मातामहाचार्यप्रेतानामुदकक्रिया ।
कामोदकं सखिप्रत्तास्वस्रीयश्वशुरर्त्विजाम् ॥ ४ ॥
सकृत्प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यताः ।
न ब्रह्मचारिणः कुर्युरुदकं पतितास्तथा ॥ ५ ॥
पाषण्ड्यनाश्रिताः स्तेना भर्तृघ्न्यः कामगादिकाः ।

सुराप्य आत्मत्यागिन्यो नाशौचोदकभाजनाः ॥ ६ ॥
कृतोदकान् समुत्तीर्णान् मृदुशाद्वलसंस्थितान् ।
स्नातानपवदेयुस्तानितिहासैः पुरातनैः ॥ ७ ॥
मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम् ।
यः करोति स संमूढो जलबुद्बुदसन्निभे ॥ ८ ॥
पञ्चधा सम्भृतः कायो यदि पञ्चत्वमागतः ।
कर्मभिः स्वशरीरोत्थैस्तत्र का परिवेदना ॥ ९ ॥
गन्त्री वसुमती नाशमुदधिर्दैवतानि च ।
फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति ॥ १० ॥
श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।
अतो न रोदितव्यन्तु क्रियाः कार्य्याः स्वशक्तितः ॥ ११ ॥
इति संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः ।
विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः ॥ १२ ॥
आचम्याग्न्यादिसलिलं गोमयं गौरसर्षपान् ।
प्रविशेयुः समालभ्य दत्त्वाश्मनि पदं शनैः ॥ १३ ॥
प्रवेशनादिकं कर्म्म प्रेतसंस्पर्शिनामपि ।
इच्छतां तत्क्षणाच्छुद्धिं परेषां स्नानसंयमात् ॥ १४ ॥
आचार्य्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रती ।
सकटान्नं नचाश्नीयान्नच तैः सह संवसेत् ॥ १५ ॥
क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक् पृथक् ।
पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयम् ॥ १६ ॥
जलमेकाहमाकाशे स्थाप्यं क्षीरञ्च मृण्मये ।
वैतानोपासनाः कार्य्याः क्रियाश्च श्रुतिदर्शनात् ॥ १७
त्रिरात्रं दशरात्रं वा शावमाशौचमुच्यते ।

ऊनद्विवर्षमुभयोः सूतकं मातुरेव हि ॥ १८ ॥
पित्रोस्तु सूतकं मातुस्तदसृग्दर्शनाद् ध्रुवम् ।
तदहर्न प्रदुष्येत पूर्वेषां जन्मकारणात् ॥ १९ ॥
अन्तरा जन्ममरणे शेषाहोभिर्विशुध्यति ।
गर्भस्रावे मासतुल्यानिशाः शुद्धेस्तु कारणम् ॥ २० ॥
हतानां नृपगोविप्रैरन्वक्षञ्चात्मघातिनाम् ।
प्रोषिते कालशेषः स्यात् पूर्णे दत्वोदकं शुचिः ॥ २१ ॥
क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु ।
त्रिंशद्दिनानि शूद्रस्य तदर्द्धं न्यायवर्त्तिनः ॥ २२ ॥
आदन्तजन्मनः सद्य आचूडान्नैशिकी स्मृता ।
त्रिरात्रमाव्रता देशाद्दशरात्रमतः परम् ॥ २३ ॥
अहस्त्वदत्तकन्यासु बालेषु च विशोधनम् ।
गुर्व्वन्तेवास्यनूचानमातुलश्रोत्रियेषु च ॥ २४ ॥
अनौरसेषु पुत्रेषु भार्य्यास्वन्यगतासु च ।
निवासराजनि प्रेते तदहः शुद्धिकारणम् ॥ २५ ॥
ब्राह्मणेनानुगन्तव्यो न शूद्रो न द्विजः क्वचित् ।
अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाग्निं घृतभुक् शुचिः ॥ २६
महीपतीनां नाशौचं हतानां विद्युता तथा ।
गोब्राह्मणार्थे संग्रामे यस्य चेच्छति भूमिपः ॥ २७ ॥
ऋत्विजां दीक्षितानाञ्च यज्ञियं कर्म्म कुर्वताम् ।
सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥ २८ ॥
दाने विवाहे यज्ञे च संग्रामे देशविप्लवे ।
आपद्यपि च कष्टायां सद्यः शौचं विधीयते ॥ २९ ॥
उदक्याशौचिभिः स्नायात् संस्पृष्टस्तैरुपस्पृशेत् ।

अब्लिङ्गानि जपेच्चैव सावित्रीं मनसा सकृत् ॥३०॥
कालोऽग्निः कर्म मृद्वायुर्मनो ज्ञानं तपो जलम्।
पश्चात्तापो निराहारः सर्वेऽमी शुद्धिहेतवः ॥ ३१ ॥
अकार्य्यकारिणां दानं वेगो नद्यास्तु शुद्धिकृत्।
शोध्यस्य मृच्च तोयञ्च संन्यासो वै द्विजन्मनाम् ॥३२॥
तपोवेदविदां क्षान्तिर्विदुषां वर्ष्मणो जलम्।
जपः प्रच्छन्नपापानां मनसः सत्यमुच्यते ॥ ३३ ॥
भूतात्मनस्तपो विद्ये बुद्धेर्ज्ञानं विशोधनम्।
क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता ॥ ३४ ॥

इत्याशौचप्रकरणम् ॥

---

क्षात्रेण कर्मणा जीवेद्विशां वाप्यापदि द्विजः।
निस्तीर्य्य तामथात्मानं पावयित्वा न्यसेत् पथि ॥३५॥
फलोपलक्षौमसोममनुष्यापूपवीरुधः।
तिलौदनरसक्षारान् दधि क्षीरं घृतं जलम् ॥ ३६ ॥
शस्त्रासवमधूच्छिष्टमधुलाक्षाश्च बर्हिषः।
मृच्चर्मपुष्पकुतपकेशतक्रविषक्षितीः ॥ ३७ ॥
कौशेयनीललवणमांसैकशफसीसकान्।
शाकार्द्रौषधिपिण्याकपशुगन्धांस्तथैव च ॥ ३८ ॥
वैश्यवृत्त्यापि जीवन्नो विक्रीणीत कदाचन।
धर्मार्थं विक्रयं नेयास्तिला धान्येन तत्समाः ॥ ३९ ॥
लाक्षालवणमांसानि पतनीयानि विक्रये।
पयो दधि च मद्यञ्च हीनवर्णकराणि च ॥ ४० ॥
आपद्गतः सम्प्रगृह्णन् भुञ्जानो वा यतस्ततः।

न लिप्येतैनसा विप्रो ज्वलनार्कसमो हि सः ॥ ४१ ॥

कृषिः शिल्पं भृतिर्विद्या कुसीदं शकटं गिरिः ।

सेवाऽनूपं नृपो भैक्षमापत्तौ जीवनानि तु ॥ ४२ ॥

बुभुक्षितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत् ।

प्रतिगृह्य तदाख्येयमभियुक्तेन धर्मतः ॥ ४३ ॥

तस्य वृत्तं कुलं शीलं श्रुतमध्ययनं तपः ।

ज्ञात्वा राजा कुटुम्बञ्च धर्म्यां वृत्तिं प्रकल्पयेत् ॥४४

इत्यापद्धर्मप्रकरणम् ॥

---

सुतविन्यस्तपत्नीकस्तया वानुगतो वनम् ।

वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत् ॥४५॥

अफालकृष्टेनाग्नींश्च पितृदेवातिथींस्तथा ।

भृत्यांस्तु तर्पयेत् श्मश्रुजटालोमभृदात्मवान् ॥ ४६ ॥

अह्नो मासस्य षण्णां वा तथा संवत्सरस्य वा ।

अर्थस्य सञ्चयं कुर्य्यात् कृतमाश्वयुजे त्यजेत् ॥ ४७ ॥

दान्तस्त्रिषवणस्नायी निवृत्तश्च प्रतिग्रहात् ।

स्वाध्यायवान् दानशीलः सर्वसत्त्वहिते रतः ॥ ४८॥

दन्तोलूखलिकः कालपक्वाशी वाऽश्मकुट्टकः ।

श्रौतं स्मार्त्तं फलस्नेहैः कर्म्म कुर्य्यात् क्रियास्तथा ॥ ४९ ॥

चान्द्रायणैर्नयेत्कालं कृच्छ्रैर्वा वर्त्तयेत्सदा ।

पक्षे गते वाप्यश्नीयान्मासे वाऽहनि वा गते ॥ ५० ॥

स्वप्याद्भूमौ शुची रात्रौ दिवा संप्रपदैर्नयेत् ।

स्थानासनविहारैर्वा योगाभ्यासेन वा तथा ॥ ५१ ॥

ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः ।

आर्द्रवासास्तु हेमन्ते शक्त्या वापि तपश्चरेत् ॥५२ ॥
यः कण्टकैर्वितुदति चन्दनैर्यश्च लिम्पति ।
अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य च ॥ ५३ ॥
अग्नीन् वात्मसात् कृत्वा वृक्षावासी मिताशनः ।
वानप्रस्थगृहेष्वेव यात्रार्थं भैक्षमाचरेत् ॥ ५४ ॥
ग्रामादाहृत्य वा ग्रासानष्टौ भुञ्जीत वाग्यतः ।
वायुभक्षः प्रागुदीचीं गच्छेदावर्ष्मसंक्षयात् ॥ ५५ ॥

इति वानप्रस्थप्रकरणम् ॥

---

वनाद्गृहाद्वा कृत्वेष्टिं सार्ववेदसदक्षिणाम् ।
प्राजापत्यां तदन्ते तानग्नीनारोप्य चात्मनि ॥५६॥
अधीतवेदो जपकृत् पुत्रवानन्नदोऽग्निमान् ।
शक्त्या च यज्ञकृन्मोक्षे मनः कुर्य्यात्तु नान्यथा ॥५६॥
सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः ।
एकारामः परिव्रज्य भिक्षार्थी ग्राममाश्रयेत् ॥५८॥
अप्रमत्तश्चरेद्भैक्षं सायाह्ने नाभिलक्षितः ।
रहिते भिक्षुकैर्ग्रामे यात्रामात्रमलोलुपः ॥ ५९ ॥
यति पात्राणि मृद्वेणुदार्वलाबुमयानि च ।
सलिलैः शुद्धिरेतेषां गोवालैश्चावघर्षणात् ॥ ६० ॥
सन्निरुध्येन्द्रियग्रामं रागद्वेषौ विहाय च ।
भयं हित्वा च भूतानाममृती भवति द्विजः ॥ ६१ ॥
कर्त्तव्याशयशुद्धिस्तु भिक्षुकेण विशेषतः ।
ज्ञानोत्पत्तिनिमित्तत्वात् स्वातन्त्र्यकरणाय च ॥६२॥
अवेक्ष्या गर्भवासाश्च कर्मजा गतयस्तथा ।

आश्रयो व्याधयः क्लेशा जरारूपविपर्य्ययाः ॥ ६२ ॥
भवो जातिसहस्रेषु प्रिया प्रियविपर्य्ययः ।
ध्यानयोगेन सम्पश्येत् सूक्ष्म आत्मात्मनि स्थितः ॥६३॥
नाश्रमः कारणं धर्मे क्रियमाणो भवेद्धि सः ।
अतो यदात्मनोऽपथ्यं परस्य न तदाचरेत् ॥ ६५ ॥
सत्यमस्तेयमक्रोधो ह्रीः शौचं धीर्धृतिर्दमः ।
संयतेन्द्रियता विद्या धर्मः सर्व उदाहृतः ॥ ६६ ॥
इति यतिप्रकरणम् ॥

---

निःसरन्ति यथा लोहपिण्डात्तप्तात् स्फुलिङ्गकाः ।
सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि ॥ ६७ ॥
तत्रात्मा हि स्वयं किञ्चित् कर्म किञ्चित् स्वभावतः ।
करोति किञ्चिदभ्यासाद्धर्माधर्मोभयात्मकम् ॥६८॥
निमित्तमक्षरः कर्त्ता बोद्धा ब्रह्म गुणी वशी ।
अजः शरीरग्रहणात् स जात इति कीर्त्त्यते ॥ ६९ ॥
सर्गादौ स यथाकाशं वायुं ज्योतिर्जलं महीम् ।
सृजत्येकोत्तरगुणांस्तथादत्ते भवन्नपि ॥ ७० ॥
आहुत्याप्यायते सूर्य्यस्तस्माद्वृष्टिरथौषधिः ।
तदन्नं रसरूपेण शुक्रत्वमुपगच्छति ॥ ७१ ॥
स्त्रीपुंसयोस्तु संयोगे विशुद्धे शुक्रशोणिते ।
पञ्चधातून् स्वयं षष्ठ आदत्ते युगपत् प्रभुः ॥ ७२ ॥
इन्द्रियाणि मनः प्राणो ज्ञानमायुः सुखं धृतिः ।
धारणा प्रेरणं दुःखमिच्छाहंकार एव च ॥ ७३ ॥
प्रयत्न आकृतिर्वर्णः स्वरद्वेषौ भवाभवौ ।

तस्यैतदात्मजं सर्वमकादेरादिमिच्छतः ॥ ७४ ॥
प्रथमे मासि संक्लेदभूतो धातुविमूर्च्छितः ।
मास्यर्बुदं द्वितीये तु तृतीयेऽङ्गेन्द्रियैर्युतः ॥ ७५ ॥
आकाशाल्लाघवं सौक्ष्म्यं शब्दं श्रोत्रं बलादिकम् ।
वायोस्तु स्पर्शनं चेष्टां व्यूहनं रौक्ष्यमेव च ॥ ७६ ॥
पित्तात्तु दर्शनं पक्तिमौष्ण्यं रूपं प्रकाशिताम् ।
रसात्तु रसनं शैत्यं स्नेहं क्लेदं समार्द्दवम् ॥ ७७ ॥
भूमेर्गन्धं तथा घ्राणं गौरवं मूर्त्तिमेव च ।
आत्मा गृह्णात्यजः सर्वं तृतीये स्पन्दते ततः ॥ ७८ ॥
दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ।
वैरूप्यं मरणं वापि तस्मात् कार्य्यं प्रियं स्त्रियाः॥७९
स्थैर्य्यं चतुर्थे त्वङ्गानां पञ्चमे शोणितोद्भवः ।
षष्ठे बलस्य वर्णस्य नखरोम्णाञ्च सम्भवः ॥ ८० ॥
मनश्चैतन्ययुक्तोऽसौ नाड़ीस्नायुशिरायुतः ।
सप्तमे चाष्टमे चैव त्वङ्मांसस्मृतिमानपि ॥ ८१ ॥
पुनर्धात्रीं पुनर्गर्भमोजस्तस्य प्रधावति ।
अष्टमे मास्यतो गर्भो जातः प्राणैर्वियुज्यते ॥ ८२ ॥
नवमे दशमे वापि प्रबलैः सूतिमारुतैः ।
निःसार्य्यते बाण इव यन्त्रच्छिद्रेण सज्वरः ॥ ८३ ॥
तस्य षोढा शरीराणि षट्त्वचो धारयन्ति च ।
षड़ङ्गानि तथास्थ्नाञ्च सह षष्ट्या शतत्रयम् ॥ ८४ ॥
स्थालैः सह चतुःषष्टिर्दन्ता वै विंशतिर्नखाः ।
पाणिपादशलाकाश्च तासां स्थानचतुष्टयम् ॥ ८५ ॥
षष्ट्यङ्गुलीनां द्वे पार्ष्ण्योर्गुल्फेषु च चतुष्टयम् ।

चत्वार्यरत्निकास्थीनि जङ्घयोस्तावदेव तु ॥ ८६ ॥
द्वे द्वे जानुकपोलोरुफलकांससमुद्भवे ।
अक्षतालूषके श्रोणीफलके च विनिर्दिशेत् ॥ ८७ ॥
भगास्थ्येकं तथा पृष्ठे चत्वारिंशच्च पञ्च च ।
ग्रीवा पञ्चदशास्थिः स्याज्जत्र्वेकैकं तथा हनुः ॥८८॥
तन्मूले द्वे ललाटाक्षिगण्डे नासा घनास्थिका ।
पार्श्वकास्थालकैः सार्द्धमर्बुदैश्च द्विसप्ततिः ॥ ८९ ॥
द्वौ शङ्खकौ कपालानि चत्वारि शिरसस्तथा ।
उरः सप्तदशास्थीनि पुरुषस्यास्थिसंग्रहः ॥ ९० ॥
गन्धरूपरसस्पर्शशब्दाश्च विषयाः स्मृताः ।
नासिका लोचने जिह्वा त्वक् श्रोत्रं चेन्द्रियाणि च॥९१
हस्तौ पायुरुपस्थश्च वाक्पादौ चेति पञ्च वै ।
कर्मेन्द्रियाणि जानीयान्मनश्चैवोभयात्मकम् ॥ ९२ ॥
नाभिरोजोगुदं शुक्रं शोणितं शङ्खकौ तथा ।
मूर्द्धांसकण्ठहृदयं प्राणस्यायतनानि तु ॥ ९३ ॥
वपावसावहननं नाभिः क्लोमयकृत् प्लिहा ।
क्षुद्रान्त्रं वक्ककौ वस्तिः पुरीषाधानमेव च ॥ ९४ ॥
आमाशयोऽथ हृदयं स्थूलान्त्रं गुदमेव च ।
उदरञ्च गुदौ कौष्ठ्यौ विस्तारोऽयमुदाहृतः ॥ ९५ ॥
कनीनिके चाक्षिकूटे शष्कुली कर्णपत्रकौ ।
कर्णौ शङ्खौ भ्रुवौ दन्तवेष्टावोष्ठौ ककुन्दरे ॥९६ ॥
वङ्क्षणौ वृषणौ वृक्कौ श्लेष्मसङ्घातजौ स्तनौ ।
उपजिह्वा स्फिचौ बाहू जङ्घोरुषु च पिण्डिका ॥९७
तालूदरं वस्ति शीर्षं चिबुके गलशुण्डिके ।

अवटश्चैवमेतानि स्थानान्यत्र शरीरके ॥ ९८ ॥
अक्षिकर्णचतुष्कञ्च पद्धस्तहृदयानि च ।
नवच्छिद्राणि तान्येव प्राणस्यायतनानि तु ॥ ९९ ॥
शिराः शतानि सप्तैव नवस्नायुशतानि च ।
धमनीनां शते द्वे च पेशी पञ्चशतानि च ॥ १०० ॥
एकोनत्रिंशल्लक्षाणि तथा नवशतानि च ।
षट्पञ्चाशच्च जानीत शिरा धमनिसंज्ञिताः ॥ १०१ ॥
त्रयोलक्षास्तु विज्ञेयाः श्मश्रुकेशाः शरीरिणाम् ।
सप्तोत्तरं मर्म्मशतं द्वे च सन्धिशते तथा ॥ १०२ ॥
रोम्णां कोट्यश्च पञ्चाशच्चतस्रः कोट्य एव च ।
सप्तषष्टिस्तथा लक्षाः सार्द्धाः स्वेदायनैः सह ॥१०३॥
वायवीयैर्विगण्यन्ते विभक्ताः परमाणवः ।
यद्यप्येकोऽनुवेदैषां भावानाञ्चैव संस्थितिम् ॥१०४॥
रसस्य नव विज्ञेया जलस्याञ्जलयो दश ।
सप्तैव तु पुरीषस्य रक्तस्याष्टौ प्रकीर्त्तिताः ॥ १०५ ॥
षट् श्लेष्मा पञ्च पित्तञ्च चत्वारो मूत्रमेव च ।
वसात्रयो द्वौ तु मेदोमज्जैकोऽर्द्धन्तु मस्तके ॥ १०६ ॥
श्लेष्मौजसस्तावदेव रेतसस्तावदेव तु ।
इत्येतदस्थिरं वर्ष्म यस्य मोक्षाय कृत्यसौ ॥१०७ ॥
द्वासप्ततिसहस्राणि हृदयादभिनिःसृता ।
हिताहितानामनाड्यस्तासां मध्ये शशिप्रभम् ॥ १०८॥
मण्डलं तस्य मध्यस्थ आत्मा दीप इवाचलः ।
स ज्ञेयस्तं विदित्वेह पुनरायतने न तु ॥ १०९ ॥
ज्ञेयं चारण्यकमहं यदादित्यादवाप्तवान् ।

योगशास्त्रञ्च मत्प्रोक्तं ज्ञेयं योगमभीप्सता ॥ ११० ॥
अनन्यविषयं कृत्वा मनोबुद्धिस्मृतीन्द्रियम् ।
ध्येय आत्मा स्थितो योऽसौ हृदये दीपवत् प्रभुः ॥१११॥
यथाविधानेन पठन् सामगायमविच्युतम् ।
सावधानस्तदभ्यासात् परं ब्रह्माधिगच्छति ॥ ११२ ॥
अपरान्तकमुल्लोप्यं मद्रकं प्रकरीन्तथा ।
औवेणकं सरोविन्दुमुत्तरं गीतकानि च ॥ ११३ ॥
ऋग्गाथापाणिकादक्षविहिताब्रह्मगीतिकाः ।
गेयमेतत्तदभ्यासकरणान्मोक्षसंज्ञितम् ॥ ११४ ॥
वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।
तालज्ञश्चाप्रयासेन मोक्षमार्गं नियच्छति ॥ ११५ ॥
गीतज्ञो यदि गीतेन नाप्नोति परमं पदम् ।
रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ॥ ११६ ॥
अनादिरात्मा कथितस्तस्यादिस्तु शरीरकम् ।
आत्मनश्च जगत् सर्वं जगतश्चात्मसम्भवः ॥ ११७ ॥
प्रकथमेतद्विमुह्यामः सदेवासुरमानवम् ।
जगदुद्भूतमात्मा च कथं तस्मिन् वदस्व नः ॥ ११८ ॥
उमोहजालमपास्येह पुरुषो दृश्यते हि यः ।
सहस्रकरपन्नेत्रः सूर्यवर्चाः सहस्रकः ॥ ११९ ॥
स आत्मा चैव यज्ञश्च विश्वरूपः प्रजापतिः ।
विराजः सोऽन्नरूपेण यज्ञत्वमुपगच्छति ॥ १२० ॥
यो द्रव्यदेवतात्यागसम्भूतो रस उत्तमः ।
देवान् सन्तर्प्य स रसो यजमानं फलेन च ॥ १२१ ॥
संयोज्य वायुना सोमं नीयते रश्मिभिस्ततः ।

ऋग्यजुःसामविहितं सौरं धामोपनीयते ॥ १२२ ॥
स्वमण्डलादसौ सूर्य्यः सृजत्यमृतमुत्तमम्।
यज्जन्म सर्वभूतानामशनानशनात्मनाम् ॥ १२३ ॥
तस्मादन्नात् पुनर्यज्ञः पुनरन्नं पुनः क्रतुः।
एवमेतदनाद्यन्तं चक्रं सम्परिवर्त्तते ॥ १२४ ॥
अनादिरात्मा सम्भूतिर्विद्यते नान्तरात्मनः।
समवायी तु पुरुषो मोहेच्छाद्वेषकर्म्मजः ॥ १२५ ॥
सहस्रात्मा मया यो व आदिदेव उदाहृतः।
मुखबाहूरुपज्जाः स्युस्तस्य वर्णा यथाक्रमम् ॥ १२६॥
पृथिवी पादतस्तस्य शिरसो द्यौरजायत।
नस्तः प्राणादिशः श्रोत्रात् स्पर्शाद्वायुर्मुखाच्छिखी ॥ १२७॥
मनसश्चन्द्रमा जातश्चक्षुषश्च दिवाकरः।
जघनादन्तरीक्षञ्च जगच्च सचराचरम् ॥ १२८ ॥
यद्येवं स कथं ब्रह्मन् पापयोनिषु जायते।
ईश्वरः स कथं भावैरनिष्टैः संप्रयुज्यते ॥ १२९ ॥
करणैरन्वितस्यापि पूर्व्वज्ञानं कथञ्चन।
वेत्ति सर्वगतां कस्मात् सर्वगोऽपि न वेदनाम् ॥ १३०॥
अन्त्यपक्षिस्थावरतां मनोवाक्कायकर्म्मजैः।
दोषैः प्रयाति जीवोऽयं भवं योनिशतेषु च ॥१३१ ॥
अनन्ताश्च यथाभावाः शरीरेषु शरीरिणाम्।
रूपाण्यपि तथैवेह सर्वयोनिषु देहिनाम् ॥ १३२ ॥
विपाकः कर्म्मणां प्रेत्य केषाञ्चिदिह जायते।
इह चामुत्र वैकेषां भावस्तत्र प्रयोजनम् ॥ १३३ ॥
परद्रव्याण्यभिध्यायं स्तथा निष्टानि चिन्तयन्।

वितथाभिनिवेशी च जायन्तेऽन्त्यासु योनिषु ॥१३४॥
पुरुषोऽनृतवादी च पिशुनः पुरुषस्तथा ।
अनिबद्धप्रलापी च मृगपक्षिषु जायते ॥ १३५ ॥
अदत्तादाननिरतः परदारोपसेवकः ।
हिंसकश्चाविधानेन स्थावरेष्वभिजायते ॥ १३६ ॥
आत्मज्ञः शौचवान् दान्तस्तपस्वी विजितेन्द्रियः ।
धर्म्मकृद्वेदविद्यावित् सात्त्विको देवयोनिषु ॥ १३७ ॥
असत्कार्य्यरतोऽधीर आरम्भी विषयी च यः ।
स राजसो मनुष्येषु मृतो जन्माधिगच्छति ॥ १३८ ॥
निद्रालुः क्रूरकृल्लुब्धो नास्तिको याचकस्तथा ।
प्रमादवान् भिन्नवृत्तो भवेत्तिर्य्यक्षु तामसः ॥ १३९ ॥
रजसा तमसा चैवं समाविष्टो भ्रमन्निह ।
भावैरनिष्टैः संयुक्तः संसारं प्रतिपद्यते ॥ १४० ॥
मलिनो हि यथादर्शो रूपालोकस्य न क्षमः ।
तथाऽविपक्वकरण आत्मा ज्ञानस्य न क्षमः ॥ १४१ ॥
कट्वेर्व्वारौ यथाऽपक्वे मधुरः सन् रसोऽपि न ॥
प्राप्यते ह्यात्मनि तथा नापक्वकरणे ज्ञता ॥ ४२ ॥
सर्व्वाश्रयां निजे देहे देही विन्दति वेदनाम् ।
योगी मुक्तश्च सर्व्वासां यो नचाप्नोति वेदनाम् ॥१४३॥
आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।
तथात्मैकोऽप्यनेकश्च जलाधारेष्विवांशुमान् ॥ १४४॥
ब्रह्मखानिलतेजांसि जलं भूश्चेति धातवः ।
इमे लोका एष चात्मा तस्माच्च सचराचरम् ॥ १४५॥
मृद्दण्डचक्रसंयोगात् कुम्भकारो यथा घटम् ।

करोति तृणमृत्काष्ठैर्गृहं वा गृहकारकः ॥ १४६ ॥
हेममात्रमुपादाय रूपं वा हेमकारकः ।
निजलालासमायोगात् कोशं वा कोशकारकः ॥ १४७ ॥
कारणान्येवमादाय तासु तास्विह योनिषु ।
सृजत्यात्मानमात्मा च सम्भूय करणानि च ॥ १४८ ॥
महाभूतानि सत्यानि यथात्मापि तथैव हि ।
कोऽन्यथैकेन नेत्रेण दृष्टमन्येन पश्यति ॥ १४९ ॥
वाचं वा को विजानाति पुनः संश्रुत्य संश्रुताम् ।
अतीतार्थस्मृतिः कस्य को वा स्वप्नस्य कारकः ॥ १५० ॥
जातिरूपवयोवृत्तिविद्यादिभिरहङ्कृतः ।
शब्दादिविषयोद्योगं कर्मणा मनसा गिरा ॥ १५१ ॥
स सन्दिग्धमतिः कर्मफलमस्ति न वेति वा ।
विप्लुतः सिद्धमात्मानमसिद्धोऽपि हि मन्यते ॥ १५२ ॥
मम दाराः सुतामात्या अहमेषामिति स्थितिः ।
हिताहितेषु भावेषु विपरीतमतिः सदा ॥ १५३ ॥
ज्ञेयज्ञे प्रकृतौ चैव विकारे वाऽविशेषवान् ।
अनाशकानलापातजलप्रपतनोद्यमी ॥ १५४ ॥
एवं वृत्तोऽविनीतात्मा वितथाभिनिवेशवान् ।
कर्मणा द्वेषमोहाभ्यामिच्छया चैव बध्यते ॥ १५५ ॥
आचार्योपासनं वेदशास्त्रार्थेषु विवेकिता ।
तत्कर्मणामनुष्ठानं सङ्गः सद्भिर्गिरः शुभाः ॥ २५६ ॥
स्त्र्यालोकालम्भविगमः सर्वभूतात्मदर्शनम् ।
त्यागः परिग्रहाणाञ्च जीर्णकाषायधारणम् ॥ १५७ ॥
विषयेन्द्रियसंरोधस्तन्द्रालस्यविवर्जनम् ।

शरीरपरिसंख्यानं प्रवृत्तिष्वघदर्शनम् ॥ १५८ ॥
नीरजस्तमता सत्त्वशुद्धिर्निःस्पृहता शमः ।
एतैरुपायैः संशुद्धः सत्त्वयुक्तोऽमृतीभवेत् ॥ १५९ ॥
तत्त्वस्मृतेरुपस्थानात् सत्त्वयोगात् परिक्षयात् ।
कर्म्मणां सन्निकर्षाच्च सतां योगः प्रवर्त्तते ॥ १६० ॥
शरीरसंक्षये यस्य मनः सत्त्वस्थमीश्वरे ।
अविप्लुतमतेः सम्यक् स जातिस्मरतामियात् ॥ १६१ ॥
यथा हि भरतो वर्णैर्वर्णयत्यात्मनस्तनुम् ।
नानारूपाणि कुर्व्वाणस्तथात्मा कर्म्मजास्तनूः ॥ १६२ ॥
कालकर्म्मात्मबीजानां दोषैर्म्मातुस्तथैव च ।
गर्भस्य वैकृतं दृष्टमङ्गहीनादि जन्मतः ॥ १६३ ॥
अहङ्कारेण मनसा गत्या कर्म्मफलेन च ।
शरीरेण च नात्मायं मुक्तपूर्व्वः कथञ्चन ॥ १६४ ॥
वर्त्त्याधारस्नेहयोगाद् यथा दीपस्य संस्थितिः ।
विक्रियापि च दृष्टैवमकाले प्राणसंक्षयः ॥ १६५ ॥
अनन्ता रश्मयस्तस्य दीपवद् यः स्थितो हृदि ।
सितासिताः कद्रुनीलाः कपिलाः पीतलोहिताः॥१६६॥
ऊर्द्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्य्यमण्डलम् ।
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम् ॥ १६७ ॥
यदस्यान्यद्रश्मिशतमूर्द्ध्वमेव व्यवस्थितम् ।
तेन देवशरीराणि सधामानि प्रपद्यते ॥ १६८ ॥
येऽनेकरूपाश्चाधस्ताद्रश्मयोऽस्य मृदुप्रभाः ।
इह कर्म्मोपभोगाय तैः संसरति सोऽवशः ॥ १६९ ॥
वेदैः शास्त्रैः सविज्ञानैर्जन्मना मरणेन च ।

आर्त्या गत्या तथागत्या सत्येन ह्यनृतेन च ॥ १७० ॥
श्रेयसा सुखदुःखाभ्यां कर्मभिश्च शुभाशुभैः ।
निमित्तशकुनज्ञानग्रहसंयोगजैः फलैः ॥ १७१ ॥
तारानक्षत्रसञ्चारैर्जागरैः स्वप्नजैरपि ।
आकाशपवनज्योतिर्जलभूतिमिरैस्तथा ॥ १७२ ॥
मन्वन्तरैर्युगप्राप्त्या मन्त्रौषधिफलैरपि ।
वित्तात्मानं विद्यमानं कारणं जगतस्तथा ॥ १७३ ॥
अहङ्कारः स्मृतिर्मेधा द्वेषो बुद्धिः सुखं धृतिः ।
इन्द्रियान्तरसञ्चार इच्छा धारणजीविते ॥ १७४ ॥
स्वर्गः स्वप्नश्च भावानां प्रेरणं मनसो गतिः ।
निमेषश्चेतना यत्न आदानं पाञ्चभौतिकम् ॥ १७५ ॥
यत एतानि दृश्यन्ते लिङ्गानि परमात्मनः ।
तस्मादस्ति परो देहादात्मा सर्वग ईश्वरः ॥ १७६ ॥
बुद्धीन्द्रियाणि सार्थानि मनः कर्मेन्द्रियाणि च ।
अहङ्कारश्च बुद्धिश्च पृथिव्यादीनि चैव हि ॥ १७७ ॥
अव्यक्तमात्मा क्षेत्रज्ञः क्षेत्रस्यास्य निगद्यते ।
ईश्वरः सर्व्वभूतस्थः सन्नसन् सदसच्च यः ॥ १७८ ॥
बुद्धेरुत्पत्तिरव्यक्तात्ततोऽहङ्कारसम्भवः ।
तन्मात्रादीन्यहङ्कारादेकोत्तरगुणानि च ॥ १७९ ॥
शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च तद्गुणाः ।
यो यस्मान्निःसृतश्चैषां स तस्मिन्नेव लीयते ॥ १८० ॥
यथात्मानं सृजत्यात्मा तथा वः कथितो मया ।
विपाकात्त्रिप्रकाराणां कर्म्मणामीश्वरोऽपि सन् ॥ १८१ ॥
सत्त्वं रजस्तमश्चैव गुणास्तस्यैव कीर्त्तिताः ।

रजस्तमोभ्यामाविष्टश्चक्रवद् भ्राम्यते हि सः ॥१८२॥
अनादिरादिमांश्चैव स एव पुरुषः परः ।
लिङ्गेन्द्रियग्राह्यरूपः सविकार उदाहृतः ॥ १८३ ॥
पितृयानोऽजवीथ्याश्च यदगस्त्यस्य चान्तरम् ।
तेनाग्निहोत्रिणो यान्ति स्वर्गकामा दिवं प्रति ॥१८४॥
ये च दानपराः सम्यगष्टाभिश्च गुणैर्युताः ।
तेऽपि तेनैव मार्गेण सत्यव्रतपरायणाः ॥ १८५ ॥
तत्राष्टाशीतिसाहस्रा मुनयो गृहमेधिनः ।
पुनरावर्त्तिनो बीजभूता धर्म्मप्रवर्त्तकाः ॥ १८६ ॥
सप्तर्षिनागवीथ्यन्तर्देवलोकसमाश्रिताः ।
तावन्त एव मुनयः सर्व्वारम्भविवर्जिताः ॥ १८७ ॥
तपसा ब्रह्मचर्य्येण सङ्गत्यागेन मेधया ।
तत्रैव तावत्तिष्ठन्ति यावदाहूतसंप्लवम् ॥ १८८ ॥
यतो वेदाः पुराणञ्च विद्योपनिषदस्तथा ।
श्लोकाः सूत्राणि भाष्याणि यच्च किञ्चन वाङ्मयम् ॥१८९॥
वेदानुवचनं यज्ञो ब्रह्मचर्य्यं तपो दमः ।
श्रद्धोपवासः स्वातन्त्र्यमात्मनो ज्ञानहेतवः ॥ १९० ॥
स ह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु ।
द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभिः ॥ १९१॥
य एनमेवं विन्दन्ति ये चारण्यकमाश्रिताः ।
उपासते द्विजाः सत्यं श्रद्धया परया युताः ॥ १९२ ॥
क्रमात्ते सम्भवन्त्यर्चिरहः शुक्लं तथोत्तरम् ।
अयनं देवलोकञ्च सवितारं सवैद्युतम् ॥ १९३ ॥
ततस्तान् पुरुषोऽभ्येत्य मानसो ब्रह्मलौकिकान् ।

करोति पुनरावृत्तिस्तेषामिह न विद्यते ॥ १९४ ॥
यज्ञेन तपसा दानैर्ये हि स्वर्गजितो नराः ।
धूमं निशां कृष्णपक्षं दक्षिणायनमेव च ॥ १९५ ॥
पितृलोकं चन्द्रमसं वायुं वृष्टिं जलं महीम् ।
क्रमात्ते सम्भवन्तीह पुनरेव व्रजन्ति च ॥ १९६ ॥
एतद्यो न विजानाति मार्गद्वितयमात्मवान् ।
दन्दशूकः पतङ्गो वा भवेत् कीटोऽथवा कृमिः॥१९७॥
ऊरुस्थोत्तानचरणः सव्ये न्यस्येतरं करम् ।
उत्तानं किञ्चिदुन्नाम्य मुखं विष्टभ्य चोरसा ॥१९८॥
निमीलिताक्षः सत्त्वस्थो दन्तैर्दन्तानसंस्पृशन् ।
तालुस्थाचलजिह्वश्च संवृतास्यः सुनिश्चलः ॥ १९९ ॥
सन्निरुध्येन्द्रियग्रामं नातिनीचोच्छ्रितासनः ।
द्विगुणं त्रिगुणं वापि प्राणायाममुपक्रमेत् ॥ २०० ॥
ततो ध्येयः स्थितो योऽसौ हृदये दीपवत् प्रभुः ।
धारयेत्तत्र चात्मानं धारणां धारयन् बुधः ॥ २०१ ॥
अन्तर्धानं स्मृतिः कान्तिर्दृष्टिः श्रोत्रज्ञता तथा ।
निजं शरीरमुत्सृज्य परकायप्रवेशनम् ॥ २०२ ॥
अर्थानां छन्दतः सृष्टिर्योगसिद्धेस्तु लक्षणम् ।
सिद्धे योगे त्यजन्देहममृतत्वाय कल्पते ॥ २०२ ॥
अथवाप्यभ्यसन् वेदं न्यस्तकामो वने वसन् ।
अयाचिताशी मितभुक् परां सिद्धिमवाप्नुयात् ॥ २०४ ॥
न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ।
श्राद्धकृत् सत्यवादी च गृहस्थोऽपि हि मुच्यते ॥२०५॥

इत्यध्यात्मप्रकरणम् ॥

महापातकजान् घोरान्नरकान् प्राप्य गर्हितान् ।
कर्म्मक्षयात् प्रजायन्ते महापातकिनस्त्विह ॥ २०६ ॥
मृगश्वशूकरोष्ट्राणां ब्रह्महा योनिमृच्छति ।
खरपुक्कशवेणानां सुरापो नात्र संशयः ॥ २०७ ॥
कृमिकीटपतङ्गत्वं स्वर्णहारी समाप्नुयात् ।
तृणगुल्मलतात्वञ्च क्रमशो गुरुतल्पगः ॥ २०८ ॥
ब्रह्महा क्षयरोगी स्यात् सुरापः श्यावदन्तकः ।
हेमहारी तु कुनखी दुश्चर्म्मा गुरुतल्पगः ॥ २०९ ॥
यो येन संवसत्येषां स तल्लिङ्गोऽभिजायते ।
अन्नहर्त्तामयावी स्यान्मूको वागपहारकः ॥ २१० ॥
धान्यमिश्रोऽतिरिक्ताङ्गः पिशुनः पूतिनासिकः ।
तैलहृत्तैलपायी स्यात् पूतिवक्त्रस्तु सूचकः ॥ २११ ॥
परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च ।
अरण्ये निर्ज्जने घोरे भवति ब्रह्मराक्षसः ॥ २१२ ॥
हीनजातौ प्रजायेत पररत्नापहारकः ।
पत्रशाकं शिखी हृत्वा गन्धांश्छुच्छुन्दरिः शुभान् ॥ २१३ ॥
मूषिको धान्यहारी स्याद्यानमुष्ट्रं फलं कपिः ।
जलं प्लवः पयः काको गृहकारी ह्युपस्करम् ॥ २१४ ॥
मधु दंशः फलं गृध्रो गां गोधाग्निं वकस्तथा ।
श्वित्री वस्त्रं श्वा रसन्तु चीरी लवणहारकः ॥२१५॥
प्रदर्शनार्थमेतत्तु मयोक्तं स्तेयकर्म्मणि ।
द्रव्यप्रकारा हि यथा तथैव प्राणिजातयः ॥ २१६ ॥
यथाकर्म्मफलं प्राप्य तिर्य्यक्त्वं कालपर्य्ययात् ।
जायन्ते लक्षणभ्रष्टा दरिद्राः पुरुषाधमाः ॥ २१७ ॥

ततो निष्कल्मषीभूताः कुले महति योगिनः ।
जायन्ते विद्ययोपेता धनधान्यसमन्विताः ॥ २१८ ॥
विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ २१९ ॥
तस्मात्तेनेह कर्त्तव्यं प्रायश्चित्तं विशुद्धये ।
एवमस्यान्तरात्मा च लोकश्चैव प्रसीदति ॥ २२० ॥
प्रायश्चित्तमकुर्व्वाणाः पापेषु निरता नराः ।
अपश्चात्तापिनः कष्टान्नरकान् यान्ति दारुणान् ॥२२१
तामिस्रं लोहशङ्कुञ्च महानिरयशाल्मली ।
रौरवं कुड्मलं पूतिमृत्तिकं कालसूत्रकम् ॥ २२२ ॥
संघातं लोहितोदञ्च सविषं सम्प्रतापनम् ।
महानरककाकोलं संजीवनमहापथम् ॥ २२३ ॥
अवीचिमन्धतामिस्रं कुम्भीपाकं तथैव च ।
असिपत्रवनञ्चैव तापनञ्चैकविंशकम् ॥ २२४ ॥
महापातकजैर्घोरैरुपपातकजैस्तथा ।
अन्वितायान्त्यचरितप्रायश्चित्ता नराधमाः ॥ २२५ ॥
प्रायश्चित्तैरपैत्येनोयदज्ञानकृतं भवेत् ।
कामतो व्यवहार्य्यस्तु वचनादिह जायते ॥ २२६ ॥
ब्रह्महा मद्यपः स्तेनोगुरुतल्पग एव च ।
एते महापातकिनो यश्च तैः सह संवसेत् ॥ २२७॥
गुरूणामध्यधिक्षेपो वेदनिन्दा सुहृद्वधः ।
ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम् ॥ २२८ ॥
निषिद्धभक्षणं जैह्म्यमुत्कर्षे च वचोऽनृतम् ।
रजस्वलामुखास्वादः सुरापानसमानि तु ॥ २२९ ॥

अश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथा।
निःक्षेपस्य च सर्व्वं हि सुवर्णस्तेयसम्मितम्॥ २३०॥
सखिभार्य्याकुमारीषु स्वयोनिष्वन्त्यजासु च।
सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतम्॥ २३१॥
पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि।
मातुः सपत्नीं भगिनीमाचार्य्यतनयां तथा॥ २३२॥
आचार्य्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः।
छित्त्वा लिङ्गं वधस्तस्य सकामायाःस्त्रिया अपि॥ २३३॥
गोवधो व्रात्यता स्तेयमृणानाञ्चानपक्रिया।
अनाहिताग्निताऽपण्यविक्रयः परिवेदनम्॥ २३४॥
भृतादध्ययनादानं भृतकाध्यापनं तथा।
पारदार्य्यं पारिवित्त्यं वार्द्धुष्यं लवणक्रिया॥ २३५॥
स्त्रीशूद्रविट्क्षत्रवधो निन्दितार्थोपजीवनम्।
नास्तिक्यं व्रतलोपश्च सुतानाञ्चैव विक्रयः॥ २३६॥
धान्यकुप्यपशुस्तेयमयाज्यानाञ्च याजनम्।
पितृमातृगुरुत्यागस्तडागारामविक्रयः॥ २३७॥
कन्यासंदूषणञ्चैव परिवेदकयाजनम्।
कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम्॥ २३८॥
आत्मार्थे च क्रियारम्भो मद्यपस्त्रीनिषेवणम्।
स्वाध्यायाग्निसुतत्यागो बान्धवत्याग एव च॥ २३९॥
इन्धनार्थं द्रुमच्छेदः स्त्रीहिंसौषधजीवनम्।
हिंसायन्त्रविधानञ्च व्यसनान्यात्मविक्रयः॥ २४०॥
असच्छास्त्राधिगमनमाकरेष्वधिकारिता।
भार्य्याया विक्रयश्चैषामेकैकमुपपातकम्॥ २४१॥

शिरःकपाली ध्वजवान् भिक्षाशी कर्म्म वेदयन् ।
ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात्॥२४२॥
ब्राह्मणस्य परित्राणाद्गवां द्वादशकस्य वा ।
तथाश्वमेधावभृथस्नानाद्वा शुद्धिमाप्नुयात् ॥ २४३ ॥
दीर्घतीव्रामयग्रस्तं ब्राह्मणं गामथापि वा ।
दृष्ट्वा पथि निरातङ्कं कृत्वा वा ब्रह्महा शुचिः ॥२४४॥
आनीय विप्रसर्वस्वं हृतं घातित एव वा ।
तन्निमित्तं क्षतः शस्त्रैर्जीवन्नपि विशुद्ध्यति ॥ २४५ ॥
लोमभ्यः स्वाहेत्येवं हि लोमप्रभृति वै तनुम् ।
मज्जान्तां जुहुयाद्वापि मन्त्रैरेभिर्यथाक्रमम् ॥ २४६ ॥
संग्रामे वा हतो लक्ष्यभूतः शुद्धिमवाप्नुयात् ।
मृतकल्पः प्रहारार्त्तो जीवन्नपि विशुद्ध्यति ॥ २४७॥
अरण्ये नियतो जप्त्वा त्रिर्वै वेदस्य संहिताम् ।
मुच्यते वा मिताशीत्वा प्रतिस्रोतः सरस्वतीम् ॥ २४८ ॥
पात्रे धनं वा पर्य्याप्तं दत्त्वा शुद्धिमवाप्नुयात् ।
आदातुश्च विशुद्ध्यर्थमिष्टिर्वैश्वानरी स्मृता ॥ २४९ ॥
यागस्थक्षत्रविड्घाती चरेद्ब्रह्महणो व्रतम् ।
गर्भहा च यथावर्णं तथात्रेयीनिसूदकः ॥ २५० ॥
चरेद्व्रतमहत्वापि घातार्थञ्चेत् समागतः ।
द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेत् ॥ २५१ ॥
सुराम्बुघृतगोमूत्रपयसामग्निसन्निभम् ।
सुरापोऽन्यतमं पीत्वा मरणाच्छुद्धिमृच्छति ॥ २५२ ॥
वालवासा जटी वापि ब्रह्महत्याव्रतञ्चरेत् ।
पिण्याकं वा कणां वापि भक्षयेत्त्रिसमा निशि ॥२५३॥

अज्ञानात्तु सुरां पीत्वा रेतो विण्मूत्रमेव वा।
पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः॥ २५४॥
पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत्।
इहैव सा शुनी गृध्री शूकरी चाभिजायते॥ २५५॥
ब्राह्मणःस्वर्णहारी तु राज्ञे मूषलमर्पयेत्।
स्वकर्म्म ख्यापयंस्तेन हतो मुक्तोऽपि वा शुचिः॥२५६॥
अनिवेद्य नृपे शुद्ध्येत् सुरापव्रतमाचरन्।
आत्मतुल्यं सुवर्णं वा दद्याद्वा विप्रतुष्टिकृत्॥ २५७॥
तप्तेऽयःशयने सार्द्धमायस्या योषिता स्वपेत्।
गृहीत्वोत्कृत्य वृषणौ नैरृत्यां चोत्सृजेत्तनुम्॥२५८॥
प्राजापत्यं चरेत् कृच्छ्रं समा वा गुरुतल्पगः।
चान्द्रायणं वा त्रीन्मासानभ्यस्यन् वेदसंहिताम्॥२५९
एभिस्तु संवसेद् यो वै वत्सरं सोऽपि तत्समः।
कन्यां समुद्वहेदेषां सोपवासामकिञ्चनाम्॥ २६०॥
चान्द्रायणं चरेत् सर्व्वानवकृष्टान्निहत्य तु।
शूद्रोऽधिकारहीनोऽपि कालेनानेन शुध्यति॥ २६१॥
मिथ्याभिशंसिनो दोषो द्विगुणोऽनृतवादिनः।
मिथ्याभिशस्तपापञ्च समादत्ते मृषावदन्॥ २६२॥
पञ्चगव्यं पिबेद् गोघ्नो मासमासीत संयतः।
गोष्ठेशयो गोऽनुगामी गोप्रदानेन शुद्ध्यति॥ २६३॥
कृच्छ्रं चैवातिकृच्छ्रञ्च चरेद्वापि समाहितः।
दद्यात्त्रिरात्रं वोपोष्य वृषभैकादशास्तु गाः॥ २६४॥
उपपातकशुद्धिः स्यादेवञ्चान्द्रायणेन वा।
पयसा वापि मासेन पराकेणाथवा पुनः॥ २६५॥

ऋषभैकसहस्रा गा दद्यात् क्षत्रवधे पुमान् ।
ब्रह्महत्याव्रतं वापि वत्सरत्रितयं चरेत् ॥ २६६ ॥
वैश्यहाब्दं चरेदेतद्दद्याद्वैकशतं गवाम् ।
षण्मासान् शूद्रहा ह्येतद्दद्याद्धेनूर्दशापि वा ॥ २६७ ॥
दुर्वृत्तां ब्रह्मविट्क्षत्रशूद्रयोषाः प्रमाप्य तु ।
दृतिं धनुर्वस्तमविं क्रमाद्दद्याद्विशुद्धये ॥ २६८ ॥
अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतञ्चरेत् ।
अस्थिमतां सहस्रञ्च तथानस्थिमतामनः ॥ २६९ ॥
मार्ज्जारगोधानकुलमण्डूकश्वपतत्रिणः ।
हत्वा त्र्यहं पिबेत् क्षीरं कृच्छ्रं वा पादिकं चरेत् ॥२७०
गजे नीलवृषाः पञ्च शुके वत्सो द्विहायनः ।
खराजमेषेषु वृषो देयः क्रौञ्चे त्रिहायणः ॥ २७१ ॥
हंसश्येनकपिक्रव्याज्जलस्थलशिखण्डिनः ।
भासञ्च हत्वा दद्याद्गामक्रव्यादस्तु वत्सिकाम् ॥ २७२
उरगेष्वायसो दण्डः पण्डके त्रपुसीसकम् ।
कोले घृतघटो देय उष्ट्रे गुञ्जा हयेऽंशुकम् ॥ २७३ ॥
तित्तिरौ तु तिलद्रोणं गजादीनामशक्नुवन् ।
दानं दातुञ्चरेत् कृच्छ्रमेकैकस्य विशुद्धये ॥ २७४ ॥
फलपुष्पान्नरसजसत्वाघाते घृताशनम् ।
किञ्चित्सास्थिवधे देयं प्राणायामस्त्वनस्थिके ॥ २७५॥
वृक्षगुल्मलतावीरुच्छेदने जप्यमृक्शतम् ।
स्यादोषधिवृथाच्छेदे क्षीराशी गोनुगो दिनम् ॥ २७६
पुंश्चलीवानरखरैर्दष्टश्वोष्ट्रादिवायसैः ।
प्राणायामं जले कृत्वा घृतं प्राश्य विशुध्यति ॥२७७

यन्मेऽद्यरेत इत्याभ्यां स्कन्नं रेतोऽनुमन्त्रयेत् ।
स्तनान्तरं भ्रुवोर्मध्यं तेनानामिकया स्पृशेत् ॥२७८

मयि तेज इति च्छायां स्वां दृष्ट्वाम्बुगतां जपेत् ।
सावित्रीमशुचौ दृष्टे चापल्ये चानृतेऽपि च ॥ २७९

अवकीर्णी भवेद् गत्वा ब्रह्मचारी तु योषितम् ।
गर्द्दभं पशुमालभ्य नैर्ऋतं स विशुद्ध्यति ॥ २८० ॥

भैक्षाग्निकार्ये त्यक्त्वा तु सप्तरात्रमनातुरः ।
कामावकीर्ण इत्याभ्यां जुहुयादाहुतिद्वयम् ॥ २८१ ॥

उपस्थानं ततः कुर्य्यात् समासिञ्चन्त्वनेन तु ।
मधुमांसाशने कार्य्यः कृच्छ्रः शेषव्रतानि च ॥ २८२ ॥

प्रतिकूलं गुरोः कृत्वा प्रसाद्यैव विशुद्ध्यति ।
कृच्छ्रत्रयं गुरुः कुर्य्यान्म्रियेत प्रहितो यदि ॥ १८३॥

क्रियमाणोपकारे तु मृते विप्रे न पातकम् ।
विपाके गोवृषाणाञ्च भेषजाग्निक्रियासु च ॥ २८४ ॥

महापापोपपापाभ्यां योऽभिशंसेन्मृषापरम् ।
अब्भक्षो मासमासीत सजापी नियतेन्द्रियः ॥२८५ ॥

अभिशस्तो मृषा कृच्छ्रं चरेदाग्नेयमेव वा ।
निर्वपेच्च पुरोडाशं वायव्यं पशुमेव वा ॥ २८६ ॥

अनियुक्तो भ्रातृजायां गच्छंश्चान्द्रायणञ्चरेत् ।
त्रिरात्रान्ते घृतं प्राश्य गत्वोदक्यां विशुद्ध्यति ॥२८७

त्रीन् कृच्छ्रानाचरेद् व्रात्ययाजकोऽभिचरन्नपि ।
वेदप्लावी यवाश्यब्दं त्यक्त्वा च शरणागतम् ॥ २८८ ॥

गोष्ठे वसन् ब्रह्मचारी मासमेकं पयोव्रतः ।
गायत्रीजप्यनिरतो मुच्यतेऽसत्प्रतिग्रहात् ॥ २८९ ॥

प्राणायामी जले स्नात्वा खरयानोष्ट्रयानगः।
नग्नः स्नात्वा च भुक्त्वा च गत्वा चैव दिवा स्त्रियम् २९०॥
गुरुं त्वं कृत्य हुंकृत्य विप्रं निर्जित्य वादतः।
बद्ध्वा वा वाससा क्षिप्रं प्रसाद्योपवसेद्दिनम्॥ २९१॥
विप्रदण्डोद्यमे कृच्छ्रस्त्वतिकृच्छ्रो निपातने।
कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽभ्यन्तरशोणिते २९२
देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः।
प्रायश्चित्तं प्रकल्प्यं स्याद् यत्र चोक्ता न निष्कृतिः॥२९३॥
दासीकुम्भं बहिर्ग्रामान्निनयेयुः स्वबान्धवाः।
पतितस्य बहिः कुर्य्युः सर्वकार्य्येषु चैव तम्॥२९४॥
चरितव्रत आयाते निनयेरन्नवं घटम्।
जुगुप्सेरन्न चाप्येनं संवसेयुश्च सर्वशः॥ २९५॥
पतितानामेष एव विधिः स्त्रीणां प्रकीर्त्तितः।
वासो गृहान्तिके देयमन्नं वासः सरक्षणम्॥२९६॥
नीचाभिगमनं गर्भपातनं भर्तृहिंसनम्।
विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम्॥ २९७॥
शरणागतबालस्त्रीहिंसकान् संवसेन्न तु।
चीर्णव्रतानपि सदा कृतघ्नसहितानिमान्॥ २९८॥
घटेऽपवर्जिते ज्ञाति मध्यस्थो यवसं गवाम्।
प्रदद्यात् प्रथमं गोभिः सत्कृतस्य हि सत्क्रिया२९९
विख्यातदोषः कुर्व्वीत पर्षदोऽनुमतं व्रतम्।
अनभिख्यातदोषस्तु रहस्यं व्रतमाचरेत्॥ ३००॥
त्रिरात्रोपोषितो जप्त्वा ब्रह्महा त्वघमर्षणम्।
अन्तर्जले विशुध्येत गां दत्त्वा च पयस्विनीम्॥३०१॥

लोमभ्यः स्वाहेत्यथवा दिवसं मारुताशनः ।
जले स्थित्वाभिजुहुयाच्चत्वारिंशद्घृताहुतीः ॥ ३०२ ॥
त्रिरात्रोपोषितो भूत्वा कुष्माण्डीभिर्घृतं शुचिः ।
सुरापः स्वर्णहारी तु रुद्रजापी जले स्थितः ॥ ३०३
सहस्रशीर्षाजापी तु मुच्यते गुरुतल्पगः ।
गौर्देया कर्म्मणोऽस्यान्ते पृथगेभिः पयस्विनी ॥ ३०४ ॥
प्राणायामशतं कार्य्यं सर्वपापापनुत्तये ।
उपपातकजातानामनादिष्टस्य चैव हि ॥ ३०५ ॥
ओङ्काराभिष्टुतं सोमसलिलं पावनं पिबेत् ।
कृत्वा तु रेतोविण्मूत्रप्राशनञ्च द्विजोत्तमः ॥ ३०६ ॥
निशायां वा दिवा वापि यदज्ञानकृतं भवेत् ।
त्रैकाल्यसन्ध्याकरणात्तत् सर्वं विप्रणश्यति ॥ ३०७ ॥
शुक्रियारण्यकजपो गायत्र्याश्च विशेषतः ।
सर्वपापहरा ह्येते रुद्रैकादशिनी तथा ॥ ३०८ ॥
यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः ।
तत्र तत्र तिलैर्होमो गायत्र्या वाचनन्तथा ॥३०९ ॥
वेदाभ्यासरतं क्षान्तं महायज्ञक्रियारतम् ।
न स्पृशन्तीह पापानि महापातकजान्यपि ॥ ३१० ॥
वायुभक्षो दिवा तिष्ठन्रात्रिं नीत्वाप्सु सूर्य्यदृक् ॥
जप्त्वा सहस्रं गायत्र्याः शुद्धेद्ब्रह्मवधादृते ॥ ३११ ॥
ब्रह्मचर्य्यं दया क्षान्तिर्दानं सत्यमकल्कता ।
अहिंसास्तेयमाधुर्य्यदमाश्चेति यमाः स्मृताः ॥ ३१२ ॥
स्नानमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः ।
नियमा गुरुशुश्रूषाशौचाक्रोधाप्रमादताः ॥ ३१३ ॥

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
जग्ध्वा परेऽह्न्युपवसेत् कृच्छ्रं सान्तपनं चरन् ॥३१४॥
पृथक् सान्तपनद्रव्यैः षड्हः सोपवासकः।
सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः ॥ ३१५ ॥
पर्णोडुम्बरराजीवविल्वपत्रकुशोदकैः।
प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्र उदाहृतः ॥ ३१६ ॥
तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत्।
एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः ॥ ३१७ ॥
एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन चैकेन पादकृच्छ्रः प्रकीर्त्तितः ॥ ३१८ ॥
यथाकथञ्चित्त्रिगुणः प्राजापत्योऽयमुच्यते।
अयमेवातिकृच्छ्रः स्यात् पाणिपूरान्नभोजनः ॥३१९॥
कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम्।
द्वादशाहोपवासेन पराकः परिकीर्त्तितः ॥ ३२० ॥
पिण्याकाचामतक्राम्बुशक्तूनां प्रतिवासरम्।
एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते ॥ ३२० ॥
एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम्।
तुलापुरुष इत्येष ज्ञेयः पञ्चदशाहिकः ॥ ३२२ ॥
तिथिवृद्ध्या चरेत् पिण्डान् शुक्ले शिख्यण्डसम्मितान्।
एकैकं ह्रासयेत् कृष्णे पिण्डं चान्द्रायणं चरन् ॥३२३॥
यथाकथञ्चित् पिण्डानां चत्वारिंशच्छतद्वयम्।
मासेनैवोपभुञ्जीत चान्द्रायणमथापरम् ॥ ३२४ ॥
कुर्य्यात्त्रिषवणस्नायी कृच्छ्रं चान्द्रायणं तथा।
पवित्राणि जपेत् पिण्डान् गायत्र्या चाभिमन्त्रयेत् ॥३२५॥

अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन तु ।
धर्म्मार्थं यश्चरेदेतच्चन्द्रस्यैति स लोकताम् ॥ ३२६ ॥
कृच्छ्रकृद्धर्म्मकामस्तु महतीं श्रियमाप्नुयात् ।
यथा गुरुक्रतुफलं प्राप्नोति च समाहितः ॥ ३२७ ॥
श्रुत्वेमानृषयो धर्म्मान् याज्ञवल्क्येन भाषितान् ।
इदमूचुर्महात्मानं योगीन्द्रममितौजसम् ॥ ३२८ ॥
य इदं धारयिष्यन्ति धर्म्मशास्त्रमतन्द्रिताः ।
इह लोके यशः प्राप्य ते यास्यन्ति त्रिविष्टपम् ॥३२९॥
विद्यार्थी प्राप्नुयाद्विद्यां धनकामो धनन्तथा ।
आयुष्कामस्तथैवायुः श्रीकामो महतीं श्रियम्॥३३०॥
श्लोकत्रयमपि ह्यस्माद् यः श्राद्धे श्रावयिष्यति ।
पितॄणां तस्य तृप्तिः स्यादक्षया नात्र संशयः ॥३३१॥
ब्राह्मणः पात्रतां याति क्षत्रियो विजयी भवेत् ।
वैश्योऽपि धान्यधनवानस्य शास्त्रस्य धारणात् ॥३३२॥
य इदं श्रावयेद्विप्रान् द्विजान् पर्वसु पर्वसु ।
अश्वमेधफलं तस्य तद्भवाननुमन्यताम् ॥ ३३ ॥
श्रुत्वैतद्याज्ञवल्क्योऽपि प्रीतात्मा मुनिभाषितम् ।
एवमस्त्विति होवाच नमस्कृत्य स्वयम्भुवे ॥ ३३४ ॥
इति याज्ञवल्कीये धर्म्मशास्त्रे तृतीयोऽध्यायः ॥

॥ समाप्ता चेयं याज्ञवल्क्यसंहिता ॥

अतः परं प्रवक्ष्यामि जातिवृत्तिविधानकम्।
अनुलोमविधानञ्च प्रतिलोमविधिं तथा ॥ १ ॥
सान्तरालकसंयुक्तं सर्व्वं संक्षिप्य चोच्यते।
नृपाद् ब्राह्मणकन्यायां विवाहेषु समन्वयात् ॥ २ ॥
जातः सूतोऽत्र निर्द्दिष्टः प्रतिलोमविधिर्द्विजः।
वेदानर्हस्तथा चैषां धर्म्माणामनुबोधकः ॥ ३ ॥
सूताद्विप्र प्रसूतायां सूतो वेणुक उच्यते।
नृपायामेव तस्यैव जातो यश्चर्म्मकारकः ॥ ४ ॥
ब्राह्मण्यां क्षत्रियाच्चौर्य्याद्रथकारः प्रजायते।
वृत्तञ्च शूद्रवत्तस्य द्विजत्वं प्रतिषिध्यते ॥ ५ ॥
यानानां ये च वोढारस्तेषाञ्च परिचारकाः।
शूद्रवृत्त्या तु जीवन्ति न चात्रं धर्म्ममाचरेत् ॥ ६ ॥
ब्राह्मण्यां वैश्यसंसर्गाज्जातोमागध उच्यते।
वन्दित्वं ब्राह्मणानाञ्च क्षत्रियाणां विशेषतः ॥ ७ ॥
प्रशंसावृत्तिको जीवेद्वैश्यप्रेष्यकरस्तथा।
ब्राह्मण्यां शूद्रसंसर्गाज्जातश्चाण्डाल उच्यते ॥ ८ ॥
सीसमाभरणं तस्य कार्ण्णायसमथापि वा।
वध्रीं कण्ठे समाबध्य झल्लरीं कक्षतोऽपि वा ॥ ९ ॥
मलापकर्षणं ग्रामे पूर्व्वाह्णे परिशुद्धिकम्।
नापराह्णे प्रविष्टोऽपि वहिर्ग्रामाच्च नैर्ऋते ॥ १० ॥
पिण्डीभूता भवन्त्यत्र नोचेद् वध्या विशेषतः।
चाण्डालाद्वैश्यकन्यायां जातः श्वपच उच्यते ॥ ११ ॥
श्वमांसभक्षणं तेषां श्वान एव च तद्बलम्।
नृपायां वैश्यसंसर्गादायोगव इति स्मृतः ॥ १२ ॥

तत्पुत्रश्चैव भवन्त्येव कुलालस्योपजीविनः।
शौलिकाः केचिदत्रैव जीवनं वस्त्रनिर्मिते॥ १३ ॥
आयोगवेन विप्रायां जातास्ताम्रोपजीविनः।
तस्यैव नृपकन्यायां जातः सूनिक उच्यते॥ १४ ॥
सूनिकस्य नृपायान्तु जाता उद्बन्धकाः स्मृताः।
निर्णेजयेयुर्वस्त्राणि अस्पृश्यास्त भवन्त्यतः॥ १५ ॥
नृपायां वैश्यतश्चौर्य्यात् पुलिन्दः परिकीर्त्तितः।
पशुवृत्तिर्भवेत्तस्य हन्युस्तान् दुष्टसत्वकान्॥ १६ ॥
नृपायां शूद्रसंसर्गाज्जातः पुल्कश उच्यते।
सुरावृत्तिं समारुह्य मधुविक्रयकर्म्मणा॥ १७ ॥
कलकानां सुराणाञ्च विक्रेता याचको भवेत्।
पुल्कशाद्वैश्यकन्यायां जातो रजक उच्यते॥ १८ ॥
नृपायां शूद्रतश्चौर्य्याज्जातोरञ्जक उच्यते।
वैश्यायां रञ्जकाज्जातो नर्त्तको गायको भवेत्॥१९॥
वैश्यायां शूद्रसंसर्गाज्जातो वैदेहिकः स्मृतः।
अजानां पालनं कुर्य्यान्महिषीणां गवामपि॥२०॥
दधिक्षीराज्यतक्राणां विक्रयाज्जीवनं भवेत्।
वैदेहिकात्तु विप्रायां जाताश्चर्म्मोपजीविनः॥ २१ ॥
नृपायामेव तस्यैव सूचिकः पाचकः स्मृतः।
वैश्यायां शूद्रतश्चौर्य्याज्जातश्चक्री च उच्यते॥ २२ ॥
तैलपिष्टकजीवी तु लवणं भावयन् पुनः।
विधिना ब्राह्मणः प्राप्य नृपायान्तु समन्त्रकम्॥ २३॥
जातः सुवर्ण इत्युक्तः सानुलोमद्विजः स्मृतः।
अथ वर्णक्रियां कुर्व्वन्नित्यनैमित्तिकीं क्रियाम्॥ २४॥

अश्वं रथं हस्तिनं वा वाहयेद्वा नृपाज्ञया ।
सैनापत्यञ्च भैषज्यं कुर्य्याज्जीवेत्तु वृत्तिषु ॥ २५ ॥
नृपायां विप्रतश्चौर्य्यात् संजातो यो भिषक् स्मृतः ।
अभिषिक्तनृपस्याज्ञां परिपाल्येत्तु वैद्यकम् ॥ २६ ॥
आयुर्वेदमथाष्टाङ्गं तन्त्रोक्तं धर्ममाचरेत् ।
ज्योतिषं गणितं वापि कायिकीं वृत्तिमाचरेत् ॥२७॥
नृपायां विधिना विप्राज्जातो नृप इति स्मृतः ।
नृपायां नृपसंसर्गात् प्रमादाद् गूढजातकः ॥ २८ ॥
सोऽपि क्षत्रिय एव स्यादभिषेके च वर्ज्जितः ।
अभिषेकं विना प्राप्य गोज इत्यभिधायकः ॥ २९ ॥
सर्वन्तु राजवत्तस्य शस्यते पदवन्दनम् ।
पुनर्भूकरणे राज्ञां नृपकालीन एव च ॥ ३० ॥
वैश्यायां विधिना विप्राज्जातो ह्यम्बष्ठ उच्यते ।
कृष्याजीवो भवेत्तस्य तथैवाग्नेयवृत्तिकः ॥ ३१ ॥
ध्वजिनी जीविका वापि अम्बष्ठाः शस्त्रजीविनः ।
वैश्यायां विप्रतश्चौर्य्यात् कुम्भकारः स उच्यते ॥ ३२ ॥
कुलालवृत्त्या जीवेत नापिता वा भवन्त्यतः ।
सूतके प्रेतके वापि दीक्षाकालेऽथ वापनम् ॥ ३३ ॥
नाभेरूर्द्ध्वन्तु वपनं तस्मान्नापित उच्यते ।
कायस्थ इति जीवेत्तु विचरेच्च इतस्ततः ॥ ३४ ॥
काकाल्लौल्यं यमात् क्रौर्य्यं स्थपतेरथ कृन्तनम् ।
आद्याक्षराणि संगृह्य कायस्थ इति कीर्त्तितः ॥ ३५ ॥
शूद्रायां विधिना विप्राज्जातः पारशवो मतः ।
भद्रकादीन् समाश्रित्य जीवेयुः पूजकाः स्मृताः ॥३६॥

शिशाद्यागमविद्याद्यैस्तथामञ्जलवृत्तिभिः ।
तस्यां वै चौरसो वृत्तो निषादो जात उच्यते ॥ ३७ ॥
वने दुष्टमृगान् हत्वा जीवनं मांसविक्रयम् ।
नृपाज्जातोऽथ वैश्यायां गृह्यायां विधिना सुतः ॥३८॥
वैश्यवृत्त्या तु जीवेत चात्त्रधर्मं न चाचरेत् ।
तस्यां तस्यैव चौर्येण मणिकारः प्रजायते ॥ ३९ ॥
मणीनां राजतां कुर्य्यान्मुक्तानां वेधनक्रियाम् ।
प्रवालानाञ्च सूत्रित्वं शाखानां वलयक्रियाम् ॥ ४० ॥
शूद्रस्य विप्रसंसर्गाज्जात उग्र इति स्मृतः ।
नृपस्य दण्डधारः स्याद्दण्डं दण्ड्येषु सञ्चरेत् ॥ ४१ ॥
तस्यैव चावसंवृत्या जातः शुण्डिक उच्यते ।
जातदुष्टान् समारोप्य शुण्डाकर्म्मणि योजयेत् ॥४२॥
शूद्रायां वैश्यसंसर्गाद्विधिना सूचकः स्मृतः ।
सूचकाद्विप्रकन्यायां जातस्तच्चक उच्यते ॥ ४३ ॥
शिल्पकर्म्माणि चान्यानि प्रासादलक्षणं तथा ।
नृपायामेव तस्यैव जातो यो मत्स्यबन्धकः ॥ ४४ ॥
शूद्रायां वैश्यतश्चौर्य्यात् कटकार इति स्मृतः ।
वशिष्ठशापाच्चेतायां केचित् पारशवास्तथा ॥ ४५ ॥
वैखानसेन केचित्तु केचिद्भागवतेन च ।
वेदशास्त्रावलम्बास्ते भविष्यन्ति कलौ युगे ॥ ४६ ॥
कटकारास्ततः पश्चान्नारायणगणाः स्मृताः ।
शास्त्रा वैखानसेनोक्ता तन्त्रमार्गविधिक्रियाः ॥ ४७ ॥
निषेकाद्याः श्मशानान्ताः क्रियाः पूजाङ्गसूचिकाः ।
पञ्चरात्रेण वा प्राप्तं प्रोक्तं धर्म्मं समाचरेत् ॥ ४८ ॥

शूद्रादेव तु शूद्रायां जातः शूद्र इति स्मृतः।
द्विजशुश्रूषणपरः पाकयज्ञपरान्वितः॥ ४९॥
सच्छूद्रं तं विजानीयादसच्छूद्रस्ततोऽन्यथा।
चौर्य्यात् कारुतणो ज्ञेयश्चाश्वानां तृणवाहकः॥५०॥
एतत् संक्षेपतः प्रोक्तं जातिवृत्तिविभागशः।
जात्यन्तराणि दृश्यन्ते संकल्पादित एव तु॥ ५१॥

॥ इत्यौशनसं धर्म्मशास्त्रं समाप्तम्॥

औशनसस्मृतिः।

शौनकाद्याश्च मुनय औशनं भार्गवं मुनिम्।
नत्वा पप्रच्छुरखिलं धर्म्मशास्त्रविनिर्णयम्॥
ऋषीणां शृण्वतां पूर्वमुशना धर्म्मतत्त्ववित्।
धर्मार्थकाममोक्षाणां कारणं पापनाशनम्॥
सुसमाधिहृदो यूयं शृणुध्वङ्गदतो मम।
भार्गवं पितरं नत्वा उशनं धर्म्ममब्रवीत्॥
कृतोपनयनो वेदानधीयीत द्विजोत्तमः।
गर्भाष्टमे व्यष्टमे वा स्वसूत्रोक्त विधानतः॥
दण्डी च मेखलासूत्री कृष्णाजिनधरो मुनिः।
भिक्षाहारी गुरुहिते वीक्षमाणो गुरोर्मुखम्॥
कार्पासमुपवीतात् सन्निर्मितं ब्रह्मणा पुरा।
ब्राह्मणानास्त्रिवित् सूत्रं कौशिवादास्त्रमेव वा॥
सदोपवीती चैव स्यात् सदा बद्धशिखो द्विजः।
अन्यथा यत्कृतं कर्मास्तद्भवत्या यथाक्रमम्॥
वसेदविकृतं वासः कार्पासं वा कषायकम्।
तदेव परिधानीयं शुक्लमच्छिद्रमुत्तमम्॥

उत्तरीयं समाख्यातं वासःकृष्णाजिनं शुभम् ।
अभावे भव्यमजिनं रौरवं वा विधीयते ॥
उपवीतं वामबाहुं सव्यं बाहु समन्वितम् ।
उपवीतं भवेन्नित्यन्निवीतं कण्ठलम्बनम् ॥
सव्यबाहुं समुद्धृत्य दक्षिणेन धृता द्विजाः ।
प्राचीनावीतमित्युक्तं पित्र्ये कर्म्मणि धारयेत् ॥
अग्न्यगारे गवाङ्गोष्ठे होमे जप्ये तथैव च ।
स्वाध्यायभोजने नित्यं ब्राह्मणानाञ्च सन्निधौ ॥
उपासने गुरूणाञ्च सन्ध्ययोरुभयोरपि ।
उपवीती भवेन्नित्यं विधिरेषः सनातनः ॥
मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
मुञ्जाभावे कुशानाहु ग्रन्थिनैकेन वा त्रिभिः ॥
धारयेद्बैल्वपालाशौ दण्डौ केशान्तगौ द्विजः ।
यज्ञार्ह्यवृक्षजं वाथ सौम्यं व्रणमेव च ॥
सायं प्रातर्द्विजः सन्ध्यामुपासीत समाहितः ।
कामाल्लोभाद्भयान्मोहात् कदा न पतितो भवेत् ॥
अग्निकार्यं ततः कुर्यात्सायं प्रातः प्रसन्नधीः ।
स्नात्वा सन्तर्पयेद्दे वा नृषीन् पितृगणांस्तथा ॥
देवाभ्यर्चान्ततः कुर्यात् पुष्पैः पत्रेण चाम्बुभिः ।
अभिवादनशीलः स्यान्नित्यं वृद्धेष्टधर्म्मतः ॥
असावहम्भो नामेति सम्यक् प्रणतिपूर्वकम् ।
आयुरारोग्यवान् वित्तं द्रव्याद्यपरिवर्जितः ॥
आयुष्मान् भव सौम्येति वाच्यो विप्राभिवादने ।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरस्ततः ॥

यो न वेत्त्यभिवादस्य द्विजः प्रत्यभिवादनम् ।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥
सव्येन पाणिना कार्यं उपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणम् ॥
लौकिकं वैदिकं वापि तथाध्यात्मिकमेव वा ।
आददीत यतो ज्ञानं तत्पूर्वमभिवादयेत् ॥
नोदकं धारयेद् भैक्षं पुष्पाणि समिधस्तथा ।
एवं विधानि चान्यानि न देवार्थेषु किञ्चन ॥
ब्राह्मणं कुशलं पृच्छेत् क्षत्रियञ्चाप्यनामयम् ॥
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ।
उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः ॥
मातुलश्वशुरभ्रातृमातामहपितामहौ ।
वर्णज्ञाश्च पितृव्यश्च पञ्चै ते पितरः स्मृताः ॥
माता मातामही गुर्वी पितृमातृस्वसादयः ।
श्वश्रु पितामही ज्येष्ठा ज्ञातव्या गुरवः स्त्रियः ॥
इत्युक्ता गुरवः सर्वे मातृतः पितृतस्तथा ।
अनुवर्तनमेतेषां मनोवाक्कायकर्मभिः ॥
गुरुं दृष्ट्वा समुत्तिष्ठेदभिवाद्य कृताञ्जलिः ।
न तै रुपविशेत्सार्द्धं विवादेनार्थकारणात् ॥
जीवितार्थमपि द्वेषं गुरुभिर्नैव भाषणम् ।
उदितोऽपि गुणैरन्यैर्गुरुद्वेषी पतत्यधः ॥
गुणानामपि सर्वेषां पूजाः पञ्च विशेषतः ।
तेषामाद्यास्त्रयः श्रेष्ठास्तेषां माता सुपूजिता ॥
यो हि वासयति दिवा येन सद्योपदिश्यते ।

ज्येष्ठो भ्राता च भर्त्ता च पञ्च ते गुरवस्तथा ॥
आत्मनः सर्वयत्नेन प्राणत्यागेन वा पुनः ।
पूजनीयाः प्रयत्नेन पञ्चैते भूतिमिच्छता ॥
यावत् पिता च माताच द्वावेतौ निर्विकारणम् ।
तावत् सर्वं परित्यज्य पुत्रः स्यात्तत्परायणः ।
पिता माता च सुप्रीतौ स्यातां पुत्रगुणैर्यदि ॥
स पुत्रः सकलं कर्म्म प्राप्नुयात्तेन कर्म्मणा ।
नास्ति मातृसमं दैवं नास्ति पितृसमो गुरुः ॥
तयोः प्रत्युपकारोऽपि न हि कश्चन विद्यते ।
तयोर्नित्यं प्रियं कुर्य्यात्कर्म्मणा मनसा गिरा ।
न ताभ्या मननुज्ञातो धर्म्ममेकं समाचरेत् ॥
वर्जयित्वा मुक्तिफलं नित्यनैमित्तिकं तथा ।
धर्म्मसारः समुद्दिष्टः प्रेत्यानन्तफलप्रदः ॥
सम्यगाचारवक्तारं विसृष्टस्तदनुज्ञया ।
शिष्यो विद्याफलं भुङ्क्ते प्रेत्य चापद्यते दिवि ॥
यो भ्रातरं पितृसमं ज्येष्ठं मूढोऽवमन्यते ।
तेन दोषेण संप्रेत्य निरयं सम्प्रयच्छति ॥
पुंसाश्चात्मनि वैषेण पूज्यो भर्त्ता च सम्मतः ।
यापि दातरि लोकेऽस्मिन्नुपकारोऽपि गौरवम् ॥
ये नरा भर्तृपिण्डार्थं स्वान् प्राणान् सन्त्यजन्ति हि ।
तेषामिव परान् लोकानुवाच भगवान् भृगुः ॥
मातुलांश्च पितृव्यांश्च श्वशुरान् ऋत्विजान् गुरून् ।
असावयमिति ब्रूयात्प्रत्युत्थाय यवीयसः ॥
आचार्य्यो दीक्षितो नाम्ना यवीयानपि यो भवेत् ।

भोःशब्दपूर्वकं चैनमभिभाषेत धर्म्मवित् ॥
अभिवाद्याश्च पूर्वन्तु शिरसाब्रह्मशर्म च ।
ब्राह्मणक्षत्रियाद्यैश्च श्रीकामैः सादरं सदा ॥
नाभिवाद्यास्तु विप्राणां क्षत्रियाद्याः कथञ्चन ।
ज्ञानकर्म्मगुणोपेता यद्यप्येते बहुश्रुताः ॥
ब्राह्मणः सर्व्ववर्णानां स्वस्ति कुर्य्यादिति स्थितिः ।
सवर्णोऽप्यसवर्णानां कार्य्यमेवाभिवादनम् ॥
गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिरेको गुरुः स्त्रीणां सर्वस्याभ्यागतो गुरुः ॥
विद्या कर्म्म वयो बन्धुर्वित्तं भवति यस्य वै ।
मान्यस्थानानि पञ्चाहुः पूर्वं पूर्वं गुरूणि च ॥
पञ्चानां त्रिषु वर्णेषु भवेत्तु गुणवान् हि यः ।
यत्र स्यात्सोऽत्र मानार्हः शूद्रोऽपि स भवेद् यदि ॥
पिण्डादिभ्यो ब्राह्मणेभ्यः स्त्रियै राज्ञेऽस्य चक्षुषे ।
वृद्धाय भावहीनाय रोगिणे दुर्बलाय च ॥
भिक्षामाहृत्य शिष्टानां गृहेभ्यः प्रयतोऽन्वहम् ।
निवेद्य गुरवेऽश्नीयाद्वाग्यतस्तदनुज्ञया ॥
भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः ।
भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥
मातरं वा स्वसारं वा मातुर्वा भगिनीं तथा ।
भिक्षेत भिक्षां प्रथमं या तु नैनं विमानयेत् ।
सजातीयगृहेष्वेवं सर्ववर्णिकमेव वा ।
भैक्षस्याचरणं प्रोक्तं पतितादिषु वर्जितम् ॥
वेदयज्ञादिहीनानां प्रशस्तानां स्वकर्म्मसु ।

ब्रह्मचारी चरेद्भैक्षं गृहस्थः प्रयतोऽन्वहम् ॥
गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।
अभावेऽप्यथ गेहानां पूर्वं पूर्वं विवर्जयेत् ॥
सर्वं वापि चरेद् ग्रामं पूर्वोक्तानामसम्भवे ।
नियम्य प्रयतो वाचं दिशस्तानवलोकयन् ॥
समाहृत्य तु तद्भैक्षं यावदर्थमिहामया ।
भुञ्जीत प्रयतो नित्यं वाग्यतो नान्यमानसः ॥
भैक्षेण वर्तयेन्नित्यं कामनाशीर्भवेद् व्रती ।
भैक्षेण व्रत्तिनो वृत्तिरुपवाससमं स्मृता ॥
पूजयेदशनं नित्यमद्यादन्नमकुत्सयन् ।
दृष्ट्वा हृष्येत्प्रसीदेच्च प्रतिनन्देच्च सर्वतः ॥
अनारोग्यमनायुष्यमस्वर्ग्यं कुत्सभोजनम् ।
अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ॥
प्राङ्मुखोऽन्नानि भुञ्जीत दक्षिणामुख एव वा ।
नाद्यादुदङ्मुखो नित्यं विधिपूर्व्वं सनातने ॥
प्रक्षाल्य पाणिपादौ च भुञ्जानो द्विरुपस्पृशेत् ।
शुचौ देशे समासीनो भुङ्क्त्वान्ते द्विरुपस्पृशेत् ॥
मण्डलं पूर्वतः कृत्वा तत्र स्थाप्याथ भोजयेत् ।
स्वप्राणाहुतिपर्यन्तं मौनमेव विधीयते ॥

इत्यौशनसस्मृतौ प्रथमोऽध्यायः ॥

---

भुक्त्वा पीत्वा च स्नात्वा च तथा रथ्योपसर्पणे ।
ओष्ठावलोमकौ स्पृष्ट्वा वासो विपरिधाय च ॥
रेतोमूत्रपुरीषाणामुत्सर्गेऽनृतभाषणे ।

तथा चाध्ययनारम्भे कासश्वासागमे तथा ॥
चत्वरं वा श्मशानं वा समागम्य द्विजोत्तमः ।
सन्ध्ययोरुभयोस्तद्वदाचान्तोऽप्याचमेत् पुनः ॥
चण्डालम्लेच्छसम्भाषे स्त्रीशूद्रोच्छिष्टभाषणे ।
उच्छिष्टं पुरुषं स्पृष्ट्वा भोज्यं वापि तथाविधम् ॥
अश्रुपाते तथाचामेत् अहितस्य तथैव च ।
भोजयेत् सन्ध्ययोः स्नात्वा पीत्वा मूत्रपुरीषयोः ॥
आचान्तोऽप्याचमेत् स्पृष्ट्वा सकृत् सकृदथान्यतः ।
अग्नेर्गवामथालम्भे स्पृष्ट्वा प्रयत एव वा ॥
स्त्रीणामथात्मनः स्पर्शे नीवीं वा परिधाय च ।
उपस्पृशेज्जलं शुद्धं तृणं वा भूमिमेव वा ॥
केशानां चात्मनः स्पर्शे वाससां क्षालितस्य च ।
अनुष्णाभिरफेनाभिरदुष्टाभिश्च सर्वशः ॥
शौचे च सुखमासीनः प्राङ्मुखो वाप्युदङ्मुखः ।
शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा ॥
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ।
सोपानत्को जलस्थो वा नोष्णीषी वाचमेद् बुधः ॥
न चैव वर्षधाराभिर्न तिष्ठन् धृतोदकैः ।
नैकहस्तार्पितजलैर्विना शूद्रेण वा पुनः ॥
न पादुकासनस्थो वा बहिर्जानुरथापि वा ।
न जल्पन् हसन् प्रेक्षमाणश्च प्रह्वएव वा ॥
नावीक्षमाणाद्भिर्नोष्णाभिर्नफेनादथापि वा ॥
शूद्राशुचिकरैर्मुक्तैर्नक्षाराभिस्तथैव च ।
न चैवाङ्गुलिभिः शब्दमकुर्वन्नान्यमानसः ॥

न वर्णैरसदुष्टाभिर्नचैव प्रदरोदकैः ।
न प्राणिर्जनिताभिर्वा न वह्निः कलमेव वा ॥
हृद्गाभिः पूयते विप्रः कण्ठाभिः चत्रियः शुचिः ।
प्राशिताभिस्तथा वै श्यः शूद्रैः संस्पर्शनं ततः ॥
अङ्गुष्ठमूलान्तरतो रेखायां ब्रह्म उच्यते ।
अन्तराङ्गुष्ठदेशिन्यो पितॄणां तीर्थमुत्तमम् ॥
कनिष्ठो मूलतः पश्चात्प्राजापत्यं प्रचक्षते ।
अङ्गुल्यग्रे स्मृतं दैवं तथैवार्षं प्रकीर्तितम् ।
मूले स्याद्दैवमार्षं स्यादाग्नेयं मध्यतः स्मृतम् ॥
तदेव सौमिकं तीर्थमेतत् ज्ञात्वा न मुह्यति ।
ब्राह्मेणैव तु तीर्थेन द्विजो नित्यमुपस्पृशेत् ।
कायेन वा दैवतेन नतु पित्र्येण वा द्विजाः ! ॥
त्रिः प्राश्नीयादपः पूर्वं ब्राह्मणः प्रयतः स्मृतः ।
संहत्याङ्गुष्ठमूलेन मुखं वै समुपस्पृशेत् ॥
अङ्गुष्ठानामिकाभ्यां तु स्पृशेन्नेत्रद्वयं ततः ।
तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटं ततः ॥
कनिष्ठाङ्गुष्ठयोगेन श्रवणे समुपस्पृशेत् ।
सर्व्वासामथ योगेन हृदयन्तु तलेन वा ॥
संस्पृशेद्वै शिरस्तद्वदङ्गुष्ठेनाथवा द्वयम् ।
त्रिः प्राश्नीयादेवमेव प्रीतास्तेनास्य देवताः ॥
ब्रह्मविष्णुमहेशाश्च सम्भवन्त्यनुशुश्रुमः ।
गङ्गा च यमुना चैव प्रीयते परिमार्जनात् ॥
प्रसंस्पर्शात्लोचनयोः प्रीयेते शशिभास्करौ ।
नासत्यौ चैव प्रीयेते स्पृष्टे नासापुटद्वयम् ॥

कर्णयोः स्पृष्टयो स्तद्वत्प्रीयते चानलानिलौ।
संस्पृष्टे हृदये चास्याः प्रीयन्ते सर्वदेवताः॥
मूर्ध्नि संस्पर्शनादेव प्रीतस्तु पुरुषो भवेत्।
नोच्छिष्टं कुर्वते मुख्यं विप्रयोगं नयन्ति याः॥
अन्तवदन्तसलिलजिह्वास्पर्शे शुचिर्भवेत्।
स्पृशन्ति विन्दवः पादौ य आचामयतः परम्॥
भूमिगैस्ते समाज्ञेयाः न तैरप्रयतो भवेत्।
मधुपर्के च सोमे च ताम्बूलस्य च भक्षणे॥
फलमूलेक्षुदण्डे च न दोषं उशना ब्रवीत्।
प्रचरंश्चान्नपानेषु यदुच्छिष्टो भवेद् द्विजः॥
भूमौ निक्षिप्य तद् द्रव्यमाचम्य प्रोक्षयेत्तु यत्।
तैजसं वै समादाय भवेदुच्छेषणास्ततः॥
अनिधाय च तद् द्रव्यमाचान्तः शुचितामियात्।
वस्त्रादीनां विकल्पत्वात् स्पृष्ट्वा च दिवमेव हि॥
आरभ्यानुदके रात्रौ चौरो वाप्याकले पथि।
कृत्वा मूत्रपुरीषं वा द्रव्यहस्तेन दुष्यति॥
निधाय दक्षिणे कर्णे ब्रह्मसूत्र मुदङ्मुखः।
अथ कुर्य्यात् शकृन्मूत्रे रात्रौ चेद्दक्षिणामुखः॥
अन्तर्धाय महीं काष्ठैः पर्णैर्लोष्टतृणेन वा।
प्रतिशीनशिराः कुर्य्यात् शकृन्मूत्रविसर्जने॥
छायाकूपनदीगोष्ठे चैत्याम्भःपथि भस्मसु।
अग्नौ चैव श्मशाने च विण्मूत्रे न समाचरेत्॥
न गोमये न कृष्टे वा न गोष्ठे नैव शाद्वले।
न तिष्ठन् वा न निर्व्वासा न च पर्वतमस्तके॥

न जीर्णदेवायतने न वल्मीके कदाचन ।
न च सर्वेषु गर्तेषु न च गच्छन् समाचरेत् ॥
तुषाङ्गारकपालेषु राजमार्गे तथैव च ।
न क्षेत्रे न बिले चापि न तीर्थे च चतुष्पथे ॥
नोद्यानोपसमीपे वा नोषरेन पराशुचौ ।
न चोपानत्कपादौ च छत्री वर्षान्तरीक्षके ॥
न चैवाभिमुखः स्त्रीणां गुरुब्राह्मणयोर्गवाम् ।
न देवदेवालययो र्नापामपि कदाचन ॥
नदीर्ज्योतींषि वीक्षित्वा तद्वाय्वाभिमुखोऽपि वा ।
प्रत्यादित्यं प्रत्यनिलं प्रतिसोमं तथैव च ॥
आहृत्य मृत्तिकां कुर्य्यात् लेपगन्धापकर्षणम् ।
कुर्य्यादतन्द्रितः शौचं विशुद्धैरुद्धृतोदकैः ॥
नाहरेन्मृत्तिकां विप्रः पांशुलां नच कर्दमात् ।
न मार्गान्नोषराद्देशाच्छौचविष्टोऽपरस्य च ॥
न देवायतनात् कूपाद् ग्रामान्न तु कदाचन ।
उपस्पृशेत्ततो नित्यं पूर्वोक्तेन विधानतः ॥
तारव्याहृतिगायत्र्या वर्णानामेरणैः क्रमात् ।
तन्मन्त्रितं पिवेद्यस्तु मन्त्राचमनमीरितम् ॥
गायत्र्या चमनेनाथ श्रुत्याचमनमीरितम् ।

इत्यौशनसस्मृतौ द्वितीयोऽध्यायः ॥

---

एवं दण्डादिभिर्युक्तः शौचाचारसमन्वितः ।
आहूत्याध्ययनं कुर्य्याद्वीक्षमाणो गुरोर्मुखम् ॥
नित्यमुद्यतपाणिश्च सन्ध्याचारसमन्वितः ।

आस्यतामिति चोक्तश्च नासीताभिमुखं गुरोः॥
प्रतिश्रवणसम्भाषे शयानो न समाचरेत्।
आसीनो न च भुञ्जानो न तिष्ठन्न पराङ्मुखः।
न च शय्यासनं चास्य सर्वदा गुरुसन्निधौ॥
गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत्।
नोदाहरेदस्य नाम परोक्षमपि केवलम्॥
न चैवास्यानुकुर्व्वीत गतिभाषणचेष्टितम्॥
गुरोर्यत्र परीवादो निन्दा वापि प्रवर्त्तते।
कर्णौ तत्र पिधातव्यौ गन्तव्यं परितोऽन्यतः॥
दूरस्थो नार्चयेदेवान्न क्रुद्धो नान्तिके स्त्रियः।
न चैवास्योत्तरं ब्रूयान्न तेनासीत सन्निधौ॥
उदकुम्भं कुशान् पुष्पं समिधोऽस्याहरेत्सदा।
मार्ज्जनं लेपनं नित्यमङ्गानां वै समाचरेत्॥
नास्य निर्माल्यशयनं पादुकोपानहावपि।
आक्रामेदासनं तस्य च्छायामपि कदाचन॥
ये दन्तकाष्ठादीन् लब्ध्वा न चास्मै विनिवेदयेत्।
अनापृच्छ्य न गन्तव्यन्तत्प्रियहिते रतः॥
न पादौ स्थापयेदस्य सन्निधाने कदाचन।
जृम्भितं हसितं चैव चपकं प्रावरणं तथा॥
वर्जयेत् सन्निधौ नित्यं नखस्फोटनमेव च।
यथाकालमधीयीत यावन्न विमना गुरुः।
आसनाद्धो गुरोः कूर्चे फलके वा समाहितः॥
आसने शयने याने न च तिष्ठेत्कथञ्चन।
धावन्त मनुधावेत गच्छन्त मनुगच्छति॥

मनोज्ञयानप्रासादप्रस्तरेषु कटेषु च ।
नासीत गुरुणा सार्द्धं शिलाफलतलेषु च ॥
जितेन्द्रियः स्यात् सततं वश्यात्माक्रोधनः शुचिः ।
प्रयुञ्जीत सदा वाचं मधुरां हितभाषिणीम् ॥
गन्धमाल्यं रसं कन्यां सूक्ष्मप्राणिविहिंसनम् ।
अभ्यङ्गञ्चाञ्जनोपानच्छत्रधारणमेव च ॥
कामं क्रोधं भयं निद्रां गीतवादित्रनर्त्तनम् ।
द्यूतं जनपरीवादं स्त्रीप्रेक्षालापनं तथा ॥
परोपतापपैशुन्यं प्रयत्नेन विवर्जयेत् ।
उदकुम्भं सुमनसो गोशकृन्मृत्तिकां कुशान् ॥
आहरेद्यावदन्यानि भैक्षञ्चाहरहश्चरेत् ।
तथैव लवणं सर्वं भक्ष्यं पर्य्युषितं नयेत् ॥
अनन्यदर्शी सततं भवेद्गीतादिनिःस्पृहः ।
नादर्शञ्चैव वीक्षेत न चरेद्दन्तधावनम् ॥
एकान्तमशुचिः स्त्रीभिः शूद्राद्यैरभिभाषणम् ।
गुरूच्छिष्टं भेषजार्थं न प्रयुञ्जीत कामतः ॥
मलापकर्षणं स्नानमाचरेद्वै कदाचन ।
नचातिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत् ॥
विद्यागुरुष्वेतदेव नित्यवृत्तिः स्वयोनिषु ।
प्रतिषेधत्सु वा धर्मं हितं चोपदिशत्सु स्वयम् ॥
श्रेयः सुगुरुवद्वृत्तिं नित्यमेवं समाचरेत् ।
गुरुपत्नीषु पुत्रेषु गुरोश्चैव स्वबन्धुषु ॥
बालः समानजन्मा वा शिष्यो वा यज्ञकर्म्मसु ।
अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति ॥

वशिष्ठोक्तो विधिः कृत्स्नो द्रष्टव्योऽत्र निरामिषः।
अतः परं प्रवक्ष्यामि विशेष इह यो भवेत्॥ १८॥ १ खण्डः॥

प्रातरामन्त्रितान् विप्रान् युग्मानुभयतस्तथा।
उपवेश्य कुशान् दद्यादृजुनैव हि पाणिना॥ १॥
हरिता यज्ञिया दर्भाः पीतकाः पाकयज्ञियाः।
समूलाः पितृदैवत्याः कल्माषा वैश्वदेविकाः॥ २॥
हरिता वै सपिञ्जलाः शुष्काः स्निग्धाः समाहिताः।
रत्निमात्राः प्रमाणेन पितृतीर्थेन संस्तृताः॥ ३॥
पिण्डार्थं ये स्तृता दर्भास्तर्पणार्थं तथैव च।
धृतैः कृते च विण्मूत्रे त्यागस्तेषां विधीयते॥ ४॥
दक्षिणं पातयेज्जानु देवान् परिचरन् सदा।
पातयेदितरज्जानु पितॄन् परिचरन्नपि॥ ५॥
निपातो नहि सव्यस्य जानुनो विद्यते क्वचित्।
सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत्॥ ६॥
पितृभ्य इति दत्तेषु उपवेश्य कुशेषु तान्।
गोत्रनामभिरामन्त्र्य पितॄनर्घं प्रदापयेत्॥ ७॥
नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते।
पात्राणां पूरणादीनि दैवेनैव हि कारयेत्॥ ८॥
ज्येष्ठोत्तरकरान् युग्मान् कराग्राग्रपवित्रकान्।
कृत्वार्घ्यं संप्रदातव्यं नैकैकस्यात्र दीयते॥ ९॥
अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्॥ १०॥
एतदेव हि पिञ्जल्या लक्षणं समुदाहृतम्।
आज्यस्योत्पवनार्थं यत्तदप्येतावदेव तु॥ ११॥

एतत्प्रमाणामेवैके कौशीमेवाद्रं संजरीम् ।
शुष्कां वा शीर्णकुसुमां पिप्पलीं परिचक्षते ॥ १२ ॥
पितृमन्त्रानु द्रवण आत्मालम्भेऽधमेक्षणे ।
अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ॥ १३ ॥
मार्ज्जारमूषकस्पर्शे आक्रुष्टे क्रोधसम्भवे ।
निमित्तेष्वेषु सर्व्वत्र कर्म्म कुर्व्वन्नपः स्पृशेत् ॥ १४ ॥ २खण्डः॥
अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्म्मकारिणाम् ।
अक्रिया च परोक्ता च तृतीया चायथाक्रिया ॥ १ ॥
स्वशाखाश्रयमुत्सृज्य परशाखाश्रयश्च यः ।
कर्त्तुमिच्छति दुर्म्मेधा मोघं तत्तस्य चेष्टितम् ॥ २ ॥
यन्नाम्नातं स्वशाखायां परोक्तमविरोधि च ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्म्मवत् ॥ ३ ॥
प्रवृत्तमन्यथा कुर्य्याद्यदि मोहात् कथञ्चन ।
यतस्तदन्यथाभूतं तत एव समापयेत् ॥ ४ ॥
समाप्ते यदि जानीयान्मयैतदयथाकृतम् ।
तावदेव पुनः कुर्य्यान्नावृत्तिः सर्वकर्म्मणः ॥ ५ ॥
प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः ।
तदङ्गस्याक्रियायाञ्च नावृत्तिर्नैव तत्क्रिया ॥ ६ ॥
मधुमन्निति यस्तत्र त्रिर्जपोऽशितुमिच्छताम् ।
गायत्र्यनन्तरं सोऽत्र मधुमन्त्रविवर्ज्जितः ॥ ७ ॥
नचाश्नत्सु जपेदत्र कदाचित् पितृसंहिताम् ।
अन्य एव जपः कार्य्यः सोमसामादिकः शुभः ॥ ८ ॥
यस्तत्र प्रकरोऽन्नस्य तिलवद् यववत्तथा ।
उच्छिष्टसन्निधौ सोऽत्र तृप्तेषु विपरीतकः ॥ ९ ॥

सम्पन्नमिति तृप्ताः स्थ प्रश्नस्थाने विधीयते।
सुसम्पन्नमिति प्रोक्ते शेषमन्नं निवेदयेत्॥ १०॥
प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र्य पूर्ववत्।
अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति पात्रतः॥ ११॥
द्वितीयञ्च तृतीयञ्च मध्यदेशाग्रदेशयोः।
मातामहप्रभृतींस्त्रीनेतेवामेव वामतः॥ १२॥
सर्व्वस्मादन्नमुद्धृत्य व्यञ्जनैरुपसिच्य च।
संयोज्य यवकर्क्कन्धूदधिभिः प्राङ्मुखस्ततः॥ १३॥
अवनेजनवत् पिण्डान् दत्त्वा बिल्वप्रमाणकान्।
तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत्॥ १४॥ ३ खण्डः॥
उत्तरोत्तरदानेन पिण्डानामुत्तरोत्तरः।
भवेदधश्चाधराणामधरश्राद्धकर्म्मणि॥ १॥
तस्माच्छ्राद्धेषु सर्व्वेषु वृद्धिमत्स्वितरेषु च।
मूलमध्याग्रदेशेषु ईषत्सक्तांश्च निर्व्वपेत्॥ २॥
गन्धादीन्निःक्षिपेत्तूष्णीं तत आचामयेद्द्विजान्।
अन्यत्राप्येष एव स्यादयवादिरहितो विधिः॥ ३॥
दक्षिणाप्लवने देशे दक्षिणाभिमुखस्य च।
दक्षिणाग्रेषु दर्भेषु एषोऽन्यत्र विधिः स्मृतः॥ ४॥
अथाग्रभूमिमासिञ्चेत् सुसंप्रोक्षितमस्त्विति।
शिवा आपः सन्त्विति च युग्मानेवोदकेन च॥ ५॥
सौमनस्यमस्त्विति च पुष्पदानमनन्तरम्।
अक्षतञ्चारिष्टं चास्त्वित्यक्षतान् प्रतिपादयेत्॥ ६॥
अक्षय्योदकदानं तु अर्घ्यदानवदिष्यते।
षष्ठ्यैव नित्यं तत् कुर्य्यान्न चतुर्थ्या कदाचन॥ ७॥

अर्घ्येऽक्षय्योदके चैव पिण्डदानेऽवनेजने ।
तन्त्रस्य तु निवृत्तिः स्यात् स्वधावाचन एव च ॥ ८ ॥
प्रार्थनासु प्रतिप्रोक्ते सर्व्वास्वेव द्विजोत्तमैः ।
पवित्रान्तर्हितान् पिण्डान् सिञ्चेदुत्तानपात्रकृत् ॥ ९ ॥
युग्मानेव स्वस्ति वाच्यमङ्गुष्ठापग्रहं सदा ।
कृत्वा धुर्यस्य विप्रस्य प्रणम्यानुव्रजेत्ततः ॥ १० ॥
एषः श्राद्धविधिः कृत्स्न उक्तः संक्षेपतो मया ।
ये विन्दन्ति न मुह्यन्ति श्राद्धकर्मसु ते क्वचित् ॥ ११ ॥
इदं शास्त्रञ्च गुह्यञ्च परिसंख्यानमेव च ।
वशिष्ठोक्तञ्च यो वेद स श्राद्धं वेद नेतरः ॥ १२ ॥ ४ खण्डः ॥

असकृत्वानि कर्माणि क्रियेरन् कर्मकारिभिः ।
प्रतिप्रयोगं नैताः स्युर्मातरः श्राद्धमेव च ॥ १ ॥
आधाने होमयोश्चैव वैश्वदेवे तथैव च ।
बलिकर्म्मणि दर्शे च पौर्णमासे तथैव च ॥ २ ॥
नवयज्ञे च यज्ञज्ञावदन्त्येवं मनीषिणः ।
एकमेव भवेच्छ्राद्धमेतेषु न पृथक् पृथक् ॥ ३ ॥
नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते ।
न सोष्यन्तीजातकर्म्म प्रोषितागतकर्म्मसु ॥ ४ ॥
विवाहादिः कर्म्मगणो य उक्तो गर्भाधानं शुश्रुम यस्य चान्ते ।
विवाहादावेकमेवात्र कुर्य्याच्छ्राद्धं नादौ कर्म्मणः कर्म्मणः स्यात् ॥ ५ ॥
प्रदोषे श्राद्धमेकं स्याद्गोनिष्क्रामप्रवेशयोः ।
न श्राद्धं युज्यते कर्त्तुं प्रथमे पुष्टिकर्म्मणि ॥ ६ ॥
हलाभियोगादिषु तु षट्सु कुर्य्यात् पृथक् पृथक् ।
प्रतिप्रयोगमप्येवामादावेकन्तु कारयेत् ॥ ७ ॥

वृहत्पत्रक्षुद्रपशुस्वस्त्यर्थं परिविध्यतोः ।
सूर्य्येन्द्वोः कर्म्मणी ये तु तयोः श्राद्धं न विद्यते ॥ ८ ॥
न दशाद्यन्विते चैव विषवद्दृष्टकर्म्मणि ।
कृमिदष्टचिकित्सायां नैव शेषेषु विद्यते ॥ ९ ॥
गणशः क्रियमाणेषु मातृभ्यः पूजनं सकृत् ।
सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥ १० ॥
यत्र यत्र भवेच्छ्राद्धं तत्र तत्र च मातरः ।
प्रासङ्गिकमिदं प्रोक्तमतः प्रकृतमुच्यते ॥ ११ ॥ ५ खण्डः ॥

आधानकाला ये प्रोक्तास्तथा यश्चाग्नियोनयः ।
तदाश्रयोऽग्निमादध्यादग्निमानग्रजो यदि ॥ १ ॥
दाराधिगमनाधाने यः कुर्य्यादग्रजाग्रिमः ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्व्वजः ॥ २ ॥
परिवित्तिपरिवेत्तारौ नरकं गच्छतो ध्रुवम् ।
अपि चीर्णप्रायश्चित्तौ पादोनफलभागिनौ ॥ ३ ॥
देशान्तरस्थक्लीवैकवृषणानसहोदरान् ।
वेश्यातिसक्तपतितशूद्रतुल्यातिरोगिणः ॥ ४ ॥
जडमूकान्धबधिरकुब्जवामनकुण्ठकान् ।
अतिवृद्धानभार्य्यांश्च कृषिसक्तान् नृपस्य च ॥ ५ ॥
धनवृद्धिप्रसक्तांश्च कामतः कारिणस्तथा ।
कुलटोन्मत्तचौरांश्च परिविन्दन्न दुष्यति ॥ ६ ॥
धनवार्धुषिकं राजसेवकं कर्म्मकस्तथा ।
प्रोषितञ्च प्रतीक्षेत वर्षत्रयमपि त्वरन् ॥ ७ ॥
प्रोषितं यद्यशृण्वानमब्दादूर्द्ध्वं समाचरेत् ।
आगते तु पुनस्तस्मिन् पादं तच्छुद्धये चरेत् ॥ ८ ॥

लक्षणे प्रागतायास्तु प्रमाणं द्वादशाङ्गुलम् ।
तन्मूलसक्ता योदीची तस्या एतन्नवोत्तरम् ॥ ९ ॥
उदग्गतायाः संलग्नाः शेषाः प्रादेशमात्रिकाः ।
सप्तसप्ताङ्गुलांस्त्यक्त्वा कुशेनैव समुल्लिखेत् ॥ १० ॥
मानक्रियायामुक्तायामनुक्ते मानकर्त्तरि ।
मानकृद्यजमानः स्याद्विदुषामेव निश्चयः ॥ ११ ॥
पुण्यमेवादधीताग्निं स हि सर्व्वैः प्रशस्यते ।
अनर्द्धुकत्वं यत्तस्य काम्यैस्तन्नीयते शमम् ॥ १२ ॥
यस्य दत्ता भवेत् कन्या वाचा सत्येन केनचित् ।
सोऽन्त्यां समिधमाधास्यन्नादधीतैव नान्यथा ॥ १३ ॥
अनूढैव तु सा कन्या पञ्चत्वं यदि गच्छति ।
न तया व्रतलोपोऽस्य तेनैवान्यां समुद्वहेत् ॥ १४ ॥
अथ चेन्न लभेतान्यां याचमानोऽपि कन्यकाम् ।
तमग्निमात्मसात् कृत्वा क्षिप्रं स्यादुत्तराश्रमी ॥ १५ ॥ ६ खण्डः ॥

अश्वत्थो यः शमीगर्भः प्रशस्तोर्व्वीसमुद्भवः ।
तस्य या प्राङ्मुखी शाखा वोदीची वोर्द्ध्वगापि वा ॥ १ ॥
अरणिस्तन्मयी प्रोक्ता तन्मय्येवोत्तरारणिः ।
सारवद्दारवश्चत्रमोविली च प्रशस्यते ॥ २ ॥
संसक्तमूलो यः शम्याः स शमीगर्भ उच्यते ।
अलाभे त्वशमीगर्भादुद्धरेदविलम्बितः ॥ ३ ॥
चतुर्विंशतिरङ्गुष्ठदैर्घ्यं षडपि पार्थिवम् ।
चत्वार उच्छ्रये मानमरण्योः परिकीर्त्तितम् ॥ ४ ॥
अष्टाङ्गुलः प्रमन्थः स्याच्चत्रं स्याद्द्वादशाङ्गुलम् ।
ओविली द्वादशैव स्यादेतन्मन्थनयन्त्रकम् ॥ ५ ॥

अङ्गुष्ठाङ्गुलमानन्तु यत्र यत्रोपदिश्यते।
तत्र तत्र बृहत्पर्वग्रन्थिभिर्मिनुयात् सदा॥ ६॥
गोवालैः शणसंमिश्रैस्त्रिवृत्तममलात्मकम्।
व्यामप्रमाणं नेत्रं स्यात् प्रमथ्यस्तेन पावकः॥ ७॥
मूर्द्धाक्षिकर्णवक्त्राणि कन्धरा चापि पञ्चमी।
अङ्गुष्ठमात्राण्येतानि द्व्यङ्गुष्ठं वक्ष उच्यते॥ ८॥
अङ्गुष्ठमात्रं हृदयं त्र्यङ्गुष्ठमुदरं स्मृतम्।
एकाङ्गुष्ठा कटिर्ज्ञेया द्वौ वस्तिर्द्वौ च गुह्यकम्॥ ९॥
ऊरू जङ्घे च पादौ च चतुस्त्र्येकैर्यथाक्रमम्।
अरण्यवयवा ह्येते याज्ञिकैः परिकीर्त्तिताः॥ १०॥
यत्तद्गुह्यमिति प्रोक्तं देवयोनिस्तु सोच्यते।
अस्यां यो जायते वह्निः स कल्याणकृदुच्यते॥ ११॥
अन्येषु ये तु मन्थन्ति ते रोगभयमाप्नुयुः।
प्रथमे मन्थने त्वेष नियमो नोत्तरेषु च॥ १२॥
उत्तरारणिनिष्पन्नः प्रमन्थः सर्वदा भवेत्।
योनिसङ्करदोषेण युज्यते ह्यन्यमन्थकृत्॥ १३॥
आर्द्रा सशुषिरा चैव घूर्णाङ्गी पाटिता तथा।
न हिता यजमानानामरणिश्चोत्तरारणिः॥ १४॥ ७खण्डः॥

परिधायाहतं वासः प्रावृत्य च यथाविधि।
विभृयात् प्राङ्मुखो यन्त्रमावृता वक्ष्यमाणया॥ १॥
चत्रबुध्ने प्रमन्थाग्रं गाढं कृत्वा विचक्षणः।
कृत्वोत्तराग्रामरणिं तद्बुध्नमुपरिन्यसेत्॥ २॥
चत्राधेः कीलकाग्रस्था गोविलोमुद्गग्रकाम्।
विष्टभ्याधारयेद्यन्त्रं निष्कम्पं प्रयतः शुचिः॥ ३॥

निरुह्य ह्याथ नेतेण चलं पत्नी हुताग्निकाः।
पूर्वं मन्थन्त्यरण्यान्या: प्राप्यग्ने: स्यादृयथा श्रुतिः ॥४॥
नैकयापि विना कार्य्यमाधानं भार्य्यया द्विजैः।
अकृतं तद्विजानीयात् सर्व्वान्वाचारभन्ति यत् ॥५॥
वर्णज्येष्ठेन बह्वीभिः सवर्णाभिश्च जन्मतः।
कार्य्यमग्निच्युतेराभिः साध्वीभिर्मन्थनं पुनः ॥ ६ ॥
नात्र शूद्रीं प्रयुञ्जीत न द्रोहद्वेषकारिणीम्।
नचैवाव्रतस्थां नान्यपुंसा च सह सङ्गताम् ॥ ७ ॥
ततः शक्ततरा पश्चादासामन्यतरापि वा।
उपेतानां वान्यतमा मन्थेदग्निं निकामतः ॥ ८ ॥
जातस्य लक्षणं कृत्वा तं प्रणीय समिध्य च।
आधाय समिधं चैव ब्रह्माणं चोपवेशयेत् ॥ ९ ॥
ततः पूर्णाहुतिं हुत्वा सर्व्वमन्त्रसमन्विताम्।
गां दद्याद्यज्ञवास्त्वन्ते ब्रह्मणे वाससी तथा ॥१०॥
होमपात्रमनादेशे द्रवद्रव्ये स्रुवः स्मृतः।
पाणिरेवेतरस्मिंस्तु स्रुचैवात्र तु हूयते ॥ ११ ॥
खादिरो वाथ पालाशो द्विवितस्तिः स्रुवः स्मृतः।
स्रुग्बाहुमात्रा विज्ञेया वृत्तस्तु प्रग्रहस्तयोः ॥ १२ ॥
स्रुवाग्रे घ्राणवत् खातं द्व्यङ्गुष्ठपरिमण्डलम्।
जुह्वाः शरावबत् खातं सनिर्व्वाहं षडङ्गुलं कुर्य्यात् ॥ १३ ॥
तेषां प्राक्शः कुशैः कार्य्यः संप्रमार्गो जुहूषता।
प्रतापनञ्च लिप्तानां प्रक्षाल्योष्णेन वारिणा ॥ १४ ॥
प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं समीपतः।
तत्तथासादयेद्द्रव्यं यद्यथा विनियुज्यते ॥ १५ ॥

आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ।
मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः ॥ १६ ॥
नाङ्गुष्ठादधिका ग्राह्या समित् स्थूलतया क्वचित् ।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥ १७ ॥
प्रादेशान्नाधिका नो न तथा स्याद्विशाखिका ।
न सपर्णा न निर्व्वीर्य्या होमेषु च विजानता ॥ १८ ॥
प्रादेशद्वयमिध्मस्य प्रमाणं परिकीर्त्तितम् ।
एवंविधाः स्युरेवेह समिधः सर्वकर्म्मसु ॥ १९ ॥
समिधोऽष्टादशेध्मस्य प्रवदन्ति मनीषिणः ।
दर्शे च पौर्णमासे च क्रियास्वन्यासु विंशतिः ॥ २० ॥
समिदादिषु होमेषु मन्त्रदैवतवर्जिता ।
पुरस्ताच्चोपरिष्टाच्च इन्धनार्थं समिद्भवेत् ॥ २१ ॥
इध्मोऽप्येधार्थमाचार्य्यैर्हविराहुतिषु स्मृतः ।
यत्र चास्य निवृत्तिः स्यात्तत् स्पष्टीकरवाण्यहम् ॥२२॥
अङ्गहोमसमित्तन्त्रसोष्यन्त्याख्येषु कर्म्मसु ।
येषां चैतदुपर्य्युक्तं तेषु तत्सदृशेषु च ॥ २३ ॥
अक्षभङ्गादिविपदि जलहोमादिकर्म्मणि ।
सोमाहुतिषु सर्व्वासु नैतेष्विध्मो विधीयते ॥ २४ ॥ ८ खण्डः ॥
सूर्य्येऽस्तशैलमप्राप्ते षट्‌त्रिंशद्भिः सदाङ्गुलैः ।
प्रादुष्करणमग्नीनां प्रातर्भासाञ्च दर्शनात् ॥ १ ॥
हस्तादूर्द्धं रवियावद्गिरिं हित्वा न गच्छति ।
तावद्धोमविधिः पुण्यो नात्येत्युदितहोमिनाम् ॥ २ ॥
यावत् सम्यग् न भाव्यन्ते नभस्यृक्षाणि सर्वतः ।
न च लौहित्यमापैति तावत् सायञ्च हूयते ॥३ ॥

रजोनीहारधूमाभ्रवृक्षाग्रान्तरिते रवौ ।
सन्ध्यामुद्दिश्य जुहुयाद्धुतमस्य न लुप्यते ॥ ४ ॥
न कुर्य्यात् क्षिप्रहोमेषु द्विजः परिसमूहनम् ।
वैरूपाक्षञ्च न जपेत् प्रपदञ्च विवर्जयेत् ॥ ५ ॥
पर्य्युक्षणञ्च सर्व्वत्र कर्त्तव्यमदितेन्विति ।
अन्ते च वामदेव्यस्य गानं कुर्य्यादृचस्त्रिधा ॥ ६ ॥
अहोमकेष्वपि भवेद् यथोक्तं चन्द्रदर्शनम् ।
वामदेव्यं गणेष्वन्ते कल्पान्ते वैश्वदेविके ॥ ७ ॥
यान्यधस्तरणान्तानि न तेषु स्तरणं भवेत् ।
एककार्य्यार्थसाध्यत्वात् परिधीनपि वर्जयेत् ॥ ८ ॥
बर्हिः पर्य्युक्षणं चैव वामदेव्यजपस्तथा ।
कृत्वाहुतिषु सर्व्वासु त्रिकमेतन्न विद्यते ॥ ९ ॥
हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।
माषकोद्रवगौरादि सर्व्वालाभेऽपि वर्जयेत् ॥ १० ॥
पाण्याहुतिर्द्वादशपर्व्वपूरिका कंसादिना चेत् स्रुवमात्रपावका ।
दैवेन तीर्थेन च हूयते हविः स्वङ्गारिणि स्वर्च्चिषि तच्च पावके ॥ ११
योऽनर्च्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः ।
मन्दाग्निरामयावी च दरिद्रश्च स जायते ॥ १२ ॥
तस्मात् समिद्धे होतव्यं नासमिद्धे कदाचन ।
आरोग्यमिच्छतायुश्च श्रियमात्यन्तिकीम्परामू ॥ १३ ॥
होतव्ये च हुते चैव पाणिसूर्पस्फ्यदारुभिः ।
न कुर्य्यादग्निधमनं कुर्य्याद्वा व्यजनादिना ॥ १४ ॥
मुखेनैके धमन्त्यग्निं मुखाद्ध्येषोऽध्यजायत ।
नाग्निं मुखेनेति च यल्लौकिके योजयन्ति तत् ॥ १५ ॥ ८ खण्डः ॥

यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः।
दन्तान् प्रक्षाल्य नद्यादौ गृहे चेत्तदमन्त्रवत्॥ १ ॥
नारदाद्युक्तवार्क्षं यदष्टाङ्गुलमपाटितम्।
सत्वचं दन्तकाष्ठं स्यात्तदग्रेण प्रधावयेत्॥ २ ॥
उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः।
परिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम्॥ ३ ॥
आयुर्बलं यशोवर्च्चः प्रजाः पशून् वसूनि च।
ब्रह्मप्रज्ञाञ्च मेधाञ्च त्वन्नोधेहि वनस्पते॥ ४ ॥
मासद्वयं श्रावणादि सर्व्वा नद्यो रजस्वलाः।
तासु स्नानं न कुर्व्वीत वर्जयित्वा समुद्रगाः॥ ५ ॥
धनुःसहस्राण्यष्टौ तु गतिर्यासां न विद्यते।
न ता नदीशब्दवहा गर्त्तास्ताः परिकीर्त्तिताः॥६॥
उपाकर्म्मणि चोत्सर्गे प्रेतस्नाने तथैव च।
चन्द्रसूर्य्यग्रहे चैव रजोदोषो न विद्यते॥ ७ ॥
वेदाश्छन्दांसि सर्व्वाणि ब्रह्माद्याश्च दिवौकसः।
जलार्थिनोऽथ पितरो मरीच्याद्यास्तथर्षयः॥ ८॥
उपाकर्म्मणि चोत्सर्गे स्नानार्थं ब्रह्मवादिनः।
यियासूननुगच्छन्ति सन्तुष्टाः स्वशरीरिणः॥ ९ ॥
समागमस्तु यत्रैषां तत्र हत्यादयोमलाः।
नूनं सर्व्वे क्षयं यान्ति किमुतैकं नदीरजः॥ १० ॥
ऋषीणां सिच्यमानानामन्तरालं समाश्रितः।
संपिबेद्यः शरीरेण पर्षन्मुक्तजलच्छटाः॥ ११ ॥
विद्यादीन् ब्राह्मणः कामान् वरादीन् कन्यका ध्रुवम्।
आमुष्मिकाण्यपि सुखान्याप्नुयात् स न संशयः॥१२॥

अशुचत्रशुचिना दत्तमाममन्त्रजलादिना ।
अनिर्गतदशाहास्तु प्रेता रक्षांसि भुञ्जते ॥ १३ ॥
स्वर्धुन्यम्भःसमानि स्युः सर्वाण्यम्भांसि भूतले ।
कूपस्थान्यपि सोमार्कग्रहणे नात्र संशयः ॥ १४ ॥ १०खण्डः ॥

इति कर्म्मप्रदीपपरिशिष्टे कात्यायनविरचिते प्रथमः प्रपाठकः॥

अत ऊर्द्ध्वं प्रवक्ष्यामि सन्ध्योपासनकं विधिम् ।
अनर्हः कर्म्मणां विप्रः सन्ध्याहीनो यतः स्मृतः ॥ १ ॥
सव्ये पाणौ कुशान् कृत्वा कुर्य्यादाचमनक्रियाम् ।
ह्रस्वाः प्रचरणीयाः स्युः कुशा दीर्घास्तु वर्हिषः॥ २ ॥
दर्भाः पवित्रमित्युक्तमतः सन्ध्यादिकर्म्मणि ।
सव्यः सोपग्रहः कार्य्यो दक्षिणः सपवित्रकः ॥ ३ ॥
रक्षयेद्वारिणात्मानं परिक्षिप्य समन्ततः ।
शिरसो मार्ज्जनं कुर्य्यात् कुशैः सोदकविन्दुभिः ॥४॥
प्रणवो भूर्भुवःस्वश्च सावित्री च तृतीयका ।
अब्दैवत्यं त्र्यृचश्चैव चतुर्थमिति मार्ज्जनम् ॥५ ॥
भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः ।
महर्ज्जनस्तपः सत्यं गायत्री च शिरस्तथा ॥ ६ ॥
आपज्योतीरसोमृतं ब्रह्मभूर्भुवः स्वरितिशिरः ।
प्रतीप्रतीकं प्रणवमुच्चारयेदन्ते च शिरसः ॥ ७ ॥
एता एतां सहानेन तथैभिर्दशभिः सह ।
त्रिर्ज्जपेदायतप्राणः प्राणायामः स उच्यते ॥ ८ ॥
करेणोद्धृत्य सलिलं घ्राणमासज्य तत्र च ।
जपेदनायतासुर्व्वा त्रिः सकृद्वाघमर्षणम् ॥ ९ ॥
उत्थायार्कं प्रतिप्रोहेत्त्रिकेणाञ्जलिमाम्भसः ।

उच्चित्रमृग्द्वयेनाथ चोपतिष्ठेदनन्तरम् ॥ १० ॥
सन्ध्याद्वयेऽप्युपस्थानमेतदाहुर्मनीषिणः ।
मध्ये त्वङ्क उपर्य्यस्य विभ्राड़ादीच्छया जपेत् ॥११॥
तद्संसक्तपार्ष्णिर्वा एकपादर्द्ध्वपादपि ।
कुर्य्यात् कृताञ्जलिर्व्वापि ऊर्द्ध्वबाहुरथापि वा ॥१२॥
यत्र स्यात् कृच्छ्रभूयस्त्वं श्रेयसोऽपि मनीषिणः ।
भूयस्त्वं ब्रुवते तत्र कृच्छ्राच्छ्रेयो ह्यवाप्यते ॥ १३ ॥
तिष्ठेदुदयनात् पूर्व्वां मध्यमामपि शक्तितः ।
आसीतोडुद्गमाच्चान्त्यां सन्ध्यां पूर्व्वत्रिकं जपन् ॥१४॥
एतत् सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यत्र तिष्ठति ।
यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते ॥ १५ ॥
सन्ध्यालोपाच्च चकितः स्नानशीलश्च यः सदा ।
तं दोषानोपसर्पन्ति गरुत्मन्तमिवोरगाः ॥ १६ ॥
वेदमादित आरभ्य शक्तितोऽहरहर्ज्जपेत् ।
उपतिष्ठेत्ततो रुद्रसर्व्वाद्वा वैदिकाज्जपात ॥ १७ ॥११ खण्डः ॥

अथाद्भिस्तर्पयेद्देवान् सतिलाभिः पितॄनपि ।
नमोऽन्ते तर्पयामीति आदावोमिति च ब्रुवन् ॥ १ ॥

ब्रह्माणं विष्णुं रुद्रं प्रजापतिं वेदान् देवांश्छन्दां-स्यृषीन् पुराणानाचार्य्यान् गन्धर्व्वानितराचार्यान् संवत्सरं सावयवं देवीरप्सरसो देवानुगान्नागान् सागरान् पर्व्वतान् सरितो दिव्यान् मनुष्यानितरान् मनुष्यान् यक्षान् रक्षांसि सुपर्णान् पिशाचान् पृथिवीमोषधीः पशून् वनस्पतीन् भूत-ग्रामं चतुर्व्विधमित्युपवीत्यथ प्राचीनावीती यमं यमपुरुषान् कव्यवाडनलं सोमं यममर्य्यमणमग्निष्वात्तान् सोमपीथान्

वर्हिषदोऽथ श्वान् पितॄन् सकृत् सकृन्मातामाहांश्चेति प्रतिपुरुषमभ्यस्येज्ज्येष्ठभ्रातृश्वशुरपितृव्यमातुलांश्च पितृवंश-मातृवंशौ ये चान्ये मत्त उदकमर्हन्ति तांस्तर्पयामीत्यय-मवसानाञ्जलिरथ श्लोकाः ॥ २ ॥

छायां यथेच्छेच्छरदातपार्त्तः परः पिपासुः क्षुधितोऽलमन्नम्।
बालो जनित्रीं जननी च बालं योषित् पुमांसं पुरुषश्च योषाम्॥३॥

तथा सर्व्वाणि भूतानि स्थावराणि चराणि च।
विप्रादुदकमिच्छन्ति सर्व्वाभ्युदयकृद्धि सः ॥ ४ ॥

तस्मात् सदैव कर्त्तव्यमकुर्वन्महतैनसा।
युज्यते ब्राह्मणः कुर्व्वन्विश्वमेतद्विभर्त्ति हि ॥५॥

अल्पत्वाद्धोमकालस्य बहुत्वात् स्नानकर्म्मणः।
प्रातर्न तनुयात् स्नानं होमलोपो हि गर्हितः ॥६॥ १२खण्डः॥

पञ्चानामथ सत्राणां महतामुच्यते विधिः।
यैरिष्ट्वा सततं विप्रः प्राप्नुयात् सद्म शाश्वतम् ॥ १ ॥

देवभूतपितृब्रह्ममनुष्याणामनुक्रमात्।
महासत्राणि जानीयात्त एवेह महामखाः ॥ २ ॥

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो वलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥३॥

श्राद्धं वा पितृयज्ञः स्यात् पित्र्यो वलिरथापि वा।
यश्च श्रुतिजयः प्रोक्तो ब्रह्मयज्ञः सचोच्यते ॥ ४ ॥

स चार्व्वाक् तर्पणात् कार्य्यः पश्चाद्वा प्रातराहुतेः।
वैश्वदेवावसाने वा नान्यत्रेति निमित्तकात् ॥ ५ ॥

अप्येकमाशयेद्विप्रं पितृयज्ञार्थसिद्धये।
अदैवं नास्ति चेदन्यो भोक्ता भोज्यमथापि वा ॥६॥

अप्युद्धृत्य यथाशक्त्या किञ्चिदन्नं यथाविधि ।
पितृभ्योऽथ मनुष्येभ्यो दद्यादहरहर्द्विजे ॥७ ॥
पितृभ्य इदमित्युक्त्वा स्वधाकारमुदीरयेत् ।
हन्तकारं मनुष्येभ्यस्तदर्द्धे निनयेदपः ॥ ८ ॥
मुनिभिर्द्विरसनमुक्तं विप्राणां मर्त्यवासिनां नित्यम् ।
अहनि च तथा तमस्विन्यां सार्द्धप्रथमयामान्तः ॥ ९ ॥
सायं प्रातर्व्वैश्वदेवः कर्त्तव्यो बलिकर्म्म च ।
अनश्नतापि सततमन्यथा किल्बिषी भवेत् ॥ १० ॥
अमुष्मै नम इत्येवं बलिदानं विधीयते ।
बलिदानप्रदानार्थं नमस्कारः कृतो यतः ॥ ११ ॥
स्वाहाकारवषट्कारनमस्कारा दिवौकसाम् ।
स्वधाकारः पितृणाञ्च हन्तकारो नृणां कृतः ॥ १२ ॥
स्वधाकारेण निनयेत् पित्र्यं बलिमतः सदा ।
तदर्थ्येके नमस्कारं कुर्व्वते नेति गौतमः ॥ १३ ॥
नावराद्ध्यार्बलयो भवन्ति महामार्ज्जारश्रवणप्रमाणात् ।
एकत्र चेदविकृष्टा भवन्तीतरेतरसंसक्ताश्च ॥ १४ ॥१२ खण्डः ॥

अथ तद्विन्यासोवृद्धिपिण्डानिवोत्तरांश्चतुरोबलीन्निदध्यात् पृथिव्यै वायवे विश्वेभ्यो देवेभ्यः प्रजापतय इति सव्यत एतेषामेकैकमद्भ्य ओषधिवनस्पतिभ्य आकाशाय कामायेत्येतेषामपि मन्यव इन्द्राय वासुकये ब्रह्मण इत्येतेषामपि रक्षोजनेभ्य इति सर्व्वेषां दक्षिणतः पितृभ्य इति चतुर्द्दश नित्या आग्नस्य प्रभृतयः काम्याः सर्व्वेषामुभयतोऽद्भिः परिषेकः पिण्डवच्च पश्चिमा प्रतिपत्तिः ॥ १ ॥

न स्यातां काम्यसामान्ये जुह्वोति बलिकर्म्मणी ।

पूर्व्वं नित्यविशेषोक्तं जुहोति वलिकर्म्मणोः ॥ २ ॥
कामन्ते भवेयातां न तु मध्ये कदाचन ।
नैकस्मिन् कर्म्मणि तते कर्मान्यत्तायते यतः ॥ ३ ॥
अग्न्यादिर्गौतमाद्युक्तो होमः शाकल एव च ।
अनाहिताग्नेरप्येष युज्यते वलिभिः सह ॥ ४ ॥
स्पृष्ट्वापो वीक्षमाणोऽग्निं कृताञ्जलिपुटस्ततः ।
वामदेव्यजपात् पूर्व्वं प्रार्थयेद्द्रविनोदयम् ॥ ५ ॥
आरोग्यमायुरैश्वर्य्यं धीर्धृतिः शं वलं यशः ।
ओजो वर्च्चः पशून् वीर्य्यं ब्रह्म ब्रह्मण्यमेव च ॥ ६ ॥
सौभाग्यं कर्म्मसिद्धिञ्च कुलज्यैष्ठ्यं सुकर्त्तृताम् ।
सर्व्वमेतत् सर्वसाक्षिन् द्रविणोदरिरीहिणः ॥७॥
न ब्रह्मयज्ञादधिकोऽस्ति यज्ञो न तत्प्रदानात् परमस्ति दानम् ।
सर्व्वे तदन्ताः क्रतवः सदानानान्तो दृष्टः कैश्चिदस्य द्विकस्य ॥८॥
ऋचः पठन् मधुपयःकुल्याभिस्तर्पयेत् सुरान् ।
घृतामृतौघकुल्याभिर्यजूंष्यपि पठन् सदा ॥ ९ ॥
सामान्यपि पठन् सोमघृतकुल्याभिरन्वहम् ।
मेदःकुल्याभिरपिच आथर्व्वाङ्गिरसः पठन् ॥ १० ॥
मांसक्षीरौदनमधुकुल्याभिस्तर्पयेत् पठन् ।
वाकोवाक्यं पुराणानि इतिहासानि चान्वहम् ॥११॥
ऋगादीनामन्यतममेतेषां शक्तितोऽन्वहम् ।
पठन् मध्वाज्यकुल्याभिः पितॄनपि च तर्पयेत् ॥ १२ ॥
ते तृप्तास्तर्पयन्त्येनं जीवन्तं प्रेतमेव च ।
कामचारी च भवति सर्वेषु सुरसद्मसु ॥ १३ ॥
जुर्व्वप्येनो न तं स्पृशेत् पंक्तिञ्चैव पुनाति सः ।

यं यं क्रतुञ्च पठति फलभाक्तस्य तस्य च ।
वसुपूर्णां वसुमती त्रिर्दानफलमाप्नुयात् ।
ब्रह्मयज्ञादपि ब्रह्म दानमेवातिरिच्यते ॥१५॥१४खण्ड: ॥

ब्रह्मणो दक्षिणा देया यत्र या परिकीर्त्तिता ।
कर्म्मान्तेऽनुच्यमानापि पूर्णपात्रादिका भवेत् ॥ १ ॥
यावता बहुभोक्तुस्तु तृप्तिः पूर्णेन विद्यते ।
नावरार्द्धमतः कुर्य्यात् पूर्णपात्रमिति स्थितिः ॥ २ ॥
विदध्याद्धौत्रमन्यश्चेद्दक्षिणार्द्धहरो भवेत् ।
स्वयञ्चेदुभयं कुर्य्यादन्यस्मै प्रतिपादयेत् ॥ ३ ॥
कुलर्त्विजमधीयानं सन्निकृष्टं तथा गुरुम् ।
नातिक्रामेत् सदा दित्सन् य इच्छेदात्मनो हितम् ॥४॥
अहमस्मै ददामीति एवमाभाष्य दीयते ।
नैतावपृष्ट्वा ददतः पात्रेऽपि फलमस्ति हि ॥ ५ ॥
दूरस्थाभ्यामपि द्वाभ्यां प्रदाय मनसा वरम् ।
इतरेभ्यस्ततो देयादेष दानविधिः परः ॥ ६ ॥
सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत् ।
यद्ददाति तमुल्लङ्घ्य ततस्तेयेन युज्यते ॥ ७ ॥
यस्य त्वेक गृहे मूर्खो दूरस्थश्च गुणान्वितः ।
गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः ॥ ८ ॥
ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्ज्जिते ।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥ ९ ॥
आज्यस्थाली च कर्त्तव्या तैजसद्रव्यसम्भवा ।
महीमयी वा कर्त्तव्या सर्वास्वाज्याहुतीषु च ॥ १० ॥
आजस्थाल्याः प्रमाणं तु यथाकामन्तु कारयेत् ।

सुदृढामव्रणां भद्रामाज्यस्थालीं प्रचक्षते ॥ ११ ॥
तिर्य्यगूर्द्ध्वं समिन्मात्रा दृढा नातिबृहन्मुखी ।
मृण्मय्यौडुम्बरी वापि चरुस्थाली प्रशस्यते ॥ १२ ॥
स्वशाखोक्तः प्रसुस्विन्नो ह्यदग्धोऽकठिनः शुभः ।
न चातिशिथिलः पाच्यो न चरुश्चारसस्तथा ॥ १३ ॥
इध्मजातीयमिध्मार्द्धप्रमाणं मेक्षणं भवेत् ।
वृत्तं चाङ्गुष्ठपृथ्वग्रमवदानक्रियाक्षमम् ॥ १४ ॥
एषैव दर्व्वी यस्तत्र विशेषस्तमहं ब्रुवे ।
दर्व्वी द्व्यङ्गुलपृथ्वग्रा तुरीयो नस्तमेक्षणम् ॥ १५ ॥
मुषलोलूखले वार्क्षे स्वायते सुदृढे तथा ।
इच्छाप्रमाणे भवतः शूर्पं वैणवमेव च ॥ १६ ॥
दक्षिणं वामतो वाह्यमात्माभिमुखमेव च ।
करं करस्य कुर्वीत करणे न्यञ्चकर्म्मणः ॥ १७ ॥
कृत्वाग्न्यभिमुखौ पाणी स्वस्थानस्थौ सुसंयतौ ।
प्रदक्षिणं तथासीनः कुर्य्यात् परिसमूहनम् ॥ १८ ॥
बाहुमात्राः परिधय ऋजवः सत्वचोऽव्रणाः ।
त्रयो भवन्ति शीर्णाग्रा एकेषान्तु चतुर्दिशम् ॥ १९ ॥
प्रागग्रावभितः पश्चादुदग्रमथवापरम् ।
न्यसेत् परिधिमन्यञ्चेदुदगग्रः स पूर्वतः ॥ २० ॥
यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् ।
यवानामिव गोधूमा व्रीहीणामिव शालयः ॥ २१ ॥ १५ खण्डः ॥
पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनि शस्यते ।
वासरस्य तृतीयांशे नातिसन्ध्यासमीपतः ॥ १ ॥
यदा चतुर्द्दशीयामं तुरीयमनुपूरयेत् ।

अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते ॥ २ ॥
यदुक्तं यदहस्त्वेव दर्शनं नैति चन्द्रमाः ।
अन्ययनपेक्षया ज्ञेयं क्षीणे राजनि चेत्यपि ॥ ३ ॥
यच्चोक्तं दृश्यमानेऽपि तच्चतुर्द्दश्यपेक्षया ।
अमावास्यां प्रतीक्षेत तदन्ते वापि निर्वपेत् ॥ ४ ॥
अष्टमेंऽशे चतुर्द्दश्याः क्षीणो भवति चन्द्रमाः ।
अमावास्याष्टमांशे च पुनः किल भवेदणुः ॥ ५ ॥
आग्रहायण्यमावास्या तथा ज्यैष्ठस्य या भवेत् ।
विशेषमाभ्यां ब्रुवते चन्द्रचारविदो जनाः ॥ ६ ॥
अत्रेन्दुराद्ये प्रहरेऽवतिष्ठते चतुर्थभागो न कलावशिष्टः ।
तदन्त एव क्षयमेति कृत्स्नमेवं ज्योतिश्चक्रविदो वदन्ति ॥७॥
यस्मिन्नब्दे द्वादशैकश्च यव्य-
स्तस्मिंस्तृतीयया परिदृश्योनोपजायते ।
एवं चारं चन्द्रमसो विदित्वा
क्षीणेतस्मिन्नपराह्णे च दद्यात् ॥ ८ ॥
सम्मिश्रा या चतुर्द्दश्या अमावास्या भवेत् क्वचित् ।
खर्वितां तां विदुः केचिद्गताध्वामिति चापरे ॥९॥
वर्द्धमानाममावास्यां लभेच्चेदपरेऽहनि ।
यामांस्त्रीनधिकान् वापि पितृयज्ञस्ततो भवेत् ॥१०॥
पक्षादावेव कुर्व्वीत सदा पक्षादिकं चरुम् ।
पूर्व्वाह्ण एव कुर्व्वन्ति विद्धेऽप्यन्ये मनीषिणः ॥ ११ ॥
स्वपितुः पितृकृत्येषु ह्यधिकारो न विद्यते ।
न जीवन्तमतिक्रम्य किञ्चिद्दद्यादिति श्रुतिः ॥ १२ ॥
पितामहे भ्रियति च पितुः प्रेतस्य निर्वपेत् ।

पितुस्तस्य च वृत्तस्य जीवेच्चेत् प्रपितामहः ॥ १३ ॥
पितुः पितुः पितुश्चैव तस्यापि पितुरेव च ।
कुर्य्यात् पिण्डत्रयं यस्य संस्थितः प्रपितामहः ॥ १४ ॥
जीवन्तमति दद्याद्वा प्रेतायान्नोदके द्विजः ।
पितुः पितृभ्यो वा दद्यात् स्वपितेत्यपरा श्रुतिः ॥१५॥
पितामहः पितुः पश्चात् पञ्चत्वं यदि गच्छति ।
पौत्रेणैकादशाहादि कर्त्तव्यं श्राद्धषोडशम् ॥ १६ ॥
नैतत् पौत्रेण कर्त्तव्यं पुत्रवांश्चेत् पितामहः ।
पितुः सपिण्डनं कृत्वा कुर्य्यान्मासानुमासिकम् ॥१७॥
असंस्कृतौ न संस्कार्य्यौ पूर्व्वौ पौत्रप्रपौत्रकैः ।
पितरं तत्र संस्कुर्य्यादिति कात्यायनोऽब्रवीत् ॥१८॥
पापिष्ठमति शुद्धेन शुद्धं पापीकृतापि वा ।
पितामहेन पितरं संस्कुर्य्यादिति निश्चयः ॥ १९ ॥
ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते ।
व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ ॥२० ॥
मातुः सपिण्डीकरणं पितामह्या सहोदितम् ।
यथोक्तेनैव कल्पेन पुत्रिकाया न चेत् सुतः ॥ २१ ॥
न योषिद्भ्यः पृथग् दद्यादवसानदिनादृते ।
स्वभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता ॥ २२ ॥
मातुः प्रथमतः पिण्डं निर्व्वपेत् पुत्रिकासुतः ।
द्वितीयन्तु पितुस्तस्यास्तृतीयन्तु पितुः पितुः ॥२३॥ १६ खण्डः ॥
पुरतो यास्मनः कुर्य्युः सा पूर्व्वा परिकीर्त्यते ।
मध्यमा दक्षिणेनास्यास्तद्दक्षिणत उत्तमा ॥ १ ॥
वाय्वग्निदिङ्मुखान्तास्ताः कार्य्याः सार्द्धाङ्गुलान्तराः ।

तीक्ष्णाग्रा यवमध्याश्च मध्यं नाव इवोत्किरेत् ॥२॥
अङ्कुश्च खादिरः कार्य्यो रजतेन विभूषितः ।
अङ्कुश्चोपवेशश्च द्वादशाङ्गुल इष्यते ॥ ३ ॥
अन्याश्चार्ये: कुशैः कार्य्यं कर्षूणां स्तरणं घनैः ।
दक्षिणाग्रं तदर्द्धं तु पितृयज्ञे परिस्तरेत् ॥ ४ ॥
स्वगरं सुरभि ज्ञेयं चन्दनादि विलेपनम् ।
सौवीराञ्जनमित्युक्तं पिप्पलीनां यदञ्जनम् ॥ ५ ॥
स्वस्तरे सर्व्वमासाद्य यथावदुपयुज्यते ।
देवपूर्वं ततः श्राद्धमत्वरः शुचिरारभेत् ॥ ६ ॥
आसनाद्यर्घपर्य्यन्तं वशिष्ठेन यथेरितम् ।
कृत्वा कर्म्माथ पात्रेषु उक्तं दद्यात्तिलोदकम् ॥ ७ ॥
तूष्णीं पृथगपो दत्त्वा मन्त्रेण तु तिलोदकम् ।
गन्धोदकञ्च दातव्यं सन्निकर्षक्रमेण तु ॥ ८ ॥
आसुरेण तु पात्रेण यस्तु दद्यात्तिलोदकम् ।
पितरस्तस्य नाश्नन्ति दश वर्षाणि पञ्च च ॥ ९ ॥
कुलालचक्रनिष्पन्नमासुरं मृण्मयं स्मृतम् ।
तदेव हस्तघटितं स्थाल्यादि दैविकं भवेत् ॥ १० ॥
गन्धान् ब्राह्मणसात् कृत्वा पुष्पाण्यृतुभवानि च ।
धूपञ्चैवानुपूर्व्वेण ह्यग्नौ कुर्य्यादनन्तरम् ॥ ११ ॥
अग्नौ करणहोमश्च कर्त्तव्य उपवीतिना ।
प्राङ्मुखेनैव देवेभ्यो जुहोतीति श्रुतिश्रुतेः ॥ १२ ॥
अपसव्येन वा कार्य्यो दक्षिणाभिमुखेन च ।
निरुप्य हविरन्यस्मा अन्यस्मै न हि हूयते ॥ १३ ॥
स्वाहा कुर्य्यान्नचात्रान्ते नचैव जुहुयाद्धविः ।

स्वाहाकारेण हुत्वाग्नौ पश्चान्मन्त्रं समापयेत ॥ १४॥
पित्रे य: पंक्तिमूर्द्धन्यस्तस्य पाणावनग्निमान् ।
हुत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निःक्षिपेत् ॥१५॥
नोद्धुर्य्याद्धोममन्त्राणां पृथगादिषु कुत्रचित् ।
अन्येषाञ्चाविकृष्टानां कालेनाचमनादिना ॥१६॥
सव्येन पाणिनेत्येवं यदत्र समुदीरितम् ।
परिग्रहणमात्रन्तत् सवर्ण्यादिशति व्रतम् ॥ १७ ॥
पिञ्जल्याद्यभिसंगृह्य दक्षिणेनेतरात् करात् ।
अन्वारभ्य च सव्येन कुर्य्यादुल्लेखनादिकम् ॥१८॥
यावदर्थमुपादाय हविषोऽभंकमभंकम् ।
चरुणा सह सन्नीय पिण्डान् दातुमुपक्रमेत् ॥१९॥
पितुरुत्तरकर्ष्वग्रे मध्यमे मध्यमस्य तु ।
दक्षिणे तत्पितुश्चैव पिण्डान् पर्वणि निर्वपेत् ॥२०॥
वाममावर्त्तनं केचिदुदगन्तं प्रचक्षते ।
सव्वं गौतमशाण्डिल्यौ शाण्डिल्यायन एव च ॥२१॥
आहृत्य प्राणमायस्य पितॄन् ध्यायन् यथार्थतः ।
जपंस्तेनैव चाहृत्य ततः प्राणं प्रमोचयेत् ॥ २२॥
शाकञ्च फाल्गुनाष्टम्यां स्वयं पत्न्यपि वा पचेत् ।
यस्तु शाकादिको होमः कार्य्योऽपूपाष्टकावृतः ॥२३ ॥
अन्वष्टक्यं मध्यमायामिति गोभिलगौतमौ ।
वार्कखण्डिश्च सर्व्वासु कौत्सो मेनेऽष्टकासु च ॥२४॥
स्थालीपाकं पशुस्थाने कुर्य्याद्‌यद्यनुकल्पितम् ।
श्रपयेत्तं सवत्सायास्तरुण्यागोः पयस्यनु ॥२५॥ १७ खण्डः ॥
सायमादि प्रातरन्तमेकं कर्म्म प्रचक्षते ।

दर्शान्तं पौर्णमासाद्यमेकमेव मनीषिणः ॥ १ ॥
ऊर्द्धं पूर्णाहुतेर्दर्शः पौर्णमासोऽपि वाग्रिमः ।
य आयाति स होतव्यः स एवादिरिति श्रुतिः ॥२॥
ऊर्द्धं पूर्णाहुतेः कुर्य्यात् सायं होमादनन्तरम् ।
वैश्वदेवन्तु पाकान्ते वलिकर्म्मसमन्वितम् ॥३॥
ब्राह्मणान् भोजयेत् पश्चादभिरूपान् स्वशक्तितः ।
यजमानस्ततोऽश्नीयादिति कात्यायनोऽब्रवीत् ॥४॥
वैवाहिकेऽग्नौ कुर्व्वीत सायंप्रातस्त्वतन्द्रितः ।
चतुर्थीकर्म्म कृत्वैतदेतच्छाटॺायनेर्मतम् ॥५॥
ऊर्द्धं पूर्णाहुतेः प्रातर्हुत्वा तां सायमाहुतिम् ।
प्रातर्होमस्तदैव स्यादेष एवोत्तरो विधिः ॥ ६ ॥
पौर्णमासात्यये हव्यं होता वा यदहर्भवेत् ।
तदहस्त्वेव जुहुयादेवममावास्यात्ययेऽपि च ॥ ७ ॥
अहूयमानेऽनश्नंश्च नयेत् कालं समाहितः ।
सम्पन्ने तु यथा तत्र हूयते तदिहोच्यते ॥ ८ ॥
आहुताः परिसंख्याय पात्रे कृत्वाहुतीः सकृत् ।
मन्त्रेण विधिवद्धुत्वाधिकमेवापरा अपि ॥ ९ ॥
यत्र व्याहृतिभिर्होमः प्रायश्चित्तात्मको भवेत् ।
चतस्रस्तत्र विज्ञेयाः स्त्रीपाणिग्रहणे यथा ॥ १० ॥
अपिवाज्ञातमित्येषा प्राजापत्यापिवाहुतिः ।
होतव्या त्रिविकल्पोऽयं प्रायश्चित्तविधिः स्मृतः ॥ ११ ॥
यद्यग्निरग्निनान्येन सम्भवेदाहितः क्वचित् ।
अग्नये विविचय इति जुहुयाद्वा घृताहुतिम् ॥१२ ॥
अग्नयेऽप्सुमते चैव जुहुयाद्वैयुतेन चेत् ।

अग्नये शुचये चैव जुहुयाच्चेह त्वग्निना ॥ १३ ॥
गृहदाहाग्निनाग्निस्तु यष्टव्यः क्षामवान् द्विजैः ।
दावाग्निना च संसर्गे हृदयं यदि तप्यते ॥ १४ ॥
द्विभूतौ यदि संसृज्येत् संसृष्टमुपशामयेत् ।
असंसृष्टं जागरयेद्विरिशर्म्मैवमुक्तवान् ॥ १५ ॥
न स्वेऽग्नावन्यहोमः स्यान्मुक्त्वैकां समिदाहुतिम् ।
स्वगर्भसत्क्रियार्थांश्च यावन्नासौ प्रजायते ॥ १६ ॥
अग्निस्तु नामधेयादौ होमे सर्वत्र लौकिकः ।
न हि पिता समानीतः पुत्रस्य भवति क्वचित् ॥ १७ ॥
यस्याग्नावन्यहोमः स्यात् स वैश्वानरदैवतम् ।
चरुं निरूप्य जुहुयात् प्रायश्चित्तं तु तस्य तत् ॥१८॥
परेणाग्नौ हुते स्वार्थं परस्याग्नौ हुते स्वयम् ।
पितृयज्ञात्यये चैव वैश्वदेवद्वयस्य च ॥ १९ ॥
अनिष्ट्वा नवयज्ञेन नवान्नप्राशने तथा ।
भोजने पतितान्नस्य चरुर्वैश्वानरो भवेत् ॥ २० ॥
स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्म्मसु ।
पिण्डानोद्वहनात्तेषां तस्याभावे तु तत्क्रमात् ॥२१॥
भूतप्रवाचने पत्नी यद्यसन्निहिता भवेत् ।
रजोरोगादिना तत्र कथं कुर्वन्ति याज्ञिकाः ॥२२॥
महानसेऽन्नं या कुर्य्यात् सवर्णा तां प्रवाचयेत् ।
प्रणवाद्यपि वा कुर्य्यात् कात्यायनवचो यथा ॥ २३ ॥
यज्ञवास्तुनि मुष्ट्याञ्च स्तम्बे दर्भवटौ तथा ।
दर्भसंख्या न विहिता विष्टरास्तरणेषु च ॥ २४ ॥ १८ खण्डः ॥
निःक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा ।

प्रवसेत् कार्य्यवान् विप्रो वृथैव न चिरं क्वचित् ॥१॥
मनसा नैत्यकं कर्म्म प्रवसन्नप्यतन्द्रितः ।
उपविश्य शुचिः सर्वं यथाकालमनुद्रवेत् ॥ २ ॥
पत्न्या चाप्यवियोगिन्या शुश्रूष्योऽग्निर्विनीतया ।
सौभाग्यवित्तावैधव्यकामया भर्तृभक्तया ॥ ३ ॥
या वा स्याद्वीरसूरासामाज्ञासम्पादिनी प्रिया ।
दक्षा प्रियंवदा शुद्धा तामत्र विनियोजयेत् ॥ ४ ॥
दिनत्रयेण वा कर्म्म यथा ज्येष्ठं स्वशक्तितः ।
विभज्य सह वा कुर्य्युर्यथाज्ञानञ्च शास्त्रवत् ॥५॥
स्त्रीणां सौभाग्यतो ज्यैष्ठं विद्ययैव द्विजन्मनाम् ।
नहि स्वल्पया न तपसा भर्त्ता तुष्यति योषिताम् ॥६॥
भर्त्तुरादेशवर्त्तिन्या यथोमा बहुभिर्व्रतैः ।
अग्निश्च तोषितोऽमुत्र सा स्त्री सौभाग्यमाप्नुयात् ॥७॥
विनयावनतापि स्त्री भर्त्तुर्या दुर्भगा भवेत् ।
अमुत्रोमाग्निभर्तॄणामवज्ञातिः कृता तया ॥ ८ ॥
श्रोत्रियं सुभगां गाञ्च अग्निमग्निचितिं तथा ।
प्रातरुत्थाय यः पश्येदापद्भ्यः स प्रमुच्यते ॥ ९ ॥
पापिष्ठं दुर्भगामन्त्यं नग्नमुत्कृत्तनासिकम् ।
प्रातरुत्थाय यः पश्येत् स कलेरुपयुज्यते ॥ १० ॥
पतिमुल्लङ्घ्य मोहात् स्त्री किं किं न नरकं व्रजेत् ।
कृच्छ्रान्मनुष्यतां प्राप्य किं किं दुःखं न विन्दति ॥११॥
पतिशुश्रूषयैव स्त्री कान् लोकान् समश्नुते ।
दिवः पुनरिहायाता सुखानामम्बुधिर्भवेत् ॥ १२ ॥
सदारोऽन्यान् पुनर्दारान् कथञ्चित् कारणान्तरात् ।

य इच्छेदग्निमान् कर्त्तुं न होमोऽस्य विधीयते ॥१३॥
स्वेऽग्नावेव भवेद्धोमो लौकिके न कदाचन ।
न ह्याहिताग्नेः स्वं कर्म्म लौकिकेऽग्नौ विधीयते ॥१४॥
षड़ाहुतिकमन्येन जुहुयादध्रुवदर्शनात् ।
न ह्यात्मनोऽर्थं स्वात्तावद्यावन्न परिणीयते ॥ १५ ॥
पुरस्तात् त्रिविकल्पं यत् प्रायश्चित्तमुदाहृतम् ।
तत् षड़ाहुतिकं शिष्टैर्यज्ञविद्भिः प्रकीर्त्तितम् ॥ १६ ॥१८ खण्डः॥
इति कात्यायनविरचिते कर्म्मप्रदीपे द्वितीयः प्रपाठः ॥
असमक्षन्तु दम्पत्योर्होतव्यं नर्त्विगादिना ।
द्वयोरप्यसमक्षं हि भवेद्धुतमनर्थकम् ॥ १ ॥
विहायाग्निं सभार्य्यश्चेत् सीमामुल्लङ्घ्य गच्छति ।
होमकालात्यये तस्य पुनराधानमिष्यते ॥ २ ॥
अरण्योः क्षयनाशाग्निदाहेष्वग्निं समाहितः ।
पालयेदुपशान्तेऽस्मिन् पुनराधानमिष्यते ॥ ३ ॥
ज्येष्ठा चेद्बहुभार्य्यस्य अतिचारेण गच्छति ।
पुनराधानमत्रैक इच्छन्ति न तु गोतमः ॥ ४ ॥
दाहयित्वाग्निभिर्भार्य्यां सदृशीं पूर्वसंस्थिताम् ।
पात्रैश्चाथाग्निमादध्यात् कृतदारोऽविलम्बितः ॥ ५ ॥
एवंवृत्तां सवर्णां स्त्रीं द्विजातिः पूर्वमारिणीम् ।
दाहयित्वाग्निहोत्रेण यज्ञपात्रैश्च धर्म्मवित् ॥ ६ ॥
द्वितीयाञ्चैव यः पत्नीं दहेद्वैतानिकाग्निभिः ।
जीवन्त्यां प्रथमायान्तु ब्रह्मघ्नेन समं हि तत् ॥ ७ ॥
मृतायान्तु द्वितीयायां योऽग्निहोत्रं समुत्सृजेत् ।
ब्रह्मोज्झं तं विजानीयाद्यश्च कामात् समुत्सृजेत् ॥ ८ ॥

मृतायामपि भार्य्यायां वैदिकाग्निं न हि त्यजेत् ।
उपाधिनापि तत् कर्म्म यावज्जीवं समापयेत् ॥ ९ ॥
रामोऽपि कृत्वा सौवर्णां सीतां पत्नीं यशस्विनीम् ।
ईजे यज्ञैर्बहुविधैः सह भ्रातृभिरच्युतः ॥ १० ॥
यो दहेदग्निहोत्रेण स्वेन भार्य्यां कथञ्चन ।
सा स्त्री सम्पद्यते तेन भार्य्या वास्य पुमान् भवेत्॥११॥
भार्य्या मरणमापन्ना देशान्तरगतापि वा ।
अधिकारी भवेत् पुत्रो महापातकिनि द्विजे ॥ १२ ॥
मान्या चेन्म्रियते पूर्वं भार्य्या पतिविमानिता ।
त्रीणि जन्मानि सा पुंस्त्वं पुरुषः स्त्रीत्वमर्हति ॥१३॥
पूर्व्वैव योनिः पूर्व्वावृत् पुनराधानकर्म्मणि ।
विशेषोऽत्राग्न्युपस्थानमाज्याहुत्यष्टकं तथा ॥ १४ ॥
कृत्वा व्याहृतिहोमान्तमुपतिष्ठेत पावकम् ।
अध्यायः केवलाग्नेयः कर्त्ते जामिरमानसः ॥ १५ ॥
अग्निमीळे अग्न आयाह्यग्न आयाहि वीतये ।
तिस्रोऽग्निर्ज्योतिरित्यग्निं दूतमग्ने मृळेति च ॥ १६ ॥
इत्यष्टावाहुतीर्हुत्वा यथाविध्यनुपूर्व्वशः ।
पूर्णाहुत्यादिकं सर्व्वमन्यत् पूर्व्ववदाचरेत् ॥ १७ ॥
अरण्योरल्पमप्यङ्गं यावत्तिष्ठति पूर्व्वयोः ।
न तावत् पुनराधानमन्यारण्योर्विधीयते ॥ १८ ॥
विनष्टं स्रुक् स्रुवं न्युब्जं प्रत्यक्स्थलमुदर्च्चिषि ।
प्रत्यगग्रस्य मुषलं प्रहरेज्जातवेदसि ॥ १९ ॥ २० ॥ खण्डः ॥
स्वयं होमासमर्थस्य समीपमुपसर्पणम् ।
तत्राप्यसक्तस्य सतः शयनाच्चोपवेशनम् ॥ १ ॥

हुतायां सायमाहुत्यां दुर्बलश्चेद्गृही भवेत्।
प्रातर्होमस्तदैव स्याज्जीवेच्चेच्छुः पुनर्नवा ॥२॥
दुर्बलं स्नापयित्वा तु शुद्धचैलाभिसंवृतम्।
दक्षिणाशिरसं भूमौ बर्हिष्मत्यां निवेशयेत् ॥ ३ ॥
घृतेनाभ्यक्तमाप्लाव्य सवस्त्रमुपवीतिनम्।
चन्दनोक्षितसर्वाङ्गं सुमनोभिर्विभूषितम् ॥ ४ ॥
हिरण्यशकलान्यस्य क्षिप्ता च्छिद्रेषु सप्तसु।
मुखेष्वथापिधायैनं निर्हरेयुः सुतादयः ॥ ५ ॥
आमपात्रेऽन्नमादाय प्रेतमग्निपुरःसरम्।
एकोऽनुगच्छेत्तस्यार्द्धमर्द्धं पथ्युत्सृजेद्भुवि ॥ ६ ॥
अर्द्धमादहनं प्राप्त आसीनो दक्षिणामुखः।
सव्यं जान्वाच्य शनकैः सतिलं पिण्डदानवत् ॥७॥
अथ पुत्रादिराप्लुत्य कुर्याद्दारुचयं महत्।
भूप्रदेशे शुचौ देशे पश्चाच्चित्यादिलक्षणे ॥ ८ ॥
तत्रोत्तानं निपात्यैनं दक्षिणाशिरसं मुखे।
आज्यपूर्णां स्रुचं दद्याद्दक्षिणाग्रां नसि स्रुवम् ॥९॥
पादयोरधरां प्राचीमरणीमुरसोत्तराम्।
पार्श्वयोः शूर्पचमसे सव्यदक्षिणयोः क्रमात् ॥१०॥
मुषलेन सह न्युब्जमन्तरूर्वोरुलूखलम्।
चत्वोवोलोकमत्र वमनश्चनयनोऽविभोः ॥ ११ ॥
अपसव्येन कृत्वैतद्वाग्यतः पितृदिङ्मुखः।
अथाग्निं सव्यजान्वक्तो दद्याद्दक्षिणतः शनैः ॥१२॥
अस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः।
असौ स्वर्गाय लोकाय स्वाहेति यजुरीरयन् ॥ १३ ॥

एवं गृहपतिर्दग्धः सर्व्वं तरति दुष्कृतम्।
यश्चैनं दाहयेत् सोऽपि प्रजां प्राप्नोत्यनिन्दिताम् ॥१४॥
यथा स्वायुधधृक् पान्थो ह्यरण्यान्यपि निर्भयः।
अतिक्रम्यात्मनोऽभीष्टं स्थानमिष्टञ्च विन्दति ॥ १५ ॥
एवमेषोऽग्निमान् यज्ञपात्रायुधविभूषितः।
लोकानन्याननतिक्रम्य परं ब्रह्मैव विन्दति ॥१६॥ २१ खण्डः॥
अथानवेक्षमेत्यापः सर्व एव शवस्पृशः।
स्नात्वा सचैलमाचम्य दद्युरस्योदकं स्थले ॥ १ ॥
गोत्रनामानुवादान्ते तर्पयामीत्यनन्तरम्।
दक्षिणाग्रान् कुशान् कृत्वा सतिलन्तु पृथक् पृथक् ॥ २॥
एवं कृतोदकान् सम्यक् सर्वान् शाद्वलसंस्थितान्।
आप्लुत्य पुनराचान्तान् वदेयुस्तेऽनुयायिनः ॥ ३ ॥
मा शोकं कुरुतानित्ये सर्वस्मिन् प्राणधर्म्मिणि।
धर्म्मं कुरुत यत्नेन यो वः सह गमिष्यति ॥ ४ ॥
मानुष्ये कदलीस्तम्भे निःसारे सारमार्गणम्।
यः करोति स संमूढ़ो जलबुद्बुदसन्निभे ॥ ५ ॥
गन्त्री वसुमती नाशमुदधिर्दैवतानि च।
फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति ॥ ६ ॥
पञ्चधा सम्भृतः कायो यदि पञ्चत्वमागतः।
कर्म्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ॥ ७ ॥
सर्वेऽक्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥८॥
श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः।
अतो न रोदितव्यं हि क्रियाः कार्य्याः प्रयत्नतः ॥९॥

एवमुक्त्वा प्रजीयुक्ते गृहात्सपुरःसराः ।
स्नानाग्निस्पर्शनाजप्राशैः शुध्येयुरितरे कृतैः ॥ १० ॥ २२खण्डः ॥

एवमेवाहिताग्नेस्तु पात्रन्यासादिकं भवेत् ।
कृष्णाजिनादिकस्यात्र विशेषः सूत्रचोदितः ॥ १ ॥
विदेशमरणेऽस्थीनि आहृत्याभ्यज्य सर्पिषा ।
दाहयेदूर्णयाच्छाद्य पात्रन्यासादि पूर्ब्बवत् ॥ २ ॥
अस्थ्नामलाभे पर्णानि सकलान्युक्तयावृता ।
भर्ज्जयेदस्थिसंख्यानि ततः प्रभृति सूतकम् ॥ ३ ॥
महापातकसंयुक्तो दैवात् स्यादग्निमान् यदि ।
पुत्रादिः पालयेदग्निं युक्त आदोषसंक्षयात् ॥ ४ ॥
प्रायश्चित्तं न कुर्य्याद्यः कुर्व्वन् वा म्रियते यदि ।
गृह्यं निर्व्वापयेच्छ्रौतमप्स्वस्येत् सपरिच्छदम् ॥५॥
सादयेदुभयं वाप्सु अग्नोऽग्निरभवद्यतः ।
पात्राणि दद्यादिप्राय दहेदप्स्वेव वा क्षिपेत् ॥ ६ ॥
अनयैवावृता नारी दग्धव्या या व्यवस्थिता ।
अग्निप्रदानमन्त्रोऽस्या न प्रयोज्य इति स्थितिः ॥७॥
अग्निनैव दहेद्भार्य्यां स्वतन्त्रा पतिता न चेत् ।
तदुत्तरेण पात्राणि दाहयेत् पृथगन्तिके ॥ ८ ॥
अपरेद्युस्तृतीये वा अस्थ्नां सञ्चयनं भवेत् ।
यस्तत्र विधिरादिष्ट ऋषिभिः सोऽधुनोच्यते ॥ ९ ॥
स्नानान्तं पूर्ब्बवत् कृत्वा गव्येन पयसा ततः ।
सिञ्चेदस्थीनि सर्व्वाणि प्राचीनावीत्यभाषयन् ॥ १० ॥
शमीपलाशशाखाभ्यामुद्धृत्योद्धृत्य भस्मनः ।
आज्येनाभ्यज्य गव्येन सेचयेद्गन्धवारिणा ॥ ११ ॥

कृतपात्रसंपुटं कृत्वा सूत्रेण परिवेष्ट्य च ।
श्वभ्रं खात्वा शुचौ भूमौ निखनेद्दक्षिणामुखः ॥१२॥
पूरयित्वावटं पङ्कपिण्डशैवालसंयुतम् ।
दत्त्वोपरि समं शेषं कुर्य्यात् पूर्वोक्तकर्म्मणा ॥ १३ ॥
एवमेवागृहीताग्नेः प्रेतस्य विधिरिष्यते ।
स्त्रीणामेवाग्निदानं स्यादथातोऽनुक्रममुच्यते ॥१४॥ २३खण्डः

सूतके कर्म्मणां त्यागः सन्ध्यादीनां विधीयते ।
होमः श्रौते तु कर्त्तव्यः शुष्कान्नेनापि वा फलैः ॥ १ ॥
अकृतं हावयेत् स्मार्त्ते तदभावे कृताकृतम् ।
कृतं वा हावयेदन्नमन्वारम्भविधानतः ॥ २ ॥
कृतमोदनशक्त्वादि तण्डुलादि कृताकृतम् ।
व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा बुधैः ॥३॥
सूतके च प्रवासेषु चाशक्तौ श्राद्धभोजने ।
एवमादिनिमित्तेषु हावयेदिति योजयेत् ॥ ४ ॥
न त्यजेत् सूतके कर्म्म ब्रह्मचारी स्वकं क्वचित् ।
न दीक्षणात् परं यज्ञे न कृच्छ्रादि तपश्चरन् ॥५ ॥
पितर्य्यपि मृते नैषां दोषो भवति कर्हिचित् ।
आशौचं कर्म्मणोऽन्ते स्यात्त्र्यहं वा ब्रह्मचारिणः ॥६॥
श्राद्धमग्निमतः कार्य्यं दाहादेकादशेऽहनि ।
प्रत्याब्दिकन्तु कुर्व्वीत प्रमीताहनि सर्व्वदा ॥ ७ ॥
द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा ।
सपिण्डीकरणञ्चैव एतद्वै श्राद्धषोडशम् ॥ ८ ॥
एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः ।
न्यूनाः संवत्सरश्चैव स्यातां षाण्मासिके तदा ॥९॥

यानि पञ्चदशाद्यानि अपुत्रस्येतराणि तु ।
एकस्मिन्नह्नि देयानि सपुत्रस्यैव सर्वदा ॥ १० ॥
न योषायाः पतिर्दद्यादपुत्राया अपि क्वचित् ।
न पुत्रस्य पिता दद्यान्नानुजस्य तथाग्रजः ॥ ११ ॥
एकादशेऽह्नि निर्वर्त्य अर्व्वागदर्शाद्द यथाविधि ।
प्रकुर्व्वीताग्निमान् पुत्रो मातापित्रोः सपिण्डताम् ॥१२॥
सपिण्डीकरणादूर्द्ध्वं न दद्यात् प्रतिमासिकम् ।
एकोद्दिष्टेन विधिना दद्यादित्याह गौतमः ॥ १३ ॥
कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशम् ।
प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युः षडिति स्थितिः ॥१४॥
अर्घेऽक्षय्योदके चैव पिण्डदानेऽवनेजने ।
तन्त्रस्य तु निवृत्तिः स्यात् स्वधावाचन एव च ॥१५॥
ब्रह्मदण्डादियुक्तानां येषां नास्त्यग्निसत्क्रिया ।
श्राद्धादिसत्क्रियाभाजो न भवन्तीह ते क्वचित् ॥१६॥ २४खण्डः॥

मन्त्राम्नायेऽग्न इत्येतत् पञ्चकं लाघवार्थिभिः ।
पठ्यते तत्प्रयोगे स्यान्मन्त्राणामेव विंशतिः ॥ १ ॥
अग्नेः स्थाने वायुचन्द्रसूर्य्यांश्चवहुवदूह्य च ।
समस्य पञ्चमीस्त्वे चतुस्त्वतुरितिश्रुतेः ॥ २ ॥
प्रथमे पञ्चके पापी लक्ष्मीरिति पदं भवेत् ।
अपि पञ्चसु मन्त्रेषु इति यज्ञविदो विदुः ॥ ३ ॥
द्वितीये तु पतिघ्नी स्यादपुत्रेति तृतीयके ।
चतुर्थे त्वपसव्येति इदमाहुतिविंशकम् ॥ ४ ॥
धृतिहोमे न प्रयुञ्ज्याद्गोनामसु तथाष्टसु ।
चतुर्थ्यामग्न इत्येतद्गोनामसु द्वि ह्यते ॥ ५ ॥

खतापपल्लवो मूढः शृङ्गेति परिकीर्त्यते ।
पतिव्रता व्रतवती ब्रह्मबन्धुस्तथाऽश्रुतः ॥ ६ ॥
अलाटु नीलमित्युक्तं पशुः स्तब्धक उच्यते ।
कपुष्णिकाभितः केशा मूर्द्ध्नि पश्चात् कपुच्छलम् ॥७॥
श्वाविच्छलाका शलली तथा वीरतरः शरः ।
तिलतण्डुलसम्पक्वः कृशरः सोऽभिधीयते ॥ ८ ॥
नामधेये मुनिवसुपिशाचावहुवत् सदा ।
यत्रास्य पितरो देवा यष्टव्यास्तिथिदेवताः ॥९॥
आग्नेयाद्येऽथ सर्पाद्ये विशाखाद्ये तथैव च ।
आषाढ़ाद्ये धनिष्ठाद्ये अश्विन्याद्ये तथैव च ॥१०॥
इन्द्वान्येतानि बहुवद्व्याणां जुहुयात् सदा ।
इन्द्वद्वयं द्विवच्छेषमशिष्टान्यथैकवत् ॥ ११ ॥
देवतास्वपि हूयन्ते बहुवत् सार्वपित्तयः ।
देवाश्च वसवश्चैव द्विवद्देवाश्विनौ सदा ॥ १२ ॥
ब्रह्मचारी समादिष्टो गुरुणा व्रतकर्म्मणि ।
बाढमोमिति वा ब्रूयात्तथैवानुपालयेत् ॥ १३ ॥
सशिखं वपनं कार्य्यमास्नानाद्ब्रह्मचारिणा ।
आशरीरविमोक्षाय ब्रह्मचर्य्यं न चेद्भवेत् ॥ १४ ॥
न गात्रोत्सादनं कुर्य्यादनापदि कदाचन ।
जलक्रीड़ामलङ्कारान् व्रती दण्ड इवाप्लवेत् ॥१५॥
देवतानां विपर्य्यासे जुहोतिषु कथं भवेत् ।
सर्व्वं प्रायश्चित्तं हुत्वा क्रमेण जुहुयात् पुनः ॥१६॥
संस्कारा अतिपत्येरन् स्वकालाच्चेत् कथञ्चन ।
हुत्वैतदेव कर्त्तव्या ये तूपनयनादधः ॥ १७ ॥

अनिष्ट्वा नवयज्ञेन नवान्नं योऽत्यकामतः ।
वैश्वानरश्चरुस्तस्य प्रायश्चित्तं विधीयते ॥ १८ ॥ २५ खण्डः ॥

चरुः समश्ननीयो यस्तथा गोयज्ञकर्म्मणि ।
वृषभोत्सर्ज्जने चैव अश्वयज्ञे तथैव च ॥ १ ॥
आवण्यां वा प्रदोषे यः कृष्यारम्भे तथैव च ।
कथमेतेषु निर्व्वापाः कथञ्चैव जुहोतयः ॥ २ ॥
दैवता सङ्ख्या ग्राह्या निर्वापास्तु पृथक् पृथक् ।
तूष्णीं द्विरेव गृह्णीयाद्धोमस्यापि पृथक् पृथक् ॥ ३॥
यावता होमनिर्वृत्तिर्भवेद्वा यत्र कीर्त्तिता ।
शेषं चैत भवेत् किञ्चित्तावन्तं निर्वपेच्चरुम् ॥ ४ ॥
चरौ समश्ननीये तु पितृयज्ञे चरौ तथा ।
होतव्यं मेक्षणेनान्य उपस्तीर्णाभिघारितम् ॥ ५ ॥
कालः कात्यायनेनोक्तो विधिश्चैव समासतः ।
वृषोत्सर्गे यतो नोऽक्त गोभिलेन तु भाषितः ॥६॥
पारिभाषिक एव स्यात् कालो गोवाजियज्ञयोः ।
अन्यस्मादुपदेशाच्च स्वस्तरारोहणस्य च ॥ ७ ॥
अथवा मार्गपाल्येऽह्नि कालो गोयज्ञकर्म्मणः ।
नीराजनेऽह्नि वाश्वानामिति तन्त्रान्तरे विधिः ॥ ८॥
शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते ।
धान्यपाकवशादन्ये श्यामकोवनिनः स्मृतः ॥ ९ ॥
अश्वयुज्यां तथा कृष्यां वास्तुकर्म्मणि याज्ञिकाः ।
यज्ञार्थतत्त्ववेत्तारो होममेवं प्रचक्षते ॥ १० ॥
द्वे पञ्च द्वे क्रमेणैता हविराहुतयः स्मृताः ।
शेषा आज्येन होतव्या इति कात्यायनोऽब्रवीत्॥११॥

पयोयदाज्यसंयुक्तं तत् पृषातकमुच्यते ।
दध्येके तदुपासाद्य कर्त्तव्यः पायसश्चरुः ॥ १२ ॥
व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः ।
यवाश्चौषधयः सप्त विपदं घ्नन्ति धारिताः ॥ १३ ॥
संस्काराः पुरुषस्यैते स्मर्य्यन्ते गौतमादिभिः ।
अतोऽष्टकादयः कार्य्याः सर्वे कालक्रमोदिताः ॥१४॥
सकृदप्यष्टकादीनि कुर्य्यात् कर्म्माणि यो द्विजः ।
स पंक्तिपावनो भूत्वा लोकान् प्रैति घृतश्चुतः॥१५॥
एकाहमपि कर्म्मस्थोयोऽग्निशुश्रूषकः शुचिः ।
नयत्यत तदेवास्य शताहं दिवि जायते ॥ १६ ॥
यस्त्वाधायाग्निमाशास्य देवादीनैभिरिष्टवान् ।
निराकर्त्तामरादीनां स विज्ञेयो निराकृतिः ॥१७॥२६खण्डः॥
यच्छ्राद्धं कर्म्मणामादौ या चान्ते दक्षिणा भवेत् ।
अमावास्यां द्वितीयं यदन्वाहार्य्यं तदुच्यते ॥ १ ॥
एकसाध्येष्ववर्हिःषु न स्यात् परिसमूहनम् ।
नोदगासादनञ्चैव क्षिप्रहोमा हि ते मताः ॥ २ ॥
अभावे व्रीहियवयोर्द्दध्ना वा पयसापि वा ।
तदभावे यवाग्वा वा जुहुयादुदकेन वा ॥ ३ ॥
रौद्रन्तु राक्षसं पित्र्यमासुरं चाभिचारिकम् ।
उक्त्वा मन्त्रं स्पृशेदाप आलभ्यात्मानमेव च ॥ ४ ॥
यजनीयेऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते ।
तत्र व्याहृतिभिर्हुत्वा दण्डं दद्यात्द्विजातये ॥५॥
लवणं मधु मांसञ्च क्षारांशो येन हूयते ।
उपवासेन भुञ्जीत नोरुरात्रौ न किञ्चन ॥ ६ ॥

स्वकाले सायमाहुत्या अप्राप्तौ होतृहव्ययोः ।
प्राक्प्रातराहुतेः कालः प्रायश्चित्ते हुते सति ॥ ७ ॥
प्राक्सायमाहुतेः प्रातर्होमकालानतिक्रमः ।
प्राक्पौर्णमासाद्दर्शस्य प्राग्दर्शादितरस्य तु ॥ ८ ॥
वैश्वदेवे त्वतिक्रान्ते अहोरात्रमभोजनम् ।
प्रायश्चित्तमथो हुत्वा पुनः सन्तनुयाद्व्रतम् ॥ ९ ॥
होमद्वयात्यये दर्शपौर्णमासात्यये तथा ।
पुनरेवाग्निमादध्यादिति भार्गवशासनम् ॥ १० ॥
अनृचो माणवो ज्ञेय एणः कृष्णमृगः स्मृतः ।
रुरुर्गौरमृगः प्रोक्तस्तम्बलः शोण उच्यते ॥ ११ ॥
केशान्तिको ब्राह्मणस्य दण्डः कार्य्यः प्रमाणतः ।
ललाटसंमितो राज्ञः स्यात्तु नासान्तिको विशः॥१२॥
ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः ।
अनुद्वेगकरा नृणां सत्वचोऽनग्निदूषिताः ॥ १३ ॥
गौर्विशिष्टतया विप्रैर्वेदेष्वपि निगद्यते ।
न ततोऽन्यद्वरं यस्मात्तस्माद्गौर्वर उच्यते ॥ १४ ॥
येषां व्रतानामन्तेषु दक्षिणा न विधीयते ।
वरस्तत्र भवेद्दानमपि वाच्छादयेद्गुरुम् ॥ १५ ॥
अस्यानोच्छासविच्छेदघोषणाध्यापनादिकम् ।
प्रमादिकं श्रुतौ यत् स्याद्यातयामत्वकारि तत् ॥१६॥
प्रत्यब्दं यदुपाकर्म्म सोत्सर्गं विधिवद्द्विजैः ।
क्रियते छन्दसां तेन पुनराप्यायनं भवेत् ॥ १७ ॥
अयातयामैश्छन्दोभिर्यत् कर्म्म क्रियते द्विजैः ।
क्रीड़मानैरपि सदा तत्तेषां सिद्धिकारकम् ॥१८॥

गायत्रीञ्च सगायत्रां वार्हस्पत्यमिति त्रिकम् ।
शिष्येभ्योऽनूच्य विधिवदुपाकुर्य्यात्ततः श्रुतिम् ॥२९॥
छन्दसामेकविंशानां संहितायां यथाक्रमम् ।
तच्छन्दस्काभिरेवग्भिराद्याभिर्होमइष्यते ॥ ३० ॥
पर्वभिश्चैव मानेषु ब्राह्मणेषूत्तरादिभिः ।
अङ्गेषु चर्ग्मन्त्रेषु इति षष्टिर्जुहोतयः ॥ ३१ ॥२७ खण्डः॥
अक्षतास्तु यवाः प्रोक्ता भृष्टाधाना भवन्ति ते ।
भृष्टास्तु व्रीहयो लाजा घटाः स्वाण्डिल उच्यते ॥ १ ॥
नाधीयीत रहस्यानि सोत्तराणि विचक्षणः ।
नचोपनिषदश्चैव षण्मासान् दक्षिणायनान् ॥ २ ॥
उपाकृत्योदगयने ततोऽधीयीत धर्म्मवित् ।
उत्सर्गश्चैक एवैषां तैष्यां प्रौष्ठपदेऽपिवा ॥ ३ ॥
अजातव्यञ्जना लोम्नी न तया सह संविशेत् ।
अयुगूः काकवन्ध्याया जाता तां न विवाहयेत् ॥ ४॥
संसक्तपदविन्यासस्त्रिपदः प्रक्रमः स्मृतः ।
आर्त्ते कर्म्मणि सत्रञ्च श्रौते त्वध्वर्य्युणोदितः ॥ ५ ॥
यस्यां दिशि वलिं दद्यात्तामेवाभिमुखो बलिम्
अवणाकर्म्मणि भवेन्नच कर्म्म न सर्वदा ॥ ६ ॥
बलिशेषस्य हवनमग्निप्रणयनन्तथा ।
प्रत्यहं न भवेयातामुल्मुकन्तु भवेत् सदा ॥ ७ ॥
पृषातकप्रेषणशेषमेवस्य हविषस्तथा ।
शिष्टस्य प्राशने मन्त्रस्तत्र सर्वेऽधिकारिणः ॥ ८ ॥
ब्राह्मणानामसान्निध्ये स्वयमेव पृषातकम् ।
अवेक्षेद्धविषः शेषं नवयज्ञेऽपि भक्षयेत् ॥ ९ ॥

सकला वदरीशाखा कलवत्यभिधीयते ।
घनाविसिकताशङ्काः स्मृता जातशिलास्तु ताः ॥ १० ॥
नष्टो विनष्टो मणिकः शिलानाशे तथैव च ।
तदैवाहृत्य संस्कार्य्यो नापेक्षेदाग्रहायणीम् ॥ ११ ॥
अवणाकर्म्म लुप्तश्चेत् कथञ्चित् सूतकादिना ।
आग्रहायणिकं कुर्य्याद्वलिवर्जमशेषतः ॥ १२ ॥
ऊर्द्ध्वं स्वस्तरशायी स्याच्मासमर्द्धमथापि वा ।
सप्तरात्रं त्रिरात्रं वा एकां वा सद्य एव वा ॥ १३ ॥
नोर्द्ध्वं मन्त्रप्रयोगः स्यान्नाग्न्यागारं नियम्यते ।
नाहतास्तरणञ्चैव न पार्श्वञ्चापि दक्षिणम् ॥ १४ ॥
दृढ़षे दाग्रहायण्यामावृत्तावपि कर्म्मणः ।
कुम्भो मन्त्रवदासिञ्चेत् प्रतिकुम्भमृचं पठेत् ॥ १५ ॥
अन्यानां यो विघातः स्यात् स बाधोत्रद्रुतिः स्मृतः ।
प्राणसम्मित इत्यादि वाशिष्ठं बाधितं यथा ॥ १६ ॥
विरोधो यत्र वाक्यानां प्रामाण्यं तत्र भूयसाम् ।
तुल्यप्रमाणकत्वे तु न्याय एवं प्रकीर्त्तितः ॥ १७ ॥
त्रैयम्बकं करतलमपूपामण्डकाः स्मृताः ।
पालाशा गोलकाश्चैव लोहचूर्णञ्च चौत्ररम् ॥ १८ ॥
स्पृशन्ननामिकाग्रेण क्वचिदालोकयन्नपि ।
अनुमन्त्रणीयं सर्वत्र सदैवमनुमन्त्रयेत् ॥ १९ ॥ २८ खण्डः ॥

चालनं दर्भकूर्चेन सर्वत्र स्रोतसां पशोः ।
तूष्णीमिच्छाक्रमेण स्यादपार्थं पार्णदारुणो ॥ १ ॥
सप्त तावन्मूर्द्धन्यानि तथा स्तनचतुष्टयम् ।
नाभिः श्रोणिरपानञ्च गोस्रोतांसि चतुर्द्दश ॥२॥

गुरोर्मांसावदानार्थः कृत्वा स्विष्टकृदाहुता ।
वपामादाय जुहुयात्तत्र मन्त्रं समापयेत् ॥ ३ ॥
हृज्जिह्वा क्रोड़मस्थीनि यकृद्वृक्कौ गुदं स्तनाः ।
श्रोणिस्कन्धसटापार्श्वं पश्वङ्गानि प्रचक्षते ॥ ४ ॥
एकादशानामङ्गानामवदानानि सङ्ख्यया ।
पार्श्वस्य वृक्कसक्थ्नोश्च द्वित्वादाहुश्चतुर्दश ॥ ५ ॥
चरितार्था श्रुतिः कार्य्या यस्मादप्यनुकल्पशः ।
अतोऽष्टचैन होमः स्याच्छागपक्षे चरावपि ॥ ६ ॥
अवदानानि यावन्ति क्रियेरन् प्रस्तरे पशोः ।
तावतः पायसान् पिण्डान् पशुभावेऽपि कारयेत् ॥ ७ ॥
ऊहनव्यञ्जनार्थन्तु पशुभावेऽपि पायसम् ।
सद्रवं श्रपयेत्तद्वदन्वष्टक्येऽपि कर्म्मणि ॥ ८ ॥
प्राधान्यं पिण्डदानस्य केचिदाहुर्मनीषिणः ।
गयादौ पिण्डमात्रस्य दीयमानत्वदर्शनात् ॥ ९ ॥
भोजनस्य प्रधानत्वं वदन्त्यन्ये महर्षयः ।
ब्राह्मणस्य परीक्षायां महायत्नप्रदर्शनात् ॥ १० ॥
आमश्राद्धविधानस्य विना पिण्डैः क्रियाविधिः ।
तदालभ्याप्यनध्यायविधानश्रवणादपि ॥ ११ ॥
विद्वन्मतमुपादाय समाप्येतद्धृदि स्थितम् ।
प्राधान्यमुभयोर्यस्मात्तस्मादेष समुच्चयः ॥ १२ ॥
प्राचीनावीतिना कार्य्यं पित्र्येषु प्रोक्षणं पशोः ।
दक्षिणोद्वासनान्तश्च चरोर्निर्वपणादिकम् ॥ १३ ॥
सव्ययश्चावदानानां प्रधानार्थो न होतरः ।
प्रधानं हवनञ्चैव शेषं प्रकृतिवद्भवेत् ॥ १४ ॥

द्वीपमुन्नतमाख्यातं ग्राह्या चैवेष्टका स्मृता।
कीलिनं सजलं प्रोक्तं दूरखातोदको मरुः॥ १५॥
द्वारगवाक्षस्तम्भैः वर्द्धमभिव्यक्तकोणवेधैश्च।
नेष्टं वास्तुद्वारं विद्धमनाक्रान्तमार्य्यैश्च॥ १६॥
वत्सङ्क्रमाविति ब्रीह्रीव्ब्रंखस्थेति यवांस्तथा।
असावित्यत्र नामोक्त्वा जुहुयात् क्षिप्रहोमवत्॥१७॥
साक्षतं सुमनोयुक्तमुदकं दधिसंयुतम्।
अर्घ्यं दधिमधुभ्याञ्च मधुपर्को विधीयते॥ १८॥
कांस्येनैवार्हणीयस्य निनयेदर्घ्यमञ्जलौ।
कांस्यापिधानं कांस्यस्थं मधुपर्कं समर्पयेत्॥१९॥ २९ खण्डः॥
इति कात्यायनविरचिते कर्म्मप्रदीपे तृतीयः प्रपाठकः॥
समाप्ता चेयं कात्यायनसंहिता॥

---

अथ बृहस्पतिस्मृतिः॥

इष्ट्वा क्रतुशतं राजा समाप्तवरदक्षिणम्।
मघवान्! वाग्विदां श्रेष्ठं पर्य्यपृच्छद्बृहस्पतिम्॥
भगवन् केन दानेन सर्वतः सुखमेधते।
यद्दत्तं यन्महार्घं च तन्मे ब्रूहि महातप!॥
एवमिन्द्रेण पृष्टोऽसौ देवदेवपुरोहितः।
वाचस्पतिर्महाप्राज्ञो बृहस्पतिरुवाच च॥
सुवर्णदानं,गोदानं भूमिदानं च,वासव!।
एतत् प्रयच्छमानस्तु सर्वपापैः प्रमुच्यते॥
सुवर्णं रजतं वस्त्रं मणिरत्नं च वासव!।
सर्वमेव भवेद्दत्तं वसुधां यः प्रयच्छति॥

फलाकृष्टां महीं दत्त्वा सबीजां शस्यशालिनीम् ।
यावत् सूर्य्यकरा लोकास्तावत् स्वर्गे महीयते ॥
यत्किञ्चित् कुरुते पापं पुरुषो वृत्तिकर्शितः ।
अपि गोचर्म्ममात्रेण भूमिदानेन शुध्यति ॥
दशहस्तेन दण्डेन त्रिंशद्दण्डानि वर्त्तनम् ।
दश तान्येव विस्तारो गोचर्म्म तन्महाफलम् ॥
सवृषं गोसहस्रं च यत्र तिष्ठत्यतन्द्रितम् ।
बालवत्सप्रसूतानां तद्गोचर्म्म इति स्मृतम् ॥
विप्राय दद्याच्च गुणान्विताय तपोवियुक्ताय जितेन्द्रियाय ।
यावन्मही तिष्ठति सागरान्ता तावत् फलं तस्य भवेदनन्तम् ॥
यथा बीजानि रोहन्ति प्रकीर्णानि महीतले ।
एवं कामाः प्ररोहन्ति भूमिदानसमार्जिताः ॥
यथाप्सु पतितः सद्य स्तैलबिन्दुः प्रसर्पति ।
एवं भूमिकृतं दानं सस्ये सस्ये प्ररोहति ॥
अन्नदाः सुखिनो नित्यं वस्त्रदश्चैव रूपवान् ॥
स नरः सर्वदो भूपयो ददाति वसुन्धराम् ।
यथा गौर्भरते वत्सं क्षारमुत्सृज्य क्षीरिणी ॥
एवं दत्ता सहस्राक्ष ! भूमिर्भरति भूमिदम् ।
शङ्खं भद्रासनं छत्रं चरस्थावरवारणाः ॥
भूमिदानस्य पुण्यानि फलं स्वर्गः पुरन्दर ! ।
आदित्यो वरुणो वह्निर्ब्रह्मा सोमो हुताशनः ॥
शूलपाणिश्च भगवानभिनन्दति भूमिदम् ।
आस्फोटयन्ति पितरः प्रहर्षन्ति पितामहाः ॥
भूमिदाता कुले जातः स नस्त्राता भविष्यति ।

तीर्थान्याहुरतिदानानि गावः पृथ्वी सरस्वती ॥
तारयन्ति हि दातारं सर्वात्पापादसंशयम् ।
प्रावृता वस्त्रदा यान्ति नग्ना यान्ति त्ववस्त्रदाः ॥
तृप्ता यान्त्यन्नदातारः क्षुधिता यान्त्यनन्नदाः ।
कांक्षन्ति पितरः सर्वे नरकाद्भयभीरवः ॥
गयां यो यास्यति पुत्रः स नः त्राता भविष्यति ।
एष्टव्या बहवः पुत्राः यद्येकोऽपि गयां व्रजेत् ॥
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ।
लोहितो यस्तु वर्णेन पुच्छाग्रे यस्तु पाण्डुरः ॥
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ।
नीलः पाण्डुरलाङ्गूलस्तृणमुद्धरते तु यः ॥
षष्टिर्वर्षसहस्राणि पितरस्तेन तर्पिताः ।
यत्र शृङ्गगतम्पङ्कं कूलस्तिष्ठति चोद्धृतम् ॥
पितरस्तस्य गच्छन्ति सोमलोकं महाद्युतिम् ।
पृथोर्यदोर्दिलीपस्य नृगस्य नहुषस्य च ॥
अन्येषाञ्च नरेन्द्राणां पुनरन्या भविष्यति ।
बहुभिर्वसुधा दत्ता राजभिः सगरादिभिः ॥
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ।
यस्तु ब्रह्मघ्नः स्त्रीघ्नो वा यस्तु वै पितृघातकः ॥
गवां शतसहस्राणां हन्ता भवति दुष्कृती ।
स्वदत्तां परदत्तां वा यो हरेच्च वसुन्धराम् ॥
स्वविष्ठायां क्रिमिर्भूत्वा पितृभिः सह पच्यते ।
आक्षेप्ता चानुमन्ता च तमेव नरकं व्रजेत् ॥
भूमिदो भूमिहर्ता च नापरं पुण्यपापयोः ।

ऊर्द्धीवोवावतिष्ठेत यावदा भूतसंप्लवम् ॥
अग्नेरपत्यं प्रथमं हिरण्यं भूर्वैष्णवी सूर्य्यसुताश्चगावः ॥
लोकास्त्रयस्तेन भवन्ति दत्ता यः काञ्चनङ्गाञ्च महीञ्च दद्यात् ।
षडशीति सहस्राणां यो जनानां वसुन्धराम् ।
स्वतो दत्ता तु सर्वत्र सर्वकामप्रदायिनी ॥
भूमिं यः प्रतिगृह्णाति भूमिं यश्च प्रयच्छति ।
उभौ तौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ ॥
सर्वेषामेव दानानां एकजन्मानुगं फलम् ।
हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम् ॥
योगहिंस्यादहं ह्यात्मा भूतग्रामं चतुर्विधम् ।
तस्य देहादियुक्तस्य भयं नास्ति कदाचन ॥
अन्यायेन हृता भूमिर्यै नरैरपराहिता ।
हरतो हारयन्तश्च हन्युस्ते सप्तमङ्कुलम् ॥
हरते हरयेद्यस्तु मन्दबुद्धिस्ततो वृतः ।
स बध्यो वारुणैः पाशैस्तिर्य्यग्योनिषु जायते ॥
अश्रुभिः पतितैस्तेषां दानानामपकीर्त्तनम् ।
ब्राह्मणस्य हृते क्षेत्रे हतन्त्रिपुरुषं कुलम् ॥
वापीकूपसहस्रेण अश्वमेधशतेन च ।
गवां कोटिप्रदानेन भूमिहर्त्ता न शुध्यति ॥
गामेकां स्वर्णमेकं वा भूमेरप्यर्द्धमङ्गुलम् ।
हरन्नरकमायाति यावदाभूतसंप्लवम् ।
हुतं दत्तं तपोधीतं यत्किञ्चिद्धर्मसञ्चितम् ॥
अर्द्धाङ्गुलस्य सीमाया हरणेन प्रणश्यति ।
गोवीथीं ग्रामरथ्याञ्च श्मशानं गोपितं तथा ॥

सम्मोह्य नरकं याति यावदाभूतसंप्लवम् ।
ऊषरे निर्जले स्थाने प्रस्तं शस्यं विसर्जयेत् ॥
जलाधारश्च कर्त्तव्यो व्यासस्य वचनं यथा ।
पञ्चकन्या नृते हन्ति दश हन्ति गवा नृते ॥
शतमश्वा नृते हन्ति सहस्रं पुरुषा नृते ।
हन्ति जाता न जाताश्च हिरण्यार्थं नृतं वदेत् ॥
सर्वं भूम्या नृते हन्ति मास्म भूम्यनृतं वदीः ।
ब्रह्मस्वेमारतिं कुर्य्याः प्राणैः कण्ठगतैरपि ॥
अनौषधमभेषज्यं विषमे तद्धलाहलम् ।
न विषं विषमित्याहुः ब्रह्मस्वं विषमुच्यते ॥
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ।
लोहखण्डाश्मचूर्णं च विषञ्च ज्वरयेन्नरम् ॥
ब्रह्मस्वं त्रिषु लोकेषु कः पुमान् ज्वर यिष्यति ।
मन्युप्रहरणा विप्रा राजानः शस्त्रपाणयः ॥
शस्त्रमेकाकिनं हन्ति विप्रमन्युः कुलक्षयम् ।
मन्युप्रहरणा विप्रा चक्रप्रहरणो हरिः ॥
चक्रात्तीव्रतरो मन्युस्तस्माद्विप्रं न कोपयेत् ।
अग्निदग्धाः प्ररोहन्ति सूर्य्यदग्धास्तथैव च ॥
मन्युदग्धस्य विप्राणामङ्कुरो न प्ररोहति ।
अग्निर्दहति तेजसा सूर्यो दहति रश्मिभिः ॥
राजा दहति दण्डेन विप्रो दहति मन्युना ।
ब्रह्मस्वेन तु यत् सौख्यन्देवस्वेन तु या रतिः ॥
तद्धनं कुलनाशाय भवत्यात्मविनाशकम् ।
ब्रह्मस्वं ब्रह्महत्या च दरिद्रस्य च यत्धनम् ॥

गुरुभिर्ब्राह्मणैश्चैव स्वर्गस्थमपि पीडयेत्।
अन्नस्वेन तु यच्छिद्रं तच्छिद्रं न प्ररोहति॥
प्रच्छादयति तच्छिद्रमन्यत्र तु विसर्पति।
अन्नस्वेन तु पुष्टानि साधनानि बलानि च॥
संग्रामे तानि लीयन्ते सिकतासु यथोदकम्।
श्रोत्रियाय कुलीनाय दरिद्राय च वासव!॥
सन्तुष्टाय विनीताय सर्वभूतहिताय च।
वेदाभ्यासस्तपोज्ञानमिन्द्रियाणां च संयमः॥
ईदृशाय सुरश्रेष्ठ! यद्दत्तं हि तदक्षयम्।
आमपात्रे यथान्यस्तं क्षीरं दधि घृतं मधु॥
विनश्येत्पात्रदौर्बल्यात्तच्च पात्रं विनश्यति।
एवं गाश्च हिरण्यञ्च वस्त्रमन्नं महीं तिलान्॥
अविद्वान् प्रतिगृह्णाति भस्मीभवति काष्ठवत्।
यस्य चैव गृहे मूर्खो दूरे चापि बहुश्रुतः॥
बहुश्रुताय दातव्यं नास्ति मूर्खे व्यतिक्रमः।
कुलं तारयते धीरः सप्त सप्त च वासव!॥
यस्तटाकं नवं कुर्य्यात् पुराणं वापि खानयेत्।
स सर्वं कुलमुद्धृत्य स्वर्गे लोके महीयते॥
वापीकूपतडागानि उद्यानोपवनानि च।
पुनः संस्कारकर्त्ता च लभते मौलिकं फलम्॥
निदाघकाले पानीयं यस्य तिष्ठति वासव!।
स दुर्गं विषमं कृत्स्नं न कदाचिदवाप्नुयात्॥
एकाहं तु स्थितं तोयं पृथिव्यां राजसत्तम।

कुलानि तारयेत्तस्य सप्त सप्त पराण्यपि ॥
दीपालोकप्रदानेन वपुष्मान् स भवेन्नरः ।
प्रोक्षणीयप्रदानेन स्मृतिं मेधाञ्च विन्दति ॥
कृत्वापि पापकर्माणि यो दद्यादन्नमर्थिने ।
ब्राह्मणाय विशेषेण न स पापेन लिप्यते ॥
भूमिर्गावस्तथा दाराः प्रसह्य क्रियते यदा ।
नचावेदयते यस्तु तमाहुर्ब्रह्मघातकम् ॥
निवेदितस्तु राजा वै ब्राह्मणैर्मन्युपीड़ितैः ।
तं न वारयते यस्तु तमाहुर्ब्रह्मघातकम् ॥
उपस्थिते विवाहे च यज्ञे दाने च वासव ! ।
मोहाच्चरति विघ्नं यः स मृतो जायते क्रिमिः ॥
धनं फलति दानेन जीवितं जीवरक्षणात् ।
रूपमैश्वर्यमारोग्य मर्हिंसाफलमश्नुते ॥
फलमूलाशनात् पूज्यं स्वर्गं सत्येन लभ्यते ।
प्रायोपवेशनाद्राज्यं सर्वत्र सुखमश्नुते ॥
गवाढ्यः शक्रदीक्षायाः स्वर्गगामी तृणाशनः ।
स्त्रियस्त्रिषवणस्नायी वायुं पीत्वा क्रतुं लभेत् ॥
नित्यस्नायी भवेदर्कः सन्ध्ये द्वे च जपन् द्विजः ।
न तत्साधयते राजन् नाकपृष्ठ मनाशके ॥
अग्निप्रवेशे नियतं ब्रह्मलोके महीयते ।
रत्नानां प्रतिसंहारे पशून् पुत्रांश्च विन्दति ॥
नाके चिरं स वसते उपवासी च यो भवेत् ।
सततं चैकशायी यः स लभेदीप्सितां गतिम् ॥

वीरासनं वीरशय्यां वीरस्थानमुपाश्रितः ।
अक्षय्यास्तस्य लोकाः स्युः सर्वकामगमास्तथा ॥
उपवासश्च दीक्षाश्च अभिषेकश्च वासव ! ।
कृत्वा द्वादशवर्षाणि वीरस्थानाद्विशिष्यते ॥
अधीत्य सर्ववेदान् वै सद्यो दुःखात् प्रमुच्यते ।
पावनं चरते धर्मं स्वर्गे लोके महीयते ॥
बृहस्पतिमतं पुण्यं ये पठन्ति द्विजातयः ।
चत्वारि तेषां वर्धन्ते आयुर्विद्या यशो बलम् ॥

॥ इति बृहस्पतिप्रणीतं धर्मशास्त्रं सम्पूर्णम् ॥

# पराशरसंहितायाम्।

## प्रथमोऽध्यायः।

अथातो हिमशैलाग्रे देवदारुवनालये।
व्यासमेकाग्रमासीनमपृच्छन्नृषयः पुरा॥
मानुषाणां हितं धर्म्मं वर्त्तमाने कलौ युगे।
शौचाचारं यथावच्च वद सत्यवतीसुत!॥
तच्छ्रुत्वा ऋषिवाक्यन्तु सशिष्याग्न्यर्कसन्निभः।
प्रत्युवाच महातेजाः श्रुतिस्मृतिविशारदः॥
नचाहं सर्व्वतत्त्वज्ञः कथं धर्म्मं वदाम्यहं।
अस्मत् पितैव प्रष्टव्य इति व्यासः सुतोऽवदत्॥
ततस्ते ऋषयः सर्व्वे धर्म्मतत्त्वार्थकाङ्क्षिणः।
ऋषिं व्यासं पुरस्कृत्य गता वदरिकाश्रमे॥
नानावृक्षसमाकीर्णं फलपुष्पोपशोभितम्।
नदीप्रस्रवणाकीर्णं पुण्यतीर्थैरलङ्कृतम्॥
मृगपक्षिगणाकीर्णं देवतायतनावृतम्।
यक्षगन्धर्व्वसिद्धैश्च नृत्यगीतसमाकुलम्॥
तस्मिन्नृषिसभामध्ये शक्तिपुत्रं पराशरम्।
सुखासीनं महात्मानं मुनिमुख्यगणावृतम्॥

कृताञ्जलिपुटो भूत्वा व्यासस्तु ऋषिभिः सह।
प्रदक्षिणाभिवादैश्च स्तुतिभिः समपूजयत्॥
अथ सन्तुष्टमनसाः पराशरमहामुनिः।
आह सुस्वागतं ब्रूहीत्यासीनो मुनिपुङ्गवः॥
व्यासः सुस्वागतं ये च ऋषयश्च समन्ततः।
कुशलं कुशलेत्युक्ता व्यासः पृच्छत्यतः परम्॥
यदि जानासि मे भक्तिं स्नेहाद्वा भक्तवत्सल!।
धर्मं कथय मे तात! अनुग्राह्योऽस्म्यहं तव॥
श्रुता मे मानवा धर्म्मा वाशिष्ठाः काश्यपास्तथा।
गार्गेया गौतमाश्चैव तथा चौशनसाः स्मृताः॥
अत्रेर्विष्णोश्च साम्बर्त्ता दाक्षा आङ्गिरसास्तथा।
शातातपाश्च हारीता याज्ञवल्क्यकृता श्च ये॥
कात्यायनकृता श्चैव प्राचेतसकृताश्च ये।
आपस्तम्बकृता धर्म्माः शङ्खस्य लिखितस्य च॥
श्रुता ह्येते भवत्प्रोक्ताः श्रौतार्थास्तेन विस्मृताः।
अस्मिन्मन्वन्तरे धर्म्माः कृतत्रेतादिके युगे॥
सर्व्वे धर्म्माः कृते जाताः सर्वे नष्टाः कलौ युगे।
चातुर्वर्ण्यसमाचारं किञ्चित् साधारणं वद॥
व्यासवाक्यावसाने तु मुनिमुख्यः पराशरः।
धर्मस्य निर्णयं प्राह सूक्ष्मं स्थूलञ्च विस्तरात्॥
शृणु पुत्र! प्रवक्ष्येऽहं शृण्वन्तु ऋषयस्तथा॥
कल्पे कल्पे क्षयोत्पत्तौ ब्रह्मविष्णुमहेश्वराः।
श्रुतिः स्मृतिः सदाचारा निर्णेतव्याश्च सर्वदा॥
न कश्चिद्वेदकर्त्ता च वेदस्मर्त्ता चतुर्मुखः।

तथैव धर्मं स्मरति मनुः कल्पान्तरान्तरे ॥
अन्ये कृतयुगे धर्म्मास्त्रेतायां द्वापरे परे ।
अन्ये कलियुगे नृणां युगरूपानुसारतः ॥
तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमित्याहुर्दानमेकं कलौ युगे ॥
कृते तु मानवो धर्मस्त्रेतायां गौतमः स्मृतः ।
द्वापरे शाङ्खलिखितः कलौ पाराशरः स्मृतः ॥
त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ।
द्वापरे कुलमेकन्तु कर्त्तारञ्च कलौ युगे ।
कृते सम्भाषणात् पापं त्रेतायाञ्चैव दर्शनात् ।
द्वापरे चान्नमादाय कलौ पतति कर्म्मणा ॥
कृते तु तत्क्षणाच्छापस्त्रेतायां दशभिर्दिनैः ।
द्वापरे मासमात्रेण कलौ सम्वत्सरेण तु ॥
अभिगम्य कृते दानं त्रेतास्वाहूय दीयते ।
द्वापरे याचमानाय सेवया दीयते कलौ ॥
अभिगम्योत्तमं दानमाहूतञ्चैव मध्यमम् ।
अधमं याच्यमानं स्यात् सेवादानन्तु निष्फलम् ॥
कृते चास्थिगताः प्राणास्त्रेतायां मांससंस्थिताः ।
द्वापरे रुधिरं यावत् कलावन्नादिषु स्थिताः ॥
धर्म्मो जितो ह्यधर्म्मेण जितः सत्योऽनृतेन च ।
जिता भृत्यैस्तु राजानः स्त्रीभिश्च पुरुषा जिताः ॥
सीदन्ति चाग्निहोत्राणि गुरुपूजा प्रणश्यति ।
कुमार्य्यश्च प्रसूयन्ते तस्मिन् कलियुगे सदा ॥
युगे युगे च ये धर्म्मास्तत्र तत्र च ये द्विजाः ।

तेषां निन्दा न कर्त्तव्या युगरूपाहि ते द्विजाः॥
युगे युगे च सामर्थ्यं शेषं मुनिविभाषितम्।
पराशरेण चाप्युक्तं प्रायश्चित्तं प्रधीयते॥
अहमद्यैव तद्धर्ममनुस्मृत्य ब्रवीमि वः।
चातुर्वर्ण्यसमाचारं शृणुध्वं मुनिपुङ्गवाः!॥
पाराशरमतं पुण्यं पवित्रं पापनाशनम्।
चिन्तितं ब्राह्मणार्थाय धर्मसंस्थापनाय च॥
चतुर्णामपि वर्णानामाचारो धर्मपालकः।
आचारभ्रष्टदेहानां भवेद्धर्मः पराङ्मुखः॥
षट्कर्माभिरतो नित्यं देवतातिथिपूजकः।
हुतशेषन्तु भुञ्जानो ब्राह्मणो नावसीदति॥
सन्ध्यास्नानं जपो होमः स्वाध्यायो देवतार्च्चनम्।
वैश्वदेवातिथेयञ्च षट्कर्माणि दिने दिने॥
प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा।
वैश्वदेवे तु संप्राप्तः सोऽतिथिः स्वर्गसंक्रमः॥
दूराध्वानं पथि श्रान्तं वैश्वदेवे उपस्थितम्।
अतिथिं तं विजानीयान्नातिथिः पूर्व्वमागतः॥
न पृच्छेद्गोत्रचरणं न स्वाध्यायव्रतानि च।
हृदयं कल्पयेत्तस्मिन् सर्व्वदेवमयोहि सः॥
नैकग्रामीणमतिथिं विप्रं साङ्गमिकं तथा।
अनित्यं ह्यागतो यस्मात्तस्मादतिथिरुच्यते॥
अपूर्व्वः सुव्रती विप्रो अपूर्व्वो ऽतिथिस्तथा।
वेदाभ्यासरतो नित्यं त्रयोऽपूर्व्वा दिने दिने॥
वैश्वदेवे तु संप्राप्ते भिक्षुके गृहमागते।

उद्धृत्य वैश्वदेवार्थं भिक्षां दत्त्वा विसर्जयेत् ॥
यती च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ।
तयोरन्नमदत्त्वा च भुक्त्वा चान्द्रायणञ्चरेत् ॥
यतिहस्ते जलं दद्याद्भैक्ष्यं दद्यात् पुनर्जलम्।
तद्भैक्ष्यं मेरुणा तुल्यं तज्जलं सागरोपमम् ॥
वैश्वदेवकृतान् दोषान् शक्तो भिक्षुर्व्यपोहितुम्।
नहि भिक्षुकृतान् दोषान् वैश्वदेवो व्यपोहति ॥
अकृत्वा वैश्वदेवन्तु भुञ्जते ये द्विजातयः।
सर्व्वे ते निष्फला ज्ञेयाः पतन्ति नरके शुचौ ॥
शिरोवेष्टस्तु यो भुङ्क्ते योभुङ्क्ते दक्षिणामुखः।
वामपादे करं न्यस्य तद्वै रक्षांसि भुञ्जते ॥
यतये काञ्चनं दत्त्वा ताम्बूलं ब्रह्मचारिणे।
चौरेभ्योऽप्यभयं दत्त्वा दातापि नरकं व्रजेत् ॥
पापोवा यदि चाण्डालो विप्रघ्नः पितृघातकः।
वैश्वदेवे तु सम्प्राप्तः सोऽतिथिः स्वर्गसंक्रमः ॥
अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते।
पितरस्तस्य नाश्नन्ति दशवर्षशतानि च ॥
न प्रसज्याति यो विप्रो ह्यतिथिं वेदपारगम्।
अदत्त्वान्नमात्रन्तु भुक्त्वा भुङ्क्ते तु किल्बिषम् ॥
ब्राह्मणस्य मुखं क्षेत्रं निरुदकमकण्टकम्।
वापयेत् सर्व्वबीजानि सा कृषिः सर्व्वकामिका ॥
सुक्षेत्रे वापयेद्बीजं सुपात्रे दापयेद्धनं।
सुक्षेत्रे च सुपात्रे च यत्क्षिप्तं नैव नश्यति ॥
अव्रता ह्यनधीयाना यत्र भैक्ष्यचरा द्विजाः।

तं ग्रामं दण्डयेद्राजा चौरभक्तप्रदो हि सः॥
क्षत्रियोहि प्रजा रक्षन् शस्त्रपाणिः प्रचण्डवत्।
विजित्य परसैन्यानि क्षितिं धर्म्मेण पालयेत्॥
न श्रीः कुलक्रमायाता स्वरूपाल्लिखितापि या।
खड्गेनाक्रम्य भुञ्जीत वीरभोग्या वसुन्धरा॥
पुष्पं पुष्पं विचिनुयान्मूलच्छेदं न कारयेत्।
मालाकारइवोद्याने न तथाङ्गारकारकः॥
लोहकर्म तथा रत्नं गवाञ्च प्रतिपालनम्।
वाणिज्यं कृषिकर्माणि वैश्यवृत्तिरुदाहृता॥
शूद्राणां द्विजशुश्रूषा परो धर्मः प्रकीर्त्तितः।
अन्यथा कुरुते किञ्चित्तद्भवेत्तस्य निष्फलम्॥
लवणं मधु तैलञ्च दधि तक्रं घृतं पयः॥
न दूष्येच्छूद्रजातीनां कुर्य्यात् सर्व्वस्य विक्रयम्॥
अविक्रेयं मद्यमांसमभक्ष्यस्य च भक्षणम्।
अगम्यागमनञ्चैव शूद्रोऽपि नरकं व्रजेत्॥
कपिलाक्षीरपानेन ब्राह्मणीगमनेन च।
वेदाक्षरविचारेण शूद्रस्य नरकं ध्रुवम्॥
इति पाराशरे धर्मशास्त्रे प्रथमोऽध्यायः॥

---

## द्वितीयोऽध्यायः।

अतःपरं गृहस्थस्य धर्माचारं कलौ युगे।
धर्मं साधारणं शक्यं चातुर्व्वर्ण्याश्रमागतम्॥
संप्रवक्ष्याम्यहं भूयः पाराशर्य्य प्रचोदितः।
षट्कर्मनिरतो विप्रः कृषिकर्माणि कारयेत्॥

हलमष्टगवं धर्म्यं षड्गवं मध्यमं स्मृतम् ।
चतुर्गवं नृशंसानां द्विगवं वृषघातिनाम् ॥
क्षुधितं तृषितं श्रान्तं बलीवर्द्दं न योजयेत् ।
हीनाङ्गं व्याधितं क्लीवं वृषं विप्रो न वाहयेत् ॥
स्थिराङ्गं नीरुजं दृप्तं वृषभं षण्डवर्जितम् ।
वाहयेद्दिवसस्यार्द्धं पश्चात् स्नानं समाचरेत् ॥
जपं देवार्च्चनं होमं स्वाध्यायं साङ्गमभ्यसेत् ।
एकद्वित्रिचतुर्व्विप्रान् भोजयेत् स्नातकान् द्विजः ॥
स्वयंकृष्टे तथा क्षेत्रे धान्यैश्च स्वयमर्जितैः ।
निर्व्वपेत् पञ्च यज्ञानि क्रतुदीक्षाञ्च कारयेत् ॥
तिला रसा न विक्रेया विक्रेया धान्यतःसमाः ।
विप्रस्यैवंविधा वृत्तिस्तृणकाष्ठादिविक्रयः ॥
ब्राह्मणा तु कृषिं कृत्वा महादोष मवाप्नुयात् ।
सम्वत्सरेण यत्पापं मत्स्यघाती समाप्नुयात् ।
अयोमुखेन काष्ठेन तदेकाहेन लाङ्गली ॥
पाशको मत्स्यघाती च व्याधः शाकुनिकस्तथा ।
अदाता कर्षकश्चैव पञ्चैते समभागिनः ॥
कण्डनी पेषणी चुल्ली उदकुम्भोऽथ मार्जनी ।
पञ्च सूना गृहस्थस्य अहन्यहनि वर्त्तते ॥
वृक्षान् छित्त्वा महीं हत्वाहत्वा तु कृमिकीटकान् ।
कर्षकः खलु यज्ञेन सर्व्वपापात् प्रमुच्यते ॥
यो न दद्याद्द्विजातिभ्यो राशिमूलमुपागतः ।
स चौरः स च पापिष्ठो ब्रह्मघ्नं तं विनिर्द्दिशेत् ॥
राज्ञे दत्त्वा तु षड्भागं देवानाञ्चैकविंशकम् ।

विप्राणां त्रिंशकं भागं कृषिकर्त्ता न लिप्यते ।
क्षत्रियोऽपि कृषिं कृत्वा द्विजान् देवांश्च पूजयेत् ।
वैश्यः शूद्रः सदा कुर्यात् कृषिवाणिज्यशिल्पकान् ॥
विकर्म्म कुर्वते शूद्रा द्विजसेवाविवर्जिताः ।
भवन्त्यल्पायुषस्ते वै पतन्ति नरकेषु च ॥
चतुर्णामपि वर्णानामेष धर्म्मः सनातनः ।
इति पाराशरे धर्म्मशास्त्रे द्वितीयोऽध्यायः ।

---

## तृतीयोऽध्यायः ।

अतः शुद्धिं प्रवक्ष्यामि जनने मरणे तथा ।
दिनत्रयेण शुध्यन्ति ब्राह्मणाः प्रेतसूतके ॥
क्षत्रियो द्वादशाहेन वैश्यः पञ्चदशाहकैः ।
शूद्रः शुध्यति मासेन पराशरवचो यथा ॥
उपासने तु विप्राणामङ्गशुद्धिस्तु जायते ।
ब्राह्मणानां प्रसूतौ तु देहस्पर्शो विधीयते ॥
जाते विप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ॥
एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः ।
त्र्यहात् केवलवेदस्तु द्विहीनो दशभिर्दिनैः ॥
जन्मकर्म्मपरिभ्रष्टः सन्ध्योपासनवर्जितः ।
नामधारकविप्रस्य दशाहं सूतकं भवेत् ॥
एकपिण्डास्तु दायादाः पृथग्दारनिकेतनाः ।
जन्मन्यपि विपत्तौ च भवेत्तेषाञ्च सूतकं ॥

उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ।
दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तते ॥
प्राप्नोति सूतकं गोत्रे चतुर्थपुरुषेण तु ।
दायाद्विच्छेदमाप्नोति पञ्चमो वात्मवंशजः ॥
चतुर्थे दशरात्रं स्यात् षण्णिशा पुंसि पञ्चमे ।
षष्ठे चतुरहाच्छुद्धिः सप्तमे तु दिनत्रयम् ॥
पञ्चभिः पुरुषैर्युक्ता अश्राद्धेया सगोत्रिणः ।
ततः षट्पुरुषाद्यश्च श्राद्धे भोज्याः सगोत्रिणः ॥
भृग्वग्निमरणे चैव देशान्तरमृते तथा ।
बाले प्रेते च सन्न्यासे सद्यः शौचं विधीयते ॥
दशरात्रेष्वतीतेषु त्रिरात्राच्छुद्धिरिष्यते ।
ततः सम्वत्सरादूर्द्ध्वं सचैलं स्नानमाचरेत् ॥
देशान्तरगतः कश्चित् सगोत्रः श्रूयते यदि ।
न त्रिरात्रमहोरात्रं सद्यः स्नात्वा विशुद्ध्यति ॥
आत्रिपक्षात्त्रिरात्रं स्यादाषण्मासाच्च पक्षिणी ।
अहः सम्वत्सरादर्व्वाक् सद्यः शौचं विधीयते ॥
अजातदन्ता ये बाला ये च गर्भाद्विनिःसृताः ।
न तेषामग्निसंस्कारो नाशौचं नोदकक्रिया ॥
यदि गर्भोविपद्येत स्रवते वापि योषितां ।
यावन्मासं स्थितोगर्भोदिनं तावत् स सूतकः ॥
आ चतुर्थाद्भवेत् स्रावः पातः पञ्चमषष्ठयोः ।
अत ऊर्द्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत् ॥
प्रसूतिकाले संप्राप्ते प्रसवे यदि योषिताम् ।
जीवापत्ये तु गोत्रस्य मृते मातुश्च सूतकम् ॥

रात्रावेव समुत्पन्ने मृते रजसि सूतके ।
पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः ॥
दन्तजातेऽनुजाते च कृतचूड़े च संस्थिते ।
अग्निसंस्करणं तेषां त्रिरात्रं सूतकं भवेत् ।
आ दन्तजननात् सद्य आचूड़ान्नैशिकी स्मृता ।
त्रिरात्रमाव्रतात्तेषां दशरात्रमतः परम् ॥
गर्भे यदि विपत्तिः स्यात्दशाहं सूतकं भवेत् ।
जीवन् जातो यदि प्रेतः सद्यएव विशुध्यति ॥
स्त्रीणां चूड़ान्न आदानात् संक्रमात्तदधःक्रमात् ।
सद्यः शौचमथैकाहं त्रिरहः पितृबन्धुषु ॥
ब्रह्मचारी गृहे येषां हूयते च हुताशने ।
सम्पर्कं नच कुर्वन्ति न तेषां सूतकं भवेत् ॥
सम्पर्काद्दुष्यते विप्रो नान्यो दोषोऽस्ति ब्राह्मणे ।
सम्पर्केषु निवृत्तस्य न प्रेतं नैव सूतकं ॥
शिल्पिनः कारुका वैद्या दासीदासाश्च नापिताः ।
श्रोत्रियाश्चैव राजानः सद्यः शौचाः प्रकीर्त्तिताः ।
सव्रती मन्त्रपूतश्च आहिताग्निश्च यो द्विजः ।
राज्ञश्च सूतकं नास्ति यस्य चेच्छति पार्थिवः ॥
उद्यतो निधने दाने आर्त्तो विप्रो निमन्त्रितः ।
तदेव ऋषिभिर्हृष्टं यथाकालेन शुध्यति ॥
प्रसवे गृहमेधी तु न कुर्य्यात् सङ्करं यदि ।
दशाहाच्छुध्यते माता अवगाह्य पिता शुचिः ॥
सर्वेषां शावमाशौचं मातापित्रोर्द्दशाहिकं ।
सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः ॥

यदि पत्न्यां प्रसूतायां सम्पर्कं कुरुते द्विजः।
सूतकन्तु भवेत्तस्य यदि विप्रः षडङ्गवित्॥
सम्पर्काज्जायते दोषो नान्यो दोषोऽस्ति ब्राह्मणे।
तस्मात् सर्वप्रयत्नेन सम्पर्कं वर्जयेद्द्विजः॥
विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके।
पूर्वं सङ्कल्पितं द्रव्यं दीयमानं न दूष्यति॥
अन्तरा तु दशाहस्य पुनर्मरणजन्मनी।
तावत् स्यादशुचिर्विप्रो यावत्तत् स्यादनिर्दशम्॥
ब्राह्मणार्थे विपन्नानां वन्दिगोग्रहणे तथा।
आहवेषु विपन्नानामेकरात्रन्तु सूतकं॥
द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदकौ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखे हतः॥
यत्र यत्र हतः शूरः शत्रुभिः परिवेष्टितः।
अक्षयाल्लँभते लोकान् यदि क्लीवं न भाषते॥
जितेन लभते लक्ष्मीं मृतेनापि सुराङ्गनाः।
क्षणविध्वंसिकेऽमुष्मिन् का चिन्ता मरणे रणे॥
यस्तु भग्नेषु सैन्येषु विद्रवत्सु समन्ततः।
परित्राता यदा गच्छेत् स च क्रतुफलं लभेत्॥
यस्य च्छेदक्षतं गात्रं शरशक्त्यृष्टिमुद्गरैः।
देवकन्यास्तु तं वीरं गायन्ति रमयन्ति च॥
वराङ्गनासहस्राणि शूरमायोधने हतं।
नागकन्याश्च धावन्ति मम भर्त्ता भवेदिति॥
ललाटदेशाद्रुधिरं हि यस्य
तमस्य जन्तोः प्रविशेच्च वक्त्रे।

तत् सोमयानेन हि तस्य तुल्यं
संग्रामयज्ञे विधिवच्च दृष्टम्।
यं यज्ञसंघैस्तपसा च विद्यया
स्वर्गैषिणो वात्र यथैव विप्राः।
तथैव यान्त्येव हि तत्र वीराः
प्राणान् सुयुद्धेन परित्यजन्तः॥
अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः।
पदे पदे यज्ञफलमानुपूर्व्याल्लभन्ति ते॥
असगोत्रमबन्धुञ्च प्रेतीभूतञ्च ब्राह्मणं।
नीत्वा च दाहयित्वा च प्राणायामेन शुद्ध्यति॥
न तेषामशुभं किञ्चिद्विजानां शुभकर्मणि।
जलावगाहनात्तेषां शुद्धिः स्मृतिभिरीरिता॥
अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा।
स्नात्वा चैव तु स्पृष्ट्वाग्निं घृतं प्राश्य विशुद्ध्यति॥
क्षत्रियं मृतमज्ञानाद्ब्राह्मणो योऽनुगच्छति।
एकाहमशुचिर्भूत्वा पञ्चगव्येन शुद्ध्यति॥
शवञ्च वैश्यमज्ञानाद्ब्राह्मणो योऽनुगच्छति।
कृत्वा शौचं द्विरात्रञ्च प्राणायामान् षडाचरेत्॥
प्रेतीभूतन्तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः।
नयन्तमनुगच्छेत त्रिरात्रमशुचिर्भवेत्॥
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम्।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्ध्यति॥
विनिर्वर्त्य यदा शूद्रा उदकान्तमुपस्थिताः।
द्विजैस्तदानुगन्तव्या इति धर्मविदो विदुः॥

तस्माद्द्विजो मृतं शूद्रं न स्पृशेन्न च दाहयेत् ।
दृष्टे सूर्य्यविलोकेन शुद्धिरेषा पुरातनी ॥
इति पाराशरे धर्मशास्त्रे तृतीयोऽध्यायः ।

---

## चतुर्थोऽध्यायः ।

अतिमानादतिक्रोधात् स्नेहाद्वा यदि वा भयात् ।
उद्बध्नीयात् स्त्री पुमान् वा गतिरेषा विधीयते ॥
पूयशोणितसंपूर्णे अन्धे तमसि मज्जति ।
षष्टिं वर्षसहस्राणि नरकं प्रतिपद्यते ।
नाशौचं नोदकं नाग्निं नाश्रुपातञ्च कारयेत् ॥
वोढारोऽग्निप्रदातारः पाशच्छेदकरास्तथा ।
तप्तकृच्छ्रेण शुद्ध्यन्तीत्येवमाह प्रजापतिः ॥
गोभिर्हतं तथोद्बद्धं ब्राह्मणेन तु घातितम् ।
संस्पृशन्ति तु ये विप्रा वोढारश्चाग्निदाश्च ये ॥
अन्येऽपि वानुगन्तारः पाशच्छेदकराश्च ये ।
तप्तकृच्छ्रेण शुद्ध्यन्ति कुर्य्युर्ब्राह्मणभोजनम् ॥
अनडुत्सहितां गाञ्च दद्युर्विप्राय दक्षिणाम् ।
त्र्यहमुष्णं पिबेदापस्त्र्यहमुष्णं पयः पिबेत् ।
त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो दिनत्रयम् ॥
यो वै समाचरेद्विप्रः पतितादिष्वकामतः ।
पञ्चाहं वा दशाहं वा द्वादशाहमथापि वा ॥
मासार्द्धं मासमेकं वा मासद्वयमथापि वा ।
अब्दार्द्धमब्दमेकं वा तदूर्द्ध्वं चैव तत्समः ॥

त्रिरात्रं प्रथमे पक्षे द्वितीये कृच्छ्रमाचरेत् ।
तृतीये चैव पक्षे तु कृच्छ्रं सान्तपनं चरेत् ॥
चतुर्थे दशरात्रं स्यात् पराकः पञ्चमे मतः ।
कुर्य्याच्चान्द्रायणं षष्ठे सप्तमे त्वैन्दवद्वयम् ॥
शुद्ध्यर्थमष्टमे चैव षण्मासात् कृच्छ्रमाचरेत् ।
पक्षसंख्याप्रमाणेन सुवर्णान्यपि दक्षिणा ॥
ऋतुस्नाता तु या नारी भर्त्तारं नोपसर्पति ।
सा मृता नरकं याति विधवा च पुनः पुनः ॥
ऋतौ स्नातान्तु यो भार्य्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥
अदुष्टापतितां भार्य्यां यौवने यः परित्यजेत् ।
सप्तजन्म भवेत् स्त्रीत्वं वैधव्यञ्च पुनः पुनः ॥
दरिद्रं व्याधितं मूर्खं भर्त्तारं या न मन्यते ।
सा मृता जायते व्याली वैधव्यञ्च पुनः पुनः ॥
ओघवाताहृतं बीजं यथा क्षेत्रे प्ररोहति ।
क्षेत्री तल्लभते बीजं न बीजी भागमर्हति ॥
तद्वत् परस्त्रियाः पुत्रौ द्वौ सुतौ कुण्डगोलकौ ।
पत्यौ जीवति कुण्डः स्यात् मृते भर्त्तरि गोलकः ॥
औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुतः ।
दद्यान्माता पिता वापि स पुत्रो दत्तको भवेत् ॥
परिवित्तिः परीवेत्ता यया च परिविद्यते ।
सर्व्वे ते नरकं यान्ति दातृयाजकपञ्चमाः ॥
दाराग्निहोत्रसंयोगं यः कुर्य्यादग्रजे सति ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्व्वजः ॥

द्वौ कृच्छ्रौ परिवित्तेस्तु कन्यायाः कृच्छ्र एव च।
कृच्छ्रातिकृच्छ्रौ दातुश्च होता चान्द्रायणञ्चरेत् ॥
कुब्जवामनषण्डेषु गद्गदेषु जडेषु च।
जात्यन्धे वधिरे मूके न दोषः परिवेदने ॥
पितृव्यपुत्रः सापत्न्यः परनारीसुतस्तथा।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥
ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव चिन्तयेत्।
अनुज्ञातस्तु कुर्व्वीत शङ्खस्य वचनं यथा ॥
नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो न विद्यते ॥
मृते भर्त्तरि या नारी ब्रह्मचर्य्ये व्यवस्थिता ॥
सा मृता लभते स्वर्गं यथा सद् ब्रह्मचारिणः ॥
तिस्रः कोट्यर्द्धकोटी च यानि रोमाणि मानुषे।
तावत् कालं वसेत् स्वर्गे भर्त्तारं यानुगच्छति ॥
व्यालग्राही यथा व्यालं विलादुद्धरते बलात्।
एवमुद्धृत्य भर्त्तारं तेनैव सह मोदते।
इति पाराशरे धर्म्मशास्त्रे चतुर्थोऽध्यायः ॥

---

## पञ्चमोऽध्यायः।

वृकश्वाभ्यां शृगालाद्यैर्यदि दष्टस्तु ब्राह्मणः।
स्नात्वा जपेत गायत्रीं पवित्रां वेदमातरम् ॥
गवां शृङ्गोदके स्नातो महानद्यास्तु सङ्गमे।
समुद्रदर्शनाद्वापि शुना दष्टः शुचिर्भवेत् ॥

वेदविद्याव्रतस्नातः शुना दष्टस्तु ब्राह्मणः ।
स हिरण्योदके स्नात्वा घृतं प्राश्य विशुध्यति ॥
सव्रतस्तु शुना दष्टस्त्रिरात्रं समुपोषितः ।
घृतं कुशोदकं पीत्वा व्रतशेषं समापयेत् ॥
अव्रतः सव्रतो वापि शुना दष्टो भवेद्द्विजः ।
प्रणिपत्य भवेत् पूतो विप्रैश्चानुनिरीक्षितः ॥
शुना घ्रातावलीढस्य नखैर्विलिखितस्य च ।
अद्भिः प्रक्षालनाच्छुद्धिरग्निना चोपचूलनम् ॥
शुना च ब्राह्मणी दष्टा जम्बुकेन वृकेण वा ।
उदितं सोमनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत् ॥
कृष्णपक्षे यदा सोमो न दृश्येत कदाचन ।
यां दिशं व्रजते सोमस्तां दिशञ्चावलोकयेत् ॥
असद्ब्राह्मणके ग्रामे शुना दष्टस्तु ब्राह्मणः ।
वृषं प्रदक्षिणीकृत्य सद्यः स्नानाद्विशुध्यति ॥
चाण्डालेन श्वपाकेन गोभिर्विप्रैर्हतो यदि ।
आहिताग्निर्मृतो विप्रो विषेणात्महतो यदि ।
दहेत्तं ब्राह्मणं विप्रो लोकाग्नौ मन्त्रवर्जितम् ॥
स्पृष्ट्वा चोह्य च दग्ध्वा च सपिण्डेषु च सर्व्वथा ।
प्राजापत्यं चरेत् पश्चाद्विप्राणामनुशासनात् ॥
दग्ध्वास्थीनि पुनर्गृह्य क्षीरैः प्रक्षालयेद्द्विजः ।
पुनर्दहेत् स्वकाग्नौ तन्मन्त्रेण च पृथक् पृथक् ॥
आहिताग्निर्द्विजः कश्चित् प्रवसन् कालचोदितः ।
देहनाशमनुप्राप्तस्तस्याग्निर्वसते गृहे ॥
श्रौताग्निहोत्रसंस्कारः श्रूयतामृषिसत्तमाः ! ।

कृष्णाजिनं समास्तीर्य्य कुशैश्च पुरुषाकृतिम्॥
षट् शतानि शतञ्चैव पलाशानाञ्च वृन्तकम्।
चत्वारिंशच्छिरे दद्यात् षष्टिं कण्ठे विनिर्द्दिशेत्॥
बाहुभ्याञ्च शतं दद्यादङ्गुलीषु दशैव तु।
शतञ्चोरसि संदद्यात् त्रिंशञ्चैवोदरे न्यसेत्॥
अष्टौ वृषणयोर्दद्यात् पञ्च मेढ्रे च विन्यसेत्।
एकविंशतिमूरुभ्यां जानुजङ्घे च विंशतिम्॥
पादाङ्गुल्योः शतार्द्धञ्च पात्राणि च तथा न्यसेत्।
शम्यां शिश्ने विनिःक्षिप्य अरणीं वृषणे तथा॥
जुहूं दक्षिणहस्तेन वामहस्ते तथोपसत्।
कर्णेचोदूखलं दद्यात् पृष्ठे च मुषलं ततः॥
निःक्षिप्योरसि दृषदं तण्डुलाज्यतिलान्मुखे।
श्रोत्रे च प्रोक्षणीं दद्यादाज्यस्थालीञ्च चक्षुषोः॥
कर्णौ नेत्रे मुखे घ्राणे हिरण्यशकलं क्षिपेत्।
अग्निहोत्रोपकरणं गात्रे शेषं प्रविन्यसेत्॥
असौ स्वर्गाय लोकाय स्वाहेति च घृताहुतीः।
दद्यात् पुत्रोऽथवा भ्राता ह्यन्ये वापि स्वधर्म्मिणः॥
यथा दहनसंस्कारस्तथा कार्य्यं विचक्षणैः।
ईदृशन्तु विधिं कुर्य्याद्ब्रह्मलोके गतिर्ध्रुवम्॥
ये दहन्ति द्विजास्तन्तु ते यान्ति परमां गतिम्।
अन्यथा कुर्व्वते किञ्चिदात्मबुद्धिप्रबोधिताः॥
भवन्त्यल्पायुषस्ते वै पतन्ति नरके ध्रुवम्॥

इति पाराशरे धर्मशास्त्रे पञ्चमोऽध्यायः।

## षष्ठोऽध्यायः ।

अतः परं प्रवक्ष्यामि प्राणिहत्यासु निष्कृतिम् ।
पराशरेण पूर्व्वोक्तां मन्वर्थेऽपि च विस्तृताम् ॥
हंससारसक्रौञ्चांश्च चक्रवाकं सकुक्कुटम् ।
जालपादांश्च शरभमहोरात्रेण शुद्ध्यति ॥
वलाकाटिट्टिभानाञ्च शुकपारावतादिनाम् ।
आटिनाञ्च वकानाञ्च शुद्ध्येन्नक्तभोजनात् ॥
भासकाककपोतानां सारीतित्तिरिघातकः ।
अन्तर्जले उभे सन्ध्ये प्राणायामेन शुद्ध्यति ॥
गृध्रश्येनशिखिग्राहचाषोलूकनिपातने ।
अपक्काशी दिनं तिष्ठेत्त्रिकालं मारुताशनः ॥
वल्गुणीचटकानाञ्च कोकिलाखञ्जरीटकान् ।
लावकारक्तपादांश्च शुद्ध्यन्ते नक्तभोजनात् ॥
कारण्डवचकोराणां पिङ्गलाकुररस्य च ।
भारद्वाजनिहन्ता च शुद्ध्येच्छिवपूजनात् ॥
भेरुण्डश्येनभासञ्च पारावतकपिञ्जलान् ।
पक्षिणामेव सर्व्वेषामहोरात्रेण शुद्ध्यति ॥
हत्वा नकुलमार्जारसर्पाजगरडुण्डुभान् ।
कृशरं भोजयेद्विप्रान् लोहदण्डश्च दक्षिणाम् ॥
शल्लकीशशकागोधामत्स्यकूर्म्माभिपातने ।
वृन्ताकफलभोक्ता च त्वहोरात्रेण शुद्ध्यति ॥
वृकजम्बूकऋक्षाणां तरक्षूणाञ्च घातने ।
तिलप्रस्थं द्विजे दद्याद्वायुभक्षो दिनत्रयम् ॥

गजगवयतुरङ्गाणां महिषोष्ट्रनिपातने ।
शुद्ध्येत् सप्तरात्रेण विप्राणां तर्पणेन च ॥
मृगं वृकं वराहञ्च अज्ञानाद्यस्तु घातयेत् ।
अफालकृष्टमश्नीयादहोरात्रेण शुद्ध्यति ॥
एवं चतुष्पदानाञ्च सर्वेषां वनचारिणाम् ।
अहोरात्रोषितस्तिष्ठेज्जपन् वै जातवेदसम् ॥
शिल्पिनं कारुकं शूद्रं स्त्रियं वा यस्तु घातयेत् ।
प्राजापत्यद्वयं कुर्य्याद्वृषैकादशदक्षिणा ॥
वैश्यं वा क्षत्रियं वापि निर्द्दोषमभिघातयेत् ।
सोऽतिकृच्छ्रद्वयं कुर्य्याद्गोविंशं दक्षिणां ददेत् ॥
वैश्यं शूद्रं क्रियासक्तं विकर्मस्थं द्विजोत्तमम् ।
हत्वा चान्द्रायणं कुर्य्याद्दद्याद्गोत्रिंशदक्षिणाम् ॥
क्षत्रियेणापि वैश्येन शूद्रेणैवेतरेण वा ।
चाण्डालवधसम्प्राप्तः कृच्छ्रार्द्धेन विशुद्ध्यति ॥
चौराः श्वपाकचाण्डाला विप्रेणापि हता यदि ।
अहोरात्रोपवासेन प्राणायामेन शुद्ध्यति ॥
श्वपाकं वापि चाण्डालं विप्रः सम्भाषते यदि ।
द्विजसम्भाषणं कुर्य्याद्गायत्रीं वा सकृज्जपेत् ॥
चाण्डालैः सह सुप्तन्तु त्रिरात्रमुपवासयेत् ।
चाण्डालैकपथङ्गत्वा गायत्रीस्मरणाच्छुचिः ॥
चाण्डालदर्शनेनैव आदित्यमवलोकयेत् ।
चाण्डालस्पर्शने चैव सचैलं स्नानमाचरेत् ॥
चाण्डालखातवापीषु पीत्वा सलिलमग्रजः ।
अज्ञानाच्चैव नक्तेन त्वहोरात्रेण शुद्ध्यति ॥

चाण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम् ।
गोमूत्रयावकाहारस्त्रिरात्राच्छुद्धिमाप्नुयात् ॥
चाण्डालोदकभाण्डे तु अज्ञानात् पिबते जलम् ।
तत्क्षणात् क्षिपते यस्तु प्राजापत्यं समाचरेत् ॥
यदि न क्षिपते तोयं शरीरे यस्य जीर्य्यति ।
प्राजापत्यं न दातव्यं कृच्छ्रं सान्तपनञ्चरेत् ॥
चरेत् सान्तपनं विप्रः प्राजापत्यन्तु क्षत्रियः ।
तदर्द्धन्तु चरेद्वैश्यः पादं शूद्रस्य दापयेत् ॥
भाण्डस्थमन्त्यजानान्तु जलं दधि पयः पिबेत् ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव प्रमादतः ॥
ब्रह्मकूर्च्चोपवासेन द्विजातीनान्तु निष्कृतिः ।
शूद्रस्य चोपवासेन तथा दानेन शक्तितः ॥
ब्राह्मणो ज्ञानतो भुङ्क्ते चाण्डालान्नं कदाचन ।
गोमूत्रयावकाहारादशरात्रेण शुद्ध्यति ॥
एकैकं ग्रासमश्नीयाद्गोमूत्रयावकस्य च ।
दशाहनियमस्थस्य व्रतं तत्र विनिर्द्दिशेत् ॥
अविज्ञातस्य चाण्डालः सन्तिष्ठेत्तस्य वेश्मनि ।
विज्ञाते ह्युपसंन्यस्य द्विजाः कुर्वन्त्यनुग्रहम् ॥
ऋषिवक्त्राच्च्युता धर्म्मा गायन्ते वेदपावनाः ।
पतन्तमुद्धरेयुस्ते धर्मज्ञाः पापसङ्कटात् ॥
दध्ना च सर्पिषा चैव क्षीरगोमूत्रयावकम् ।
भुञ्जीत सह सर्वैश्च त्रिसन्ध्यमवगाहनम् ॥
त्र्यहं भुञ्जीत दध्ना च त्र्यहं भुञ्जीत सर्पिषा ।
त्र्यहं क्षीरेण भुञ्जीत एकैकेन दिनत्रयम् ॥

भाण्डदुष्टं न भुञ्जीयान्नोच्छिष्टं कृमिदूषितम् ।
त्रिपलं दधिदुग्धस्य पलमेकन्तु सर्पिषः ॥
भस्मना तु भवेच्छुद्धिरुभयोस्ताम्रकांसयोः ।
जलशौचेन वस्त्राणां परित्यागेन मृण्मयम् ॥
कुसुम्भगुड़कार्पासलवणं तैलसर्पिषी ।
द्वारे कृत्वा तु धान्यानि गृहे दद्याद्धुताशनम् ॥
एवं शुद्धस्ततः पश्चात् कुर्य्याद्ब्राह्मणभोजनम् ।
त्रिंशतं गा वृषञ्चैकं दद्याद्विप्रेषु दक्षिणाम् ॥
पुनर्लेपनखातेन होमजप्येन शुद्ध्यति ।
आधारेण च विप्राणां भूमिदोषो न विद्यते ॥
रजकी चर्म्मकारी च लुब्धकस्य च पुक्कशी ।
चातुर्वर्ण्यगृहे यस्य त्वज्ञानादधितिष्ठति ॥
ज्ञात्वा तु निष्कृतिं कुर्य्यात् पूर्व्वोक्तस्यार्द्धमेव च ।
गृहदाहं न कुर्व्वीतायन्यत् सर्वञ्च कारयेत् ॥
गृहस्याभ्यन्तरे गच्छेच्चाण्डालो यस्य कस्यचित् ।
तस्माद्गृहाद्विनिःसृत्य गृहभाण्डानि वर्जयेत् ॥
रसपूर्णन्तु यद्भाण्डं न त्यजेच्च कदाचन ।
गोरसेन तु संमिश्रैर्जलैः प्रोक्षेत् समन्ततः ॥
ब्राह्मणस्य व्रणद्वारे पूयशोणितसम्भवे ।
कृमिरुत्पद्यते यस्य प्रायश्चित्तं कथं भवेत् ॥
गवां मूत्रपुरीषेण दध्ना क्षीरेण सर्पिषा ।
त्र्यहं स्नात्वा च पीत्वा च कृमिदुष्टः शुचिर्भवेत् ॥
क्षत्रियोऽपि सुवर्णस्य पञ्च माषान् प्रदापयेत् ।
गोदक्षिणान्तु वैश्यस्याप्युपवासं विनिर्द्दिशेत् ॥

शूद्राणां नोपवासः स्याच्छूद्रो दानेन शुद्ध्यति ।
ब्राह्मणांस्तु नमस्कृत्य पञ्चगव्येन शुद्ध्यति ॥
अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः ।
प्रणम्य शिरसा धार्य्यमग्निष्टोमफलं हि तत् ॥
व्याधिव्यसनिनि श्रान्ते दुर्भिक्षे डामरे तथा ।
उपवासो व्रतो होमो द्विजसम्पादितानि वा ॥
अथवा ब्राह्मणास्तुष्टाः स्वयं कुर्व्वन्त्यनुग्रहम् ।
सर्वधर्मानवाप्नोति द्विजैः सम्बर्द्धिताशिषा ॥
दुर्ब्बलेऽनुग्रहः कार्य्यस्तथा वै बालवृद्धयोः ।
अतोऽन्यथा भवेद्दोषस्तस्मान्नानुग्रहः स्मृतः ॥
स्नेहाद्वा यदि वा लोभाद्भयादज्ञानतोऽपि वा ।
कुर्व्वन्त्यनुग्रहं ये वै तत्पापं तेषु गच्छति ॥
शरीरस्यात्यये प्राप्ते वदन्ति नियमन्तु ये ।
महत्कार्य्योपरोधेन न स्वस्थस्य कदाचन ॥
स्वस्थस्य मूढाः कुर्वन्ति नियमन्तु वदन्ति ये ।
ते तस्य विघ्नकर्त्तारः पतन्ति नरकेऽशुचौ ॥
सएव नियमस्त्याज्यो ब्राह्मणं योऽवमन्यते ।
वृथा तस्योपवासः स्यान्न स पुण्येन युज्यते ॥
सएव नियमो ग्राह्यो यं यं कोऽपि वदेद्द्विजः ।
कुर्य्याद्वाक्यं द्विजानाञ्च अकुर्वन् ब्रह्महा भवेत् ॥
उपवासो व्रतञ्चैव स्नानं तीर्थं जपस्तपः ।
विप्रैः सम्पादितं यस्य सम्पन्नं तस्य तद्भवेत् ॥
व्रतच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि ।

सर्वं भवति निश्छिद्रं ब्राह्मणैरुपपादितम् ॥
ब्राह्मणा जङ्गमं तीर्थं निर्जलं सर्वकामदम् ।
तेषां वाक्योदकेनैव शुध्यन्ति मलिना जनाः ॥
ब्राह्मणा यानि भाषन्ते भाषन्ते तानि देवताः ।
सर्ववेदमया विप्रा न तद्वचनमन्यथा ॥
अन्नाद्ये कीटसंयुक्ते मक्षिकाकीटदूषिते ।
अन्तरा संस्पृशेच्चापस्तदन्नं भस्मना स्पृशेत् ॥
भुञ्जानो हि यदा विप्रः पादं हस्तेन संस्पृशेत् ।
उच्छिष्टं हि स वै भुङ्क्ते यो भुङ्क्ते मुक्तभाजने ॥
पादुकास्थो न भुञ्जीत पर्य्यङ्के संस्थितोऽपि वा ।
शुना चाण्डालदृष्टो वा भोजनं परिवर्जयेत् ॥
पक्वान्नञ्च निषिद्धं यदन्नशुद्धिस्तथैव च ।
यथा पराशरेणोक्तं तथैवाहं वदामि वः ॥
मितं द्रोणाढकस्यान्नं काकश्वानोपघातितम् ।
केनैतच्छुद्ध्यते चान्नं ब्राह्मणेभ्यो निवेदयेत् ॥
काकश्वानावलीढन्तु द्रोणान्नं न परित्यजेत् ।
वेदवेदाङ्गविद्विप्रै र्धर्मशास्त्रानुपालकैः ॥
प्रस्था द्वात्रिंशति र्द्रोणः स्मृतो द्विप्रस्थ आढकः ।
ततो द्रोणाढकस्यान्नं श्रुतिस्मृतिविदो विदुः ॥
काकश्वानावलीढं तु गवाघ्रातं खरेण वा ।
स्वल्पमन्नं त्यजेद्विप्रः शुद्धि र्द्रोणाढके भवेत् ॥
अन्यस्योद्धृत्य तन्मात्रं यच्च नोपहतं भवेत् ।
सुवर्णोदकमभ्युक्ष्य हुताशेनैव तापयेत् ॥

क्षुताशनेन संस्पृष्टं सुवर्णसलिलेन च।
विप्राणां ब्रह्मघोषेण भोज्यं भवति तत्क्षणात्॥
इति पाराशरे धर्मशास्त्रे षष्ठोऽध्यायः॥

---

## सप्तमोऽध्यायः।

अथातो द्रव्यसंशुद्धिः पराशरवचोयथा।
दारवाणान्तु पात्राणां तक्षणाच्छुद्धिरिष्यते॥
मार्ज्जनाद्यज्ञपात्राणां पाणिना यज्ञकर्मणि।
चमसानां ग्रहाणाञ्च शुद्धिः प्रक्षालनेन तु॥
चरूणां स्रुक्स्रुवाणाञ्च शुद्धिरुष्णेन वारिणा।
भस्मना शुद्ध्यते कांस्यं ताम्रमम्लेन शुद्ध्यति॥
रजसा शुद्ध्यते नारी विकलं या न गच्छति।
नदी वेगेन शुद्ध्येत लेपो यदि न दृश्यते॥
वापीकूपतड़ागेषु दूषितेषु कथञ्चन।
उद्धृत्य वै घटशतं पञ्चगव्येन शुद्ध्यति॥
अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी।
दशवर्षा भवेत् कन्या अत ऊर्द्धं रजस्वला॥
प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति।
मासि मासि रजस्तस्याः पिबन्ति पितरः स्वयम्॥
माता चैव पिता चैव ज्येष्ठो भ्राता तथैवच।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम्॥
यस्तां समुद्वहेत् कन्यां ब्राह्मणोऽज्ञानमोहितः।
असम्भाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः॥

यः करोत्येकरात्रेण वृषलीसेवनं द्विजः।
स भैक्ष्यभुग्जपन्नित्यं त्रिभिर्वर्षैर्विशुध्यति॥
अस्तं गते यदा सूर्य्ये चाण्डालं पतितं स्त्रियम्।
सूतिकां स्पृशतश्चैव कथं शुद्धिर्विधीयते॥
जातवेदं सुवर्णञ्च सोममार्गं विलोक्य च।
ब्राह्मणानुगतश्चैव स्नानं कृत्वा विशुद्ध्यति॥
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी ब्राह्मणी तथा।
तावत्तिष्ठेन्निराहारा त्रिरात्रेणैव शुद्ध्यति॥
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी क्षत्रिया तथा।
अर्द्धकृच्छ्रं चरेत् पूर्वा पादमेकमनन्तरा॥
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी वैश्यजा तथा।
पादोनं चैव पूर्व्वायाः परायाः कृच्छ्र पादकम्॥
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी शूद्रजा तथा।
कृच्छ्रेण शुध्यते पूर्वा शूद्रा दानेन शुद्ध्यति॥
स्नाता रजस्वला या तु चतुर्थेऽहनि शुद्ध्यति।
कुर्य्याद्रजोनिवृत्तौ तु दैवपित्र्यादिकर्म च॥
रोगेण यद्रजः स्त्रीणामन्वहन्तु प्रवर्त्तते।
नाशुचिः सा ततस्तेन तत् स्याद्वैकालिकं मतम्॥
प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी।
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुद्ध्यति॥
आतुरे स्नानउत्पन्ने दशकृत्वो ह्यनातुरः।
स्नात्वा स्नात्वा स्पृशेदेनं ततः शुद्ध्येत् स आतुरः॥
उच्छिष्टोच्छिष्टसंस्पृष्टः शुना शूद्रेण वा द्विजः।
उपोष्य रजनीमेकां पञ्चगव्येन शुद्ध्यति॥

अनुच्छिष्टेन शूद्रेण स्नानं स्पर्शे विधीयते।
उच्छिष्टेन च संस्पृष्टः प्राजापत्यं समाचरेत्॥
भस्मना शुध्यते कांस्यं सुरया यन्न लिप्यते।
सुरामात्रेण संस्पृष्टं शुध्यतेऽग्न्युपलेपनैः॥
गवा घ्रातानि कांस्यानि श्वकाकोपहतानि च।
शुध्यन्ति दशभिः क्षारैः शूद्रोच्छिष्टानि यानि च॥
गण्डूषं पादशौचञ्च कृत्वा वै कांस्यभाजने।
षण्मासान् भुवि निक्षिप्य उद्धृत्य पुनराहरेत्॥
आयसेष्वपसारेषु सीसस्याग्नौ विशोधनम्।
दन्तमस्थि तथा शृङ्गं रौप्यं सौवर्णभाजनम्॥
मणिपाषाणशङ्खाश्च एतान् प्रक्षालयेज्जलैः।
पाषाणे तु पुनर्घृष्टिरेषा शुद्धिरुदाहृता॥
शङ्खाश्मदहनाच्छुद्धिर्धान्यानां मार्जनादपि।
अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम्॥
प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते।
वेणुवल्कलचीराणां क्षौमकार्पासवाससाम्॥
और्णानां नेत्रपट्टानां जलाच्छौचं विधीयते।
तूलिकाद्युपधानानि पीतरक्ताम्बराणि च॥
शोषयित्वार्कतापेन प्रोक्षयित्वा शुचिर्भवेत्।
मुञ्जोपस्करशूर्पाणां शाणस्य फलचर्मणाम्॥
तृणकाष्ठादिरज्जूनां मुदकप्रोक्षणं मतम्।
मार्जारमक्षिकाकीटपतङ्गकृमिदर्दुराः॥
अमेध्यामेध्यं स्पृशन्त्येव नोच्छिष्टान् मनुरब्रवीत्।
भूमिं स्पृष्ट्वा गतं तोयं यश्चाप्यन्योन्यविप्रुषः॥

भुक्तोच्छिष्टं तथास्नेहं नोच्छिष्टं मनुरब्रवीत् ।
ताम्बूले चेक्षुफले चैव भुक्तस्नेहानुलेपने ॥
मधुपर्के च सोमे च नोच्छिष्टं मनुरब्रवीत् ।
रथ्याकर्दमतोयानि नावः पन्थास्तृणानि च ॥
मारुतार्केण शुध्यन्ति पक्केष्टकाचितानि च ।
अदुष्टा सन्तता धारा वातोद्धूताश्च रेणवः ॥
स्त्रियो वृद्धाश्च बालाश्च न दुष्यन्ति कदाचन ।
क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथानृते ॥
पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत् ।
अग्निरापश्च वेदाश्च सोमसूर्य्यानिलास्तथा ॥
एते सर्व्वेऽपि विप्राणां श्रोत्रे तिष्ठन्ति दक्षिणे ।
प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा ॥
विप्रस्य दक्षिणे कर्णे सान्निध्यं मनुरब्रवीत् ।
देशभङ्गे प्रवासे वा व्याधिषु व्यसनेष्वपि ॥
रक्षेदेव स्वदेहादि पश्चाद्धर्मं समाचरेत् ।
येन केन च धर्मेण मृदुना दारुणेन च ॥
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ।
आपत्काले तु सम्प्राप्ते शौचाचारं न चिन्तयेत् ।
स्वयं समुद्धरेत् पश्चात् स्वस्थो धर्म्मं समाचरेत् ॥

इति पाराशरे धर्मशास्त्रे सप्तमोऽध्यायः ।

# अष्टमोऽध्यायः।

गवां बन्धनयोक्त्रेतु भवेन्मृत्युरकामतः।
अकामात् कृतपापस्य प्रायश्चित्तं कथं भवेत् ॥
वेदवेदाङ्गविदुषां धर्मशास्त्रं विजानताम्।
स्वकर्मरतविप्राणां स्वकं पापं निवेदयेत् ॥
अत ऊर्द्ध्वं प्रवक्ष्यामि उपस्थानस्य लक्षणम्।
उपस्थितोहि न्यायेन व्रतादेशनमर्हति ॥
सद्योनिःसंशये पापे न भुञ्जीतानुपस्थितः।
भुञ्जानो वर्द्धयेत् पापं पर्षद्यत्र न विद्यते ॥
संशये तु न भोक्तव्यं यावत् कार्य्यविनिश्चयः।
प्रमादश्च न कर्त्तव्यो यथैवासंशयस्तथा ॥
कृत्वा पापं न गूहेत गुह्यमानं विवर्द्धते।
स्वल्पं वाथ प्रभूतं वा धर्मविद्भ्यो निवेदयेत् ॥
ते हि पापे कृते वेद्या हन्तारश्चैव पाप्मनाम्।
व्याधितस्य यथा वैद्या बुद्धिमन्तो रुजापहाः ॥
प्रायश्चित्ते समुत्पन्ने ह्रीमान् सत्यपरायणः।
मृदुरार्जवसम्पन्नः शुद्धिं गच्छेत मानवः ॥
सचैलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः।
क्षत्रियो वाथ वैश्यो वा ततः पर्षदमाव्रजेत् ॥
उपस्थाय ततः शीघ्रमार्त्तिमान् धरणीं व्रजेत्।
गात्रैश्च शिरसा चैव नच किञ्चिदुदाहरेत् ॥
सावित्र्याश्चापि गायत्र्याः सन्ध्योपास्त्यग्निकार्य्ययोः।
अज्ञानात् कृषिकर्त्तारो ब्राह्मणा नामधारकाः ॥

अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥
यद्वदन्ति तमोमूढा मूर्खा धर्ममतद्विदः ।
तत्पापं शतधा भूत्वा तद्वक्तुरधि गच्छति ॥
अज्ञात्वा धर्मशास्त्राणि प्रायश्चित्तं ददाति यः ।
प्रायश्चित्ती भवेत् पूतः किल्विषं परिषद्व्रजेत् ॥
चत्वारो वा त्रयो वापि यं ब्रूयुर्वेदपारगाः ।
स धर्म इति विज्ञेयो नेतरैस्तु सहस्रशः ॥
प्रमाणमार्गं मार्गन्तो ये धर्मं प्रवदन्ति वै ।
तेषामुद्विजते पापं सम्भूतगुणवादिनाम् ॥
यथाश्मनि स्थितं तोयं मारुतार्केण शुष्यति ।
एवं परिषदादेशान्नाशयेदेव दुष्कृतम् ॥
नैव गच्छति कर्त्तारं नैव गच्छति पर्षदम् ।
मारुतार्कादिसंयोगात् पापं नश्यति तोयवत् ॥
अनाहिताग्नयो येऽन्ये वेदवेदाङ्गपारगाः ।
पञ्च त्रयो वा धर्म्मज्ञाः परिषत् सा प्रकीर्त्तिता ॥
मुनीनामात्मविद्यानां द्विजानां यज्ञयाजिनाम् ।
वेदव्रतेषु स्नातानामेकोऽपि परिषद्भवेत् ॥
पञ्च पूर्वं मया प्रोक्तास्तेषाञ्चैव त्वसम्भवे ।
स्ववृत्तिपरितुष्टा ये परिषत् सा प्रकीर्त्तिता ॥
अत ऊर्द्ध्वन्तु ये विप्राः केवलं नामधारकाः ।
परिषत्त्वं न तेषां वै सहस्रगुणितेष्वपि ॥
यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ।
ब्राह्मणास्त्वनधीयानास्त्रयस्ते नामधारकाः ॥

ग्रामस्थानं यथा शून्यं यथा कूपस्तु निर्जलः।
यथा हुतमनग्नौ च अमन्त्रो ब्राह्मणस्तथा॥
यथा षण्डोऽफलः स्त्रीषु यथा गौरूषराफला।
यथा चाज्ञेऽफलं दानं यथा विप्रोऽनृचोऽफलः॥
चित्रं कर्म यथानेकैरङ्गैरुन्मील्यते शनैः।
ब्राह्मण्यमपि तद्वत् स्यात् संस्कारैर्विधिपूर्वकः॥
प्रायश्चित्तं प्रयच्छन्ति ये द्विजा नामधारकाः।
ते द्विजाः पापकर्म्माणः समेता नरकं ययुः॥
ये पठन्ति द्विजा वेदं पञ्चयज्ञरताश्च ये।
त्रैलोक्यं धारयन्त्येते पञ्चेन्द्रियरताश्रयाः॥
सम्प्रणीतः श्मशानेषु दीप्तोऽग्निः सर्वभक्षकः।
तथैव ज्ञानवान् विप्रः सर्वभक्षश्च दैवतम्॥
अमेध्यानि च सर्व्वाणि प्रक्षिपन्त्युदके यथा।
तथैव किल्बिषं सर्वं प्रक्षिपेच्च द्विजेऽमले॥
गायत्रीरहितो विप्रः शूद्रादप्यशुचिर्भवेत्।
गायत्रीब्रह्मतत्त्वज्ञाः संपूज्यन्ते द्विजोत्तमाः॥
दुःशीलोऽपि द्विजः पूज्यो न शूद्रो विजितेन्द्रियः।
कः परित्यज्य दुष्टाङ्गां दुहेच्छीलवतीं खरीम्॥
धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः।
क्रीड़ार्थमपि यद्ब्रूयुः स धर्मः परमः स्मृतः॥
चातुर्वेद्यो विकल्पी च अङ्गविद्धर्मपाठकः।
प्रपन्नाश्रमिणो मुख्याः परिषत् स्युर्दशावराः॥
राज्ञश्चानुमते चैव प्रायश्चित्तं द्विजो वदेत्।
स्वयमेव न वक्तव्या प्रायश्चित्तस्य निष्कृतिः॥

ब्राह्मणांश्च व्यतिक्रम्य राजा यत् कर्त्तुमिच्छति ।
तत्पापं शतधा भूत्वा राजानमुपगच्छति ॥
प्रायश्चित्तं सदा दद्याद्देवतायतनाग्रतः ।
आत्मानं पावयेत् पश्चाज्जपन् वै वेदमातरम् ॥
सशिखं वपनं कृत्वा त्रिसन्ध्यमवगाहनम् ।
गवां गोष्ठे वसेद्रात्रौ दिवा ताः समनुव्रजेत् ॥
उष्णे वर्षति शीते वा मारुते वाति वा भृशम् ।
न कुर्व्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ॥
आत्मनो यदि वान्येषां गृहे क्षेत्रेऽथवा खले ।
भक्षयन्तीं न कथयेत् पिवन्तञ्चैव वत्सकम् ॥
पिवन्तीषु पिवेत्तोयं संविशन्तीषु संविशेत् ।
पतितां पङ्कमग्नां वा सर्व्वप्राणैः समुद्धरेत् ॥
ब्राह्मणार्थे गवार्थे वा यस्तु प्राणान् परित्यजेत् ।
मुच्यते ब्रह्महत्याद्यैर्गोप्ता गोब्राह्मणस्य च ॥
गोवधस्यानुरूपेण प्राजापत्यं विनिर्द्दिशेत् ।
प्राजापत्यन्तु यत्कृच्छ्रं विभजेत्तच्चतुर्विधम् ॥
एकाहमेकभक्ताशी एकाहं नक्तभोजनः ।
अयाचिताश्येकमहरेकाहं मारुताशनः ॥
दिनद्वयं चैकभक्तो द्विदिनं नक्तभोजनः ।
दिनद्वयमयाची स्याद्द्विदिनं मारुताशनः ॥
त्रिदिनञ्चैकभक्ताशी त्रिदिनं नक्तभोजनः ।
दिनत्रयमयाची स्यात्त्रिदिनं मारुताशनः ॥
चतुरहन्त्वेकभक्ताशी चतुरहं नक्तभोजनः ।
चतुर्द्दिनमयाची स्याच्चतुरहं मारुताशनः ॥

प्रायश्चित्ते ततश्चीर्णे कुर्य्याद्ब्राह्मणभोजनम्।
विप्राय दक्षिणां दद्यात् पवित्राणि जपेद्द्विजः॥
ब्राह्मणान् भोजयित्वा तु गोघ्नः शुद्धो न संशयः।
इति पाराशरे धर्म्मशास्त्रेऽष्टमोऽध्यायः।

---

## नवमोऽध्यायः।

गवां संरक्षणार्थाय न दुष्ये द्रोधबन्धयोः।
तद्वधन्तु न तं विद्यात् कामात् कामकृतस्तथा॥
अङ्गुष्ठमात्रः स्थूलो वा बाहुमात्रः प्रमाणतः।
आर्द्रस्तु सपलाशश्च दण्ड इत्यभिधीयते॥
दण्डादूर्द्ध्वं यदन्येन प्रहरेद्वा निपातयेत्।
प्रायश्चित्तं चरेत् प्रोक्तं द्विगुणं गोव्रतञ्चरेत्॥
रोधबन्धनयोक्त्राणि घातनञ्च चतुर्विधम्।
एकपादञ्चरेद्रोधे द्विपादं बन्धने चरेत्॥
योक्त्रेषु पादहीनं स्याच्चरेत् सर्व्वं निपातने।
गोचारे च गृहे वापि दुर्गेष्वपि समेष्वपि॥
नदीष्वपि समुद्रेषु खातेऽप्यथ दरीमुखे।
दग्धदेशे स्थिताः गावः स्तम्भनाद्रोधउच्यते॥
योक्त्रदामकडोरैश्च घण्टाभरणभूषणैः।
गृहे वापि वने वापि बद्धा स्याद्गौर्म्मृता यदि॥
तदेव बन्धनं विद्यात् कामाकामकृतञ्च यत्।
हले वा शकटे पङ्क्तौ भारे वा पीड़ितो नरैः॥
गोपतिर्म्मृत्युमाप्नोति योक्त्रो भवति तद्वधः।

मत्तः प्रमत्त उन्मत्तश्चेतनो वाप्यचेतनः॥
कामाकामकृतक्रोधोदण्डैर्हन्यादथोपलैः।
प्रहता वा मृता वापि तद्धि हेतुर्निपातने॥
मूर्च्छितः पतितो वापि दण्डेनाभिहतः स तु।
उत्थितस्तु यदा गच्छेत् पञ्च सप्त दशैव वा॥
ग्रासं वा यदि गृह्णीयात्तोयं वापि पिबेद्यदि।
पूर्वव्याध्युपसृष्टश्चेत् प्रायश्चित्तं न विद्यते॥
पिण्डस्थे पादमेकन्तु द्वौ पादौ गर्भसम्मिते।
पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनम्॥
पादेऽङ्गरोमवपनं द्विपादे श्मश्रुणोऽपि च।
त्रिपादे तु शिखावर्जं सशिखन्तु निपातने॥
पादे वस्त्रयुगञ्चैव द्विपदे कांस्यभाजनम्।
पादोने गोद्वयं दद्याच्चतुर्थे गोद्वयं स्मृतम्॥
निष्पन्नसर्वगात्रन्तु हन्यते वा सचेतनम्।
अङ्गप्रत्यङ्गसम्पन्ने द्विगुणं गोव्रतं चरेत्॥
पाषाणे नैव दण्डेन गावो येनाभिघातिताः।
शृङ्गभङ्गे चरेत् पादं द्वौ पादौ नेत्र यातने॥
लाङ्गूले कृच्छ्रपादन्तु द्वौ पादावस्थिभञ्जने।
त्रिपादञ्चैव कर्णे तु चरेत् सर्वं निपातने॥
शृङ्गभङ्गेऽस्थिभङ्गे च कटिभङ्गे तथैव च।
यदि जीवति षण्मासान् प्रायश्चित्तं न विद्यते॥
व्रणभङ्गे च कर्त्तव्यः स्नेहाभ्यङ्गस्तु पाणिना।
यवसश्चापहर्त्तव्यो यावद्दृढबलो भवेत्॥
यावत्सम्पूर्णसर्वाङ्गस्तावत्तं पोषयेन्नरः।

गोरूपं ब्राह्मणस्याग्रे नमस्कृत्य विवर्जयेत् ॥
यद्यसम्पूर्णसर्व्वाङ्गो हीनदेहो भवेत्तदा ।
गोघातकस्य तस्यार्द्धं प्रायश्चित्तं विनिर्द्दिशेत् ॥
काष्ठलोष्ट्रकपाषाणैः शस्त्रेणैवोद्धतो बलात् ।
व्यापादयति यो गान्तु तस्य शुद्धिं विनिर्द्दिशेत् ॥
चरेत् सान्तपनं काष्ठे प्राजापत्यन्तु लोष्ट्रके ।
तप्तकृच्छ्रन्तु पाषाणे शस्त्रे चैवातिकृच्छ्रकम् ॥
पञ्च सान्तपने गावः प्राजापत्ये तथा त्रयः ।
तप्तकृच्छ्रे भवन्त्यष्टावतिकृच्छ्रे त्रयोदश ॥
प्रमापणे प्राणभृतां दद्यात्तत्प्रतिरूपकम् ।
तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीन्मनुः ॥
अन्यत्राङ्कनलक्ष्मभ्यां वाहने मोहने तथा ।
सायं संयमनार्थन्तु न दुष्येद्रोधबन्धयोः ॥
अतिदाहेऽतिवाहे च नासिकाभेदने तथा ।
नदीपर्वतसञ्चारे प्रायश्चित्तं विनिर्दिशेत् ॥
अतिदाहे चरेत्पादं द्वौ पादौ वाहने चरेत् ।
नासिके पादहीनन्तु चरेत्सर्वं निपातने ॥
दहनात्तु विपद्येत अनड्वा वापि यन्त्रितः ।
उक्तं पराशरेणैव ह्येकपादं यथाविधि ॥
रोधबन्धनयोक्त्रस्य भारः प्रहरणान्तथा ।
दुर्गप्रेरणयोक्त्रस्य निमित्तानि वधस्य षट् ॥
बन्धपाशसुगुप्ताङ्गो म्रियते यदि गोपशुः ।
भवने तस्य नाशस्य पापि लक्ष्मार्द्धमर्हति ॥

न नारिकेलैर्न च शाणवालै-
र्न चापि मौञ्जैर्न च वल्कशृङ्खलैः।
एतैस्तु गावो न निबन्धनीया-
बद्धास्तु तिष्ठेत् परशुं गृहीत्वा॥
कुशैः काशैश्च बध्नीयाद्गोपशुं दक्षिणामुखम्।
पाशलग्नाग्निदग्धेषु प्रायश्चित्तं न विद्यते॥
यदि तत्र भवेत् काष्ठं प्रायश्चित्तं कथं भवेत्।
जपित्वा पावनीं देवीं मुच्यते तत्र किल्बिषात्॥
प्रेरयन् कूपवापीषु वृक्षच्छेदेषु पातयन्।
गवाशनेषु विक्रीणंस्ततः प्राप्नोति गोवधम्॥
आराधितस्तु यः कश्चिद्भिन्नकक्षो यदा भवेत्।
श्रवणं हृदयं भिन्नं मग्नो वा कूटसङ्कटे॥
कूपादुत्क्रमणे चैव भग्नो वा ग्रीवपादयोः।
स एव म्रियते तत्र त्रीन् पादांस्तु समाचरेत्॥
कूपखाते तटीबन्धे नदीबन्धे प्रपासु च।
पानीयेषु विपन्नानां प्रायश्चित्तं न विद्यते॥
कूपखाते तटीखाते दीर्घखाते तथैव च।
अन्येषु धर्मखातेषु प्रायश्चित्तं न विद्यते॥
वेश्मद्वारे निवासेषु यो नरः खातमिच्छति।
स्वकार्यगृहखातेषु प्रायश्चित्तं विनिर्दिशेत्॥
निशि बन्धनिरुद्धेषु सर्पव्याघ्रहतेषु च।
अग्निविद्युद्विपन्नानां प्रायश्चित्तं न विद्यते॥
ग्रामघाते शरौघेण वेश्मभङ्गनिपातने।
अतिवृष्टिहतानाञ्च प्रायश्चित्तं न विद्यते॥

संग्रामे प्रहतानाञ्च ये दग्धा वेश्मकेषु च ।
दावाग्निं ग्रामघाते वा प्रायश्चित्तं न विद्यते ॥
यन्त्रिता गौश्चिकित्सार्थं मूढगर्भविमोचने ।
यत्ने कृते विपद्येत प्रायश्चित्तं न विद्यते ॥
व्यापन्नानां बहूनाञ्च बन्धने रोधने ऽपिवा ।
भिषग्मिथ्याप्रचारे च प्रायश्चित्तं विनिर्दिशेत् ॥
गोवृषाणां विपत्तौ च यावन्तः प्रेक्षका जनाः ।
न वारयन्ति तां तेषां सर्वेषां पातकं भवेत् ॥
एको हतोयैर्बहुभिः समेतै
र्नज्ञायते यस्य हतोऽभिघातात् ।
दिव्येन तेषामुपलभ्य हन्ता
निवर्त्तनीयो नृपसन्नियुक्तैः ॥
एका चेद्बहुभिः कापि दैवाद्व्यापादिता भवेत् ।
पादं पादञ्च हत्यायाश्चरेयुस्ते पृथक् पृथक् ॥
हतेषु रुधिरं दृश्यं व्याधिग्रस्तः कृशो भवेत् ।
नाना भवति दृष्टेषु एवमन्वेषणं भवेत् ॥
मनुना चैवमेकेन सर्वशास्त्राणि जानता ।
प्रायश्चित्तन्तु तेनोक्तं गोघ्नु चान्द्रायणं चरेत् ॥
केशानां रक्षणार्थाय द्विगुणं गोव्रतं चरेत् ।
द्विगुणे व्रत आदिष्टे दक्षिणा द्विगुणा भवेत् ॥
राजा वा राजपुत्रो वा ब्राह्मणोवा बहुश्रुतः ।
अकृत्वा वपनं तस्य प्रायश्चित्तं विनिर्दिशेत् ॥
यस्य न द्विगुणं दानं केशश्च परिरक्षितः ।
तत्पापं तस्य तिष्ठेत वक्ता च नरकं व्रजेत् ॥

यत्किञ्चित् क्रियते पापं सर्व्वं केशेषु तिष्ठति।
सर्व्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम्॥
एवं नारीकुमारीणां शिरसो मुण्डनं स्मृतम्।
न स्त्रियाः केशवपनं न दूरे शयनाशनम्॥
न च गोष्ठे वसेद्रात्रौ न दिवा गा अनुव्रजेत्।
नदीषु सङ्गमे चैव अरण्येषु विशेषतः॥
न स्त्रीणामजिनं वासो व्रतमेवं समाचरेत्।
त्रिसन्ध्यं स्नानमित्युक्तं सुराणामर्च्चनं तथा॥
बन्धुमध्ये व्रतं तासां कृच्छ्रचान्द्रायणादिकम्।
गृहेषु नियतं तिष्ठेच्छुचिर्नियममाचरेत्॥
इह यो गोवधं कृत्वा प्रच्छादयितुमिच्छति।
स याति नरकं घोरं कालसूत्रमसंशयम्॥
विमुक्तो नरकात्तस्मान्मर्त्त्यलोके प्रजायते।
क्लीबो दुःखी च कुष्ठी च सप्त जन्मानि वै नरः॥
तस्मात् प्रकाशयेत् पापं स्वधर्मं सततं चरेत्।
स्त्रीबालभृत्यगोविप्रेष्वतिकोपं विवर्जयेत्॥
इति पाराशरे धर्मशास्त्रे नवमोऽध्यायः।

---

## दशमोऽध्यायः।

चातुर्वर्ण्यस्य सर्व्वत्र चीर्णं प्रोक्ता तु निष्कृतिः।
अगम्यागमने चैव शुद्धौ चान्द्रायणञ्चरेत्॥
एकैकं ह्रासयेत् पिण्डं कृष्णे शुक्ले च वर्द्धयेत्।
अमावास्यां न भुञ्जीत एष चान्द्रायणो विधिः॥

कुक्कुटाण्डप्रमाणन्तु ग्रासञ्च परिकल्पयेत् ।
अन्यथा भावदुष्टस्य न धर्म्मो नैव शुध्यति ॥
प्रायश्चित्ते ततश्चीर्णे कुर्य्याद्ब्राह्मणभोजनम् ।
गोद्वयं वस्त्रयुग्मञ्च दद्याद्विप्रेषु दक्षिणाम् ॥
चाण्डालीञ्च श्वपाकीञ्च ह्यभिगच्छति यो द्विजः ।
त्रिरात्र मुपवासी स्याद्विप्राणामनुशासनात् ॥
सशिखं वपनं कुर्य्यात् प्राजापत्यत्रयञ्चरेत् ।
ब्रह्मकूर्च्चं ततः कृत्वा कुर्य्याद्ब्राह्मणतर्पणम् ॥
गायत्रीञ्च जपेन्नित्यं दद्याद्गोमिथुनद्वयम् ।
विप्राय दक्षिणां दद्याच्छुद्धिमाप्नोत्यसंशयम् ॥
क्षत्रियश्चापि वैश्यो वा चाण्डालीं गच्छतो यदि ।
प्राजापत्यद्वयं कुर्य्याद्दद्याद्गोमिथुनन्तथा ॥
श्वपाकीमथ चाण्डालीं शूद्रो वै यदि गच्छति ।
प्राजापत्यं चरेत् कृच्छ्रं दद्याद्गोमिथुनन्तथा ॥
मातरं यदि गच्छेत भगिनीं पुत्रिकान्तथा ।
एतास्तु मोहितो गत्वा त्रीन् कृच्छ्रांस्तु समाचरेत् ॥
चान्द्रायणत्रयं कुर्य्याच्छिश्नच्छेदेन शुध्यति ।
मातृस्वसृगमे चैव आत्मभेदनिदर्शनम् ॥
अज्ञानात्तान्तु यो गच्छेत् कुर्य्याच्चान्द्रायणद्वयम् ।
दशगोमिथुनन्दद्याच्छुद्धिः पाराशरोऽब्रवीत् ॥
पितृदारान् समारुह्य मातुराप्ताञ्च भ्रातृजाम् ।
गुरुपत्नीं स्नुषाञ्चैव भ्रातृभार्य्यां तथैवच ॥
मातुलानीं सगोत्राञ्च प्राजापत्यत्रयञ्चरेत् ।
गोद्वयं दक्षिणां दत्त्वा शुध्यति नात्र संशयः ॥

पशुवेश्यादिगमने महिष्युष्ट्रीकपीस्तथा ।
खरीञ्च शूकरीं गत्वा प्राजापत्यं समाचरेत् ॥
गोगामी च त्रिरात्रेण गामेकं ब्राह्मणे ददत् ।
महिष्युष्ट्रीखरीगामी त्वहोरात्रेण शुध्यति ॥
डामरे समरे वापि दुर्भिक्षे वा जनक्षये ।
वन्दिग्राहे भयार्त्ते वा सदा स्वस्त्रीं निरीक्षयेत् ॥
चाण्डालैः सह सम्पर्कं या नारी कुरुते ततः ।
विप्रान् दश वरान् गत्वा स्वकं दोषं प्रकाशयेत् ॥
आकण्ठसम्मिते कूपे गोमयोदककर्दमे ।
तत्र स्थित्वा निराहारा त्वेकरात्रेण निष्क्रमेत् ॥
सशिखं वपनं कृत्वा भुञ्जीयाद्यावकौदनम् ।
त्रिरात्रमुपवासित्वा त्वेकरात्रं जले वसेत् ॥
शङ्खपुष्पीलतामूलं पत्रञ्च कुसुमं फलम् ।
सुवर्णं पञ्चगव्यञ्च क्वाथयित्वा पिबेज्जलम् ॥
एकभक्तं चरेत् पश्चाद्यावत् पुष्पवती भवेत् ।
व्रतं चरति तद्यावत्तावत् संवसते बहिः ॥
प्रायश्चित्ते ततश्चीर्णे कुर्य्याद्ब्राह्मणभोजनम् ।
गोद्वयं दक्षिणां दद्याच्छुद्धिः पाराशरोऽब्रवीत् ॥
चातुर्वर्ण्यस्य नारीणां कृच्छ्रचान्द्रायणं व्रतम् ।
यथा भूमिस्तथा नारी तस्मात्तां न तु दूषयेत् ॥
वन्दिग्राहेण या भुक्ता हत्वा बद्ध्वा बलाद्भयात् ।
कृत्वा सान्तपनं कृच्छ्रं शुध्येत् पाराशरोऽब्रवीत् ॥
सकृद्भुक्ता तु या नारी नेच्छन्ती पापकर्मभिः ।
प्राजापत्येन शुध्येत ऋतुप्रस्रवणेन तु ॥

पतत्यर्द्धं शरीरस्य यस्य भार्य्या सुरां पिवेत् ।
पतितार्द्धशरीरस्य निष्कृतिर्न विधीयते ॥
गायत्रीं जपमानस्तु कृच्छ्रं सान्तपनं चरेत् ॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
एकरात्र्युपवासश्च कृच्छ्रं सान्तपनं स्मृतम् ॥
जारेण जनयेद्गर्भं गते त्यक्ते मृते पतौ ॥
तां त्यजेदपरे राष्ट्रे पतितां पापकारिणीम् ॥
ब्राह्मणी तु यदा गच्छेत् परपुंसा समन्विता ।
सा तु नष्टा विनिर्द्दिष्टा न तस्या गमनं पुनः ॥
कामान्मोहाद्यदा गच्छेत्त्यक्त्वा बन्धून् सुतान् पतिम् ।
सा तु नष्टा परे लोके मानुषेषु विशेषतः ॥
दशमे तु दिने प्राप्ते प्रायश्चित्तं न विद्यते ।
दशाहं न त्यजेन्नारी त्यजेन्नष्टश्रुता तथा ॥
भर्त्ता चैव चरेत् कृच्छ्रं कृच्छ्रार्द्धं चैव बान्धवाः ।
तेषां भुक्त्वा च पीत्वा च अहोरात्रेण शुद्ध्यति ॥
ब्राह्मणी तु यदा गच्छेत् परपुंसा विवर्जिता ।
गत्वा पुंसां शतं याति त्यजेयुस्तान्तु गोत्रिणः ॥
पुंसो यदि गृहं गच्छेत्तदशुद्धं गृहं भवेत् ।
पितृमातृगृहं यच्च जारस्यैव तु तद्गृहम् ॥
उल्लिख्य तद्गृहं पश्चात् पञ्चगव्येन शुद्ध्यति ।
त्यजेन्मृण्मयपात्राणि वस्त्रं काष्ठञ्च शोधयेत् ॥
सम्भारान् शोधयेत् सर्व्वान् गोकेशैश्च फलोद्भवान् ।
ताम्राणि पञ्चगव्येन कांस्यानि दश भस्मभिः ॥
प्रायश्चित्तं चरेद्विप्रो ब्राह्मणै रुपपादितम् ।

गोद्वयं दक्षिणां दद्यात् प्राजापत्यं समाचरेत् ॥
इतरेषां महोरात्रं पञ्चगव्येन शोधनम्।
सपुत्रः सह भृत्यश्च कुर्य्याद् ब्राह्मणभोजनम् ॥
आकाशं वायुरग्निश्च मेध्यं भूमिगतं जलम्।
न दुष्यन्तीह दर्भाश्च यज्ञेषु च समास्तथा ॥
उपवासैर्व्रतैः पुण्यैः स्नानसन्ध्यार्च्चनादिभिः।
जपैर्होमैस्तथा दानैः शुद्ध्यन्ते ब्राह्मणाः सदा ॥
इति पाराशरे धर्मशास्त्रे दशमोऽध्यायः ॥

---

## एकादशोऽध्यायः।

अमेध्यरेतोगोमांसं चाण्डालान्नमथापि वा।
यदि भुक्तन्तु विप्रेण कृच्छ्रं चान्द्रायणञ्चरेत् ॥
तथैव क्षत्रियो वैश्य स्तदर्द्धन्तु समाचरेत्।
शूद्रोऽप्येवं यदा भुङ्क्ते प्राजापत्यं समाचरेत् ॥
पञ्चगव्यं पिवेच्छूद्रो ब्रह्मकूर्च्चं पिवेद्द्विजः।
एकद्वित्रिचतुर्गाश्च दद्याद्विप्रादनुक्रमात् ॥
शूद्रान्नं सूतकस्यान्न मभोज्यस्यान्नमेवच।
शङ्कितं प्रतिषिद्धान्नं पूर्व्वोच्छिष्टं तथैवच ॥
यदि भुक्तन्तु विप्रेण अज्ञानादापदापि वा।
ज्ञात्वा समाचरेत् कृच्छ्रं ब्रह्मकूर्च्चन्तु पावनम् ॥
व्यालैर्नकुलमार्जारै रन्नमुच्छिष्टितं यदा।
तिलदर्भोदकैः प्रोक्ष्य शुद्ध्यति नात्र संशयः ॥
शूद्रोऽप्यभोज्यं भुक्तान्नं पञ्चगव्येन शुद्ध्यति।

क्षत्रियो वापि वैश्यश्च प्राजापत्येन शुध्यति ॥
एकपंक्त्युपविष्टानां विप्राणां सहभोजने।
यद्येकोऽपि त्यजेत् पात्रं शेषमन्नं न भोजयेत् ॥
मोहाद्वा लोभतस्तत्र पंक्तावुच्छिष्टभोजने।
प्रायश्चित्तं चरेद्विप्रः कृच्छ्रं सान्तपनन्तथा ॥
पीयूषश्वेतलशुनवृन्ताकफलगृञ्जनम् ॥
पलाण्डुं वृक्षनिर्यासं देवस्वं कवकानि च।
उष्ट्रीक्षीरमविक्षीरमज्ञानाद्भुञ्जते द्विजः ॥
त्रिरात्रमुपवासी स्यात् पञ्चगव्येन शुध्यति।
मण्डूकं भक्षयित्वा च मूषिकामांसमेवच ॥
ज्ञात्वा विप्रस्त्वहोरात्रं यावकान्नेन शुध्यति।
क्षत्रियोवापि वैश्योवा क्रियावन्तौ शुचिव्रतौ।
तद्गृहेषु द्विजैर्भोज्यं हव्यकव्येषु नित्यशः ॥
घृतं तैलं तथा क्षीरं गुडं तैलेन पाचितम्।
गत्वा नदीतटे विप्रो भुञ्जीयाच्छूद्रभोजनम् ॥
अज्ञानाद्भुञ्जते विप्राः सूतके मृतकेऽपिवा।
प्रायश्चित्तं कथं तेषां वर्णे वर्णे विनिर्दिशेत् ॥
गायत्र्यष्टसहस्रेण शुद्धः स्याच्छूद्रसूतके।
वैश्ये पञ्चसहस्रेण त्रिसहस्रेण क्षत्रियः ॥
ब्राह्मणस्य यदा भुङ्क्ते प्राणायामेन शुध्यति।
अथवा वामदेव्येन साम्ना चैकेन शुध्यति ॥
शुष्कान्नं गोरसं स्नेहं शूद्रवेश्मन आगतम्।
पक्वं विप्रगृहे पूतं भोज्यं तन्मनुरब्रवीत्।
आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि।

मनस्तापेन शुद्ध्येत द्रुपदां वा शतं जपेत् ॥
दासनापितगोपाल कुलमित्रार्द्धसीरिणः।
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् ॥
शूद्रकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः।
संस्कृतस्तु भवेद्दासो ह्यसंस्कारैस्तु नापितः ॥
क्षत्रियाच्छूद्रकन्यायां समुत्पन्नस्तु यः सुतः।
स गोपाल इति ज्ञेयो भोज्यो विप्रैर्न संशयः ॥
वैश्यकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः।
आर्द्धिकश्च सतु ज्ञेयो भोज्यो विप्रैर्न संशयः ॥
भाण्डस्थित मभोज्येषु जलं दधि घृतं पयः।
अकामतस्तु यो भुङ्क्ते प्रायश्चित्तं कथं भवेत् ॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वाप्युपसर्पति।
ब्रह्मकूर्च्चोपवासेन यथावर्णस्य निष्कृतिः ॥
शूद्राणां नोपवासः स्याच्छूद्रो दानेन शुद्ध्यति।
ब्रह्मकूर्च्चमहोरात्रं श्वपाकमपि शोधयेत् ॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
निर्द्दिष्टं पञ्चगव्यन्तु पवित्रं पापनाशनम् ॥
गोमूत्रं कृष्णवर्णायाः श्वेतायाः गोमयं हरेत्।
पयश्च ताम्रवर्णाया रक्तायाः दधि चोच्यते ॥
कपिलायाः घृतं ग्राह्यं सर्व्वं कापिलमेव वा।
गोमूत्रस्य पलं दद्यादङ्गुष्ठार्द्धन्तु गोमयम्।
क्षीरं सप्तपलं दद्यात् पलमेकं कुशोदकम् ॥
गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम्।

आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥
तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम् ॥
पञ्चगव्यमृचा पूतं स्थापयेदग्निसन्निधौ ॥
आपोहिष्ठेति चालोड्य मानस्तोकेति मन्त्रयेत् ।
सप्तावरास्तु ये दर्भा अच्छिन्नाग्राः शुकत्विषः ॥
एभिरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि ।
इरावती इदं विष्णुर्मानस्तोके च शंवती ॥
एतैरुद्धृत्य होतव्यं हुतशेषं स्वयं पिवेत् ।
आलोड्य प्रणवेनैव निर्मथ्य प्रणवेन तु ।
उद्धृत्य प्रणवेनैव पिवेच्च प्रणवेन तु ॥
यत्त्वगस्थिगतं पापं देहे तिष्ठति देहिनाम् ।
ब्रह्मकूर्च्चो दहेत् सर्व्वं यथैवाग्निरिवेन्धनम् ॥
पिवतः पतितं तोयं भाजने मुखनिःसृतम् ।
अपेयं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेत् ॥
कूपे च पतितं दृष्ट्वा श्वशृगालौ च मर्कटम् ।
अस्थि चर्म्मादि पतितं पीत्वा मेध्या अपो द्विजः ॥
नारन्तु कूपे काकञ्च विड्राहखरोष्ट्रकम् ।
गावयं सौप्रतीकञ्च मायूरं खाड्गकं तथा ॥
वैयाघ्रमार्क्षं सैंहं वा कुणपं यदि मज्जति ।
तड़ागस्याथ दुष्टस्य पीतं स्यादुदकं यदि ॥
प्रायश्चित्तं भवेत् पुंसः क्रमेणैतेन सर्वशः ।
विप्रः शुद्ध्येत्त्रिरात्रेण क्षत्रियस्तु दिनद्वयात् ॥
एकाहेन तु वैश्यस्तु शूद्रो नक्तेन शुद्ध्यति ॥
परपाकनिवृत्तस्य परपाकरतस्य च ।

श्वपचस्य च भुक्तान्नं द्विजश्चान्द्रायणञ्चरेत् ॥
श्वपचस्य च यद्दाने दातुश्चास्य कुतः फलम् ।
दाता प्रतिग्रहीता च द्वौ तौ निरयगामिनौ ॥
गृहीत्वाग्निं समारोप्य पञ्च यज्ञान्न वर्त्तयेत् ।
परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्त्तितः ॥
पञ्चयज्ञं स्वयं कृत्वा परान्नेनोपजीवति ।
सततं प्रातरुत्थाय परपाकरतो हि सः ॥
गृहस्थधर्म्मो यो विप्रो ददाति परिवर्ज्जितः ।
ऋषिभिर्धर्म्मतत्त्वज्ञैरपचः परिकीर्त्तितः ॥
युगे युगे च ये धर्म्मास्तेषु धर्मेषु ये द्विजाः ।
तेषां निन्दा न कर्त्तव्या युगरूपा हि ब्राह्मणाः ॥
हुङ्कारं ब्राह्मणस्योक्त्वा त्वङ्कारञ्च गरीयसः ।
स्नात्वा तिष्ठन्नहःशेषमभिवाद्य प्रसादयेत् ॥
ताड़यित्वा तृणेनापि कण्ठे वा बध्यवाससा ।
विवादेनापि निर्जित्य प्रणिपत्य प्रसादयेत् ॥
अवगूर्य्य त्वहोरात्रं त्रिरात्रं क्षितिपातने ।
अतिकृच्छ्रञ्च रुधिरे कृच्छ्रमन्तरशोणिते ॥
नवाहमतिकृच्छ्रं स्यात् पाणिपूरान्नभोजनम् ।
त्रिरात्रमुपवासः स्यादतिकृच्छ्रः स उच्यते ॥
सर्व्वेषामेव पापानां सङ्करे समुपस्थिते ।
शतसाहस्रमभ्यस्ता गायत्री शोधनं परम् ॥

इति पाराशरे धर्म्मशास्त्रे एकादशोऽध्यायः ।

## द्वादशोऽध्यायः ।

दुःस्वप्नं यदि पश्येत्तु वान्ते वा क्षुरकर्म्मणि ।
मैथुने प्रेतधूमे च स्नानमेव विधीयते ॥
अज्ञानात् प्राश्य विण्मूत्रं सुरां वा पिबते यदि ।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥
अजिनं मेखला दण्डो भैक्षचर्य्या व्रतानि च ।
निवर्त्तन्ते द्विजातीनां पुनःसंस्कारकर्म्मणि ॥
स्त्रीशूद्रस्य तु शुद्ध्यर्थं प्राजापत्यं विधीयते ।
पञ्चगव्यं ततः कृत्वा स्नात्वा पीत्वा विशुद्ध्यति ॥
जलाग्निपतने चैव प्रव्रज्यानाशकेषु च ।
प्रत्यवसितमेतेषां कथं शुद्धिर्विधीयते ॥
प्राजापत्यद्वयेनापि तीर्थाभिगमनेन च ।
वृषैकादशदानेन वर्णाः शुद्ध्यन्ति ते त्रयः ॥
ब्राह्मणस्य प्रवक्ष्यामि वनं गत्वा चतुष्पथम् ।
सशिखं वपनं कृत्वा प्राजापत्यत्रयञ्चरेत् ।
गोद्वयं दक्षिणां दद्याच्छुद्धिः स्वायम्भुवोऽब्रवीत् ।
मुच्यते तेन पापेन ब्राह्मणत्वञ्च गच्छति ॥
स्नानानि पञ्च पुण्यानि कीर्त्तितानि मनीषिभिः ।
आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेव च ॥
आग्नेयं भस्मना स्नानमवगाह्य तु वारुणम् ।
आपोहिष्ठेति च ब्राह्मं वायव्यं रजसा स्मृतम् ॥
यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ।
तत्र स्नाने तु गङ्गायां स्नातो भवति मानवः ॥

स्नानार्थं विप्रमायान्तं देवाः पितृगणैः सह ।
वायुभूताद्दि गच्छन्ति तृषार्त्ताः सलिलार्थिनः ॥
निराशास्ते निवर्त्तन्ते वस्त्रनिष्पीड़ने कृते ।
तस्मान्न पीड़येद्वस्त्रमकृत्वा पितृतर्पणम् ॥
विधुनोति हि यः केशान् स्नातः प्रस्रवतो द्विजः ।
आचामेद्वा जलस्थोऽपि स वाह्यः पितृदैवतैः ॥
शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा ।
विना यज्ञोपवीतेन आचान्तोऽप्यशुचिर्भवेत् ॥
जले स्थलस्थो नाचामेज्जलस्थश्च वहिःस्थले ।
उभे स्पृष्ट्वा समाचान्त उभयत्र शुचिर्भवेत् ॥
स्नात्वा पीत्वा क्षुते सुप्ते भुक्ते रथ्योपसर्पणे ।
आचान्तः पुनराचामेद्वासोऽपि परिधाय च ॥
क्षुते निष्ठीविते चैव दन्तोच्छिष्टे तथानृते ।
पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत् ॥
ब्रह्मा विष्णुश्च रुद्रश्च सोमः सूर्य्योऽनिलस्तथा ।
ते सर्वे ह्यपि तिष्ठन्ति कर्णे विप्रस्य दक्षिणे ॥
दिवाकरकरैः पूतं दिवास्नानं प्रशस्यते ।
अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात् ॥
मरुतो वसवो रुद्रा आदित्याश्चादिदेवताः ।
सर्वे सोमे विलीयन्ते तस्मात् स्नानन्तु तद्ग्रहे ॥
खलयज्ञे विवाहे च संक्रान्तौ ग्रहणेषु च ।
शर्वर्य्यां दानमस्त्येषु नान्यत्रेति विनिश्चयः ॥
पुत्रजन्मनि यज्ञे च तथा चात्ययकर्मणि ।
राहोश्च दर्शने दानं प्रशस्तं नान्यदा निशि ॥

महानिशा तु विज्ञेया मध्यस्थप्रहरद्वयम् ।
प्रदोषपश्चिमौ यामौ दिनवत् स्नानमाचरेत् ॥
चैत्यवृक्षश्चितिर्यूपश्चण्डालः सोमविक्रयी ।
एतांस्तु ब्राह्मणः स्पृष्ट्वा सवासा जलमाविशेत् ॥
अस्थिसञ्चयनात् पूर्वं रुदित्वा स्नानमाचरेत् ।
अन्तर्दशाहे विप्रस्य पूर्वमाचमनं भवेत् ॥
सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे ।
सोमग्रहे तथैवोक्तं स्नानदानादिकर्मसु ॥
कुशपूतन्तु यत्स्नानं कुशेनोपस्पृशेद्द्विजः ।
कुशेनोद्धृततोयं यत् सोमपानसमं स्मृतम् ॥
अग्निकार्य्यात् परिभ्रष्टाः सन्ध्योपासनवर्जिताः ।
वेदञ्चैवानधीयानाः सर्वे ते वृषलाः स्मृताः ॥
तस्माद्वृषलभीतेन ब्राह्मणेन विशेषतः ।
अध्येतव्योऽप्येकदेशो यदि सर्वं न शक्यते ॥
शूद्रान्नरसपुष्टस्याप्यधीयानस्य नित्यशः ।
जपतो जुह्वतो वापि गतिरूर्द्ध्वा न विद्यते ॥
शूद्रान्नं शूद्रसम्पर्कः शूद्रेण तु सहासनम् ।
शूद्राज्ज्ञानागमश्चापि ज्वलन्तमपि पातयेत् ॥
मृतसूतकपुष्टाङ्गो द्विजः शूद्रान्नभोजने ।
अहं तां न विजानामि कां कां योनिं गमिष्यति ॥
गृध्रो द्वादश जन्मानि दश जन्मानि शूकरः ।
श्वयोनौ सप्तजन्म स्यादित्येवं मनुरब्रवीत् ॥
दक्षिणार्थं तु यो विप्रः शूद्रस्य जुहुयाद्धविः ।
ब्राह्मणस्तु भवेच्छूद्रः शूद्रस्तु ब्राह्मणो भवेत् ॥

मौनव्रतं समाश्रित्य आसीनो न वदेद्द्विजः ।
भुञ्जानो हि वदेद्यस्तु तदन्नं परिवर्जयेत् ॥
अर्द्धे भुक्ते तु यो विप्रस्तस्मिन् पात्रे जलं पिबेत् ।
हतं दैवञ्च पित्र्यञ्च आत्मानञ्चोपघातयेत् ॥
भाजनेषु च तिष्ठत्सु स्वस्ति कुर्वन्ति ये द्विजाः ।
न देवा तृप्तिमायान्ति निराशाः पितरस्तथा ॥
गृहस्थस्तु यदा युक्तो धर्ममेवानुचिन्तयेत् ।
पोष्यधर्मार्थसिद्ध्यर्थं न्यायवर्त्ती सुबुद्धिमान् ॥
न्यायोपार्जितवित्तेन कर्त्तव्यं ह्यात्मरक्षणम् ।
अन्यायेन तु यो जीवेत् सर्वकर्मबहिष्कृतः ॥
अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः ।
दृष्टमात्रं पुनन्त्येते तस्मात् पश्येत्तु नित्यशः ॥
अरणिं कृष्णमार्जारश्चन्दनं सुमणिं घृतम् ।
तिलान् कृष्णाजिनं छागं गृहे चैतानि रक्षयेत् ॥
गवां शतं सैकवृषं यत्र तिष्ठत्ययन्त्रितम् ।
तत्क्षेत्रं दशगुणितं गोचर्म परिकीर्त्तितम् ॥
ब्रह्महत्यादिभिर्मर्त्त्यो मनोवाक्कायकर्मजैः ।
एतद्गोचर्मदानेन मुच्यते सर्वकिल्बिषैः ॥
कुटुम्बिने दरिद्राय श्रोत्रियाय विशेषतः ।
यद्दानं दीयते तस्मै तदायुर्वृद्धिकारकम् ॥
आषोडशदिनादर्वाक् स्नानमेव रजस्वला ।
अत ऊर्द्धं त्रिरात्रं स्यादुशना मुनिरब्रवीत् ॥
युगं युगद्वयञ्चैव त्रियुगञ्च चतुर्युगम् ।

चाण्डालसूतिकोदक्यापतितानामधः क्रमात्॥
ततः सन्निधिमात्रेण सचेलं स्नानमाचरेत्।
स्नात्वावलोकयेत् सूर्य्यमज्ञानात् स्पृशते यदि॥
वापीकूपतडागेषु ब्राह्मणो ज्ञानदुर्बलः।
तोयं पिबति वक्त्रेण श्वयोनौ जायते ध्रुवम्॥
यस्तु क्रुद्धः पुमान् भार्य्यां प्रतिज्ञयाप्यगम्यताम्।
पुनरिच्छति तां कान्तां विप्रमध्ये तु श्रावयेत्॥
श्रान्तः क्रुद्धस्तमोऽन्धो वा क्षुत्पिपासाभयार्द्दितः।
दानं पुण्यमकृत्वा च प्रायश्चित्तं दिनत्रयम्॥
उपस्पृशेत्त्रिषवणं महानद्युपसङ्गमे।
चीर्णान्ते चैव गां दद्याद्ब्राह्मणान् भोजयेद्दश॥
दुराचारस्य विप्रस्य निषिद्धाचरणस्य च।
अन्नं भुक्त्वा द्विजः कुर्य्याद्दिनमेकमभोजनम्॥
सदाचारस्य विप्रस्य तथा वेदान्तवादिनः।
भुक्त्वान्नं मुच्यते पापादहोरात्रान्तरान्नरः॥
ऊर्द्धोच्छिष्टमधोच्छिष्टमन्तरीक्षमृतौ तथा।
कृच्छ्रत्रयं प्रकुर्वीत आशौचमरणे तथा॥
कृच्छ्रं देव्ययुतञ्चैव प्राणायामशतत्रयम्।
पुण्यतीर्थेऽनार्द्रशिरः स्नानं द्वादशसंख्यया।
द्वियोजनं तीर्थयात्रा कृच्छ्रमेकं प्रकल्पितम्॥
गृहस्थः कामतः कुर्य्याद्रेतसः स्खलनं भुवि।
सहस्रन्तु जपेद्देव्याः प्राणायामैस्त्रिभिः सह॥
चातुर्वैद्योपपन्नस्तु विधिवद्ब्रह्मघातके।

समुद्रसेतुगमनप्रायश्चित्तं विनिर्दिशेत्॥
सेतुबन्धपथे भिक्षां चातुर्वर्ण्यात् समाचरेत्।
वर्जयित्वा विकर्मस्थांश्छत्रोपानद्विवर्जितः॥
अहं दुष्कृतकर्मा वै महापातककारकः।
गृहद्वारेषु तिष्ठामि भिक्षार्थी ब्रह्मघातकः॥
गोकुलेषु वसेच्चैव ग्रामेषु नगरेषु च।
तथा वनेषु तीर्थेषु नदीप्रस्रवणेषु च॥
एतेषु ख्यापयन्नेनः पुण्यं गत्वा तु सागरम्।
दशयोजनविस्तीर्णं शतयोजनमायतम्॥
रामचन्द्रसमादिष्टं नलसञ्चयसञ्चितम्।
सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति॥
यजेत वाश्वमेधेन राजा तु पृथिवीपतिः॥
पुनः प्रत्यागतो वेश्म वासार्थमुपसर्पति।
सपुत्रः सह भृत्यैश्च कुर्य्याद्ब्राह्मणभोजनम्॥
गाश्चैवैकशतं दद्याच्चातुर्वैद्येषु दक्षिणाम्।
ब्राह्मणानां प्रसादेन ब्रह्महा तु विमुच्यते॥
सवनस्थां स्त्रियं हत्वा ब्रह्महत्याव्रतं चरेत्॥
मद्यपश्च द्विजः कुर्य्यान्नदीं गत्वा समुद्रगाम्॥
चान्द्रायणे ततश्चीर्णे कुर्य्याद्ब्राह्मणभोजनम्।
अनडुत्सहितां गाञ्च दद्याद्विप्रेषु दक्षिणाम्॥
अपहृत्य सुवर्णं तु ब्राह्मणस्य ततः स्वयम्।
गच्छेन्मुषलमादाय राजाभ्यासं वधाय तु॥
ततः शुद्धिमवाप्नोति राज्ञासौ मुक्त एव च।

कामकारकृतं यत् स्यात्तस्य वधमर्हति ॥
आसनाच्छयनाद्यानात् सम्भाषात् सहभोजनात्।
संक्रामन्ति हि पापानि तैलबिन्दुरिवाम्भसि ॥
चान्द्रायणं यावकश्च तुलापुरुष एव च ॥
गवाञ्चैवानुगमनं सर्वपापप्रणाशनम् ॥
एतत् पाराशरं शास्त्रं श्लोकानां शतपञ्चकम्।
द्विनवत्या समायुक्तं धर्मशास्त्रस्य संग्रहः ॥
यथाध्ययनकर्माणि धर्मशास्त्रमिदं तथा।
अध्येतव्यं प्रयत्नेन नियतं स्वर्गगामिना ॥
इति पाराशरे धर्मशास्त्रे द्वादशोऽध्यायः ॥

समाप्ता चेयं पराशरसंहिता ॥

# अथ बृहत्पराशरसंहितायाम् ।

## प्रथमोऽध्यायः ।

अज्ञाजकाय देवाय वेधसेऽनन्ततेजसे ।
नमस्कृत्वा प्रवक्ष्यामि धर्मान् पाराशरोदितान् ॥
यथासौ हिमशैलाग्रे देवदारुवनाश्रमे ।
व्यासमेकाग्रमासीनमृषयः प्रष्टुमागताः ॥
मानुषाणां हितं धर्मं वर्त्तमाने कलौ युगे ।
वर्णानामाश्रमाणाञ्च किञ्चित्साधारणं वद ॥
युगे युगेषु ये प्रोक्ता धर्मा मन्वादिभिर्मुने ! ।
वाच्यं तेनैव ते कर्त्तुं वर्णैराश्रमवासिभिः ॥
स पृष्टो मुनिभिर्व्यासो मुनिभिः परिवेष्टितः ।
प्रष्टुं जगाम पितरं धर्मान् पाराशरं ततः ॥
सर्वेषामाश्रमाणाञ्च वरे बदरिकाश्रमे ।
स विवेशाश्रमे तस्मिन् तनुं योगीव वेधसः ॥
नानापुष्पलताकीर्णे फलपुष्पैरलङ्कृते ।
नदी प्रस्रवणानेकैः पुण्यतीर्थोपशोभिते ॥
मृगपक्षिभिराकीर्णे देवतायतनावृते ।
यक्ष गन्धर्व सिद्धैश्च नृत्यगीतसमाकुले ॥

तस्मिन्नृषिसभामध्ये शक्तिपुत्रः पराशरः ।
सुखासीनो महातेजा मुनिमुख्यगणावृतः ॥
कृताञ्जलिपुटो भूत्वा व्यासस्तु मुनिभिः सह ।
प्रदक्षिणाभिवादैश्च मुनिभिः प्रतिपूजितः ॥
ततः सन्तुष्टमनसा पाराशरमहामुनिः ।
व्यासस्य स्वागतं ब्रूयात् आसीनो मुनिपुङ्गवः ॥
वशस्य स्वागतं तेन आसीनानां समन्ततः ।
कुशलं कुशलेत्युक्त्वा व्यासः पृच्छ ततः परम् ॥
यदि जानासि मां भक्तं स्नेहाद्वा यदि वत्सल ।
धर्मं कथय मे तात ! अनुग्राह्यो ह्यहं यदि ॥
श्रुतास्तु मानवा धर्मा गार्गीया गौतमास्तथा ।
वाशिष्ठाः काश्यपाश्चैव तथा गौपालकस्य च ॥
आत्रेया विष्णुसम्वर्त्ता दाक्षायाङ्गिरसस्तथा ।
शातातपाश्च हारीता याज्ञवल्क्यकृतास्तथा ॥
आपस्तम्बकृता धर्माः शङ्खलिखितास्तथा ।
कात्यायनकृताश्चैव प्राचेतसकृतास्तथा ॥
श्रुतिरात्मोद्भवा तात ! श्रुत्यर्था मानवाः स्मृताः ।
मन्वर्थ सर्वधर्माणां कृतादि त्रियुगेषु च ॥
धर्मन्तु त्रियुगाचारं स किन्तु कलौ युगे ।
वर्णानामाश्रमाणाञ्च किञ्चित्साधारणं वद ॥
व्यासवाक्यावसाने तु मुनिमुख्यः पराशरः ।
सुखासीनो महातेजा इदं वचनमब्रवीत् ॥
छिद्यन्ते नैव वेदाश्च नैवात्र प्रभवन्ति ते ।
न कश्चिद्वेदकर्त्तास्ति वेदस्मर्त्ता चतुर्मुखः ॥

तथा स्वधर्मं स्मरन्ति कल्पे कल्पान्तरान्तरे ।
अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे ॥
अन्ये कलियुगे नृणां युगरूपानुरूपतः ।
तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ॥
द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ।
कृते तु मानवा धर्मास्त्रेतायां गौतमस्य च ॥
द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः ॥
त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ॥
द्वापरे कुलमेकन्तु कर्त्तारन्तु कलौ युगे ।
कृते सम्भाष्य पततिस्त्रेतायां स्पर्शनेन च ॥
द्वापरे मत्तयोऽवस्य कलौ पतति कर्मणा ।
अभिगम्य कृते दानं त्रेतास्वाहूय दीयते ॥
द्वापरे याच्यमानन्तु सेवया दीयते कलौ ।
अभिगम्योत्तमन्दानम् आहूतश्चैव मध्यमम् ॥
अधमं याच्यमानं स्यात् सेवादानन्तु निष्फलम् ॥
कृते त्वस्थिगताः प्राणास्त्रेतायां मांसमेव च ॥
द्वापरे रुधिरं यावत्कलौ त्वन्नाद्यमेव च ।
कृते तात्कालिकः शापस्त्रेतायां दशभिर्दिनैः ॥
मासेन द्वापरे श्रेयः कलौ संवत्सरेण तु ।
युगे युगेषु ये धर्मास्तेषु धर्मेषु ये द्विजाः ॥
ते द्विजा नावमन्तव्या युगरूपा द्विजोत्तमाः ।
धर्मश्च सत्यमायुश्च तुर्यांशेन कलौ युगे ॥ ६
पद्मनाभादमन्यस्य तुच्छमासुरमाश्रितः ।
धर्मस्य लोकदम्भार्थं पाषण्डार्थं तपस्विनः ॥

विविधा वाग्व्ययनार्थं कलौ सत्यानुसारिणी।
अल्पक्षीरप्रदा गावो ह्यल्पसस्या च मेदिनी॥
स्त्रीजनस्य स्त्रियः सर्वा रत्यर्थं स्वतमैथुनाः।
पुरुषाश्च जिताः स्त्रीभी राजानो दस्युभिर्जिताः॥
जितो धर्मश्च पापेन सत्यं वानृतेन तथा जितम्।
शूद्राश्च ब्राह्मणाचाराः शूद्राचारास्तथा द्विजाः॥
अन्त्यानुयायिनश्चान्ये वर्णास्तदुपजीविनः।
कृतन्तु ब्राह्मणयुगं त्रेता तु क्षत्रियं युगम्॥
वैश्यन्तु द्वापरयुगं कलिः शूद्रयुगं स्मृतम्।
चातुर्वर्णिकनारीणां तथा तुरीयजन्मनी॥
यतिद्विजाद्युपास्यादि धर्मद्विसंहती कलौ॥
शते नयास्तते दत्ते फलानि युगसस्य सा॥
दत्तेषु दशभिर्याति फलानि स्यात् कलौ युगे।
युगस्वरूपमाख्यातमन्यं निगदतः शृणु॥
वर्णानामाश्रमाणाञ्च सर्वेषां धर्मसाधनम्।
मृगः कृष्णश्चरेद्यत्र स्वभावेन स देशकः॥
वसेत्तत्र द्विजातिस्तु शूद्रो यत्र तु तत्र तु।
हिमवद्विन्ध्ययोर्मध्ये विनशनप्रयागयोः॥
मध्ये तु पावनो देशो मध्यदेशस्ततः परम्।
देशेष्वन्येषु या नद्यो धन्याः सागरगाः शुभाः॥
तीर्थानि यानि पुण्यानि मुनिभिः सेवितानि च।
वसेयु स्तदुपान्तेऽपि समिच्छन्तो द्विजातयः॥
मुनिभिः सेवितत्वाच्च पुण्यदेशः प्रकीर्तितः।
यत्र पानं नपेयस्य देशे अभक्ष्यस्य भक्षणम्॥

इष्टापूर्त्तौ तथा विप्र ! पृथक्कृतयोः फलानि च ।
प्रतिग्रहविधिं सम्यग्यथा तस्य प्रतिक्रिया ॥
विनायकादिशान्तीनां विधयश्च द्विजोत्तमाः ! ।
वानप्रस्थस्य धर्मोऽपि तथा धर्मो यतेरपि ॥
चतुराश्रमभेदोऽपि वपुर्निन्दा तथैव च ।
योगोऽर्चिर्धूमयोर्मार्गौ कालं तत्त्वान्तमेव च ॥
इत्थञ्च तत्परं ध्येयं सर्वमेतत्पराशरः ।
प्रोक्तवान् व्यासमुख्यानां येषां मुनिविभाषितम् ॥
निष्कामः सुव्रतः श्रेयं विप्राणां स्थापनाय च ।
पराशरो व्यास वचो निशम्य
यदाह शास्त्रं चतुराश्रमार्थम् ।
युगानि कल्पश्च समस्तवर्णा
हिताय सख्युस्तव सुव्रतस्य ॥
शक्तिसूनोरनुज्ञातः सुतपाः सुव्रतान्तिकम् ।
चतुर्वर्णाश्रमोपायं हितं शास्त्रं यथाब्रवीत् ॥

इति श्रीबृहत्पराशरीये धर्मशास्त्रे व्यासप्रश्ने शास्त्रसंग्रहोद्देशकथनं नाम प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

पराशरमतं पुण्यं पवित्रं पापनाशनम् ।
चिन्तितं ब्राह्मणार्थाय धर्मसंस्थापनाय च ॥
चतुर्णामपि वर्णानामाचारो धर्मपालनम् ।
आचारभ्रष्टदेहानां भवेद्धर्मपराङ्मुखः ॥

षट्कर्माभिरतो नित्यं देवतातिथिपूजकः ।
हुतशेषन्तु भुञ्जानो ब्राह्मणो नावसीदति ॥
कर्माणि कानीह कथञ्चितानि
कार्याणि वर्णैश्च विभागकानि ।
तेषां समेषाकरणे विधिञ्च
सर्वं प्रसादात्प्रतनुष्व मह्यम् ॥
कर्मषट्कं प्रवक्ष्यामि यत् कुर्वन्ति द्विजातयः ।
गृहस्था अपि मुच्यन्ते संसारे बन्धहेतुभिः ॥
यथोद्दिष्टमकर्म शास्त्रे यच्छ्रुतं श्रुतिदर्शितम् ।
तदुक्तं कर्म तत् पुंसां श्रेयसं पापनाशनम् ॥
सन्ध्या स्नानं जपश्चैव देवतानाञ्च पूजनम् ।
वैश्वदेवं तथातिथ्यं षट्कर्माणि दिने दिने ॥
सन्ध्यामथ प्रवक्ष्यामि दैवताकालनामभिः ।
वर्णर्षिच्छन्दसा युक्तं यद्विधानं यथार्चनम् ॥
यावन्मन्त्रा यथोपास्ति उपस्पर्शनमेव च ।
आवाहनं विसर्गश्च यावद्ध्यानं क्रमेण तु ॥
दिवसस्य च रात्रेश्च सन्धिः सन्ध्येति कीर्त्तिता ॥
सोपास्या सद्द्विजैर्यत्नात् स्याद्यैर्विश्वमुपासितम् ।
मध्याह्नेऽपि च सन्धिः स्यात् पूर्वस्याह्नः परस्य च ॥
पूर्वाह्णे चापराह्णे तु त्रये चेति श्रुतिक्रमात् ।
पूर्वसन्ध्या तु गायत्री ब्राह्मणी हंसवाहना ॥
रक्तपद्मानना देवी रक्तपद्मासनस्थिता ।
रक्ताभरणभूषाङ्गी रक्तमाल्याम्बरा तथा ॥
अक्षमालाभुजा धारा चारुहासाऽमरार्चिता ।

प्रागादित्योदयाद्विद्वान् मुहूर्त्ते वैधवे सति ॥
उत्थायोपासयेत्सन्ध्यां यावत्स्यादर्कदर्शनम्।
विश्वमातः! सुराभ्यर्च्चे! शुभ्रे! गायत्रि! वैधसि! ॥
आवाहयाम्युपास्त्यर्थं एह्येनोऽसि पुनीहि माम्।
सन्ध्या माध्याह्निका श्वेता सावित्री रुद्रदेवता ॥
वृषेन्द्रवाहना देवी बालत्रिशिखधारिणी।
श्वेताम्बरधरा श्वेता नानाभरणभूषिता ॥
श्वेतस्रगक्षमालापि कृतानुरक्तशङ्करा।
जलाधारा धरा धात्री धरेन्द्राङ्गभवाभवा ॥
स्वभाविभातभूराग्रा सुरौघनुतपादुका।
मातर्भवानि! विश्वेशि! विश्वविश्वजनार्च्चिते! ॥
शुभे! वरे! वरेण्या हि आङ्गता हि पुनीहि माम् ॥
सन्ध्या सायन्तनी कृष्णा विष्णुदेवा सरस्वती।
स्वर्गगा कृष्णवस्त्रा तु शङ्खचक्रगदाधरा ॥
कृष्णाभ्रूभूषणैर्युक्ता सर्वज्ञानमया वरा।
सर्ववाग्देवता सर्वा ब्रह्मादिकवसि स्थिता ॥
वीणाक्षमालिका चारुहस्ता स्मिता वरानना।
चतुर्दशजनाभ्यर्च्या कल्याणी शुभकप्रदा ॥
मातर्वाग्देवते! देवि! वरेण्ये! च वरप्रदे! ।
सर्वमङ्गलसंस्तुत्ये! आङ्गते! हि पुनाहि माम् ॥
ब्रह्मेशार्कहरीणान्तु सङ्गमोऽस्तूभयोर्भवेत्।
माध्याह्निकायां सन्ध्यायां सर्वदेवसमागमः ॥
पूजाभिकाङ्क्षिणो येच येच किञ्चिज्जलार्थिनः।
आज्याज्यभागधेया ये येचाग्निहुतभागिनः ॥

सन्ध्यान्युपासतानीह स्थावराणि चराणि च ।
साध्याह्निकामुपेक्षन्ते तेषामाप्यायिका हि सा ॥
यस्तस्यां नार्चयेद्देवान् तर्पयेत पितृंस्तथा ।
भूतान्युपासतानीह सोऽन्धतामिस्रमृच्छति ॥
ईशान्याभिमुखो भूत्वा द्विजः पूर्वमुखोऽपि वा ।
सन्ध्यामुपासयेद्यद्वत्तथावत्तन्निबोधत ॥
आमणिबन्धनाद्धस्तौ पादौ चाजानुतः शुचिः ।
प्रक्षाल्य चाचमेद्विद्वानन्तर्जानुकरो द्विजः ॥
निर्मलाभिः फेनपूताभि र्मनोज्ञाभिः प्रयत्नवान् ।
आचमेद्ब्रह्मतीर्थेन पुनराचमनाच्छुचिः ॥
वक्त्रनिर्मार्जनं कृत्वा हस्तेनैवाधरास्यया ।
अद्भिश्च संस्पृशेत् खानि सर्वाण्यपि विशुद्धयेत् ॥
अङ्गुष्ठेन प्रदेशिन्या सव्यपाणिस्थवारिणा ।
घ्राणं संस्पृश्य नेत्रे च तेन नासिकया श्रुती ॥
नाभिञ्च तत्कनिष्ठाभ्यां वक्षः करतलेन च ।
शिरः सर्वाभिरंशौ च अङ्गुल्यग्रैश्च संस्पृशेत् ॥
अनन्य प्राणसंरोधं कृत्वा चोपस्पृशेत्पुनः ।
अत्रोपस्पर्शने मन्त्रं प्रातः केचित्पठन्ति हि ॥
सूर्यश्च मेति मध्याह्ने पुनस्त्वापो विपर्ययम् ।
मन्त्राभिमन्त्रितं कृत्वा कुशपूतञ्च तज्जलम् ॥
आचम्य विधिवद्धीमान् सन्ध्योपासन माचरेत् ॥
सोङ्कारां चैव गायत्रीं जप्त्वा व्याहृतिपूर्वकम् ।
आपोहिष्ठादि जल्पन्ति छन्दोदेवर्षिपूर्वकम् ॥
छन्दोभिर्विनियोगैश्च मन्त्रन्यासयुतम् ।

एतद्धीनं न कुर्वीत कुर्य्यात् चेत्तत्तदासुरम् ॥
मृत्युभीतैः पुरा देवैरात्मनश्छादनाय च ।
छन्दांसि संस्मृतानीह छादितास्तैरतोऽमराः ॥
छादनाच्छन्द उद्दिष्टं वाससी कृतिरेव वा ।
छन्दोभिरावृतं सर्वं विद्या सर्वत्र नान्यतः ॥
यस्मिन्मन्त्रे तु ये देवा स्तेन मन्त्रेण चिह्नितम् ।
मन्त्रं यद्दैवतं विद्यात् सवितुस्तत्र देवता ॥
येन यदृषिणा दृष्टं सिद्धिः प्राप्ता तु येन वै ।
मन्त्रेण तस्य संप्रोक्तो मुनेर्भावस्तदात्मकः ॥
यत्र कर्मणि चारब्धे जपहोमार्चनादिके ।
क्रियते येन मन्त्रेण विनियोगस्तु स स्मृतः ॥
अस्य मन्त्रस्य वाधोऽयमयं मन्त्रोऽनुवर्त्तते ।
तत्तस्य ब्राह्मणा ज्ञेयं मन्त्रस्येति श्रुतिक्रमः ॥
एतद्धि पञ्चकं ज्ञात्वा क्रियते कर्म यद्द्विजैः ।
तदनन्तफलं तेषां भवेद्वेदनिदर्शनात् ॥
अज्ञानेनापि यन्न्यूनं कुर्य्यात् कर्म द्विजोऽपि यः ।
तेनासौ हन्यते कर्त्ताऽप्यतो गन्ताधमच्छति ॥
कुर्वन्नज्ञो द्विजः कर्म जपहोमादि कञ्चन ।
नासौ तस्य फलश्चिन्देत् कर्ममात्रं हि तस्य तत् ॥
आपद्यते श्वापदगर्तं स्वयं वापि प्रलीयते ।
यातयामानि छन्दांसि भवन्त्यफलदान्यपि ॥
सिन्धुद्वीप ऋषिश्छन्दो गायत्रीच्चन्तु तिस्रषु ।
आपो हि दैवतं प्रोक्त रापोहिष्ठादिषु द्विजाः ॥
गोभिलो राजपुत्रस्तु द्रुपदायामृषिर्भवेत् ।

अनुष्टुभं भवेच्छन्द आपश्चैव तु दैवतम् ॥
सौत्रामण्यावभृतके विनियोगस्य कल्पितः ॥
उदुत्यमृषिः प्रस्कण्वो गायत्रं सूर्य्यदेवता।
चित्रमित्यत्र कुत्सस्तु शर्वरी सूर्य्यदेवता ॥
प्रणवो भूर्भुवः स्वश्च गायत्र्याप ऋचा त्रयम् ॥
अघमर्षणसूक्तस्य ऋषिरेवाघकर्मणा।
छन्दोऽत्रानुष्टुभं प्रोक्त रापश्चैव तु दैवतम् ॥
द्रुपदाघमर्षणं सूक्तं मार्जने व्याहरेदिति।
स्मृतिभिः परिशिष्टैश्च विशेषस्तोयसेचने ॥
उल्काभ्योर्द्द विभागेन कर्त्तव्यः सोऽपि स द्विजैः।
आपोहिष्ठेति त्रिचस्य अष्टाक्षरपदं नव ॥
पादान्ते प्रक्षिपेद्वापि पादमध्येन च क्षिपेत्।
भूमौ मूर्ध्नि तथाकाशे मूर्द्ध्नाकाशे तथा भुवि ॥
एवं वारि द्विजः सिञ्चन् तर्पयेत् सर्वदेवताः।
उदुत्यञ्चित्रं देवाना मुपस्थाने नियोजयेत् ॥
हंसः शुचिः सदित्यादि केचिदिच्छन्ति सूरयः।
अव्याकृतमिदं ह्यासीत् सदेवासुरमानुषम् ॥
सङ्कल्पयात्सृजद् ब्रह्मा सप्तमा व्याहृतीः पुरा।
भूर्भुवः स्वर्मह र्जनस्तपः सत्यं तथैव च ॥
आद्यास्तिस्रो महाप्रोक्ताः सर्वत्रैव नियोजनात्।
अग्निर्वायुस्तथा सूर्य्यो बृहस्पत्याप एव च ॥
इन्द्रश्च विश्वदेवाश्च देवताः समुदाहृताः।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥
त्रिष्टुप् च जगतीचैव छन्दांस्येतान्यनुक्रमात्।

भरद्वाजः काश्यपश्च गौतमोऽत्रिस्तथैव च ॥
विश्वामित्रो जमदग्निर्वशिष्ठश्च ऋषिः क्रमात् ।
एताभिः सकलं व्याप्त मेताभ्यो नास्ति चापरम् ॥
सप्तैते स्वर्गलोका वै सत्यादूर्द्धन्नविद्यते ।
तस्माल्लोकात्परा मुक्ति रर्व्वाचीना यदेतथा ॥
प्राणसंयमनेष्वेता यम्यस्ताः पूर्वकादिभिः ।
ॐमापोज्योतिरित्येतच्छिरः पश्चात्प्रयुज्यते ॥
प्रत्योङ्कारसमायुक्तो मन्त्रोऽयं तैत्तिरीयके ।
अतोङ्कारवदार्षादि विदु र्ब्रह्मविदो जनाः ॥
प्रणवाद्यन्त गायत्री प्राणायामिष्वयं विधिः ।
गायत्र्यादिकच्छिवान्तै र्मन्त्रैश्च प्रागुदीरितैः ॥
उपासीरन्द्विजास्तावद्यावत्रोदेति भास्करः ।
गवां बालपवित्रे या यस्तु सन्ध्यामुपासते ॥
सर्वतीर्थाभिषेकं तु लभते नात्र संशयः ।
गोबालदर्भसारञ्च खड्गं कनकमेव च ॥
दर्भसाक्षतिलं वापि एतैस्तर्पयन्ति द्विजाः ।
स सन्तर्प्य पितॄन्देवानात्मानं त्रिदिवं नयेत् ॥
त्रिंशत्कोट्यस्तु विख्याता मन्देहा नाम राक्षसाः ।
उद्यन्तं ते विवस्वन्तं बलादिच्छन्ति खादितुम् ॥
दिने दिने सहस्रांशु स्तूयमानैरभिद्रुतः ।
भानुर्दीनः कृतस्तेषां तदास्यत्वमिहागतः ॥
घनस्त्रयः च तेषान्तु ह्यभूद्युद्धं सुदारुणम् ।
किं भविष्यति युद्धेऽस्मिन् नित्यभूसुरविस्मयः ॥
प्रक्षिपन्ति च ये याम्या यत्नान्तो विवस्वतः ।

विलयास्ते निवर्त्तन्ते मन्देहानामदर्शनात् ॥
रवेरर्घ्यंयतो ह्यस्मात् यातायाता ह्यशक्तितः।
अप्राप्त वशरीराणां स्वामिनैव लयङ्गताः॥
तेषामश्वमतुल्यानां शफक्षुरणवर्जिताः।
सध्याङ्गा निर्जयाज्जाताः सूर्य्यस्यन्दनवाजिनः॥
ततो देवगणाः सर्वे ऋषयश्च तपोधनाः।
यत्सन्ध्यान्ते उपासीत प्रक्षिपन्ति जलं महत्॥
ओँङ्कारब्रह्मसंयुक्तं गायत्र्या चाभिमन्त्रितम्।
दह्यरंस्तेन ते दैत्या वज्रीभूतेन वारिणा॥
सहस्रांशुरथे तिष्ठन् योऽधीयानश्च तु श्रुतीः।
याज्ञवल्क्यः समीक्षेत ऋषीणामुक्तवांस्ततः॥
मत्वे त्वनुदिवादित्ये सन्ध्योपास्तिकरो भवेत्।
उदिते सति या सन्ध्या बालक्रीडोपमा च सा॥
सन्ध्या येन न विज्ञाता ज्ञात्वा नैव ह्युपासिता।
स जीवन्नेव शूद्रश्च ह्याशु गच्छति सान्वयः॥
मान्त्रं पार्थिवमाग्नेयं वायव्यं दिव्यमेव च।
वारुणं स्नानमस्येति समेतानु क्रमेण तु॥
शन्न आपस्तु वै मान्त्रं मृदालम्भन्तु पार्थिवम्।
भस्मना स्नानमाग्नेयं गोरेणूनानिलं स्मृतम्॥
आतपे सति या वृष्टि र्दिव्यस्नानं तदुच्यते।
बहिर्नद्यादिके स्नानं वारुणं प्रोच्यते बुधैः॥
यत्ध्यानं मनसा विष्णोर्मानसं तत्प्रकीर्त्तितम्।
असामर्थ्येन कायस्य कालशक्त्याद्यपेक्षया॥
तुल्यं फलानि सर्वाणि स्मृत्याह पराशरः।

स्नानानां मानसंस्थानं मन्वाद्यैः परमं स्मृतम् ॥
कृतेन येन मुच्यन्ते गृहस्था अपितु द्विजाः ।
नित्यादीनां त्रयाणां तु स्नानानामौषसं परम् ॥
सद्यः पापहरं प्राहुः प्राजापत्यव्रताधिकम् ।
उषस्युषसि यत्स्नानं क्रियतेऽनुदितेऽरवौ ॥
प्राजापत्येन तत्तुल्यं महापातकनाशनम् ।
प्रातरुत्थाय यो विप्रः प्रातःस्नायी सदा भवेत् ॥
सर्वपापविनिर्मुक्तः परं ब्रह्माधिगच्छति ।
अस्नातो नाचरेत्कर्म जपहोमादि किञ्चन ॥
निद्रान्ते च सुदृष्टानि दुर्विषाणि चरन्ति च ।
अङ्गानि समतां यान्ति उत्तमाद्यधमैः सह ।
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ।
स्रवते च दिवारात्रौ प्रातः स्नानेन शुध्यति ॥
उषःस्नानं प्रशंसन्ति सर्वे च पितरोऽमराः ।
दृष्टादृष्टकरं पुण्यं शंसन्ति पितरोऽपि हि ॥
प्रातःस्नायी हि यो विप्रः सोऽर्हः स्यात्सर्वकर्मसु ।
तत्कृतं कर्म यत्किञ्चित्तत्सर्वं स्याद्यथायथम् ॥
अविद्वान् स्नानकाले तु यः कुर्याद्दन्तधावनम् ।
पापीयान् रौरवं याति पितृणामपहतो ध्रुवम् ॥
यच्च श्मश्रुषु केशेषु यद्वा देहे च लोमसु ।
हस्ताभ्याञ्च न वस्त्रेण जलं विद्वान् हि मार्जयेत् ॥
मार्जन्ते पितरः सर्वे सर्वा अपि च देवताः ।
तथा सर्वे मनुष्याश्च त्यजेरन् नियतं द्विजम् ॥
स्नानं सञ्चिन्तितं सर्वे तीर्थं पितृदिवौकसः ।

ततो नद्याद्यमी गन्धर्वविराधास्ते प्रयान्ति हि ॥
येतु स्नानार्थिनस्तीर्थं सञ्चरन्ति जलाश्रयाः ।
तद्देह मुपतिष्ठन्ति तस्मै पितृदिवौकसः ॥
यतो न विकत्थयेत्तीर्थं व्रजेदेवतु चिन्तितम् ।
देवखातनदीस्रोतःसरःसु स्नानमाचरेत् ॥
स्नानं नद्यादि वन्येषु सद्भिः कार्यं सदम्बुषु ।
खनितन्तोयं कूपस्थं तोयं तत्र तु कृत्रिमम् ॥
न तीर्थे स्याकुले स्नायान्न सन्ततसमाश्रिते ।
दर्भहीनोऽन्यचित्तस्तु न नग्नो न शिरो विना ॥
कदाचिद्विदुषा स्त्रिया न स्नातव्यं परान्नम ।
यमःकृच्छ्रं कृतं तेन स्नानकर्त्तापि लिप्यते ॥
पञ्च वा सप्त वा पिण्डान् स्नायादुद्धृत्य तत्र तु ।
वृथास्नानादिकानीह निमेषेणा विवर्जयेत् ॥
वृथा चोष्णोदकस्नानं वृथा जाप्यमवैदिकम् ।
वृथा चाश्रोत्रिये दानं वृथा भुक्तमसाक्षिकम् ॥
मासे नभसि न स्नायात्कदाचित्सिन्धुगासु च ।
रजस्वला भवन्त्येता वर्जयित्वा समुद्रगाः ॥
नापो मूत्रपुरीषाभ्यां नाग्निर्दहति कर्मणा ।
न स्त्री दुष्यति जारेण न विप्रो वेदकर्मणा ॥
न स्नायात् क्षोभितास्वासु स्वयं न क्षोभयेच्च ताः ।
न निर्गतासु तीर्थाद्य पतन्तीष्वाहतासु च ॥
रविसंक्रान्तिवारेषु ग्रहणेषु शशिक्षये ।
व्रतेषु चैव षष्ठीषु न स्नायादुष्णवारिणा ॥
न स्नायाच्च द्रुहस्तेन नैकहस्तेन वा तथा ।

उष्णाभिरपि स्नायाच्छृताभिर्द्विजातिभिः ॥
स्वभावाभिरनुष्णाभिः स्नातमभिस्तथा द्विजः ।
नवाभिर्निर्झराभिः संसृष्टाभिरन्वतः ॥
यः स्नानमाचरेन्नित्यं तं प्रशंसन्ति देवताः ।
तस्मादङ्गगुणं स्नानं सदा कार्यं द्विजातिभिः ॥
उत्साहाध्यायनस्वास्थ्यप्रज्ञाग्निशक्तिवृद्धिकृत् ।
कीर्त्ति कान्ति वपुः पुष्टि सौभाग्यायुःप्रवर्धनम् ॥
स्वर्गञ्च दशभिर्युक्तं गुणैः स्नानं प्रशस्यते ।
सूर्यादिदिनवारोक्तं तैलाभ्यञ्जनपूर्वकम् ॥
त्वक्तापशोभामरणं सुतलाभान्निधिव्ययः ।
भानुवारादिवारेषु तैलाभ्यङ्गे फलं क्रमात् ॥
जलावगाहनं नित्यं स्नानं सर्वेषु वर्णिषु ।
धर्मोपकरणं कार्यं तस्याथ विधिरुच्यते ॥
गोमयञ्च मृत्कुशांश्चैव पुष्पाणि पत्रिकां तथा ।
स्नानार्थी प्रयतो नित्यं स्नानकाले समाहरेत् ॥
स्वमनोऽभिमतं तीर्थं गत्वा प्रक्षाल्य पादयोः ।
हस्तौ चाचम्य विधिवच्छिखाबन्धं च यत्नतः ॥
मृदम्बुभिश्च गात्राणि क्रमात्प्रक्षालयेद्यथा ।
पादौ जङ्घे कटीञ्चैव क्रमात्प्राणं जलैः स्वभिः ॥
प्रक्षाल्य हस्तौ चाचम्य नमस्कृत्य च तज्जलम् ।
गुह्योपगुह्यम् दृष्ट्वेतद्ब्रह्मणा प्रयताञ्जलिः ॥
उरु देहेति मन्त्रेण कुर्यादापोऽभिमन्त्रिताः ।
विधिज्ञा मुनयः प्रोचुर्मन्त्रतत्त्वार्थवेदिनः ॥
यत्र स्थानेषु यत्तीर्थं नदी पुण्यतरा तथा ।

तां ध्यायेन्मनसा नित्यमन्यतीर्थं न चिन्तयेत् ॥
गङ्गादिपुण्यतीर्थानि प्रतिमादिषु संस्मरेत् ।
तां ध्यायेन्मनसा वापि अन्यतीर्थं न चिन्तयेत् ।
महाव्याहृतिभिः पश्चाद्दाचामित्प्रयतोऽपि सन् ।
उदुत्तम इतित्यस्तु मन्त्रेण प्राङ्मुखो विशेत् ॥
येऽग्नयो दिवि चेत्येतत्कुर्य्यादाचमनं ततः ।
सूर्य्यं पश्यन् जलं मुक्त्वा समुत्तीर्य ततः स्थलम् ॥
पावयस्व चरेन्मातृस्थानन्तथा काशं समालभेत् ।
अश्वक्रान्ते रथक्रान्ते इत्याद्यपि पठन्ति हि ॥
मृत्तिका हरणे चैव इति वासिष्ठकोऽब्रवीत् ।
समालभेत्त्रिभिर्मन्त्रैरिदं विष्णुरितिभिर्द्विजः ॥
शिरश्चांसौ वक्ष उरः पादौ जङ्घे क्रमेण तु ।
भास्कराभिमुखो मज्जेदापो ह्यष्ठानिति त्रिभिः ॥
उद्धृत्य सर्वगात्राणि निमज्ज्याथ पुनः पुनः ।
उत्तीर्य्याचम्य गात्राणि गोमयेनाथ लेपयेत् ॥
मानस्तोक इति स्मृत्वा प्राग्वदङ्गक्रमेण तु ।
इमं मे वरुण ! तत्त्वा सत्यं नय उदुत्तमम् ॥
एवं त्वनुपथेत्येतैरात्मानमभिषेचयेत् ।
निमज्ज्याचम्य चात्मानं दर्भैर्मन्त्रैश्च पावयेत् ॥
हविष्मतीरिमा आप इदमापस्तथैव च ।
देवीराप इति द्वाभ्यामापो देवीरितीत्यृचा ॥
संस्मृत्य द्रुपदां देवीं शन्नो देवीरपां रसम् ।
प्रत्यङ्गं मज्जनवकमापो देवी सुवन्तु माम् ॥
चिन्तितं मां मनास्येतस्यापि च पावयेत् ।

हिरण्यवर्णा इति च पावमाना तथापरे ॥
तरत्समन्दि धावन्ति पवित्राण्यानि शक्तितः ।
स्नानकर्मात्मकैर्मन्त्रै रन्यैरप्यम्बु दैवतैः ॥
शक्त्यात्मानं निमज्याथ शाचान्तस्त्वन्यदाचरेत् ।
कायं कायप्रदेशानां तथा चैवोदकस्य च ॥
प्राशक्त्ये सति चैवायं विधिरन्यो विपर्यये ।
सोङ्कारांश्चैव गायत्रीं महाव्याहृतिभिः सह ॥
त्रिसन्ध्यं वैकधावर्त्य स्नानादिष्टानपि द्विजः ।
च्छन्दोमन्त्रं परैर्युक्तं सशान्ताक्षरसंयुतम् ॥
शावर्त्य प्रणवं स्नायाच्छतमर्धशतं दशम् ।
चिद्रूपं परमं ज्योतिर्निरालम्बमनामयम् ॥
अव्यक्तमव्ययं शान्तं स्नायाद्वापि हरिं स्मरेत् ।
गायत्री वारिसंस्नातः प्रणवे निर्मलाशयः ॥
विष्णुस्मरणा संशुद्धि स्त्र्यहं सर्वेषु कर्मसु ।
योऽधीते वेदवेदार्थं सुस्नातः सर्ववारिषु ॥
शुद्धे दशुचिमः स्वान्तस्तच्छु,द्धस्तु शुचिर्यतः ।
मन्त्रैश्च मनसा स्नानं नो गोमयब्रदम्बुभिः ॥
तैस्चेन्नोप्युरमत्याच स्नानस्य फलमाप्नुयुः ।
भाव पूत पवित्रः स्यान्मन्त्रपूत स्तथा नरः ॥
उभयेन पवित्रस्तु नित्यस्नायी शुचिर्नरः ।
विधिदृष्टं तु यत्कर्म करोतु विधिना नरः ॥
न किञ्चित् फलमाप्नोति क्लेशमात्रं हि तस्य तत् ।
उत्पद्यन्ते जले मत्स्या विपद्यन्ते तु तत्र च ॥
तिष्ठन्तोऽपि च ते स्नाने फलं नैवाप्नुयुर्हताः ।

विधिहीनं भवेद्दुष्टं कृतमश्रद्धयापि च ॥
तद्धरन्त्यसुरास्तस्य मूढत्वादकृतात्मनः ।
अतोविधिसमायुक्तं कर्म यत्क्रियते नृभिः ॥
शुचिभिस्तैकचित्तैस्तु तदनन्ताय कल्पते ।
उदात्तमनुदात्तञ्च विसर्गान्तं तथैवच ॥
द्रुतञ्च स्वरितोदात्तं स्वरं विद्यात्तथा प्लुतम् ।
स्वरान्तं व्यञ्जनान्तञ्च विसर्गान्तं तथैवच ॥
सानुस्वारं पृथक्कृत्य ज्ञातमध्यपरंच यत् ।
हत्वं शतक्रतुर्हन्ति वज्रेण शतपर्वणाम् ॥
यथा तथा प्रवक्तारं मन्त्रहीनं स्वरादिभिः ।
स्वरतो वर्णतः सम्यक् सन्ध्याध्यानजपादिषु ॥
सर्वे मन्त्राः प्रयोक्तव्याः हीनाः सुरफला नृणाम् ।
नाभेरधस्तादङ्गानि क्षालयित्वा मृदम्भसा ॥
उपविष्टः सिक्तवस्त्रो मन्त्रैः प्रोक्ष्य शुचिर्भवेत् ।
चतुरश्चतुरस्त्वङ्घ्रो द्वौ द्वौ च जङ्घयोस्तथा ॥
द्वौ द्वौ च जान्वोर्नोर्य्यस्य ऊर्वोः पञ्च च पञ्च च ।
द्वावश्वेवं तथा गुह्ये दश द्वादश वक्षसोः ॥
द्वौ द्वौ गले च बाह्वोश्च द्वौ द्वे च सुमुखेऽप्यपि ।
द्वौ द्वौ च चक्षुषोः श्रुत्योः मतोङ्कारास्च मूर्द्धनि ॥
न्यस्तप्रणवसर्वाङ्गः स्नातः स्यात्सर्ववारिषु ।
अकारं मूर्ध्नि विन्यस्य उकारं नेत्रमध्यतः ॥
मकारं कण्ठदेशेतु ब्रह्मीभवति वै द्विजः ।
अनङ्गाक्लिष्टधौतेतु विद्वांश्च रक्तवाससी ॥
परिधाय मृदम्बुभ्यां करौ पादौ च मार्जयेत् ।

तद्वाससोरसम्पत्तौ क्षौमक्षौमाविकानि च ॥
कुतपं योगपट्टं वा द्विवासास्तु यथा भवेत्।
न जीर्णं नीलकाषायं माञ्जिष्ठेन च वाससा ॥
मूलाद्युपगतेनैव शुचिः स्यान्नैकवाससा।
एकं वासो यथा प्राप्तं परिधाय मनः शुचिः ॥
बद्ध्वा कृत्वोत्तरासङ्गम् आचम्य प्राङ्मुखः स्थितः।
प्रत्योङ्कारसमायुक्ताः प्रणवाद्युतकास्तथा ॥
महाव्याहृतयः सप्त दैवतार्षादिसंयुतम्।
प्रणवाद्यन्त गायत्र्या तस्याः शिरस्तथैव च ॥
त्रिरावर्त्तनमेतस्याः प्राणायामो विधीयते।
शक्त्या सुसंयमं कृत्वा तथाचम्य विधानतः ॥
उपास्य विधिवत्सन्ध्यामुपस्थाय च भास्करम्।
गायत्रीं शक्तितो जप्त्वा तर्पयेद्देवताः पितॄन् ॥
अन्वारब्धेन तोयेन पाणिना दक्षिणेन तु।
तृप्यता मिति वक्तव्यं नाम्ना तु प्रणवादिना ॥
ब्रह्मेशकेशवान् पूर्वं प्रजापतिमथाश्रुतिम्।
छन्दो यज्ञानृषीन् सिद्धानाचार्यान् साम्परायिनः ॥
गन्धर्ववत्सरर्तूंश्च मासान्दिननिशानि च।
देवान्देवानुगांश्चापि नागान् नागकुलानि च ॥
सरितः सागरांस्तीर्थान् पर्वतान् कुलपर्वतान्।
किन्नरान् खेचरान्यक्षान्मनुष्यानथ तर्पयेत् ॥
सनकश्च सनन्दश्च तृतीयश्च सनातनः।
आसुरिः कपिलश्चैव वोढः पञ्चशिखस्तथा ॥
मानुषान् यातुधानांश्च तेषाञ्चैव कुलान्यपि।

सुपर्णांश्च पिशाचांश्च भूतान्यच्च मरूंस्तथा ॥
वनस्पतींश्चौषधीश्च भूतग्रामं चतुर्विधम् ।
ब्रह्मादयो मया हूता आगत्य ददतु क्षम: ॥
अनुग्रहं मां प्रकुर्वन्तु प्रसीदन्तु ममोपरि ॥
तत: पूर्वाग्रदर्भेषु साग्रेषु सकुशेषु च ॥
मार्जनीयेषु शुद्धेषु ब्रह्मादिभ्योऽम्बुनिक्षिपेत् ।
अन्वारब्धापसव्येन पार्श्वेन दक्षिणेन तु ॥
दक्षिणं जानु भूलग्नो देवेभ्य: सोपवीतकम् ।
देवेभ्यश्च नम: स्वाहा पितृभ्यश्च नम: स्वधा ॥
मन्यन्ते कवय: केचिदित्येष तर्पणक्रम: ।
तर्पमाणेषु कर्मत्वं निजत्वञ्च क्रियापदम् ॥
तर्पयामि पितृन्देवानित्यङ्कुर्वपरे पुन: ।
सिच्यमानेन तोयेन मन्यन्ते सुमयोऽपरे ॥
देवास्तृप्यन्तु पितर: तृप्यन्त्विति विसर्जनम् ।
उदीरतामङ्गिरस आयन्तु नोऽग्निमित्यपि ॥
पितृभ्यश्च स्वधायिभ्यो ये चेह नियतास्तथा ।
अग्निष्वात्ताश्च हुताश्च तथा बर्हिषदोऽपि च ॥
येन पूर्वे च पितर: सोमपाना मुदीरयेत् ।
आवाह्य च पितॄनेतैरथ सव्योपवीतिना ॥
दक्षिणाभिमुखो द्वाभ्याङ्कराभ्यामम्बु सेचयेत् ।
भूलग्न सव्यजानुश्च दक्षिणाग्रकुशेषु च ॥
रुक्मरौप्यतिलैस्ताम्रदर्भमन्त्रै: क्षिपेत्पय: ।
विना रौप्यसुवर्णाभ्यामथवा ताम्रतिलैरपि ॥

विना दर्भैश्च मन्त्रैश्च पितृणां नोपतिष्ठति ।
दर्भे सोहितदर्भैश्च कापवीरणवल्वजैः ॥
शुकपाण्यङ्गवैर्वापि दर्भकार्यं भवेद्द्विजः ।
न तर्पयेत्पतन्तीभिर्यद्दाकङ्गिः कथञ्चन ॥
पावन्याभिः सदर्भाभिः सतिलाभिश्च तर्पयेत् ।
वसून् रुद्रांस्तथादित्यान्नमस्कारस्वधान्वितान् ॥
एते च दिव्यपितर एतदायत्तमानुषाः ।
ध्रुवोऽध्वरश्च सोमश्च आपश्चैवानलोऽनिलः ॥
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ।
अजैकपाद् हि बुध्नीर्विरूपाक्षोऽथ रैवतः ॥
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ।
सावित्रश्च जयन्तश्च पिनाकीत्यपराजितः ॥
एते रुद्राः समाख्याता एकादश सुरोत्तमाः ।
इन्द्रो धाता भगः पूषा मित्रोऽथ वरुणोऽर्यमा ॥
अंशुर्विवस्वांस्त्वष्टा च सविता विष्णुरेव च ।
एते वै द्वादशादित्या देवानां परमाः स्मृताः ॥
एवञ्च दिव्याः पितरः पूज्याः सर्वे प्रयत्नतः ।
कव्यवालोऽनलः सोमो यमश्चैव तथार्यमा ॥
अग्निष्वात्ताः सोमपाश्च तथा बर्हिषदोऽपि च ।
एते चान्ये च पितरः पूज्याः सर्वे प्रयत्नतः ॥
एतैस्तु तर्पितैः सर्वैः पुरुषास्तर्पिता इभिः ।
यमश्च धर्मराजश्च मृत्युश्चैव तथान्तकः ॥
वैवस्वतश्च कालश्च सर्वभूतक्षय स्तथा ।
औदुम्बरश्च नीलश्च दध्नश्च परमेष्ठिना ॥

चित्रश्च चित्रगुप्तश्च वृकोदर स्तथार्यमा ।
एतैस्तु तर्पितैः सद्भिर्विवस्वांस्तर्पितो हरिः ॥
तस्मात्प्राक् तर्पयित्वैतान् पितॄंस्तर्पयेत्ततः ।
मातामहान्मातुलांश्च सखिसम्बन्धबान्धवान् ॥
स्वजनज्ञातिवर्गांश्चानुपाध्यायान् गुरूनपि ।
मित्रान् भृत्यानपत्यांश्च ये भवन्ति तदा स्मृतौ ॥
तान् सर्वांस्तर्पयेद्विद्वान् दूरस्थे ते यतो जलम् ।
जलस्थश्च जले सिञ्चेत् स्थलस्थश्च तथा स्थलम् ॥
पादौ स्थाप्याभयत्रैव भवेत्तूभयतः शुचिः ।
गोशृङ्गमात्र मुत्क्षिप्य करौ विप्रो जले स्थितः ।
अम्बरे तु क्षिपेद्वारि चाकाशे दक्षिणामुखः ॥
पितॄणां स्थानमाकाशं दक्षिणादिक्तथैव च ।
स्थलगो नार्द्रवासास्तु कुर्य्याद्वै तर्पणादिकम् ॥
प्रेताहुते नार्द्रवासा नैकवासाः समाचरेत् ।
एवं हि तर्पणं कृत्वा सर्वेषां विधिवद्द्विजः ॥
निष्पीड़येत् स्नानवस्त्रं येन स्नातो भवेद्द्विजः ।
निष्पीड़यति यः पूर्वं स्नानवस्त्र मजानतः ॥
निराशाः पितरस्तस्य यान्ति देवाः सहर्षिभिः ।
निष्पीड़येत् स्नानवस्त्रं तिलदर्भैः समन्वितम् ॥
न पूर्वं तर्पणाद्वस्त्रं नैवाम्भसि न पादयोः ।
एषु चेत्पीड़येद्वस्त्रं राक्षसं तदतिक्रमात् ॥
वस्त्रनिष्पीड़ने मन्त्र मिमं श्लोक मुदाहरेत् ।

तिलदर्भसमायुक्तं कुर्यात्सर्वदेहिनाम् ॥
ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः ।
तेषां तु दत्तमक्षय्यमिदमस्तु तिलोदकम् ॥
पितृवंशे मृता ये च मातृवंशे तथैव च ।
एवं तृप्तिमभ्येतु तेषां तिलैस्तु सह वारिभिः ॥
यदप्सु मलनिक्षेपः शौचस्नानादि कुर्वताम् ।
तस्य पापव्ययोहार्थमिमं मन्त्रमुदीरयेत् ॥
यन्मया दूषितं तोयं मलैः शरीरसम्भवैः ।
तस्य पापस्य निष्कृत्यै यक्ष्मणस्तत्र तृप्यताम् ॥
यक्ष्मेभ्योऽथ यक्ष्मभ्यो ददामीदं जलाञ्जलिम् ।
अन्यथा घ्नन्ति ते सर्वं सुकृतं पूर्वसञ्चितम् ॥
अपुत्रा ये मृताः केचित्पुमांसो योषितोऽपि वा ।
तस्मिन्वंशे पितृभ्यो वै दत्तं वस्त्रजलं मया ॥
नास्तिक्येनापि यो विप्र तर्पयेत्पितृदेवताः ।
स तत्तृप्तिकरो धर्मात् प्राप्नुयात्परमां गतिम् ॥
नास्तिक्याद्वसुतो यस्तु तर्पयेन्न पितॄन् द्विजः ।
पिबन्ति देहिनं स्रावं पितरस्तज्जलार्थिनः ॥
पितॄणां पितृतीर्थेन देवानां देवतेन तु ।
इति मत्वा तु कुर्वीत बुधस्तु स्वकर्मधिनः ॥
पञ्च तीर्थानि विप्रस्य करे समाश्च दक्षिणे ।
ब्राह्मं दैवं तथा पित्र्यं प्राजापत्यन्तु सौमिकम् ॥
ब्राह्मं पश्चिमरेखायां दैवमङ्गुलमूर्धनि ।
प्राजापत्यं कनिष्ठादौ मध्ये सौम्यं विजानतः ॥

अङ्गुष्ठस्य प्रदेशिन्या मध्ये पित्र्यं प्रतिष्ठितम् ।
कुर्य्यादहरहश्चैवं सम्यक् प्राणि विधानतः ॥
स प्राप्नुयाद्गृहस्थोऽपि ब्रह्मणः पद मव्ययम् ।
स्नात्वा हुत्वा च जप्त्वा च दत्त्वाचैव तु योऽश्नुते ॥
अमृतं सोऽश्नुते नित्यं तस्य स्यान मनामयम् ।
अस्नात्वाश्नुमलं भुङ्क्ते अजप्त्वा पूयशोणितम् ॥
अहुत्वा च कृमीन् कीटान् अदत्त्वा मलस्तथा ।
आह्लादकरणं स्नानं दुःखशोकापहन्तथा ॥
दुःस्वप्ननाशनञ्चैव कार्य्यं स्नानमतः सदा ।
चित्तप्रसाद बलरूप तपांसि मेधा
मायुष्यशौचसुभगत्वमरोगिताञ्च ।
ओजस्वितान्विषय मदात्पुरुषस्य वीर्यम्
स्नानं यशोविभवसौख्यमलोलुपत्वम् ॥
शौनकाद्यैर्द्विजसत्तमस्तुतः
प्राप्तो मयायञ्च वशिष्ठपौत्रतः ।
पापप्रनाशं वितनोति यः श्रुतः
प्रचोदितः स्नानविधिः सतेप्सः ॥
उद्देशतो मया प्रोक्तः स्नानस्य परमो विधिः ।
द्विजन्मनां हितार्थन्तु अपस्नातः परं विधिः ॥

इति श्रीवृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां संहितायां षट्कर्मस्नानविधिर्नाम तृतीयोऽध्यायः । ३ ।

## चतुर्थोऽध्यायः ।

अथस्यातः प्रवक्ष्यामि विधिं पराशरोदितम् ।
यावद्विधं जपं यद्वद्यथा कार्यं द्विजातिभिः ॥
जप्यानि ब्रह्मसूक्तानि शिवसूक्तानि चैव हि ।
वैष्णवानि च सूक्तानि तथा पौराण्यमेकधा ॥
सारस्वतानि दौर्गाणि वारुण्याग्नेनलानि च ।
पौराणिकानि चान्यानि तथा सिद्धान्तिकानि च ॥
सर्वेषां जपसूक्तानां ऋचां च यजुषां तथा ।
साम्नां चैकाक्षरादीनां गायत्री परमो जपः ।
तस्याश्चैव तु ॐकारो ब्राह्मणाय उपासितः ।
साभ्यां तु परमं जप्यं त्रैलोक्येऽपि न विद्यते ॥
तयोश्च देवतार्षादि समासात्तोऽभिधीयते ।
येन विज्ञानमात्रेण द्विजो ब्रह्मत्वमश्नुते ॥
आसीन्नच यदा किञ्चित्सदेवासुरमानुषैः ।
तदेवाक्षरमेवासीदात्मविन्यस्तविग्रहः ॥
गतभीरद्वितीयोऽपि एकाकी दिवि मोदते ।
चिन्तयामास गायत्रीं प्रत्यक्षा साऽभवत्तदा ॥
गायत्री सा भवत्यत्नी प्रणवोऽभूत्पतिस्तथा ।
पुनरन्यौ च दम्पत्याविति ताभ्यां समूज्जगत् ॥
प्रणवो हि परं तत्वं त्रिदेवं त्रिगुणात्मकम् ।
त्रिदेवत्वं त्रिधामश्च त्रिपदं त्रिरवस्थितम् ॥
त्रिमानश्च त्रिकालश्च त्रिलिङ्गं कवयो विदुः ।

दुस्तार संसारपयोधिमग्न-
तारार्थ विष्णुप्रभवः स पुण्यः ॥
अकामुद्देशतो चैतत् कृप शैवाचरास्य च ।
यथा च सततं देवी गायत्री साधुनोच्यते ॥

इति श्रीबृहत्पाराशरीये षट्कर्माणि स्वरूपवर्णनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

गायत्र्याः संप्रवक्ष्यामि देवार्षादिकमेण तु ।
अक्षराणाञ्च विन्यासं तेषाञ्चैव तु देवताः ॥
जपे यथाविधा कार्य्या यथाविधा च धारयेत् ।
होमे यथा च कर्त्तव्या यथा च चाभिचारके ॥
यत्फलं जपहोमाद्यैः यथावल्लभ्यते च सा ।
ध्यातव्या च यथा देवी यथावर्णाभिबोधन ॥
गायत्री तु परं तत्त्वं गायत्री परमा गतिः ।
सर्व्वोऽमरैरियं ध्याता इत्थं व्याप्तं तया जगत् ॥
उत्पादयति त्रिपादाद्या तस्यां पुनर्निवेशितम् ।
गायत्री प्रकृतिर्ज्ञेया ॐकारः पुरुषः स्मृतः ॥
ताभ्यामुभयतो योगाज्जगत्सर्वं प्रवर्त्तते ।
पादाश्रये त्रयो वेदा तेषु तत्त्वाक्षराणि च ॥
चतुर्विंशतिरेव स्यात्तैर्व्याप्तमखिलं जगत् ।

आदाय चैकं प्रथमन्तु पादं ऋग्भ्यो द्वितीयन्तु तथा यजुर्भ्यः ।
साम तृतीयन्तु ततो भवेत्सा सावित्र्यदेवी स्वयमेव सर्गे ॥
दैवत्यमस्यां सविता पुराणं छन्दोऽपि गायत्रमभूच्च तस्याम् ।
विश्वस्य मित्रो द्विजराजपुत्रो मुनिर्नियोगस्तु जपादिकेषु ॥
अस्यास्तु तत्त्वाक्षरविंशतिस्तु चत्वारि पादस्त्रितयन्तु तस्याम् ।
भूरादिभिस्त्रिभिः संयुक्तां सोङ्कारमेतद्वदनं परस्याम् ॥
केचिद्भुताग्रं वदनं वदन्ति सौविश्वदेव्याः श्रुतितत्त्वविज्ञाः ।
इमाश्च वक्तुं सकलामराणामित्येतया व्याप्तमशेषमेतत् ॥
भूम्यादिकेन त्रितयेन पादं पादश्च वेदत्रितयेन चास्याः ।
प्राणादिकेन त्रितयेन पादं पादौ त्रिभिर्व्याप्तमशेषमस्याः ॥

यत्कुक्ष्यमस्या द्विज वेत्ति पादं
स वेत्ति विद्वान् परमं पदन्तु ।
वर्णैश्चः पदस्याः सकलापि चैषा
यो वेत्ति चैनां स तु वित्तमः स्यात् ॥
गायत्रीं यो विजानाति ज्ञात्वा नैव उपासयेत् ।
नामधारकमात्रोऽसौ न विप्रो वृषलोऽपि सः ॥
किं वेदैः पठितैः सर्वैः सेतिहासपुराणकैः ।
साङ्गैः सावित्रीहीनेन न विप्रत्वमवाप्यते ॥
गायत्रीमेव यो ज्ञात्वा सम्यगभ्यसते पुनः ।
इहामुत्र च पूज्योऽसौ ब्रह्मलोकमवाप्नुयात् ॥
गायत्री चैव वेदाश्च ब्रह्मणा तोलिताः पुरा ।
वेदेभ्यश्च चतुर्भ्यो गायत्र्यतिगरीयसी ॥
तदक्षरेषु दैवत्यं चतुर्विंशति कथ्यते ।

सन्न्यासं यदि बोधेन कुर्वन् ब्रह्मत्वमाप्नुयात् ॥
जानीयादक्षरं देव्याः प्रथममाग्नेयमुच्यते ।
प्राभञ्जनं द्वितीयन्तु तृतीयं शशिदैवतम् ।
विद्युतञ्च तुरीयन्तु पञ्चमन्तु यमस्य तु ।
षष्ठन्तु वारुणं तत्त्वं सप्तमन्तु बृहस्पतेः ॥
पार्जन्यमष्टमं तत्त्वं नवमं चन्द्रदैवतम् ।
गान्धर्वं दशमं विद्यात्त्वष्टुरेकादशं तथा ॥
मैत्रावरुणमन्यद्वै पुष्णस्तथा त्रयोदशम् ।
चतुर्दशं सुरेशस्य प्रागिदं ब्रह्मणा स्मृतम् ॥
मरुद्देवात्मकं ज्ञेयं पञ्चदशं यदक्षरम् ।
सौम्यञ्च षोडशं तत्त्व माङ्गिरसमथापरम् ॥
विश्वेषाञ्चैव देवाना मष्टादशमथाक्षरम् ।
अश्विनौ चोनविंशन्तु विंशं प्राजापतेर्विदुः ॥
एकविंशं कुवेरस्य द्वाविंशं शङ्करस्य च ।
त्रयोविंशं तथा ब्रह्म चतुर्विंशन्तु वैष्णवम् ॥
इति ज्ञात्वा द्विजः सम्यक् स सर्वाक्षरदेवताः ।
कुर्वन् जपादिकं कर्म परं श्रेयोऽधिगच्छति ॥
पादाङ्गुष्ठादिमूर्द्धान्त मात्मनो वपुषि न्यसेत् ।
अक्षराणि च सर्वाणि पृथक् ब्रह्मत्वमात्मनः ॥
पादाङ्गुष्ठयुगे त्वेकं एकं गुल्फद्वयोर्द्वयोः ।
जानुनोश्च द्वयोरेकमेकन्तु रेकयोर्द्वयोः ॥
गुह्ये कक्ष्यां तथैकैकं एकैकं जठरे स्तनैः ।
स्तनद्वये तथैकन्तु न्यसेदेकं गले तथा ॥

वक्त्रे त्वाङ्गुलि हृत् स्तनोः स्कन्धयोरेकमेव च।
भ्रुवोर्मध्ये तथैकन्तु ललाटे चैकमेव हि॥
याम्यपश्चिमसौम्येषु एकैक मेकमूर्द्धनि।
गायत्रीन्याससम्पन्नो गायत्री क्षिप्रं उच्यते॥
लिप्यते न स पापेन पद्मपत्रमिवाम्भसि।
यः प्रोक्तोऽक्षरविन्यासो व्याहृतीनामथोच्यते॥
समाप्ति व्याहृतीर्न्यस्य भवेद्योग्यो जपादिषु।
भूर्लोकं पादयोर्न्यस्य भुवर्लोकन्तु जानुनोः॥
स्वर्लोकं कटिदेशे तु नाभिदेशे महस्तथा।
जनलोकन्तु हृदये कण्ठदेशे तपस्तथा॥
भ्रुवोर्ललाटमध्ये च सत्यलोकः प्रतिष्ठितः।
हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्॥
तच्छुभ्रं ज्योतिषां ज्योति स्तद्यदात्मविदो विदुः।
देवस्य सवितुर्भर्गो वरणीयञ्च धीमहि।
तदस्मदन्वयो यस्तु ब्रह्मत्वे न प्रचोदयात्॥
छन्दोदैवतपर्यायं विनियोगञ्च ब्राह्मणम्।
मन्त्रं पञ्चविधं ज्ञात्वा द्विजः कर्म समाचरेत्॥
स्वरतो वर्णतश्चैव परिपूर्णं भवेद्यथा॥
हीनं न विनियुञ्जीत मन्त्रन्तु मात्रयापि च।
देवतायतने कुर्य्याज्जपं नद्यादिकेषु च॥
आगमेषु यतीनाञ्च गोष्ठे वा स्वगृहेऽपि वा।
चतुर्षु मतिपूर्वेषु ह्येनमादि क्रमेण तु॥
दशगुणं सहस्रं स्यात् फलं निष्काममन्तकम्।

असमीपे जलं कुर्य्यात् ससङ्ख्यं तद्भवेद्यथा ॥
असङ्ख्य मासुरं यस्मात्तस्मात्तद्गणयेद् ध्रुवम् ।
स्फाटिकैः द्रौचरुद्राक्षैः पुत्रजीवसमुद्भवैः ॥
अक्षमाला प्रकर्त्तव्या प्रशस्ता सुत्तरोत्तरा ।
अभावे त्वक्षमालायाः कुशग्रन्थ्याथ पाणिना ॥
यथा कथञ्चिद्गणयेत्ससङ्ख्यं तद्भवेद्यथा ।
प्रणवो भूर्भुवः स्वश्च पुनः प्रणवसंयुतम् ॥
अन्योङ्कारसमायुक्तां मन्यन्ते कवयोऽपरे ।
प्रणवान्ते तथा चान्ये आक्षरन्ये जपे क्रमम् ॥
आदौ चैवतु चोङ्कारं आद्यन्तादिक्रमोऽन्ततः ।
तदाद्यश्च तदन्तश्च कुर्य्यात्प्रणवसम्पुटम् ॥
आद्यन्तरचितं कुर्य्यात् इति पाराशरोऽब्रवीत् ।
अबर्णं मन्तिलोपेन सोङ्कारेण क्रमेणतु ।
पुट्कारान्ताञ्च कुर्वीत प्रच्छन्नविधं बुधः ॥
होमेऽपि च जपं कुर्य्यात् प्रणवावर्जनं द्विजः ।
अभिप्रेतार्थहेमादौ स्वाहान्तन्तु मुदीरयेत् ॥
सङ्कीर्णता यदा पश्येद्रागाद्वा द्विपतोऽपि वा ।
तदा जपेञ्च गायत्रीं सर्वदोषापनुत्तये ।
रुद्रजाप्यानि कार्य्याणि सूक्तञ्च पुरुषस्य च ।
शिवसङ्कल्पजप्यञ्च सर्वं कुर्य्याद्विधानतः ॥
घ्नन्ति जन्मानि पापानि श्रेयोदद्युस्तदर्थिनः ।
अतो जपं सदा कुर्य्याद्यदिच्छे च्छुभमात्मनः ॥
द्रुपदां वा जपेद्देवी मजपाञ्चम्बुकान्तथा ।

प्रणवञ्च सदाभ्यस्येद्याति ब्रह्मत्वमिच्छति ॥
प्रणवानामयुक्ताभ्यां तथा षोड़शभि: शतै: ।
पुंसाङ्गच्छत्यहोरात्रं तत्सङ्ख्यामजपां विदु: ॥
रविमण्डलमध्यस्थे पुरुषे लोकसाक्षिणि ।
समर्पितमयाचेदं सूर्याख्ये ब्रह्मण: पदे ॥
न जपं प्रसभं कुर्यात् प्रसभं घ्नन्ति राक्षसा: ।
ब्राह्मणा भागधेयस्तु तेषामेवावधीकृता: ॥
उपांशुन्तु जपं कुर्यात् कार्य्यं चैव तु मानसम् ।
निवृत्तोष्ठमुपांशु स्यादचलोष्ठं तु मानसम् ॥
द्विविधन्तु जपं कुर्यादुपांशुं मानसन्तथा ।
उपांशु: स्याच्छतगुण: सहस्रो मानस: स्मृत: ॥
उपांशुजपयज्ञस्य मानसे च रतस्य च ।
दृष्टैव याति वेधस्त्वमिति पाराशरोऽब्रवीत् ॥
विधियज्ञा: पाकयज्ञा ये चान्ये बहवो मखा: ।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोड़शीम् ॥
जपेनैकेन सिद्धेन किल सिद्धं भवेदिह ।
कुर्य्यादन्यं न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते ॥
शतेन जन्मजनितं सहस्रेण पुराकृतम् ।
अयुतेन त्रिजन्मोत्थं गायत्री हन्ति पातकम् ॥
दशभिर्जन्मजनितं शतेन तु पुराकृतम् ॥
सहस्रेण त्रिजन्मोत्थं गायत्री हन्ति पातकम् ।
यस्मिन् कलियुगे विद्वान्विधिवत्कर्म यत् कृतम् ॥
भवेद्दशगुणं तद्धि कृताद्यैर्युगतो ध्रुवम् ।

न च तच्छ्रवणे कर्तुं मात्राम्नायस्य भूषणात् ॥
अयथार्थकृतात्पाठान्मन्त्रसिद्धिर्गरीयसी ।
नच मन्त्रोपहसनं स्वपार्श्वमवलोकयेत् ॥
नात्यसक्तो न तप्तस्थो न चैवार्द्रशिरास्तथा ।
नारूढो पादमाक्रम्य न चैवह्नि तथाकरौ ॥
नैवंविधं जपं कुर्य्यान्नच सञ्चालयेत्करौ ।
अच्छिन्नानि च दानानि स्नानस्नानिरहङ्कृतम् ॥
जपानि च सुपन्नानि तेषां फलमनन्तकम् ।
य एवमभ्यसेन्नित्यं ब्राह्मणः संयतेन्द्रियः ॥
स ब्रह्मलोकमाप्नोति तथा ध्यानार्चनादपि ।
अथान्यत्सम्प्रवक्ष्यामि विशेषन्तु पितामह ॥
लब्धवान्वेषतः पृष्टाद्गायत्रीध्यानमुत्तमम् ।
तदक्षरे तु बह्वर्थं यत्र यत्र च यः स्मरेत् ॥
यत्फलं लभते कृत्वा यथा तस्याः समर्चनम् ।
तत्प्रकृतिं स च स्वान्तस्त्विकारो बुद्धिरेव च ॥
तुरीत्येतदहङ्कारं वशब्दं विद्धिषापहम् ।
रे स्पर्शन्तु णिरूपं च यं रसङ्गन्धमात्रभम् ॥
गौः श्रोत्रन्देत्वचश्चक्षुः सकार रसना तथा ।
यो नासाच तथा वाग्मी च हस्तौ च द्विपादद्वयम् ॥
य उपस्थन्तु दं योन्यौ नखं प्राकारमावृतम् ।
चो तेजोऽनलं वच्मा गायत्र्यास्तत्वचिन्तनम् ॥
चतुर्विंशतितत्वानां प्रत्येकमक्षरेषु यः ।
गायत्रीं संस्मरेद्योगान् स याति ब्रह्मणः पदम् ॥

लकारं पादयोर्न्यस्य ब्रह्मविष्णुशिवाकृतिम् ।
शान्तमग्रास्तमारूढन्ध्यानाद्धरति किल्बिषम् ॥
सकारं पादयोर्न्यस्य अतसीपुष्पसन्निभम् ।
पद्ममध्यस्थितं सौम्यं लघुरेचोपपातकम् ॥
विकारं जङ्घयोर्द्दीप्तिन्न्यसेदेतद्विचक्षणः ।
ब्रह्महत्याकृतं पापं हन्यात्तद्विस्मृतः स्मरात् ॥
उकारं जानुदेशे तु इन्द्रनीलसमप्रभम् ।
निर्द्दहेत् सर्व्वपापानि अष्टरोममुपद्रवम् ॥
ऊर्व्वोर्वविमलन्ध्यायेत् शुद्धस्फाटिकविग्रहम् ।
विज्ञातं हन्ति तत्पापमगम्यागमनं कृतम् ॥
रेकारं वृषणे प्रोक्तं विद्युत्स्फुरिततैजसम् ।
मित्रद्रोहकृतं पापं स्मरणादेव नाशयेत् ॥
णाभुच्चे स्थितवर्णान्तु जातिपुष्पसमद्युतिम् ।
गुरुहत्याकृतं पापं शोधयेद्ध्यानचिन्तनात् ॥
यह्वक्त्र्यां तारका वर्णाश्चन्द्र वधिष्णु भूषितम् ।
गोहत्याविहितं पापं गोकारस्तु विशोधयेत् ॥
श्यामं रक्तश्च देकारन्ध्यानकद्देशमाश्रयेत् ।
हृदि कुन्देन्दुवर्णाभन्वकार मन्मृतं स्रवेत् ॥
गुरुहत्याकृतं पापं वकारेण प्रणश्यति ।
स्वाकारं विन्यसेत्कण्ठेत्वोष्ठं स्फटिकसन्निभम् ॥
मनसोपार्जितं पापं स्म कारेण प्रणश्यति ।
धिकारं वसुदैवत्यं वदनं स्वर्णसन्निभम् ॥
प्रतिग्रहकृतं पापन्तत्स्मरणादेव नश्यति ।

मकारं पद्मरागाभं शिरस्थं दीप्ततेजसम् ॥
पूर्वजन्मकृतं पापं मकारेण प्रणश्यति।
हिकारं नासिकाग्रे तु पूर्णचन्द्रसमप्रभम् ॥
पूर्वात्परतरं पापं स्मरणादेव नश्यति ।
धीकारं तु माङ्गिरसमेतयोर्विन्यसेद्बुधः ॥
मनोवाक्कायिकं पापं चिन्तनादेव नश्यति ।
योकारं रक्तवर्णाभ मिन्द्रनीलसमप्रभम् ॥
प्राणिहत्याकृतं पापं योकारेण विनश्यति ।
द्वितीयं तु तथा प्रोक्तं योकारं वज्रसन्निभम् ॥
निर्दहेद्दुष्टपापानि अपेयामेयकानि च ।
नकारं सुमुखे पूर्वं मादित्योदयसन्निभम् ॥
सकृद्ध्यात्वा द्विजश्रेष्ठः स गच्छेद्दैत्वं पदम् ।
नीलोत्पलदलश्यामं प्रकारं दक्षिणामुखे ॥
सकृद्ध्यात्वा द्विजश्रेष्ठः स गच्छेद्दैशावं पदम् ।
सौम्यङ्गोरोचनापीतं चोकारम्पश्चिमामुखम् ॥
सकृद्ध्यात्वा द्विजश्रेष्ठः सगच्छेद्ब्रह्मणः पदम्।
शङ्खकुन्देन्दुधवलन्दकारञ्चोत्तरामुखम् ॥
सकृद्ध्यात्वा द्विजश्रेष्ठः स गच्छेद्ब्रह्म शाश्वतम् ।
यकारस्तु शिरः प्रोक्तश्चतुर्वदनसंयुतम् ॥
याकारं सगुणं प्रोक्तश्चतुर्विंशति संस्मृतम् ।
यं यं पश्यति चक्षुर्भ्यां यं यं स्पृशति पाणिना ॥
यं यं च भाषते चित्ते तत्सर्वं पूतमेवच ।
जाप्येतु त्रिपदा ज्ञेया ब्राह्मणैस्तत्वचिन्तकैः

अम्बुका नाम सा देवी यजुर्वेदप्रतिष्ठिता ।
अन्तर्जले त्रिरावर्त्य मुच्यते ब्रह्महत्यया ॥
सा देवी द्रुपदा नाम वेदे वाजसनेयके ।
सोपनीय समस्तानि महतां स द्विजोत्तमः ॥
ब्रह्मणः पदमाप्नोति यद्गत्वा न निवर्त्तते ।
प्रमादेन कथञ्चिद्वा जपं कुर्वन् भवेष्वपि ॥
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति स्मृतिः ।
तद्विष्णोरिति मन्त्रोऽयं स्मर्त्तव्यः सर्व्वकर्म्मसु ॥
आवर्त्य प्रणवौ वापि सर्व्वस्यादिर्यतोऽहि सः ।
अभ्यसेत्प्रणवान्नित्य मेकचित्तसमाहितः ॥
गायत्री च तथा देवी वैदिकन्तु जपं स्मृतम् ।
पौराणं पाञ्चरात्रञ्च सोऽभ्यसेन्मुक्ति माप्नुयात् ॥
यावेद स्तानि वै तानि यान्येतानि च सा श्रुतिः ।
जपनयेनेहक्रतेन पुंसो ददाति मार्गं सवितापि कर्तुः ।
अयंहि सर्व्वेष्टकृताम्वरिष्ठोविधेः पदं यास्यति निर्विकल्पः ॥
यदुक्तं धर्म्मशास्त्रेषु तथा सर्वश्रुतिष्वपि ।
उपनिषत्तमन्त्रवत् विप्रहितं प्रकीर्त्तितम् ॥
न्यासन्तनुत्रन्नच बन्धदेहे
जग्राह वोङ्कारमयीसुतीक्ष्णम् ।
विप्रश्च वर्ष्मान्निपदान्न लोके
मतः स दुष्टः कुनखञ्च कुर्यात् ॥
इति श्रीबृहत्पाराशरीये जपनिर्णयः ॥

देवार्चनं प्रवक्ष्यामि यदुक्तमृषिभिः पुरा ॥
वैदिकैरेव तन्मन्त्रैर्यस्य एतस्य तैरिति।
अर्चयेद्वैदिकैर्मन्त्रैर्नानुग्राह्यमपेक्षते ॥
वैदिकोऽनुग्रहस्तस्य वेदश्चित्करणेन तु।
ब्रह्माणं वेधसैर्मन्त्रैर्विष्णुं स्वैः शङ्करं स्वकैः ॥
अन्यानपि तथा देवानर्चयेत्स्वीयमन्त्रकैः।
मन्त्रन्यासम्पुरा कृत्वा स्वदेहे देवतासु च ॥
गायत्र्योङ्कारन्यस्ताङ्गः पूजयेद्विष्णुमव्ययम्।
न्यस्यातु व्याहृतीः सर्वाः प्रोक्तस्थानक्रमेण तु ॥
ब्रह्मीभूतः शुचिः शान्तो देवयागमुपक्रमेत्।
विष्णुरादिरयं देवः सर्वामरगणार्चितः ॥
नामग्रहणमात्रेण पापयोगान्विहन्ति सः।
तदर्चनं प्रवक्ष्यामि विष्णोरजिततेजसः ॥
यद्ज्ञात्वा मुनयः सर्वे विष्णोः सायुज्यमाप्नुयुः।
षट्स्वेषु हरेरस्यगर्चनं मुनिभिः कृतम् ॥
अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च।
अग्नौ क्रियावतां येषां दिवि देवमनीषिणाम् ॥
प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिम्।
आपो ह्यायतनन्तस्य तस्मात्तासु सदा हरिः ॥
सर्वगत्वेन विष्णोस्तु स्थण्डिले भावितात्मनाम्।
दद्यात्पुरुषसूक्तेन आपः पुष्पाणि चैव हि ॥
अर्चितं स्यादिदन्तेन नित्यम्भुवनसप्तकम्।
अनुष्टुभस्य सूक्तस्य त्रिभन्तस्य च दैवतम् ॥

पुरुषो यो जगद्बीजं ऋषिर्नारायणः स्मृतः ।
अस्य सूक्तस्य सर्वस्य क्रमा न्यासं यथाक्रमम् ॥
देवे चात्मनि च तथा सम्प्रवक्ष्याम्यतः परम् ।
हस्तन्यासम्पुरा कृत्वा स्मृत्वा विष्णुन्तथाव्ययम् ॥
शिखाबन्धञ्च दिग्बन्धं सोऽर्चयेद्विष्णुमात्मनि ।
प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे ॥
तृतीयां वामपादे तु चतुर्थीं दक्षिणे न्यसेत् ।
पञ्चमीं वामजानौ तु षष्ठीं च दक्षिणे न्यसेत् ॥
सप्तमीं वामकट्याञ्च दक्षिणायान्तथाष्टमीम् ।
नवमीं नाभिमध्ये तु दशमीं हृदि विन्यसेत् ॥
एकादशीं वामपार्श्वे द्वादशीं दक्षिणे न्यसेत् ।
कण्ठे त्रयोदशीं न्यस्य तथा वक्त्रे चतुर्दशीम् ॥
अक्ष्णोः पञ्चदशीं न्यस्य षोडशीं मूर्ध्नि विन्यसेत् ।
एवं न्यासविधिं कृत्वा पश्चात् यागं समाचरेत् ॥
आसने चिन्तयेत्पद्मं अष्टदलं सकर्णिकम् ।
व्याहृतीनामथ न्यासं कुर्य्यात्सर्वाधिपद्धृद्विजः ॥
भूर्लोकं पादयोर्न्यस्य भुवर्लोकन्तु जानुनोः ।
स्वर्लोकं कटिदेशे तु नाभिदेशे महस्तथा ॥
जनोलोकन्तु हृदये कण्ठदेशे तपस्तथा ।
भ्रुवोर्ललाटमध्ये तु सत्यलोकः प्रतिष्ठितः ॥
हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ।
तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥
आवाहनमथ प्राहुः मिथ्याऽपरिमिततेजसः ।

यदर्घोदनतये तस्य स्वदेहे चिन्तयेद्‌ यथा ॥
आद्य भावाश्रयेद् देवस्य चाम पुरुषोत्तमम्।
यथादेशे तस्य देहे न्यासं कृत्वा विधानतः ॥
द्वितीयस्यासनन्दद्यादावाहनात्तृतीयया।
चतुर्थ्यार्घ्यः प्रदातव्यः पञ्चम्याचमनन्तथा ॥
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रधौतकम्।
यज्ञोपवीतं चाष्टम्या नवम्या गन्ध मेव च ॥
पुष्पन्देयं दशम्यातु एकादश्याच धूपकम्।
द्वादश्या दीपकन्दद्यात् तयोदश्या निवेदनम् ॥
चतुर्दश्याञ्जलिं कुर्यात्पञ्चदश्या प्रदक्षिणम्।
षोडश्योद्वासनं कुर्याच्छेषकर्माणि पूर्ववत् ॥
स्नाने वस्त्रे निवेद्ये च दद्यादाचमनं हरेः।
षण्मासात्सिद्धिमाप्नोति एवमेवं हि योजयेत् ॥
आदित्यमण्डले देवन्ध्यात्वा विष्णुमुपैति यः।
स याति ब्रह्मणः स्थानं मात्र कार्या विचारणा ॥
ध्येयो दिनेश परिमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः ॥
केयूरवान्मकरकुण्डलवान् किरीटि-
हारी हरि र्मुनिजनैर्धृतशङ्खचक्रः ॥
सूक्तेन विष्णुविधिना समुदीरितेन
योगेन नित्यमजमादिमनन्तमूर्त्तिम्।
भक्त्यार्चयेत्प्रति यस्तु स विष्णुदेहम्
विप्रो विशेद्धरिवरेण कृतार्थदेहः ॥

पञ्चरात्रविधानेन स्थण्डिले वापि पूजयेत्।
जलमध्यगतो वापि पूजयेज्जलमध्यतः॥
द्वादशारार्चमव्यूहपञ्चतत्त्वक्रमेण तु।
अभावे धौतवस्त्रस्य पत्रिकायास्तथा द्विज:॥
जलेऽपि हि जलेनैव मन्त्रैरेवार्चयेद्धरिम्।
विष्णुर्विष्णुस्थजस्त्वन्तु चिन्तयेद्धरिमेव तु॥
तिष्ठन्व्रजंस्तथासीनः शयानोऽपि हरिं सदा।
संस्मरन्नाप्नुयात् पश्येदिहामुत्र च वै द्विजः॥
रुद्रं रुद्रविधानेन ब्रह्माणञ्च विधानतः।
सूर्यं संहितमन्त्रैश्च तदीरितविधानतः॥
दुर्गां कात्यायनीं चैव तथा वाग्देवतामपि।
स्कन्दं विनायकञ्चैव योगिनीं क्षेत्रपालकान्॥
विधानेनार्चयेत्सर्वान्यो विप्रो भक्तितत्परः।
विष्णुना सुप्रसन्नेन विष्णुलोकमवाप्नुयात्॥
ग्रहांश्च पूजयेद्विद्वान् ब्राह्मणः शान्तितत्परः।
आरोग्यपुष्टिसंयुक्तो दीर्घमायुष्यमाप्नुयात्॥
ग्रहा गावो नृपा विप्राः सद्भिः पूज्याः सदा द्विजैः।
पूजिताः पूजयन्त्येते दहन्ति चापमानिताः॥
यो हितः सर्वसत्त्वेषु गोनृपब्राह्मणेषु च।
इहामुत्र स पूज्योऽसौ विष्णुलोकमवाप्नुयात्॥
उक्तो गृहस्थस्य सुरार्चनस्य
धन्यो विधिर्विष्णुजनस्य लब्ध्यै।
कार्यो द्विजातिः प्रतिवासरं यो

वेदोक्तमन्त्रैः समये हिताय ॥
देवपूजाविधिः प्रोक्त एष उद्दे शतो मया।
वैश्वदेवस्य वक्तव्यो विधिर्विप्र ! मयाधुना ॥
इति वृहत्पाराशरीये धर्मशास्त्रे देवपूजाविधिः समाप्तः ॥

वैश्वदेवं प्रवक्ष्यामि यथाकार्य्यं द्विजातिभिः।
स्मृत्युक्तविधानेन जुहुयाद्वैश्वदैवकम् ॥
हविष्यस्य हिजोभावे यथालाभकृतं हविः।
जुहुयाद्विधिवद्भक्त्या यथा स्यात्स्वर्गनिर्वृतिः ॥
यद्वा तदपि होतव्य मग्नौ किञ्चिद्द्विजातिभिः।
फलम्वा यदिवा मूलं शाकम्वा यदिवा पयः ॥
अहुत्वा च द्विजोऽश्नीयाद्यत्किञ्चित् स्वयमश्नुते।
अश्नीयाच्चेदहुत्वापि नरकं स समाविशेत् ॥
जुहुयादन्नमक्षारलवणमन्नं हुताशने।
अनुज्ञातो द्विजैस्तैस्तु त्रिः कृत्वा पुरुषर्षभः ॥
यदाग्नौ हूयते नैव यस्य ग्रासो न दीयते।
अभोज्यं तद्द्विजातीनां भुक्त्वा चान्द्रायणञ्चरेत् ॥
लौकिके वैदिके चैव वैश्वदेवो हि नित्यशः।
लौकिके पापनाशाय वैदिके स्वर्गमाप्नुयात् ॥
अभावादग्निहोत्रस्य आवसथ्य वा तथा।
पाकस्याग्नौ पचेदन्नं तत्र होमो विधीयते ॥

अग्निः सोमः समस्तौ तौ विश्वेदेवास्तथैव च ।
धन्वन्तरीः कुहूस्तद्वदनुमतिः प्रजापतिः ॥
द्यावाभूम्योः स्विष्टकृतञ्च हुत्वा तेभ्यः पुनः पुनः ॥
कुर्याद्बलिविधानं पश्चात्सर्वदिक्षु प्रदक्षिणम् ।
इन्द्रान्तेशस्य पुंभ्यश्च यमाय च सहानुगैः ॥
मरुद्भ्यश्च क्षिपेद्द्वारि अद्भ्यः सेभ्यस्तथा हरेः ।
वनस्पतिभ्यः सर्वेभ्यो मुसलोलूखले हरेत् ॥
श्रियै च भद्रकाल्यै च उच्छीर्षपादयोः क्रमात् ।
ब्रह्मणे सानुगायेति मध्ये चैव हरेद्बलिम् ॥
वास्तवे सानुगायेति वास्तुमध्ये बलिं हरेत् ।
विश्वेभ्यश्चैव देवेभ्यो बलिमाकाशमुत्क्षिपेत् ॥
द्युचरेभ्यश्च भूतेभ्यो नक्तञ्चारिभ्य एव च ।
वास्तुपृष्ठे च कुर्वीत बलिं सर्वान्नभूतये ॥
पितृभ्यो बलिशेषन्तु सर्वं दक्षिणतो हरेत् ।
पतितेभ्यः श्वपाकेभ्यः पापानां पापरोगिणाम् ॥
कृमिकीटपतङ्गानां सर्वेभ्योऽपि बलिं हरेत् ।
एवं सर्वाणि भूतानि यो विप्रो नित्यमर्चयेत् ॥
तत्स्थानं परमाप्नोति यज्ज्योतिः परवेश्मनः ।
गृह्येऽग्नौ वैश्वदेवन्तु प्रोक्तमेतन्मनीषिभिः ॥
अनग्निकस्तु कुर्वीत वैश्वदेवं कर्म त्विति ।
महाव्याहृतिभिस्तिसृः समस्ताभिस्तथा परा ॥
इत्याहुतीश्चतस्रस्तु तथा वेदव्रतोऽपि च ।
त्रियम्बकं यजामह इत्यादीनाहुतिद्वयम् ॥

वैश्वदेवे च जुहुयाद्विशेषोऽन्यत्र वै पुनः।
अल्पमृत्युनिवृत्त्यर्थमायुःपुष्टिविवृद्धये॥
जुहुयात् त्र्यम्बकं देवं बिल्वपत्रैस्तिलैस्तथा।
विनायकाय होतव्या तथा घृतस्य चाहुतिः॥
सर्वविघ्नोपशान्त्यर्थं पूजयेत्सन्ततस्ततम्।
गणानान्त्विति मन्त्रेण स्वाहाकारान्तपादतः॥
शतशो जुहुयात्तस्मै गणेशाय तथाहुतीः।
तद्विष्णोरिति जुहुयाद्विधिसम्पूर्णताकृते॥
प्रणवेन च गायत्र्या केचिज्जुह्वति सद्द्विजाः।
एतौ वै सर्वदेवत्यौ एतत्परन्न किञ्चन॥
एताभ्यां जुहुते नैव सर्वेभ्योऽपि हुतम्भवेत्।
जुहुयात्सर्पिषायुक्तं सव्येन पयसाथ वा॥
क्षीरेन च विकारेण तिलतैलेन वा पुनः।
संप्रोक्ष्य पयसा वापि अन्नन्तु मन्त्रयादपि॥
अलाभाच्चापि गोधूमाः शालयो हवनीयकाः।
हविस्तु हविरभ्युक्तमहविस्तु हविर्यतः॥
अभ्युक्तमेव होतव्यमतोऽन्यं विवर्जयेत्।
हरिद्रामिश्रितामेके कृष्णामन्नहवने विदुः॥
उत्तराग्नेः पश्चैके होमासनमिहोच्यते।
ॐकारपूर्विकाः सर्वाः स्वाहाकारान्तिकास्तथा॥
जुहुयादग्निको विप्रो ह्यश्वमेधीह नित्यशः।
बलिशेषञ्च भूतेभ्यः सर्वेभ्योऽप्यविशेषतः॥
हुत्वाथ कृष्णवर्त्मानं कृताञ्जलिः प्रसादयेत्।
त्वमग्ने ! स्तुतिरेतेन मन्त्रेण भक्तिमान् द्विजः॥

यावन्ति विष्णुर्जपेत् सर्वकामसमृद्धये ।
अष्टाक्षरमिति ख्यातं मन्त्रञ्च प्रयतो जपेत् ॥
सप्तप्रेतागमं मन्त्रं जपित्वा च समापयेत् ।
सर्वशान्तिकरार्थं तथाग्निर्देवतेति च ॥
स्नानं धनमरोगित्वं गतिमिच्छंस्तथा द्विजः ।
ग्रहभुवनं रविं विष्णुमर्चयेद्भक्तितः क्रमात् ॥
अज्ञानाद्यो द्विजोनित्य मकृत्वा निसृतं हविः ।
पितृदेवमनुष्याणां सवत्सुकः प्रयात्यधः ॥
शाकञ्चापि त्वथं वापि हुत्वाग्नावश्नुते द्विजः ।
सर्वकामसमायुक्तः सोऽत्रैव सुखमश्नुते ॥
स्वरेण वर्णेन च यद्विहीनं तथैव हीनं क्रमयापि यच्च ।
तथातिरिक्तं मम तत् क्षमस्व तदस्तु चाग्नेः परिपूर्णमेतत् ॥
सर्वपापप्रणोदाय सर्वकामाय वै द्विजः ।
द्विजन्मनां हितार्थाय वैश्वदेव उदाहृतः ॥
इति श्रीवृहत्पाराशरे वैश्वदेवविधिः ॥

---

आतिथ्यं संप्रवक्ष्यामि चातुर्वर्ण्य फलप्रदम् ।
चतुर्वर्णातिथिः प्रोक्तः कालप्राप्तो बहुश्रुतः ॥
अदृष्टोऽदृष्टपूर्वो वादिरप्राप्ताचारविघ्नकः ।
सम्प्राप्तोऽज्ञाताचारसज्ञैः सोऽतिथिरुच्यते ॥
क्षुत्तृष्णाश्रमश्रान्तः प्राणमात्रायाचकः ।
दृष्टिपथो वैश्वदेवान्ते गृहद्वारमुपागतः ॥
विष्णुरूपोऽतिथिः सोऽयं मत्तारार्थमिहागतः ।
इति मत्वा च भक्त्या च दद्यात्संभोजनाय तम् ॥

त्वं गुरुर्मम सम्प्राप्तः सर्वदेवमयो विधिः ।
निर्दह्य सर्वपापानि ममाद्यायुः प्रयास्यति ॥
आत्मार्थैः सह भोक्तव्यो भक्त्या प्रदाय पायसम् ।
पाद्यार्घ्यादिकं दत्त्वा कृत्वा धूपचन्दनादिकम् ॥
योगिनो विविधैर्वेषैर्भ्रमन्ति धरणीतले ।
नराणामुपकाराय ते चाज्ञातस्वरूपिणः ॥
तस्मादभ्यर्चयेत्प्राप्तं श्राद्धकालेऽतिथिं द्विजः ।
श्राद्धक्रियाफलं हन्ति तत्र चापूजितोऽतिथिः ॥
तस्मादपूर्वमेवात्र पूजयेत्क्षणतोऽतिथिः ।
कदाचित्कश्चिदागच्छेन्नामधेयस्तु पूर्वजाम् ॥
यतिर्वा ब्रह्मचारीव तथापि मस्करी द्विजः ।
सर्वे तेऽतिथयः प्रोक्ता अपूर्वश्च दिने दिने ॥
अतिथेऽमरदेवत्वं मत्प्रार्थमिहागतः ।
संसारपङ्कलग्नं मां कुरुष्व पावनात्मने ॥
नैक ग्रामे वसन्नीह मुनिभिरुच्यतेऽतिथिः ।
अन्यत्र दृष्टपूर्वोऽपि नोऽसावतिथिरुच्यते ॥
क्षत्रियो यदि वा गच्छेदतिथिस्तस्य वेश्मनि ।
भक्ते तु सर्वविप्रेषु कामतस्तु तमाशयेत् ॥
वैश्यो वा यदि वा शूद्रो विप्रगेहं समाव्रजेत् ।
तौ भृत्यैः सह भोक्तव्यौ इति पाराशरोऽब्रवीत् ॥
क्लीबो वा यदि वा काणः कुष्ठी वा व्याधितोऽपि वा ।
आगतो वैश्वदेवान्ते द्रष्टव्यः सर्वदेवताः ॥
दर्शनेनापि वैश्येन तथा च वृषलेन च ।
आतिथ्यं सर्ववर्णानां कर्तव्यं स्यादसंशयम् ॥

यो ऽतिथीन् पूजयेद्भक्त्या तथाभ्यागमनेन च ।
बालवृद्धादिकश्चैव तस्य विष्णुः प्रसीदति ॥
देवा मनुष्याः पितरश्च सर्वे स्यूर्थेन हृष्टेन च भूरि तिष्ठन् ।
तस्मात्सदातु समराकृताभिस्त्यातिथिः क्षेम.समस्मसि ॥
इति श्रीवृहत्पराशरे चातिथिविधिः समाप्तः ॥

---

वर्णधर्मान् प्रवक्ष्यामि यत्कृतं ब्राह्मणादिभिः ।
निबोधध्वं द्विजास्तद्वै संक्षेपेण पृथक् पृथक् ॥
यजने याजने विप्रे तथा दान प्रतिग्रहे ।
अध्यापन मध्ययनं कर्माण्येतानि षट् तथा ॥
प्रजानां रक्षणं दान मरीणां निग्रहस्तथा ।
यजनाध्ययने राज्ञ विषयासक्तिवर्जनम् ॥
यजनाध्ययने दानं पाशुपाल्यन्तथा कृषी ।
वाणिज्यञ्च कुसीदञ्च कर्मषट्कं प्रकीर्त्तितम् ॥
शुश्रूषा ब्राह्मणादीनां तेभ्य आजीवनन्तथा ।
एष धर्मः स्मृतः शूद्रो वाणिज्येन च जीवनम् ॥
सर्वेषां जीवनं प्रोक्तं धर्मेणैव च कर्षणम् ।
भिन्नवृत्तिर्यथा न स्यात् कुर्याद्विप्रस्तथा च तत् ॥
कुर्वन्नन्यानि कर्माणि हत्वा वा चौरवस्य च ।
वृत्त्यभावे द्विजो जीवेन्नित्यं वृत्तिं विवर्जयेत् ॥
क्षत्रिये प्रजापालत्वं धर्मभक्षं प्रचण्डता ।
निर्जयेत्परसैन्यानि एष धर्मः स्मृतो नृप ! ॥
पुष्पपुष्पं विचिनुयान्मूलच्छेदं न कारयेत् ।
मालाकार इवारामे प्रजासु स्यात्तथा नृपः ॥

कुगवैर्न कृषिं कुर्य्यात्सर्वथा धेनुसंग्रहः ॥
बन्धनं पालनं रक्षा द्विजः कुर्य्याद्दृष्टभी गवाम् ।
वत्साश्च यत्नतो रक्ष्या वर्धन्ते ते यथाक्रमम् ॥
न दूरे तासु मोक्तव्या चरणाय कदाचन ।
दूरे गावश्चरन्त्यो वै न भवन्ति शुभावहाः ॥
प्रातरेवहि दोग्धव्या दुग्धाः सायं तथा व्रती ।
दोग्धुर्विपर्य्ययेणैव वर्द्धन्ते ताः कदाचन ॥
अनादेयतृणास्तस्मा स्रवन्त्यनुदिनं पयः ।
तुष्टिस्तद्देवतादीनां पूज्या गावः कथन्न ताः ॥
यस्याः शिरसि ब्रह्मास्ते स्कन्धदेशे शिवः स्मृतः ।
पृष्ठे विष्णुस्तथा तस्थौ श्रुतयश्चरणेषु तु ॥
या अन्या देवताः काश्चित्तस्या लोमसु ताः स्थिताः ।
सर्वे देवमया गौस्तु तुष्येत्तद्भक्तितो हरिः ॥
हरति स्पर्शनात्पापं पयसा पोषयन्ति याः ।
प्रापयन्ति दिवं दत्ताः पूज्या गावः कथन्न ताः ॥
यच्छफाहतभूमेस्तु उद्धताः पांशुसंस्पृशः ।
क्षीणयेत् पुरुषस्यैनो वन्द्या गावः कथन्न ताः ॥
शकृन्मूत्रं हि यस्यास्तु पितुः पुनाति पातकम् ।
किमपूज्यं हि तस्या गौरिति पाराशरोऽब्रवीत् ॥
गौरवत्सा न दोग्धव्या नचैवं गर्भसन्धिनी ।
प्रसूता च दशाहार्वाग्दोग्धा चेन्नरकं व्रजेत् ॥
दुर्बला व्याधिसंयुक्ता पुष्पिता या द्विवत्सभूः ।
सा साधुभिर्न दोग्धव्या वर्षिभिः सुधर्मीसुभिः ॥

यो गां पयस्विनीं दद्यात्तरुणीं वत्ससंयुताम्।
शिवस्यायतनं दत्त्वा दन्तान्तेन तु विश्रवाम्॥
उक्ता गौर्वर्धना हृष्टा तस्य ह्युत्पादनाय च।
तैरुत्पादितशस्येन सर्वमेतद्धि धार्य्यते॥
यश्चैतां पालयेत् यत्नाद्वर्द्धयेच्चैव यत्नतः।
जगन्ति तेन सर्वाणि साक्षात् स्युः पालितानि च॥
यावद्गोपालने पुण्यमुक्तं पूर्वमनीषिभिः।
उक्ष्णोऽपि पालने तेषां फलं दशगुणं भवेत्॥
जगदेतद्धृतं सर्वमनडुहा चराचरम्।
वृष एवावतो रक्षा पालनीयस्तु सर्वदा॥
धर्मोऽयं भूतले साक्षाद्ब्रह्मणा वितारितः।
त्रैलोक्यं धारणाश्वासमन्त्रानाश्च प्रसूयते॥
धनादेयानि पापानि विध्वंसन्ति सकामतः।
भ्रमिता भूतले दूरमुत्थापाङ्को न पूजयेत्॥
उत्पादयन्ति शस्यानि मर्दयन्ति वहन्ति च।
धानवन्ति दवीयस्य मुक्ष्णोर्वा कोऽधिको भुवि॥

स्कन्धेन दूराच्च वहन्ति भारं मार्गादि किञ्चिद्यनपत्यरत्न।
स्वीयेन जीवेन परस्य जीवं रक्षन्ति पुष्णन्ति विवर्द्धयन्ति॥
पुण्यास्तु गावो वसुधातले मां विभ्रत्यमुञ्जोष्ठगर्भभारम्।
भारः पृथिव्या दशताडितायाः एकस्य चाणो ह्यपि साधुवाचः॥
एकेन दत्तेन वृषेण येन दत्ता भवेयुर्दश सौरभेयाः।
माहेन्द्रपीयं धरणीं समानां तस्माद्वृषात् पूजतमास्ति चान्यः॥
उत्पाद्य शस्यानि दयाश्चरन्ति तदेव भूयः सकलं वहन्ति।
न भारखिन्नाः प्रवदन्ति किञ्चिद्दोहृषाद्धार्यति जीवलोकः॥

तृतीयेऽह्नि चतुर्थे वा यदेवोप्ता हलोभवेत् ।
तदा न सा तु भेतव्या नैव मार्गद्वर्द्धकश्च च ॥
नासत्वे ऽनकीलन्तु खादिरं वाथ नैम्बिपम् ।
द्वादशाङ्गुल कार्ष्णन्तत्पैप्पलीयि समेव वा ॥

शाला द्विजेन्द्र हयगोजयानां तु याम्यदिग्द्वारवतीं विदध्यात् ।
सौम्या ककुब्द्वारवतीं सुशोभान्तेषां शमिच्छन् इतरत्समनश्च ॥
गावो वृषो वा हयहस्तिनो वा अन्येऽपि सर्वे पशवो द्विजेन्द्राः ।
याम्या मुखा दिक्षु वसन्तु रात्रिं दुःखामयास्ते खलु वर्जनीयाः ॥
शालाप्रवेशे हयगोपशूनां राजापि यत्नाद्धयकुञ्जराणाम् ।
होमञ्च सप्तार्चिषि शास्त्रयुक्तं कुर्य्याद्द्विजस्तो विप्रपूजनञ्च ॥

लाङ्गलं सम्प्रवक्ष्यामि यत्नाद्धं वत्समासतः ।
हलीशायामशामानं प्रतोदस्य युगस्य च ॥
चत्वारिंशत्तथा चाष्टा वङ्गुलानि युगः स्मृतः ।
अयास्त्रीमङ्गुलैर्भोज्यो हलीशा वेधतश्च यः ॥
षोड़शैव तु तस्याधः षड्विंशति तथोपरि ।
वेधस्तथा च कर्त्तव्यः प्रमाणेन षड़ङ्गुलः ॥
अष्टाङ्गुलस्तु स्तम्भ वेधादूर्द्धं प्रकल्पयेत् ।
ग्रीवा द्व्यङ्गुला चोर्द्धं हस्तग्राही ततः स्मृतः ॥
अङ्गुलैश्चाष्टभिस्तान् स्याद्वेधः स्यात्प्रतिवारकः ।
तस्याधस्ताच्चत्वारि स वेधश्चतुरङ्गुलः ॥
सार्वशस्त्रैः शुभा कार्य्या तद्वेधश्च्यङ्गुलो भवेत् ।
पञ्चाङ्गुलमुरस्तस्याः शिरस्येति विभाजनम् ॥
पृथुत्वं शिरसोधार्य्यं हस्ततलप्रमाणकम् ।
षड़ङ्गुलानि तस्या चाष्टौ उरसः पृथुता स्मृता ॥

षष्ठाङ्गुलिः प्रतीहारी षड्विंशदङ्गुला भवेत् ।
सुतीक्ष्णो लोकपालस्य मुक्तादामादिदारवत् ॥
नश्वरं चीरवृक्षस्य न बिल्वपिचुमर्दयोः ।
वृत्यादीनां हि कुर्व्वाणं न नन्दति चिरं गृही ॥
प्राञ्जला सप्तहस्ता तु वलीषा विदुषां मता ।
तस्य वेधः सवर्णायाः कार्य्यो नवचितस्थिभिः ॥
श्वावाकयोर्न तत्कुर्य्यात् कीर्त्तिघ्नौ तौ प्रकीर्त्तितौ ।
प्रमादतस्तु ताः कुर्वन् सद्यस्यो जम्बुपे गृही ॥
नीचोच्चवृद्धपमानेन तज्ज्ञास्तां प्रवदन्ति हि ।
चतुर्हस्तं युगं कार्य्यं स्कन्धस्थानेऽर्धचन्द्रवत् ॥
शेषस्तम्भाः कटम्बस्य शाखाधर्मतमस्य च ।
तथ्या विधाद्वाचिः कार्य्या दशाङ्गुलप्रमाणिका ॥
तन्मात्रे च प्रणालीच तदन्तरचयाङ्गुलम् ।
प्रतोहेविषमग्रन्थि वैणवस्य चतुः करः ॥
तदग्रे तु प्रकर्त्तव्या यथाकारात्तु लोकवत् ॥
हीनातिरिक्तं कर्त्तव्यं नैव किञ्चित्प्रमाणतः ।
कुर्य्यादनङ्गुहा दैन्याद्दैन्यां नरकं व्रजेत् ॥
यथा भीष्टं तथा शोभं वाहकस्य प्रमाणतः ।
मूलेषु वार्षकायालं तज्ज्ञाः सर्व्ववदन्ति हि ॥
योजनं तु हलस्याथ प्रवक्ष्यामि यथा तथा ।
श्रेष्ठनक्षत्र संयुक्ते पुण्येऽह्नि तद्विधीयते ॥
यत्र दिने तु बुध्येत तत्र कार्य्यं विजानता ॥
यत्र काम्यं हितं चापि पुण्यं वा मनसि स्मरेत् ।
तत्र विद्वान् द्विजश्रेष्टः पुण्येऽह्नि तद्विधीयते ॥

मातृश्राद्धं द्विजः कृत्वा यथोक्तविधिना गृही ।
द्रव्यकालानुसारेण कुर्वतो धर्मतः कृषिम् ॥
प्रोक्षयन् मण्डलं पुष्पधूपदीपैः समर्चयेत् ।
इन्द्राय च तथाश्विभ्यां मरुद्भ्यश्च तथा द्विजः ॥
कुर्य्याद्बलिं श्रुतिं विद्वान् उदराश्वपथाय च ।
तथा कुमार्य्यै सीतायै अनुमत्यै तथा बलिम् ॥
नमः स्वाहेति मन्त्रेण सर्वात्मात्मनः शुभम् ॥
दधिगन्धाक्षतापुष्पैः शमीपत्रैस्तिलैस्तथा ।
दद्याद्बलिं कृषाणाश्च तथाप्यग्राशनं तथा ॥
संस्पृश्य शिरफालाग्रे हेम्ना वा राजतेन वा ।
प्रलेप्य मधुसर्पिर्भ्यां कुर्य्याच्चैव प्रदक्षिणम् ॥
धन्योऽग्नौ मण्डलं कुर्य्यात् कृत्वा सीरप्रवाहणम् ।
पुष्पं लाङ्गलकल्याणं कल्याणाय नमोऽस्त्विति ॥
सीतायाः स्थापनं कुर्य्यात् पाराशरऋषिं स्मरेत् ।
सीतां युञ्जत इत्याद्यैर्मन्त्रैः शीरं प्रवाहयेत् ।
दधिदूर्वाक्षतैः पुष्पैः शमीपत्रैश्च पुष्पदैः ॥
सीतां पूज्य वशी भक्तो रक्तवस्त्रविभूषणौ ।
सप्त धान्यानि चादाय प्रोक्ष्य पूर्वामुखो हली ॥
तानि दर्व्वीक्षणः क्षेत्रे किरन् भूमौ कर्षेद्द्विजः ।
न यवैर्न तिलैर्हीनं द्विजः कुर्य्यात्तु कर्षणम् ॥
तद्विहीनन्तु कुर्वाणा न प्रशंसन्ति देवताः ।
तिलमात्रच्युतं तोयं दक्षिणास्याम्पतेर्दिशि ॥
तेन तृप्यन्ति पितरो यावन्न तिलविक्रयः ।
विक्रीणीते तिलान् यस्तु तर्पयेत्सर्वदेवताः ॥

विसृज्य पितरस्तस्तु प्रयान्तीव तिलैः सह ।
यथा जलं यवस्तम्बफलेभ्यो भूतले पतत् ॥
पयोदधिघृताद्यैस्तु तर्पयेत्सर्वदेवताः ।
देवप्रसन्नभूसीरयोगात् कृषिः प्रजायते ॥
व्यापारात् पुरुषस्यापि तस्मात्तत्रोद्यतो भवेत् ।
शालीन् भूयवकार्पासं वार्त्ताकुप्रभृतीनि च ॥
वापयेत्सर्वबीजानि सर्ववापी न सीदति ।
चन्द्रक्षये यतिर्विप्रो यो युर्नक्ति हयान् क्वचित् ॥
तत्पक्षद्वयवर्षाणि त्यजन्ति पितरो हि तम् ।
चन्द्रक्षये द्विजो विद्वान्यो भुङ्क्ते तु पराशनम् ॥
भोक्तुर्मासार्जितं पुण्यं भवेदशनमस्य तत् ।
चन्द्रार्कयोस्तु संयोगे कुर्याद्यः स्त्रीनिषेवणम् ॥
स रेतोभोजिनस्तस्य षण्मासं पितरो स्थिताः ।
चन्द्रक्षये च यः कुर्यान्नरस्तरुनिकृन्तनम् ॥
तत्पर्णसङ्ख्यया तस्य भवन्ति भ्रूणहत्यकाः ।
वनस्पतिगते सोमे यो ऽप्यध्वानं व्रजेन्नरः ॥
प्रभ्रष्टद्विजकर्माणां न त्यजन्त्यमरादयः ।
वासांसि दुःप्रक्षालनाय रजकस्था मतिः क्षिपेत् ॥
पिबन्ति पितरस्तस्य मासं वस्त्रजलन्तु तम् ।
सोमक्षये द्विजो याति तस्यायस्तु कृताशनम् ॥
तदेव पितृशापाग्निदग्धो नरकमाविशेत् ।
अष्टमीं कामभोगेन षष्ठीं तैलोपभोगिना ॥
कृत्वा दन्तकाष्ठेन हिनस्त्यासप्तमं कुलम् ।

चन्द्रार्कतीताः पुरुषास्तु देवा दद्यादपत्या यदि दन्तकाष्ठम्।
नराधिराजः सहितस्तु तेन यातः कृतः स्वर्गमिव देवतानाम्॥

तस्मादभ्यर्च्य विप्रांश्च गावश्चैव वृषास्तथा।
चरणाय विसृज्यन्ते आगतानपि भोजयेत्॥

य उत्पाद्येह शस्यानि सर्वाणि हलचारिणः।
जगत्सर्वं धृतं यैस्तु पूज्यन्ते किम्न ते वृषाः॥

येनैकेन प्रदत्तेन दत्तं गोदशकम्भवेत्।
यद्रूपेण स्थितो धर्मः पूज्यन्ते किम्न ते वृषाः॥

पाल्याहि यत्नतस्ते वै वाहनीया यथाविधि।
स याति नरकं घोरं यो वाह यत्यपालयत्॥

नाधिकाङ्गो न हीनाङ्गः पुष्पिताङ्गो न दूषितः।
वाहनीयो हि शूद्रेण वाहयन् क्षयमाप्नुयात्॥

वर्जयेद्दुष्टदोषांश्च गावो वै दोहने नरः।
पाल्या वै यत्नतः सर्वे पालयन् शुभमाप्नुयात्॥

अन्नार्थं मेतानुत्पाद्य ससर्ज परमेश्वरः।
अन्नेनाप्यायते सर्वं त्रैलोक्यं सचराचरम्॥

अग्निर्ज्वलति चान्नार्थं वाति चान्नाय मारुतः।
गृह्णाति चाम्भसां सूर्यो रसानन्नाय रश्मिभिः॥

अन्नं प्राणो बलं चान्न मन्नाज्जीवित मुच्यते।
अन्नं सर्वस्य चाधारः सर्व मन्ने प्रतिष्ठितम्॥

सुरादीनां हि सर्वेषा मन्नं बीजं परं स्थितम्।
तस्मादन्नात्परं तत्वं न भूतं न भविष्यति॥

द्यौः पुमान्धरणी नारी अम्भोबीजन्दिवश्च्युतम्।
द्युधात्री तोयसंयोगादन्नादीनां हि सम्भवः॥

आपोमूलं हि सर्वस्य सर्वमप्सु प्रतिष्ठितम्।
आपोऽमृतरसो ह्याप आपः शुक्रं बलं महः॥
सर्वस्य बीजमापो वै सर्वमद्भिः समावृतम्।
अद्य आप्यायना ह्यापः आपो श्रेष्ठतरा ह्यतः॥
किञ्चित्कालं विनाऽन्नाद्यैर्जीवन्ति मनुजादयः।
न जीवन्ति विना तानि तस्मादापोऽमृतं स्मृतम्॥
दृष्टानि चाद्भिरेतस्मात् किं न दृष्टं क्षितौ भवेत्।
तथान्नेन प्रदृष्टेन सर्वं दृष्टं भवेदिह॥
अतोऽप्यन्नार्थभावेन कर्त्तव्यं कर्षणं द्विजः।
यथोक्तेन विधानेन लाङ्गलादिप्रयोजनम्॥
सीते! सौम्ये! कुमारि! त्वं देवि! देवार्च्चिते! श्रिये!
सत्कृताहि यथासिद्धा तथा मे सिद्धिदा भव॥
सकृद् दूर्नामिका नाम्ना सीतयाः स्थापनं विना।
विनाभ्युक्षणमन्नाद्यं सर्वं हरति राक्षसः॥
वापने लवने चैव खले गन्त्रीप्रवाहणे।
एष एव विधिर्ज्ञेयो धान्यानाञ्च प्रवेशने॥
देवतायतनोद्याननिपानस्थानगो व्रजन्।
सीमा श्मशानभूमिश्च वृक्षच्छाया क्षितिं तथा॥
भूमिं निखातयूपाञ्च अयनस्थानमेव च।
अन्यामपि हि चावाह्यां न कृषन् कृषिकृत् हराम्॥
नोषरां वाहयेद्भूमिं वर्ज्याश्मककरीष्टताम्।
वाहयन्नाश्रमन्तञ्च न नदीपुलिनं तथा॥
यद्यसौ वाहयेल्लोभाद्दैवाद्वापि हि मानवः।
क्षीयतेऽसौ चिरात्पापात् सपुत्रपशुबान्धवः॥

नरकं घोरतामिस्रं पापीयान्याति चैनसः ॥
योऽपहृत्य परकीयां कृषिक्षेत्राद्वाहयेद्धराम् ।
स भूमिस्तेन पापेन ह्यनन्तनरकं व्रजेत् ॥
न दूरे वाहयेत् क्षेत्रं नचैवात्यन्तिके तथा ।
वाहयेन्नपथे क्षेत्रं वाहयन्दुःखभाग्भवेत् ।
क्षेत्रेष्वेव दृतिं कुर्य्यात् स दृष्टो नावलोकयेत् ॥
न सङ्कुयेत्पशूनासौ नाभीयाद्याच्च शूकरः ।
बन्धश्च यत्नतः कार्य्यो मृगयुतासनाथ च ॥
यत्नाप्युपद्रवं राजा तस्करादिसमुद्भवम् ।
संरक्षेत्सततो यत्नाद्यस्मात् स्त्रात्मनोकरात् ॥
कृषिकृत्यानवस्त्रेवं मत्वा धर्मं कृषे ध्रुवम् ।
अनवद्यां शुभां स्निग्धां जलावगाहनक्षमाम् ॥
निम्नां हि वाहयेद्भूमिं यत्र विश्रमते जलम् ।
वाहयेन्न जलाभ्यर्णो मपुष्टोऽथेकलम्भवैः ॥
शारद मुख्यकैः स्थानं कथ्याहि वापयेद्बली ।
अर्धाम्रकारुकार्पासं तदन्यत्र तु वैसतम् ॥
वसन्तग्रीष्मकालीय मप्यूस्निग्धेषु तद्विदः ।
केदारेषु तथा शालीन् जलोपान्तेषु चैव च ॥
वृन्ताकशाकमूलानि कन्दानि च जलान्तिके ।
वृष्टिविश्रान्तपानीयक्षेत्रेषु च यवादिकान् ॥
गोधूमांश्च मसूरांश्च खल्वान् खलकुलत्थका ।
समस्निग्धेषु चान्यानि भूमिजीवान् विजानता ॥
तिला बहुविधा वोप्या अतसीश्चापमेव च ।
स्रदस्नु यो जगत्सर्वं वापयेत्कृषिकृन्नरः ॥

सम्पन्नेऽसुरतः सर्वान् गोत्रषाढ़ीन् स्वयङ्कृषी।
चिन्तयेत्सर्वमात्मानं स्वयमेव कृषिं व्रजेत्॥
प्रथमं कृषिवाणिज्यं द्वितीयं योनिपोषणम्।
तृतीये विक्रयं वस्त्रं चतुर्थं राजसेवनम्॥
नक्षैर्विलिखने यः स्यात् ब्रूयुर्दोषं मनीषिणः।
तस्याः सीरविदारेण किन्न पापं क्षितेर्भवेत्॥
तृणैकच्छेदमात्रेण प्रोच्यते चयमायुषः।
असङ्ख्यानर्गिर्वाणादसङ्ख्यातम्भवेद्यम्॥
यद्वर्षे मत्स्यवधानां तथा सङ्कर्षणामपि।
अधः कुक्कुटिकानाञ्च तद्दिने कृषिजीविनाम्॥
बधकानाञ्च यत्पापं यत्पापं खगयोरपि।
कदर्य्याणाञ्च यत्पापं यत्पापं कृषिजीविनाम्॥
वणिनाञ्च म्लेच्छानां कृषिकृत्युपजीविनाम्।
तदेनसो विशुद्ध्यर्थं प्राह सत्यवतीपतिः।
द्वादशो नवमो वापि सप्तमः पञ्चमोऽपि वा॥
धान्यभागः प्रदातव्यो देहिनः क्षोणिपो ध्रुवम्।
यस्मात्कृतभूमौ च विशाल्लिप्तेनभुग्भवेत्॥
एकैकांशापकर्म स्याद्यावद्द्वयमसप्तमौ।
ग्रामेशस्य नृपस्यापि वर्णिभिः कृषिजीविभिः॥
स च भागः प्रदातव्यो यतिस्ते कृषिभागिनी।
व्यूढौ त्व मध्यमात्रायां देयोऽयः स्यात्तदर्हयः॥
एकैकांशाय चर्षस्तु यावद्द्वयमसप्तमौ।
आत्मार्थन्तु कृषिं कुर्वन्वाहयेद्विच्छया धराम्॥
न किञ्चित्कस्यचिद्दद्यात्स सर्वस्य प्रभुर्यतः।

ब्रह्मा वै ब्राह्मणानां स्वात्ममुखवक्षोदरादिकः ॥
तद्वच्चाप्य बाहुभ्यामसृजत् क्षत्रियानपि ।
पशुपाल्यात्मनोत्पन्नानूरुभ्याञ्च तथा विशः ॥
द्विजदास्याय पश्चाय पद्भ्यां शूद्रमकल्पयत् ।
यत्किञ्चिज्जगती यत्र भूगेहाश्च गजादिकम् ॥
स्वभावेनैव विप्राणां ब्रह्मा स्वयमकल्पयत् ।
ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ ॥
न तयोरन्तरं किञ्चित्प्रजा धर्मेण रक्षयेत् ।
तस्माच्च ब्राह्मणो दद्यात् कुर्वाणो धर्मतः कृषिम् ॥
ग्रामेशस्य नृपस्यापि किञ्चिन्नमप्यसौ बलिम् ।
अथान्यत्सम्प्रवक्ष्यामि कृषिकर्त्तुर्विकारणम् ॥
संक्षेपः कर्षको येन स्वर्गलोकमवाप्नुयात् ।
सर्वसत्त्वोपकाराय सर्वत्र कृषिसत्तरः ॥
कुर्य्यात् कृषिं प्रयत्नेन सर्वसत्त्वोपजीव्यकृत् ।
सर्वस्य स्थितिकारण्यात्स देवपितृभिः पुनः ॥
मनुष्याणान्तु पोष्याय कृषिं कुर्य्यात् कृषीवलः ।
वयांसि चान्यसत्त्वानि क्षुत्तृष्णापीडितो द्विजः ॥
विमुक्तः सर्वपापेभ्यः स्वर्लोकमवाप्नुयात् ।
चतुर्दिक्षु वले कुर्य्यात्साध्यामतिघनावृतिम् ॥
सैकद्वारापिधानञ्च परिध्याश्चैव सर्वतः ।
खरोष्ट्राजोरणाश्चैव विघ्नतस्तु निवारयेत् ॥
श्वशूकर शृगालादिकाकोलूककपोतकान् ।
त्रिसन्ध्यं प्रोक्षणं कुर्य्यात् शमीयाप्युक्षणाम्बुभिः ॥
रक्षा च भस्मना कुर्य्याज्जलधाराभिरक्षणाम् ।

त्रिसन्ध्य मर्चयेत्सीतां पराशरर्षिणं स्मरन् ।
प्रेतभूतादिनामानि न वदेच्च तदग्रतः ॥
सूतिकागृहवच्चात्र कर्त्तव्यन्तत्र रक्षणम् ।
हरन्त्यरक्षितं यस्मात् रक्षांसि सर्वमेव हि ॥
प्रथमादिव पूर्वाह्णो नापराह्णे न सन्ध्ययोः ।
धन्योद्यानं सदा कुर्यात्सीतापूजनपूर्वकम् ॥
यजेत खलभिक्षाभिः कलेरोहिण्यएव हि ।
भक्त्या सर्वं प्रदत्तं हि तत्समसमिक्षाक्षयम् ॥
खलयज्ञा पवित्रैषा ब्रह्मणा निर्मिता पुरा ।
भागधेयमयीं कृत्वा तां स्पृहन्त्वीह मासिकाम् ॥
शतक्रत्वादयो देवाः पितरः सोमपादयः ।
सनकादिमनुष्यांश्च येषान्ये दक्षिणाशनः ॥
तदुद्दिश्य च विप्रेभ्यो दद्याच्च प्रथमं हली ।
विवाहे खलयज्ञे च संक्रान्तौ ग्रहणेषु च ॥
पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम् ।
अन्येषामर्थिनां पश्चात्कारुकाणां पुनः पुनः ॥
दीनानामप्यनाथानां कुष्ठीनां कुब्जरीरिणाम् ।
क्लीबान्धबधिरादीनां सर्वेषामपि दीयते ॥
वर्णानां पतितानाञ्च क्षुद्गभूतानि तर्पयेत् ।
चाण्डालानाञ्च पाकानां प्रीत्यात्युत्साहमाददत् ॥
ये केचिदागतास्तत्र पूज्यास्ते विधिवद्द्विजाः ।
स्तोकशः सीरिभिः सर्वै वर्णिभिर्गृहमेधिभिः ॥
दत्त्वात्स्वकृतया वाचा क्षमेणाथ विसर्जयेत् ।
ततः कृत्वा स्वगृहं गच्छेत्क्षात्रमभ्युदयं श्रयेत् ॥

शरद्वसन्तत्रसन्ननवान्नैः श्राद्धमाचरेत् ।
नो कृत्वान्नदश्नीयादश्नन्तं तद्दूयमश्नुते ॥
कृषात्पुत्पाद्य धान्यानि खलयज्ञं समाप्य च ।
सर्वसत्त्वहितो युक्तः इहामुत्र सुखी भवेत् ॥
कृषेरन्यतमो धर्मो न लभेत् कृषितोऽन्यतः ।
न सुखं कृषितोऽन्यत्र यदि धर्मेण कर्षति ॥
अपचत्वं निरन्नत्वं कृषितो नैव जायते ।
अनातिथ्यञ्च दुःखत्वं गोमतो न कदाचन ॥
निर्धनत्वमसभ्यत्वं विद्यायुक्तस्य कर्हिचित् ।
अज्ञानित्वमभाग्यत्वं न सुशीलस्य कर्हिचित् ॥
वदन्ति कवयः केचित् कृष्यादीनां विशुद्धये ।
लाभस्यांशप्रदानञ्च सर्वेषां शुद्धिकृद्भवेत् ॥
प्रतिग्रहचतुर्थांशं वणिग्लाभं तृतीयकम् ।
कार्षितो विंशतिश्चैव ददते नास्ति पातकम् ॥
राज्ञो दत्त्वा च षड्भागं देवतानां च विंशकम् ।
त्रयस्त्रिंशञ्च विप्राणां कृषिकर्मा न लिप्यते ॥

कृष्वा च चोत्पाद्य यवादिकानि
धान्यानि भूयांसि मखान्विधाय ।
युक्तो गृहस्थोऽपि पराशरप्राक्
तस्यामयः कश्चिदवादिदोषाः ॥

देवा मनुष्याः पितरश्च सर्वे साध्याश्च यक्षाश्च सकिन्नराश्च ।
गावो द्विजेन्द्राः सह सर्वसत्त्वैः कृष्यं न तृप्तानि मनाक् कुरेति ॥
यश्चैतदालोच्य कृषिं विदध्यात् लिप्येत पापेन स भूभवेन ।
[illegible]रेत तस्यानि विदारितापि स्याद्भूतधात्री वरदानदात्री ॥

षट् कर्माणि कृषिं ये तु कुर्युर्ज्ञानविधिं द्विजाः ।
ते सुरादिवरप्राप्ताः स्वर्गलोकमवाप्नुयुः ॥
षट्कर्मभिः कृषिः प्रोक्ता द्विजानां गृहमेधिनाम् ।
गृहस्थ गृहिणीमाङ्गल्यद्विवाहमथोच्यते ॥

इति श्रीवृद्धहारीतीये धर्मशास्त्रे सुव्रतप्रणीतायां कृषिकर्मणीतायज्ञोपवर्णनं नाम तृतीयोऽध्यायः ॥

---

## चतुर्थोऽध्यायः ।

स्वयञ्च याजयेत् चैव धान्यैश्च स्वयमर्जितैः ।
कुर्याद्विवाहयागादिपञ्चयज्ञांश्च नित्यशः ॥
अष्टौ विवाहा नारीणां संस्काराश्च प्रकीर्तिताः ।
ब्राह्मादिका क्रमेणैव सम्प्रवक्ष्याम्यतः पृथक् ॥
जात्यादिगुणयुक्ताय पुंस्त्वे सति वराय च ।
कन्यालङ्कृत्य दीयेत विवाहो ब्राह्मः स तु ॥
रेतो गच्छति यस्यास्तु स्तनश्च हृदिकेऽनिलम् ।
पुमान् स्यात् लक्षणैरेतै र्विपरीतैश्च षण्डकः ॥
ये यज्ञे वर्त्तमाने तु ऋत्विजः कर्म कुर्वते ।
कन्यालङ्कृत्य दीयेत विवाहः स तु दैवकः ॥
वराय गुणयुक्ताय विदुषे सद्वयाय च ।
कन्या गोद्वयमादाय दीयेतार्षः स उच्यते ॥
कन्या चैव वरश्चोभौ इच्छया धर्मचारिणौ ।
स्यातामिति च यत्रोक्तं दानं कार्यं विधिस्त्वयम् ॥
एतावद्देहि मे द्रव्य मित्युक्त्वा प्राक् प्रदाय च ।

यत्र कन्यां प्रदीयेत स दैवत्यविधिः स्मृतः ॥
यत्रान्योन्याभिलाषेण उभयोर्वरकन्ययोः ।
तयोस्तयोर्विवाहः स्याद्गान्धर्वः प्रथितः स तु ॥
युद्धे हृत्वा बलात्कन्यां यत्रास्थित्याप हृत्वृता ।
उद्यन्तु स तु विद्वद्भिर्विवाहो राक्षसः स्मृतः ॥
सुप्तां वापि प्रमत्तां वा कन्यां छलेन भुञ्जते ।
सर्वेभ्यः स तु पापिष्ठः पैशाचः प्रथितोऽष्टमः ॥
आद्या वाद्यस्य षट् प्रोक्ता धर्माश्चत्वार एव हि ।
चत्वारोऽन्ये द्वितीयस्य आद्यस्य च त्रयस्य च ॥
पञ्चमस्य तथा षष्ठः स्मृतौ च तु चतुर्थयोः ।
द्वितीयस्यापि यत्प्रोक्ता एतयोस्तेन चाष्टमः ॥
वैधस्याद्यनुरूपेण द्वितीयापरयोः स्मृतः ।
सर्वसप्तममेकस्याद्वितीयस्यैव कीर्त्तितः ॥
अन्त्यावन्त्यधमौ चोक्ता बहावः अत्र स्तुत्वा ।
यथाबुधस्वरूपेण प्रोक्तो दैत्यस्तु मानुषः ॥
वार्त्तायां प्राक्ततोऽधमान्नसुराद्यविवाहकैः ।
स्वात्मानं द्विगुणान्वस्याद्दश सप्त च यच्च षट् ॥
स्त्रीणामाजन्मधर्मार्थं वंशशुद्धौ प्रयत्नवान् ।
वरं हि कवयो विद्वान् जात्यादिगुणसंयुतम् ॥
जातिर्विद्यावयः शक्तिरारोग्यं बहुपक्षता ।
अर्थित्वं वित्तसम्पत्तिरष्टावेते वरे गुणाः ॥
जातिर्विद्या च रूपञ्च कुलञ्चैव नवं वयः ।
आरोग्यत्वं विशेषेण पुंस्त्वे सत्यपि भक्षयेत् ॥
जातीरूपञ्च शीलञ्च वयो नवमरोगिता ।

स्वाचरत्वं विशेषेण सलक्षवरमाश्रयेत्॥
स यादि रूपं विलक्षं तथाग्रे वयसं दृढम्।
सन्तोषजननं स्त्रीणां प्रभावानाश्रयेद्वरम्॥
न जातिं नच विद्यां च वित्तं वाचरणं स्त्रियाम्।
किन्तु तत्प्राप्तिमिच्छन्ति तस्मात्प्रीतिकरं श्रयेत्॥
पिता यत्र सगोत्रत्वं माता यत्र सपिण्डता।
न च तामुद्वहेत्कन्यां दारकर्मण्यनाहृताम्॥
कन्यायाश्च वरस्यापि रूक्षोभयो भवेद्धृतिः।
तथा कन्यां वरो धीमान्वरयेद्वंशवृद्धये॥
नानामतानि सर्वेषां सतां कन्यां वरं प्रति।
सन्तानार्थं विप्रुद्ध्यर्थं जात्यादिषु च नान्यतः॥
दूरस्थानामविद्यानां मोक्षं धर्मानुयायिनाम्।
शूराणां निर्धनानाञ्च न देया कन्यका बुधैः॥
वर्जयेदतिरिक्ताङ्गीं कन्यां हीनाङ्गरोगिणीं।
अतिलोम्नीं हीनलोम्नीं मवाचमतिवाम्युताम्॥
पिता पितामहो भ्राता माता मातामहोऽपि वा।
कन्यदाः स्युः क्रमेणैते पूर्वाभावे परः परः॥
अधिकारी यदा न स्यात्तदस्याय नृपस्य सा।
तद्विराच स्वयङ्कर्यं कन्यापि वरयेद्वरम्॥
पिङ्गलां कपिलां कृष्णां दुष्टवाक्काकनिस्वनाम्।
स्थूलाङ्गजङ्घपादाश्च सदा चाप्रियवादिनीम्॥
त्यजेन्नागनदीनाम्नीं पक्षिवृक्षर्क्षनामिकाम्॥
अहिप्रवाल्यनाम्नीञ्च तथाभीषणनामिकाम्।
सुजातिमुद्वहेत्कन्यां सुरूपां लक्षणान्विताम्॥

अरोगिणीं सुशीलाञ्च तथा चाष्टमतीमपि।
सुलक्ष्मां शुभनासाञ्च पतिप्रीतिकरीमपि॥
श्वश्रूश्वशुरसुर्व्वादिशुश्रूषाकारिणीं प्रियाम्।
अव्यङ्गकुलसञ्जाता मनभिश्वस्वगोत्रजाम्॥
प्रस्वेदसुभगां थाता शुभमिच्छन् समुद्वहेत्।
विप्रः स्वामपरेच्छेतु राजा स्वामपरे तथा॥
वैश्यः स्वाञ्च चतुर्थीञ्च क्रमेणैव समुद्वहेत्।
पितृभिः सप्तमीमेके मातृतः पञ्चमीमपि॥
उद्वहेदितिमन्यन्ते कुलधर्मसमाश्रिताः।
उक्तलक्षणांकन्यायां कृत्वा पाणिग्रहं द्विजः॥
धर्म्मोद्वाहनकेनापि तदा दद्याद्धुताशनम्।
दायाद्यकाले वा दद्यात्तदुक्तं कर्मकृद्द्विजः॥
यदा वापि भवेद्भक्तिः सम्पत्तिर्वा तदा भवेत्।
ऋतावृतौ स्त्रियङ्गच्छेत् स्त्रीच्छया चपरं स्मरन्॥
सर्व्वन्तदिच्छया कुर्याद्यथाभवोभवेद्रतिः।
भोज्यालङ्कारवासोभिः पूज्याः स्युः सर्व्वदा स्त्रियः॥
यथा किञ्चिन्न शोचन्ति नित्यं कार्य्यन्तथा नृभिः।
आयुर्वित्तं यशः पुत्राः स्त्रीप्रीत्या स्युर्नृणां सदा॥
नश्यन्ते ते तदा प्रीतौ तासां शापादसंशयः।
स्त्रियश्च यत्र पूज्यन्ते सर्व्वदा भूषणादिभिः॥
देवाः पितृमनुष्याश्च मोदन्ते तत्र वेश्मनि।
स्त्रियस्तुष्टाः स्त्रियः साक्षाद्रुष्टाश्च दुष्टदेवताः॥
वर्द्धयन्ति कुलन्तुष्टाः नाशयन्त्यपमानिताः।
नापमान्याः स्त्रियः सद्भिः पतिश्वशुरदेवरैः॥

भ्राता पितृ च माता च तथा बन्धुभिरेव च।
स्त्री यस्य पुरुषस्यापि यत्नोभयो भवेद्गतिः॥
तत्र धर्मार्थकामाः स्युः स्तद्धीना यतस्त्वमी।
षट् कर्माणि कृतान्तेषां येषां भार्या पतिव्रता।
पतिलोकन्तु ता यान्ति तपस्य तेन योगवित्॥
पतिव्रता तु साध्वी स्त्री अपि दुष्कृतकारिणी।
पतिसुकृत्वं याति स्वां काङ्क्षीव पतिता स्वजाम्॥
जीवन्वापि मृतोवापि पतिरेव प्रभुः स्त्रियाम्।
नान्यत्र देवता तासां तमेव प्रभुमर्चयेत्॥
अन्यस्य पि हि दृष्टा स्त्री यान्यभावा प्रियम्पतिम्।
सा गच्छे नरकं घोरन्तद्द्रोहाद्दयुतेऽपि च॥
नियोज्य स्त्वशक्त्येषु सर्वदा ता नृभिः स्त्रियः।
स्त्वशार्थासक्त चित्तास्तास्तदैवार्हन्ति भोचितुम्॥
स्त्रीणामष्टगुणः कामो व्यवसायश्च षड्गुणः।
लज्जा चतुर्गुणा तासां माहारश्च तदर्द्धकः॥
न वित्तं नैव जातिश्च नापिरूपमपेक्षते।
किन्तु ताभिः पुमानेष इति मत्वेव भुज्यते॥
विकुर्वाणाः स्त्रियो भर्त्तुरायुष्यधननाशकाः।
अनायासेन वा स्वस्य यथाशक्त्या भवन्ति हि॥
नारीणाञ्च नदीनाञ्च न गतिर्ज्ञायते नृभिः।
कूलं कूलं प्रयायिन्योः कालक्षेपो न जायते॥
चेष्टाचरित्रचिह्नानि देवानेव विदुः स्त्रियाम्।
किं पुनः प्राणिमात्रा स्तु सर्वथा नष्टबुद्धयः॥

तस्मात्ताः सर्वथा रक्ष्याः सर्वोपायैर्नृभिः सदा।
श्वशुरैर्देवराद्यैस्ताः पितृभ्रात्रादिभिस्तथा॥
विवाहात् प्राक् पिता रक्षेत्ततः पतिस्तु यौवने।
रक्षेत्पुत्रोर्द्ध्वके पुत्राः नास्ति स्त्रीणां स्वतन्त्रता॥
स्वातन्त्र्येण विनश्यन्ति कुलजा अपि योषितः।
न स्वातन्त्र्य मतस्तासां प्रजापति रकल्पयत्॥
अशौचाश्च सशौचाश्च अमेध्या अपि पावनाः।
दुर्वाचोऽपि सुवाचस्ता तस्मादन्वेषयेत्ततः॥
शौचं वाचं च मेध्यत्वं सोमगन्धर्वपावकाः।
ददुस्तासां वरानेतां तस्मान्मेध्यतराः स्त्रियः॥
भर्त्तारो वो भविष्यन्ति युष्मच्चित्तानुसारिणः।
रक्षणीयास्तत तास्तु सर्वभावेन योषितः॥
ममाङ्गष्कृत्य मिद्याद्यैर्देवन्यस्तां नृणां तनौ।
अर्धकाया नृणां तास्ताः पृथक् धर्मादिना स्त्रियम्॥
नदी वापी स्त्रियं गच्छेन्न सगर्भां व्यवस्थिताम्।
अभिगच्छेद्दविद्वान् यस्तदा भूः चयमेति च।
नदी वापी स्त्रियं गच्छेदिच्छं स्तदिच्छयापि च॥
न पर्वसु न सन्ध्यासु नाद्यार्त्तु चतुरात्रिषु।
बन्ध्याष्टमेऽधिवेत्तव्या नवमे च मृतप्रजा॥
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी।
न वक्त्रेऽभिगमं कुर्य्यात्प्राणी स्त्रीतयोषितः।
कुर्य्याच्चेत्पितर स्तस्य पतन्ति रेतसोभुजः॥
भार्य्याधीनं सुखं पुंसां भार्य्याधीनं गृहं वनम्।

भार्य्याधीना सुखोत्पत्तिः भार्य्याधीनः शुभोदयः ॥
यत्र भार्य्या गृहं तत्र भार्य्याहीनं गृहं वनम् ।
न गृहेण गृहस्थः स्यात् भार्य्यया कथ्यते गृही ॥
गृही स्याद्गृहधर्म्मेण स वै पञ्चमखादिकाः ।
तद्धीनो न गृहस्थः स्यात् भार्य्यया कथ्यते गृही ॥
श्रौतो वा यदि वा स्मार्त्तः सर्व्वेषां गृहमेधिनाम् ।
कण्डन्युदककुम्भीच चुल्ली पेषण्युपस्करम् ॥
पञ्चयज्ञविधानेन कुर्य्यात्पञ्च महामखान् ॥
पञ्चसूना वहन्त्यत्र सूनादोषो न विद्यते ॥
यज्ञादौ वेदमारभ्य स्नात्वा भक्त्या द्विजोत्तमः ।
अध्यापयेद्द्विजान् शिष्यान् स वै ब्रह्ममखः स्मृतः ॥
यः स्नात्वाऽहरहः कुर्य्याद्देवांश्च मनुजान् पितॄन् ।
तर्पयेच्छ्रद्धया भक्त्या पितृयज्ञः स वै मखः ॥
श्रौतेवा यदि वा स्मार्त्ते यज्जुहोति हुताशने ।
विधिमन्त्रैः स वै विप्रः स तु देवमखः स्मृतः ॥
दशस्वाशासु यः कुर्य्याद् तथाशेषे बलिं द्विजः ॥
इन्द्रादिभ्यस्तथान्येभ्यः स वै भूतमखो मतः ।
समागतातिथिं भक्त्या यस्तोषयति नित्यशः ॥
अन्यानभ्यागतांश्चैव समानीयेष्ट कथ्यते ।
एवं पञ्चमखत्वं स्यान्मधुमांसाज्यपायसम् ॥
स सन्तर्प्य पितॄन् देवान् मनुजः स्वर्गमाप्नुयात् ।
गृहस्थायौषधिं मत्वा वाचं धेनुं चतुःस्तनीम् ॥
स्वर्गौकसः पितॄन् देवान् पुण्यातिथिवरानपि ।

स्वर्गौकोभिः पितृभ्यस्तु पुण्यास्तेऽतिथयो द्विजैः ॥
चत्वारस्तु सुता एते यजुर्वेद उदाहृतः ।
स्वाहाकारो वषट्कारो हन्तकार स्तथा स्वधा ॥
देवानि भागधेयौ द्वौ मन्यश्च मनुजां तथा ।
पितृणाञ्च चतुर्थस्तु इतिवेदनिदर्शनम् ॥
इति नित्य विधिवत्सकलं कर्म नैत्यिकम् ॥
प्राणाग्निहोत्रविधिना भुञ्जीतान्नं यथाप्रकृतम् ।
अदत्त्वा पोष्यवर्गस्य ह्यहत्वाऽध्यापनादिकम् ॥
यस्तादृक्कश्च योऽश्नीयात्सोऽश्नीयात्किल्बिषं द्विजः ।
प्राप्नुयादिकमेवाशु दिव्यायुः कीर्तिकीर्त्तितम् ॥
द्विव्याग्निस्थानमयाद्याद्यन्नदश्नन्ति राक्षसाः ॥
अथ प्राणाग्निहोत्रस्य श्रूयतां द्विजसत्तमाः ॥
यज्ञमायो विधिः पुण्यः पावनः प्रेत्य चेह च ।
यो विधि दैवताज्यस्तं संसारबन्धमाशक्तत् ॥
तद्विदस्तु दिवं यान्ति मुक्ता देवान् ऋषीन च ।
उद्वरेद्यदि मत्वाशु पुरुषानेकविंशति ॥
सर्वेष्टिफलभाक् यायाद्धे धर्मं चय मद्ययम् ।
यः कालाकालविद्विप्रो नैनःस्पर्शी स कर्हिचित् ।
सोऽस्पृष्टी नाविशेत्तत्र यद्धत्वा नैव संहतौ ।
दशपञ्चाङ्गुलव्याप्तं नासिकाया बहिःस्थितम् ॥
जीवो यत्र विमुच्येत सा कला षोडशी स्मृता ।
सर्वमेतत्समग्रं व्याप्तं त्रैलोक्यं सचराचरम् ॥
ब्रह्मविद्येति विख्याता वेदान्ते च प्रतिष्ठिता ।

न वेदं वेदमित्याहुर्वेदब्राम परम्पदम् ॥
तत्पदं विदितं येन स विप्रो वेदपारगः ।
आकृतिः सा परा ज्ञेया सा च शान्तिः प्रकीर्तिता ।
गायत्री सा च विज्ञेया सा च सन्ध्या प्रकीर्तिता ॥
तज्जप्य तच्च वै ध्येयं तद्व्रतं तदुपासितम् ।
तां कलां यो विजानाति स कलज्ञो द्विजः स्मृतः ॥
यत्तुरीयं पदं प्रोक्तं यस्मिन् लीन मिदं जगत् ।
तत् ज्ञात्वा परमं तत्त्वं न भूयः पुरुषो भवेत् ॥
प्राणमार्गास्त्रयः प्रोक्तास्तिस्रो नाड्यः प्रकीर्तिताः ।
इड़ा च पिङ्गला चैव सुषुम्णा च तृतीयका ॥
इड़ा च वैष्णवी नाड़ी ब्रह्माणी पिङ्गला स्मृता ।
सुषुम्णा चेश्वरी नाड़ी त्रिधा प्राणवधा स्मृता ॥
उत्तरं दक्षिणं ज्ञेयं दक्षिणोत्तरसंस्थितम् ।
मध्येतु विषवं ज्ञेयं पुटद्वयविनिःसृतम् ॥
संक्रान्तौ विषुवश्चैव यो विजानाति विग्रहम् ।
नित्यमुक्तः स योगी च ब्रह्मवादिभिरुच्यते ॥
मध्याह्ने चार्धरात्रे च प्रभातेऽस्तमये तथा ।
विषुवन्तं विजानीयात्पुटद्वयविनिःसृतम् ॥
हृत्पुण्डरीकमरणीं मनोमन्थनमेव च ।
प्राणरज्वा मथेदग्निं रात्मा ध्वर्युः प्रतिष्ठितः ॥
ज्वालयेत्पूरकेणाग्निं स्थापयेत्कुम्भकेन तु ।
रेचकेणोर्ध्ववक्त्रेण ततो होमं करोति यः ॥
यत्तद्धृदि स्थितं पद्ममधोनालं व्यवस्थितम् ।

तद्दै विकासते पद्मं प्राणवन्तश्च सर्पति॥
वामहस्तधृते पात्रे दक्षिणे चाम्बसि स्थिते।
समाद्द मुखरेद्विप्र साक्षम्भायन्तु पूरयेत्।
पूरयेत् पूरकं प्राज्ञ निश्चलं कुम्भकं भवेत्।
विनिहत्य शनैर्वायुं रेचकान्तं विनिर्दिशेत्॥
स्वाहान्तैः प्रणवाद्यैश्च स्वस्वनाम्ना च वायुभिः।
जितात्मा योषितः षष्ठः षडाहुत्याहुतिं भवेत्॥
जिह्वादत्तं ग्रसेदन्नं दन्तैश्चैव न तत् स्पृशेत्।
दशनैः स्पृष्टमात्रेण पुनराहस्य चारभेत्॥
मुख माहवनीयोऽग्निर्गार्हपत्य स्तथोत्तरे।
हृदये दक्षिणाग्निश्च ग्रहाग्निश्चापि दक्षिणे॥
सभ्यश्चोत्तरतश्चान्य इत्यग्निस्मरणक्रमः।
प्राणाग्नेव हि होत्रादि चिन्तयेत्तद्दैव तु॥
होतारं प्राणमित्याहुरुद्गातारमपानकम्।
ब्राह्मणं व्यानमित्येके उदानमाध्वर्युमित्यपि॥
समानञ्चेह यज्वान मिति ऋत्विक् क्रमं बुधः।
अहङ्कारं पशुं मत्वा प्राणञ्च पशुमित्यपि॥
बुद्धिः प्रत्यरणिः पृथ्वी लोमानि च कुशाः स्मृताः।
मनोविभक्ता त्वग्जिह्वा इति तास्ते प्रचक्षते॥
मत्वा तु मातृमोङ्कारं हुङ्कारश्च तथा पुनः।
उत्तिष्ठन्ननताग्रे च हरिल्लोहितपिङ्गलः॥
सुप्तः परिधये तुभ्यं सुहृद्भि र्दैवतञ्च यत्।
विजिह्वो यो जाठराग्नेः स्वाहा प्राणाय वात्ययः॥

इन्द्रगोपककर्णाय त्रिजिह्वायाग्निदैवतम् ।
ॐ स्वाहा अपानाय स्वाहाकाराज्जुहुयात्परेत् ॥
गोक्षीरसमवर्णाय पर्जन्यवह्निदैवतम् ।
स्वाहोदानाय सोङ्कार मनलाय पराचिषे ॥
तडित्समानवर्णाय वाय्वाग्निदैवतायते ॥
ॐ स्वाहाच समानाय ॐ स्वाहा चाहवेधसे ।
तर्जनीमध्यमाङ्गुष्ठैः प्राणस्य चाङ्कृतिः ॥
मध्यमानामिकाङ्गुष्ठे व्यानस्य परिकीर्तिता ।
कनिष्ठानामिकाङ्गुष्ठै रपानायाङ्कृतिः स्मृता ॥
मध्यमानामिकाभ्यां मुदाने जुहुयाद्बुधः ।
समाने सर्वहस्तस्य आङ्कृतिः स्यात्समानता ॥
जलं पीत्वा तु तृप्यन्ति देवताः शनैः शनैः ।
ततोऽन्यद्द्रव्यमश्नीयात् पूरणायोदरस्य च ॥
विधिं प्राणाग्निहोत्रस्य ये द्विजा नैव जानते ।
अपानेन तु भुञ्जन्ते तेषां सुखमपानवत् ॥
यो ज्ञात्वा तु विधिं भुङ्क्ते यथोक्तमिदमाचरेत् ।
इहामुत्र च पूज्यत्वं ब्रह्मभूयाय कल्पते ॥
त्रिःसप्तकुलमुद्धृत्य दातुरप्यक्षयं भवेत् ।
दातुरपि हि यत्पुण्यं भोक्तुश्चैव हि तत् फलम् ॥
दाता चैव तु भोक्ता च तावुभौ स्वर्गगामिनौ ।
यो जानाति विधिं चेमं स भवेद्ब्रह्मवित्तमः ॥
एकं पिबति गण्डूषं त्यजेदर्द्धं धरातले ।
पीतेन पितृतृप्तिस्तु भूमौ च भूमिदेवता ॥

पिवेद्द्वितीयं गण्डूषं ब्राह्मणो ज्ञानदुर्बलः।
स हतः पितृदैवत्य मात्मानं नरकं व्रजेत्॥
रहस्यं सर्वशास्त्रेषु सर्वशास्त्रेषु दुर्लभम्।
ज्ञानात्मा सुक्षमं स्थानं न कस्यचित्प्रकाशयेत्॥
ज्ञानानि च प्रकाश्यानि पुंसामविदुषां वदेत्।
स प्राप्यस्य फलं तेषा मात्मानं नरके नयेत्॥
अश्नीयाद्विधिवच्छुद्धपात्रः कृतपरीहितः।
पूजितान्नमवाग्जुष्टः स पैशाच ममाह्निकम्।
वाग्यतस्त्वस्तपात्रोऽपि क्षिप्रासान पि वा द्विजः॥
तस्य त्रिरात्रपुण्यस्तु दानेऽपि कथयोविदुः।
चतुस्त्रिकोषाद्धता च विप्रक्षत्रविशां क्रमात्॥
वदन्ति परिक्षिप्यन्ति तच्छीनान्नतु राक्षसम्।
अश्नीयात्प्रागपोशानं तथा भुक्त्वा सकृत्तपः॥
अनग्नममृतं तत् स्यात् भुक्तमन्नं द्विजन्मना।
काले भुक्त्वा समुत्थाय प्रोक्ष्य विप्रं समीक्ष्य च॥
अङ्कःपतिस्तत्र स्थित्वा चिन्तयेद्दुष्कृतात्मकम्।
भार्य्या भोजनवेलायां भिक्षां प्रदाय पश्च वा॥
दत्त्वा शेषं समश्नीयात्तापत्यभृत्यकैः सह।
निहत्य साऽपि सकलं किञ्चित् स्थित्वा सुखेन च॥
स्वस्वीयकृत्यकार्य्येषु साऽपि सा त्वपरा पुनः।
उपास्य पश्चिमां सन्ध्यां कृत्वा चैवाग्न्युपस्थितिम्॥
किञ्चित्पश्चात्समश्नीयात्सायं प्रातरिति श्रुतिः।
स्वाध्याय मभ्यसेत्किञ्चित् यामद्वयमधीति च॥

शयानो सप्तमी यामौ ब्रह्मभूयाय कल्पते।
सुशयने शयीताद्ये एकान्ते च स्त्रिया सह॥
सेवनं मैथुनादीनां वदन्ति मुनिपुङ्गवाः।
ऋतुस्नानात् सुपुत्रार्थी आधानविधिना द्विजः॥
प्रसह्य भार्य्या योनि मितिवक्तेति दर्शनात्।
कृत्वाधानविधानन्तु स्त्रीयोग मश्नयेत् पुनः॥
सप्येदविक्षतौ योनौ विकाराद्विक्षताः प्रजाः।
ब्राह्मे मुहूर्त्तमुत्थाय प्रातःसन्ध्या मुपक्रमेत्।
आसूर्य्योदयनात्प्रातः सायञ्च नक्षत्रदर्शनात्॥
अनृतं मद्यगन्धञ्च दिवामैथुनमेव च।
पुनाति वृषलस्यान्नं सन्ध्या वहिरुपासिता॥
सिन्दुरारुणभं भाति यौवनं यौवतारति।
उदयेऽस्तमये भानौ तावत्सन्ध्येति शक्तिजः॥
आधानतो द्वितीयेतु मासे पुंसवने भवेत्।
सीमन्तोन्नयनं षष्ठे कार्य्यं मासेऽष्टमेऽपि वा॥
जातस्य जातकर्म्मादि विधिवच्छ्राद्धपूर्वकम्।
दिने चैकादशे नामकर्म्मादिवद्द्विजन्मनाम्॥
तुर्य्ये निष्क्रमणं मासे षष्ठेऽन्नप्राशनं तथा।
चूड़ाकर्म्म द्वितीयेऽब्दे कार्य्यं वा कुलधर्मतः॥
सर्वं स्त्रियां विमन्त्रं तु कार्य्यं कार्य्यविमुक्तये।
न स्वर्य्यस्य द्विजाः श्वेताः श्रियायैव कथञ्चन॥
स व्रात्यः स परित्याज्यो द्विजो यस्माद् द्विजन्मनाम्।
मुञ्जमौञ्जी शणानान्तु त्रिवृता रशना स्मृता॥

कार्पासक्षममेषोर्णान्युपवीतानि त्रिष्टतिः ।
पालाशवटपीलूनां दण्डाश्च क्रमशः स्मृताः ॥
कार्ष्णं च रौरवं वास मजिनानि द्विजन्मनाम् ।
शिरोललाटनासान्ताः क्रमाद्दण्डाः प्रकीर्त्तिताः ॥
अवणाः सत्वचो ऽदग्धा दण्डाः शुभकरा नृणाम् ।
गायत्र्या त्रिष्टुप् जगत्या तयाथासुपनायनम् ॥
गायत्र्याग्निष शैवो वा शुम्भादित्यपरेषु च ।
सवितुः पाठः सवितुर्विश्वाद्रूपाणि चक्रमात् ॥
यौपासनादिका मन्त्रा विप्रादीनां सुदारुताः ।
ब्रह्मणो विप्रगेहेषु नृपस्तेषून्तमेषु च ॥
वैश्यो विप्रो नृपः स्वेष कुर्याद्भिक्षां स्वहक्तये ।
एकान्नश्च द्विजोऽश्नीयाद्ब्रह्मचारी व्रते स्थितः ॥
भिक्षाव्रतं द्विजातीनां उपवाससमं कृतम् ।
प्रतिग्रहो न भिक्षा स्यात् न तस्याः प्रपाकृता ॥
सोमपानसमा भिक्षा यतोऽश्नीत स भिक्षया ।
भिक्षया यस्तु भुञ्जीत निराहारः सउच्यते ॥
भिक्षामथाभिशस्तेषु साचारेषु द्विजेषु च ।
भिक्षेत भिक्षां क्रमशो गुरोः कुलं विवर्जयेत् ॥
स्वसारं मातरञ्चापि मातृस्वसारमेव च ।
भिक्षेत प्रथमां भिक्षां याचेतं न विमानयेत् ॥
भवति ! भिक्षां मे देहि भिक्षां भवति ! देहि मे ।
भिक्षां मे देहि भवति ! क्रमेणैतदुदाहरेत् ॥
द्वादशाब्दं व्रतं धार्य्यं षट्त्र्यब्दं तु स्मृतिं प्रति ।
आदित्याब्दे त्यजेत्तद्वै दत्त्वा तु गुरवे वरम् ॥

त्रयस्तु स्नातकाः प्रोक्ताः विद्याव्रतोपसेविनः ।
विद्यां समाप्य स स्नायाद्विद्यास्नातक उच्यते ॥
समाप्य च व्रतं यस्तु व्रतस्नातक उच्यते ।
द्वयं समाप्य यः स्नायात्स विनामाभिधीयते ॥
अष्टैकद्वादशाब्दानि सगर्भाणि द्विजन्मनाम् ॥
मुख्यकालो व्रतस्यैष स्यान्य उक्तो विपर्यये ॥
द्विगुणाब्देषु कर्त्तव्या क्रमादुपनतिर्द्विजे ।
हीनगायत्रीच व्रात्या उक्तकालादनन्तरम् ॥
नाध्येयो नैव चोद्वाह्यो व्यवहारविवर्जितः ।
न याज्यानाध्यकार्य्येषु प्रयोज्यास्तु इति श्रुतिः ॥
क्लीवश्वित्रीमवक्ता ये निर्लोमदेहवाससः ।
उदरस्नानपत्याश्च अहस्यास्ते विगर्हिताः ॥
येऽजस्रं विहितं कुर्युः प्राप्नुयुस्ते सदा शुभम् ।
दीर्घायुष्ट्वं प्रजावत्त्व मरोगित्वं यशोदिवम् ॥
क्षीणायुष्यं दरिद्रत्व मप्रजत्वं मरोगिताम् ।
गर्हितत्वं च लोकेऽत्र विदुर्निषिद्धकारिणः ॥
प्रातर्वा यद्दिवा साय मद्यादन्नमनर्चितम् ॥
मानाज्यस्यानपोशानं शुभप्रेप्सु द्विजन्मनाम् ।
आपोशानं विना नाद्यान्नादद्यान्न मनर्चितम् ।
अनाज्यं न दिवा सायं शुभमिच्छन् समश्नुते ॥
षोड़शाब्दानि विप्रस्य द्वाविंशति नृपस्य च ।
चतुर्विंशतिरन्यस्य व्रात्यास्ते स्युरतः परम् ॥
उपनेया न ते विप्रैर्नाध्याप्याः शूद्रधर्मिणः ।
न व्यवहार्यायाज्याश्च इति धर्मविदो विदुः ॥

स्त्रीणामुद्वाह एको वै वेदोक्तः पावनो विधिः ।
स्त्रीपुंसोर्येन विन्यासः सख्योरन्योन्य मुच्यते ॥
स्वस्मिन्नकाद्विभर्त्येषा पतिर्बिभर्ति सोऽपि ताः ।
अतो भार्य्या च भर्त्ता चेत्यस्य वेदो निदर्शनम् ॥
पतिर्विशति यज्जायां गर्भो भूत्वेह मातरम् ।
तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥
जातोऽसा तेन जाया वै यदस्यां जायते पुनः ।
इयमग्रभवनं भार्य्या बीजमस्यां विधिष्यते ॥
देवा ऋषिमनुष्याश्च भार्य्या तु जननी तु यः ।
आत्मना जायते ह्यात्मा सेरावत्यतितारिणीम् ॥
भार्य्या जाया जनन्येषा इति वेदप्रतिष्ठितः ।
यस्मात्सन्ततिपुंनाम्नो नरकात् पुत्र उच्यते ॥
सर्वां संदृष्टिमाहृत्य तन्नूनं ब्रह्मणैकताम् ।
यः पिता जातपुत्रस्य पश्येच्चेज्जीवतो मुखम् ॥
सर्वं मे सफलं प्राप्तमैहिकामुत्रिकञ्च यत् ।
किं दृष्टै रजिनैस्तीर्थैस्तपोभिः किं समाधिभिः ॥
पुमांसः ! पुत्रमिच्छध्वं स वै लोके वदावदः ।
प्राणानमुष्मिन् शरणं किं वासो रूपं हिरण्यं पशवो विवाहः ।
सखा च यज्जा क्षपणाय पुत्री ज्योतिः परम्पुत्र इहाप्यमुत्र ॥
स पुरुषस्तूत्तमो लोके यस्य पुत्रश्चिरायुषः ।
विशेषेण द्विजश्रेष्ठः स परं ब्रह्म विन्दति ॥
पुत्रेण प्राप्यते स्वर्गो जातमात्रेण तु ध्रुवम् ।
तस्मादिच्छन्ति सर्वेऽपि पशवोऽपि वयांसि च ॥
जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ।

पुत्रस्यापि न पुत्रत्वं य स्त्राति नरकार्णवात् ।
यः पिता स तु पुत्रस्तु जायैवहि जनन्यपि ॥
न पृथक्त्वं विदुस्तज्ज्ञा अनयोः परयोरपि ।
अयं हि पन्था पुरुषस्य तस्य ध्रुवं भवेत्पुत्रजन्मेह यस्य ।
तद्वीक्ष्य चोर्ध्वं पशवो वयांसि पुत्रार्थिनो मातरमारुहन्ति ॥
अनिष्यमाणा इच्छन्ति पितरः स्वकुले सुताम् ॥
कश्चिद्गत्वा गयायां नोऽवश्यं पिण्डान् प्रदास्यति ।
यस्त्वन्योऽश्वमेधेन नीलं मोक्ष्यति गोस्टहे ॥
दृष्टव्यं पितृभिः सर्वपुत्रेभ्यः सकलं फलम् ।
शुभ्रशौर्यं कश्चित्तो वा प्राणान्मोक्ष्यति गोस्टहे ॥
रामद्रो वा कुरुक्षेत्रे स्नानी वाथ भविष्यति ।
पुच्छे शिरसि यः शुक्लः शुक्लपा लोहितं वपुः ॥
देवाद्यभीष्टो नीलो यः कुकुद्यः पावनो वृषः ।
रक्तो वा यदि वा शुक्ल भ्रुविषाणः शुभेक्षणः ॥
यो न हीनातिरिक्ताङ्ग स्त्वं वा वृषं समुत्सृजेत् ।
दुहितापि तथा साध्वी श्वशुरयो रपार्लतात् ॥
पतिव्रता च धर्मज्ञा अपि दुर्गतिलङ्घयेत् ।
यः पिता स च वै पुत्र स्तत्समा दुहितापि च ॥
पुत्रश्च दुहिता चोभौ पितुः सन्तानकारकौ ।
तत्सुतः पावयेद्वंश्यान् त्रीन्वै मातामहादिकान् ॥
दौहित्रः पुत्रवत् स्वर्गं उक्तौ शास्त्रैश्च तौ समौ ।
आधानादिकसंस्काराः प्रोक्ताश्चैव द्विजन्मनः ॥
कर्त्तव्याश्च स्वशाखोक्ताः केचित् कुलक्रमेण च ।

चत्वारिंशच्च ते सर्वे निषेकाद्याः प्रकीर्तिताः ॥
मन्त्रदीक्षा च विविधा तथैवाभ्येष्टिकर्म च ।
कुलाचारोऽपि कर्त्तव्य इतिशास्त्रविदो विदुः ॥
देशाचारस्तथाधर्म इति प्राह पराशरः ।
अयं हि परमो धर्मः सर्वेषामिति निश्चयः ॥
हीनाचारश्च पुरुषो निन्द्यो भवति सर्वशः ।
क्लेशभागीच सततं व्याधितोऽल्पायुरेव च ॥
आचारे व्यवहारे च दुराचारो विपर्ययः ।
नृणामाचारतो धर्मः स्यादधर्मो विपर्ययात् ॥
आचारवन्तो मनुजा लभन्ते आयुश्च वित्तं च सुतांश्च सौख्यम् ।
धर्मं तथा शाश्वतमीशलोक मत्रापि विद्वज्जनपूजितांश्च ।
वेदाः सहाङ्गैः स पुराणविद्याशास्त्राणि वेद्यानिच तद्विहीनम् ॥
कुर्युर्नवैतानि च संस्मृतानि नरं पवित्रं प्रवदन्ति वेदाः ।
येऽधीतवेदाः क्रियया विहीना जीवन्ति वेदैर्मनुजाधमास्तान् ॥
वेदास्त्यजेयु र्निधनस्य काले नीडं शकुन्ता इव जातपक्षाः ।
आचारहीननरदेहगताश्च वेदाः
शोचन्ति किन्तु कृतवन्त इतिस्म चित्ते ॥
यं नो भवेद्दपुषि चास्य शुभप्रहीणे
स्थानन्तदत्र भतबन्धननाशकर्त्ता ।
कर्त्तव्यं यत्नतः शौचं शौचमूलं द्विजातयः ।
शौचाचारविहीनानां सर्वाः स्यु र्निष्फलाः क्रियाः ।
तत्सङ्गि द्विविधं प्रोक्तं वाह्यमाभ्यन्तरं तथा ।
विण्मूत्रशोधनं बाह्यं चित्तशुद्धिस्तथान्तरम् ।

गन्धलेपापनयनं बहुशौचमाड्कर्मनीषिणः॥
मृद्भिरद्भिर्निलयस्य तत्कर्त्तव्यं द्विजातिभिः।
भावशुद्धिपरं शौच माहुराभ्यन्तरं बुधाः॥
यस्य पुंसस्तु यच्छौचं शौचैस्तप्यं किमन्यकैः।
वाङ्मनोजलशौचानि यशः सदा द्विजन्मनाम्॥
त्रिभिः शौचैरुपेतो यः स समो नात्र संशयः।
स्त्रियं रिरंसुर्द्रविणं जिहीर्षुर्बधं चिकीर्षुर्मनुजः परस्य।
वित्तुरत्यन्तमवाच्यवाच्यं कथं स शुद्धिं समुपैति शौचात्॥
किं निकामस्य नारीभिः किं गताशोच समं द्विजैः।
यतेन्द्रियस्य किं शौचे निष्फलं। मूर्खदानवत्॥
न गतिर्मूर्खदानेन न तारोऽम्बुनि चाश्मनः।
तस्मात्तस्य न दातव्यं सह दाता स मज्जति॥
यथा भस्म तथा मूर्खो विद्वान् प्रज्वलिताग्निवत्।
होतव्यञ्च समिद्धाग्नौ जुहुयात्को नु भस्मनि॥
यथा शूद्रस्तथा मूर्खो शूद्रश्च भस्मवत् तथा।
शूद्रेण सह सन्धेयं मूर्खे दानं विवर्जयेत्॥
ग्रहीता च तावद्विद्वान् तद्दाता रोहको यथा।
आत्मानं तारयेत्तञ्च नदीं वैतरणीं द्विजः॥
यो मूर्खो विशदाचारः षट्कर्माभिरतः सदा।
स नयन् स्वर्गमात्मानं दातांश्चैव न पीड़येत्॥
न विद्यते तयोर्यस्य अददच्च प्रतिग्रहम्।
अददानः स दातारमात्मान मप्यधो नयन्॥
हेम भूमिं तिलान् गाश्च अविद्वान् हि ददाति यः।

भस्मीभवति सोऽज्ञाय दातुः स्यान्निष्फलं भवेत् ॥
तस्माद्ददति नो दद्यादल्पयोऽपि प्रतिग्रहम् ।
विषतत्त्वपरिज्ञानी विषेणाल्पेन नश्यति ॥
सर्वं गवादिकं दानं पात्रे दातव्य मर्चितम् ।
विद्वद्भिर्नत्वपात्रे तु गतिमिच्छद्भिरात्मनः ॥
हस्तिकृष्णाजिनाद्यास्तु गर्हिता ये प्रतिग्रहाः ।
महिमास्तान्न गृह्णीयु र्गृह्णन्त स्तु पतन्ति ते ॥
कृष्णाजिनप्रतिग्राही हयानां शुक्रविक्रयी ।
नवश्राद्धस्य भोक्ता च न भूयः पुरुषो भवेत् ॥
यो गृह्णाति कुरुक्षेत्रे मातंगं द्विमुखीं गजम् ।
नवश्राद्धान्नभुक्तस्य वर्ज्या निर्माल्यवद्द्विजाः ॥
एते यात्यन्यतामित्थं यावच्चानुसहस्रकम् ।
त्रिपुणोश्च वह्नेश्च रवेश्च जाता
पृथ्वीच येषास्य मुनिश्च गोश्च ।
कालेन पात्रे विधिना प्रदत्ता
प्राप्नोति लोको नियमे तदुक्तम् ॥
वेदाविद्वान् सदाचारः सदा वसति सन्निधौ ।
भोजने चैव दाने च वर्जनीयो न सत्तमैः ॥
अत्यासन्नमधीयानान् ब्राह्मणान् यो व्यतिक्रमेत् ।
भोजने चैव दानेच हिनस्त्यासप्तमं कुलम् ॥
अनृचोऽपि निराचाराः प्रतिवासिनिवासिनः ।
अन्यत्र हव्यकव्याभ्यां भोज्यास्ते वत्सवादिषु ॥
प्रोक्तप्रतिग्रहाभावे प्राप्तायां बृहदापदि ।

विप्रोऽस्मात् प्रतिगृह्णीयाद्यतस्ततोऽपि नाघभाक् ॥
गुर्वादियोग्यवर्गार्थं दैवाद्यर्थञ्च सर्वतः।
प्रत्यादद्यात् द्विजाग्र्यस्तु भृत्यर्थमात्मनोऽपि च ॥
दधिक्षीराज्यमांसानि गन्धपुष्पाम्बुमत्स्यकान्।
शय्यासनाशनं शाकं प्रत्यक्षं यं नहि क्वचित् ॥
अपि दुष्कृतकर्मभ्यः समादद्यादयाचिता।
पतितादिस्तदन्येभ्यः प्रतिग्राह्यमसंशयम् ॥
शक्तः प्रतिगृह्णीतु यो वेदज्ञस्तु संव्रतम्।
लभ्यमानं न गृह्णाति स्वर्गस्तस्य सुनिश्चितः ॥
प्रतिग्रहसमर्थं वापि याचितं यो न यच्छति।
तत्कोटिगुणशस्तोऽसौ यतो दासत्वमृच्छति ॥
दाता च यः स्मरेद्दानं प्रतिग्राही न पात्यते।
उभौ तौ नरकं यातो दाता चैव प्रतिग्रही ॥
अपात्रस्य हि यद्दत्तं दानं स्वल्पमपि द्विजः।
गृहीता तत्क्षणाद्याति भस्मत्वञ्चाप्यवारितः ॥
वदन्ति कवयः केचिद्दानप्रतिग्रहौ प्रति।
प्रत्यक्षलिङ्गमेवेह दातृयाचकयो रतः।
दातृहस्तो भवेदूर्द्ध्वं मधस्तिष्ठेत्प्रतिग्रही।
दातृयाचकयोर्भेदो हस्ताभ्यामेव सूचितः ॥
सूनादीनाञ्चतुर्वर्णां तथा निन्दितभूयते।
न विद्वान् प्रतिगृह्णीयात्प्रतिगृह्णन् व्रजत्यधः ॥
पुष्टो दशगुणं पूर्वात् सुनिश्चयमथाधिशत्।
वैश्यो निषिद्धशूद्रपतिप्रतिग्राही परे क्रमात् ॥

परपाकं वृथामांसं देवानामविदूषितम् ।
अनुपाकक्रतं चैव तथा मांसञ्च नादिकम् ॥
न भोक्तव्यमभोज्यान्नं कन्दमूलादिकञ्च यत् ।
न पातव्यं न पेयञ्च द्विजैरन्नं न गर्हितम् ॥
सत्यमुक्तः सदा ब्रूयाच्छनैर्धर्मं समाचरेत् ।
यमान् स नियमान् कुर्याद्ब्राह्मं ब्रतमाचरेत् ॥
मातृपितृउपाध्यायान् गुरूंश्चप्रान् सदार्चयेत् ।
एतान् श्रेष्ठान् तथाचान्यान्नित्यं विप्रोऽभिवादयेत् ॥
दमञ्च सर्वदा कुर्य्याद्दानं दद्याच्च सर्वदा ।
दयाञ्च सर्वदा कुर्य्यात्तद्विना नरकाश्रयः ॥
दाम्यन् स सर्वदात्मानं दाम्ययन्तु सदा द्विजः ।
दयध्वमिति वै वेश्याः ! श्रुतिर्वाजसनेयिकी ॥
यत्त्रिधा कारकं कुर्य्यात् स्तनयित्नुध्वनिन्दिवि ।
ददेद्वेति दमं दानं दयामिति च शिक्षयेत् ॥
रसारसैः समा ग्राह्या देया अपि च नान्यथा ।
न रसैर्लवणं ग्राह्यं समतो हीनतोऽपि वा ॥
तिला अपि समा देया यस्मात् प्रपिच नान्यथा ।
प्रपीड्यानि न यन्त्रेषु ब्रूयुरेतन्मनीषिणः ॥
विक्रयं व्यपदेशेन दुग्धदध्यादिसर्पिषम् ।
शुश्रूषां न तिरस्कुर्य्यादुपासां नावधीरयेत् ॥
न निन्द्यांश्च समाभ्यर्च्यान्न विक्रीणीत गर्हितान् ।
अदेयानि नवै दद्यादत्याज्यानि न वै त्यजेत् ॥
अभाष्यं नैव भाषेच्च होमाङ्गाद्यांश्च न क्षिपेत् ।

न संवदेच्च पित्राद्यैः पतिताद्यैर्न संविशेत् ॥
न मतिं नीचवर्णाय दद्यादुच्छिष्टमेव च ।
मतिं शूद्रस्य यो दद्याद्यश्चैनं पर्युपासते ॥
न किञ्चित्तस्य चाज्ञेयं व्रतादिनियमादिकम् ।
आचक्षाणस्तु तद्धर्मं नरकाग्नौ प्रपच्यते ॥
नाद्यादन्नं निषिद्धस्थं स्वप्याद्वा नाह्नि रात्रिषु ।
वेदविद्याविताननि विक्रीणीत न कर्हिचित् ॥
नापात्यानि रसाद्यानि भूवृत्तिश्चाप्यवेऽपि च ।
नापच्येत्तु स्वपाणिभ्यां न च कण्डूतिकृद्भवेत् ॥
पादुका नच पालाशा न वृत्तादिनिकृन्तनम् ॥
नोत्सृज्यं ष्ठीवनाद्यञ्च कदाचिद्वै गवादिषु ।
पद्भ्यां स्पृश्यो गवाघ्रातो नोच्छिष्टो न च तद्गतिः ॥
न लङ्घ्या वस्त्रगन्धादि वाय्वग्न्यो नान्तरा गतिः ।
न द्वयोर्विप्रयोर्नाग्न्योः सौरभेयोः पतिस्त्रियोः ॥
न विप्राग्न्योर्विप्रपिण्डौ नो ग्राह्यौ विष्णुतार्क्ष्ययोः ।
सौरभेयोर्जलाग्न्योश्च माहेयीजलयोरपि ॥
भानुव्योमादिकानान्तु न कुर्य्यादन्तरागतिम् ।
भोजनादिषु नासक्तां पश्येन्न विगतांशुकाः ॥
न गच्छेत् स्त्रीं रजोयुक्तां न च तया सहाश्नुयात् ।
उत्तरीयं विना नैव न नग्नो न शयीत च ॥
न गेहे चैव मार्गादौ न निषिद्धककुम्मुखः ।
नापगाङ्गेयचर्यादि नचविष्ठा त्वशान्तिके ॥
अतिकालातियाने च शुभमिच्छन्विसर्जयेत् ।

यच्चेन्द्रचापभङ्गाद्या मूलनाम्ना न निर्दिशेत् ।
इन्द्रचापं ध्यायन्ति ये न ख्यातव्याः परस्य ते ।
वर्जयेद्दादनञ्चैव पाद्योः कांश्यभोजने ॥
पैशुन्यं मर्मभेदञ्च न वदेन्म्लेच्छभाषितम् ।
प्राकृतं वक्रशास्त्राणि पाषण्डहेतुकानि च ॥
न करं मस्तके दद्यान्मस्तके न करं तथा ।
न जातु नो शिरोधार्य्यं न प्राष्टत्तशिरा भ्रमेत् ॥

वेनाश्च वस्त्रस्य कदर्यचौराः क्लीवाभिशस्तागणिकासु जातु ।
यो वृत्तजीवी गणदीक्षका ये तेषां न भोज्यं ह्यशनं द्विजातेः ॥
क्रूरातुरा वृत्तचिकित्सकाश्च या पुंश्चली यौ च विकल्पशस्त्र ।
व्रात्याश्रमस्था अवजा जिताश्च अग्राह्यमेषामशनं द्विजस्य ॥
ये दाम्भिका येच सुवर्णकारा उच्छिष्टभोजी पतितश्च यश्च ।
ये पुत्रभार्य्या बहुयाचका ये विप्रस्य नैकेऽपि न भोज्यमन्नम् ॥
यः सोमशस्त्रं सुरुतास्रुचक्रं क्षीराज्यमांसं लवणाजिनानि ।
क्षौमाज्यलाक्षाश्च तिलान् फलानि एषां न विक्रीत कदन्नमाद्यम् ॥
जीवन्ति नित्याम्बरसाम्बयानां कर्माच कार्येऽपि च तन्तुवायाः ।
राजा नृशंसो रजकः कृतघ्नो भोज्यन्न तेनैव च हिंसकाश्च ॥
ये चैलधाराश्च सुरारता ये शून्यं न वाचोह्यनृतं वदाश्च ।
ये बन्दिनो येऽपिच याचकाश्च विप्रस्य चैतेऽपि न भोज्यशस्ताः ॥

मध्वाशनमधूच्छिष्ट दधिक्षीररसोदनः ।
मनुष्यः फलपूजाश्च कुशवत् पुष्पवीरुधः ॥
कोशेयकेशकुतपा नीरं विषं ररुस्तथा ।
शाके कुशकपित्थःक गन्धनौषधिमूलकाः ॥

विक्रीणन्ति य एतानि वस्तूनि मनुजाधमाः।
तेषामन्नं न भोक्तव्यन्तथोपपत्तिवेश्मनः॥
यो वद्धस्य कदर्यस्य भुञ्जीतान्नं द्विजाधमः।
तद्भुक्तानद्रवत्स्य स्यान्मृतो विट्शूकरो भवेत्॥
योऽन्नं वार्धुषिकस्यापि जाताद्यत्याद्रिकस्य च।
अन्यस्यापि निषिद्धस्य सोऽनन्तं नरकं व्रजेत्॥
पाणिगृहीतभार्य्यायां सत्यां यस्तु नराधमः।
शूद्रीकरोत्येन यो भुङ्क्ते पतितः स सदैव तु॥
त्यक्ता ये गोष्ठभार्यान्तु त्यक्तः स पितृदैवतैः।
देवादित्यक्तः पापीयान् शूद्रादप्यधिकः स्मृतः॥
यः शूद्रीं भजते नित्यं शूद्री तु स्वकर्मेधिनी।
वर्जितः पितृदेवैस्तु रौरवं यात्यसौ द्विजः॥
यः शूद्रायां स्वयं जातो द्वन्द्वस्यां सोऽपि तत्सुतः।
अन्यस्याश्च पुनः सोऽपि किन्तस्य प्रेत्य चिन्तनम्॥
सर्वान् भुञ्जीत नरकान् विंशतिं स्वेकवर्जितान्।
रौरवादीन् क्रमेणैव पापिष्ठो यावदन्तरम्॥
हेमन्तशिशिरत्वोश्च प्रोष्ठपद्या परस्य च।
पञ्चत्वपरपक्षेषु कार्य्या साग्निभिरष्टका॥
हेमन्तशिशिरे चैका एकैकाथ तथापरा।
प्रोष्ठपद्या द्विजातिस्तो ह्यष्टका इति केचन॥
दर्शश्च पौर्णमासश्च तथैवाग्रयणाद्वयम्।
चतुर्मासीव्रताश्चैव कार्य्याणि साग्निकैर्द्विजैः॥
अनूचानः क्रतं कुर्युः सदैव व्रतचारिणः।

अग्निहोत्ररता नित्यं मातापित्रादिपूजकाः ॥
प्रतिग्रहनिवृत्ताश्च जपहोमपरायणाः ।
वृत्तवन्तश्च ये विप्राः स्नातकास्ते प्रकीर्त्तिताः ॥
संक्रान्तिरर्कवारश्च व्यतीपातो युगादयः ।
शुभर्चदिनयोगाश्च कार्य्या साग्निभिरष्टका ॥
न शूद्राय भिक्षेत नैतत् कर्त्तव्यं कर्म च द्विजैः ।
चण्डालत्वमवाप्नोति यज्ञार्थं शूद्रयाचकः ॥
लब्धं यज्ञाय स विप्रो न दद्याद्यज्ञकर्मणि ।
स वायसोऽथ वा गृध्रः काकोवाथ प्रजायते ॥
शिलोञ्छवृत्तिर्विप्रस्य तथा चैकाह्निकाशनः ।
त्र्याहाह्निकाशनो वा स्यात् कुम्भीकुशलधान्यकः ॥
पूर्वं पूर्वतरः श्रेयानेषां सद्भिः प्रकीर्त्तितः ।
सोमपः स्यात्त्रिवर्षान्न तत्पूर्वमल्पमाशनः ॥
सोमेष्टिं पशुयज्ञञ्च कुर्य्याच्च प्रतिवासरम् ।
इष्टिर्वैश्वानरी यातु कर्त्तुं नैव तदसम्भवेत् ॥
सत्यामर्थस्य सम्पत्तौ न कुर्य्याद्धीनदक्षिणाम् ।
तत्कृतश्च भवेदघं प्राप्नुयात्पशुयोनिताम् ॥
अशापूतश्च दातव्यं पात्रे दानं समर्पितम् ।
याचितेऽपि हि दातव्यं पूतं स्वश्रद्धया धनम् ॥
शूद्रान्नं ब्राह्मणोऽश्नन्वै मासं मासार्द्धमेव च ।
तद्योनावभिजायेत सत्यमेतद्विदुर्बुधाः ॥
आशूद्रस्यादशूद्रान्नो मृतश्चैवोपजायते ।
द्वादशं दश वाष्टौ च गृध्रशूकरपुष्कलः ॥

उदरस्थितशूद्रान्नो ह्यधीयानोऽपि नित्यशः।
जुह्वन्नपि जपन्नपि गतिमूर्ध्वां न विन्दति॥
अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम्।
वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं स्मृतम्॥
तस्माच्छूद्रं न भिक्षेरन्यज्ञार्थं सद्द्विजातयः।
श्मशानमेव तच्छूद्रस्तस्मात्तं परिवर्जयेत्॥
कणानामथ वा भिक्षां कुर्याच्चेद्वृत्तिकर्शितः।
स शूद्राणां गृहे कुर्वन् न तत्पापेन लिप्यते॥
विशुद्धान्वयसञ्जातो निवृत्तो मांसमद्ययोः।
द्विजभक्तिर्वणिग्वृत्तिः सच्छूद्रः संप्रकीर्तितः॥
उदक्यास्पृष्टसंस्पृष्टं वीक्षितं वाप्युदक्यया।
स्पृष्टं शकुनोत्सृष्टं प्रयत्नेन विवर्जयेत्॥
उच्छिष्टस्य पदा स्पृष्टं शुक्तस्य पतितेक्षितम्।
पर्युषितस्य विदुषः केशकीटाद्युपाहतम्।
पत्युच्छिष्टं गवाघ्रातं प्रयत्नेन विवर्जयेत्॥
नाश्नीरन्नेतदशनं सामिषन्ते द्विजातयः।
शूद्राणामपि भोज्यान्नाः स्युर्दासनापितादयः॥
सस्नेहमशनं भोज्यं चिरस्थमपि यद्भवेत्।
अनुक्ता अपि भोज्याः स्युः सद्यस्ता यवादयः॥
गर्भिण्या वत्ससुभयागवादे वर्जयेत्पयः।
स्त्रीणामेकशफोष्ट्रीणां तथारण्यकमाविकम्॥
प्रशस्ता ब्राह्मणी गौश्च महिष्याजा तथैव च।
दशरात्रेण शुद्ध्येत भूमिष्ठं च नवञ्जलम्॥

शाकादिकञ्च विट्जातं कवचानि च वर्जयेत् ।
मांसं कीटादिभिर्जुष्टं प्रयत्नेन विवर्जयेत् ॥
एवं ये क्रव्यमश्नन्ति तथा विष्ठाभुजश्च ये ।
शुकटिट्टिभदात्यूहान् कपोतपिकसारिकाः ॥
सेधाद्यान् पञ्च षट् पञ्च सिंहाद्यान्मत्स्यकांश्च षट् ।
धर्मशास्त्रोदितानद्यात् सर्वाकारांश्च वर्जयेत् ॥
भक्ष्यप्राणां त्यजेन् मांसं श्राद्धयज्ञोत्सवेष्वपि ।
कृत्वा च विधिवत् श्राद्धं नाद्यमतिथिमामिषम् ॥
यदैवाध्ययसम्पत्तिस्तदैवामन्त्रयेद्द्विजान् ।
कृत्वाच विधिवत् श्राद्धं पश्चात् तत् स्वयमश्नुयात् ॥
नाद्यादविधिना मांसं त्वत्युद्दिष्टेऽपि धर्मवित् ।
भक्षयन्नरके तिष्ठेत्पशुलोमसमाः समाः ।
गृहस्थोऽपि हि यो नाद्यात्मिश्रितन्तु कदाचन ॥
स साधान्मुनिभिः प्रोक्तो योगी च ब्रह्मलोकगः ।
न स्वयञ्च पशुं हन्याच्छ्राद्धादिक उपस्थिते ॥
क्रव्याद्यैः सारमेयाद्यैर्हतं मृगादिमाहरेत् ।
एतच्छाकवदिच्छन्ति पवित्रं द्विजसत्तमाः ॥
समर्थो यस्य यस्तु स्यादन्नं दत्त्वा तु देहिनाम् ।
सतामिति निरातङ्को लोमहृष्टं निगद्यते ।
मत्स्यादेरपि भक्ष्यस्य स्नेहमद्यामिषस्य च ॥
महाफलानि वृत्तौ स्यात् प्रवृत्तिः स्वर्गसाधना ।
एकोऽष्टशतमश्वेन यजेत पशुना द्विजः ।
अन्योन्यं मांसमश्नाति स्वर्गप्राप्तिस्तयोः समाः ॥

हेम राजन्! शङ्खस्य ताम्रस्य वैणवस्य च।
चर्मचीररज्जुवल्कानां शुद्धिर्जायेत वारिणा॥
तद्वद्दिवयज्ञपात्राणां धान्यानां वाससामपि।
अन्येषां जयरूपाणां प्रोक्षणाच्छुद्धिरिष्यते॥
मार्जनाद्यज्ञपात्राणां हस्तेन यज्ञकर्मणि।
चम्भोगे यत्र केशाद्यैः शुद्ध्येतां कौशिकाविके॥
श्रीफलैरंशुपट्टानां सारिष्टैः कुतपस्य च॥
शणमयानि पुनः पाकैः क्षौमाणि सितसर्षपैः।
शुद्ध्येत काष्ठमयं पात्रं यत् स्यात्सम्पादितम्॥
भैक्षस्य प्रक्षोभाच्छुद्ध्येत् पिष्टिः साधारणस्य तु।
स्त्रीमुखञ्च सदा शुद्धं भूमिर्लेपविवर्जिता।
अपरा दहनाद्यैश्च स्पर्शं मार्जनलेपनैः॥
द्रवद्रव्याणि शुध्यन्ति वह्निना प्लावनेन च।
क्रव्यादाद्यात् हतं मांसं सर्वदा शुचि कीर्तितम्॥
तृप्तिकृत् सौरभेयाश्च स्वभावात् सन्तुदा यतिः।
वदन्ति सूरयो वारि पवित्रमिति सर्वदा॥
गौर्वह्निश्च वनच्छाया अजाश्वौ वसुन्धरा।
विप्रुषो मक्षिकानाञ्च न दुष्यन्ति कदाचन॥
स्रुतिः प्रस्रापने वत्सः अजाश्वौ मुखतस्तथा।
न तु गौर्मुखतो मेध्या न कस्य मुखजा मलाः॥
सोमभास्करयो र्भाभिः पयःशुद्धिः प्रकीर्तिता।
ओष्ठाधरौ श्मश्रुकरौ सस्नेहौ भोजनादनु॥
न दुष्येत्तरजः प्राह बालवृद्धौ स्त्रियोर्मुखम्।
स्नात्वा पीत्वा च भुक्त्वा च सुप्त्वा तप्त्वा तथैव च॥

गत्वा रथ्यादिके चैव शुद्धिराचमनेन तु।
नापो मूत्रपुरीषाभ्यां नाग्निर्दहति कर्मणा॥
न स्त्री दुष्यति जारेण न विप्रो वेदकर्मणा।
पद्मायसलोहफलककाष्ठचर्ममाण्डस्य तोयैः॥
स्वयमेव शौचात् पुंसां निशास्वध्वनि निःसहायम्।
न स्त्रीणाञ्च सदा शुद्धिर्विहिता च सतामपि॥
नभसः पञ्चदश्यां तु पञ्चम्यां च तथापरे।
नभसश्च चतुर्दश्या मुपाकर्म यथोदितम्॥
तद्विदः केचिदिच्छन्ति नभसः श्रवणेन तु।
हस्तेन वाथ पञ्चम्या मध्यायानां वदन्ति तत्॥
यत्र शाखोपवीतः स्याद्ब्रह्मचारी द्विजोत्तमः।
तच्छाखा विहितं तस्य उपाकर्मादि कीर्त्तने॥
अतो वेदाधिकारत्वं वेदपाठस्य कीर्त्तने।
अनुपाकृतविप्राद्यैर्वेदाध्ययन दुष्कृतम्॥

मुञ्जोपवीताजिन दण्डकाष्ठम्
त्याज्यं न तस्मात्‍व्रतचारिणा मपि।
अकृष्टमेकोहतजोपपापम्
संस्कारमन्यं न पुनर्नयेयुः॥

ओषधीनां तु सद्भावे स्वशाखाविहितन्तु तत्।
रोहिण्या च सहस्यस्य उपाकर्माणि कुर्वते॥
न भवेदनुपाकर्म ब्राह्मणः स्नातको व्रती।
कर्मच्युतो भवेद्व्रात्यो व्रात्यानिष्कृतिकः शुचिः॥
तथा तत्स्यादनध्यायो व्रतगुर्वादिषु त्र्यहम्।
मित्रकादिष्वहोरात्र मधीत्यारण्यकः शुचिः॥

अष्टकासु तथाष्टम्यां पौर्णमास्यां शशिक्षये ।
मन्वादौ युगपत्त्याद्ये विन्दुपातात् क्षयेऽपि च ॥
चतुर्मासि द्वितीयायां चतुर्दश्यामहर्निशम् ।
अहोरात्रे नृपे संस्थे व्रतिनि श्रोत्रिये यतौ ।
अत्र त्र्यहमनध्याय मिच्छन्ति चापरे त्र्यहम् ॥
अशौचसूतकान्तं च यावच्छुद्धिस्तयोर्भवेत् ।
देशान्तरगते प्रेते श्रुतेऽपि स्यादहर्निशम् ॥
गुर्वादौ वा नृपत्यादौ इति वाशिष्ठजोऽब्रवीत् ।
प्रतिग्रही त्वहोरात्रं भुक्त्वा श्राद्धकमेव च ॥
तच्छ्राद्धं ब्रूयुरनध्याय मनुसन्ध्या वहर्निशम् ।
यस्मादौ च रक्तो भोक्ता रक्तोरात्रा विदुर्बुधाः ।
अकाले वा हृते वृष्टिवर्ज्जिदा येष सप्तमाः ।
सामेषु दुःखितानाञ्च स्वरादीनाञ्च निःस्वने ॥
पतितश्वावशूद्रान्त्यसन्निधाने न कीर्त्तयेत् ।
आत्मन्येव शुचौ देशे विद्युत्स्तनितरोहिते ॥
वधे च कलहे देशविप्लवे लोकविग्रहे ।
पांशुवर्षेऽम्बुमध्ये च दिग्दाहग्रामदाहयोः ॥
नीहारे च भवेद्विद्वान् सन्ध्ययोरुभयोरपि ।
धावंश्च न पठेद्विद्वान् पूतिगन्धेतयैव च ।
विशिष्टेचागते गेहे गात्राक्तकनिर्गमे तथा ॥
भोजनायोपविष्टस्य स्मृत्वितस्याद्र पाणिनः ।
वान्ते चान्ते तथा जीर्णे महापात्रेऽतिमारुते ॥
राजा वृषौ च यानादौ आरूढस्य तथा द्विजः ।
एतानन्यांश्च तत्कालान् अनाध्यायान्विदुर्बुधाः ॥

यो वर्जयेदनध्यायांश्चेशाध्ययनतद्द्विजः ।
भवन्ति तस्य सफला वेदाः मोक्षफलप्रदाः ॥
येच तेषु पठन्त्यज्ञाः पाठलोभेन लोभिताः ।
न शाश्वता भवेद्विद्या निष्फला च तथा द्विजः ॥
यः पठेद्विधिवद्वेदान् तत्प्रतीन्द्रियसंयमी ।
ब्रह्मत्वमिह लोकेऽपि ऐश्वर्यसुखभाक् भवेत् ॥
जनानां शृण्वतां यस्तु मार्गं गच्छन् पठेद्द्विजः ।
निष्फलास्तस्य वेदाश्च वेदवित् तद्दोषभाक् ॥
यः पठेत् स्वरहीनन्तु लक्षणेन विवर्जितम् ।
सङ्कीर्णग्राममध्ये तु संभवेत् वेदविप्लवी ॥
ये स्वाध्यायानधीयीरन् ह्यनध्यायेषु लोभतः ।
वज्ररूपेण ते मन्त्रा स्तेषां देहे व्यवस्थिताः ॥
नाक्रामेदमरादीनां छायां तथा परस्त्रियः ।
वान्तश्लेष्मविण्मूत्र कार्पासास्थिकपालिकाः ॥
तानश्चैयाः स्युश्च विप्राश्चरणान् स्पृशेयु र्द्विजाः ।
श्रियं कामं च मा काङ्क्षन् स्पृशेन्मर्म कस्यचित् ॥
नित्यं वर्त्तेत चाचारं धर्मञ्च नित्यमर्जयेत् ॥
न किञ्चित्ताड़येद्धीमान् सुतं शिष्यञ्च ताड़येत् ।
ताड़येन्नाभितोऽधस्तान्चत्तानन्यत्र ताड़येत् ॥
आचारेण सदा विद्वान् वर्त्तते यो यतेन्द्रियः ।
स ब्रह्म परमाप्नोति चारत्येऽमुत्र चेह च ॥
आचारमूलं श्रुतिशास्त्रतत्त्वं आचारमाशान्त तदुक्तकृत्यम् ।
आचारपर्णानि हि वाग्मिशोगोत् वाचारपुष्पाणि यशोधनानि ॥
आचारवृक्षस्य फलं हि नाकसत्याश्च सुस्वादुरसस्य तृप्तिः ।

तस्मादनन्तं फलदन्तु तत्त्वमाचारमेवाश्रय यत्नपूर्वम् ॥
ये धर्मशास्त्रे विहिताश्च केचिद्धर्मा द्विजाभ्योऽपि तेच सर्वे ।
यत्नेन कार्य्याः पितृदेवभक्तैः श्राद्धानि कार्य्याण्यथ तानि वक्ष्ये ॥
यत्नेन धर्मो गृहमेधिविप्रैः प्रीतेन वाचा वपुषा च कार्य्यः ।
आयुः प्रजा श्री र्भुवि पूजितत्वं तस्मात्लभन्ते दिवि देवभोगान् ॥

इति श्रीवृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां धर्म-
संहितायां चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः ।

आद्यश्चन्द्रावचन्द्रे च छायायां गजसंक्रमे ।
व्यतीपातविषुवत् कृष्णपक्षपातार्थलब्धिषु ॥
अयुक्तायनयो र्द्वे च श्राद्धं प्रति यदा रविः ।
मुख्यः श्राद्धस्य कालोऽयमृषिभिः परिकीर्त्तितः ॥
युगादिषु च कर्त्तव्यं मन्वन्तरादिकेऽपि च ।
श्राद्धकालोऽह्ययं प्रोक्तो मन्वाद्यैर्धर्मकर्तृभिः ॥
नवान्नं नवोदकञ्चैव नवकुम्भं तथा गृहम् ।
नाश्नन्ति येषु चेदन्ते पितरो हि यमालये ॥
काणः पौनर्भवो रोगी पिशुनो वृद्धिजीवकः ।
कृतघ्नो मत्सरी क्रूरो मित्रध्रुक् कुनखोऽशुद्धः ॥
विच्छिन्नजननश्चित्री श्यावदन्तावकीर्णिनः ।
हीनाङ्गश्चातिरिक्ताङ्गो विकलो परनिन्दकः ॥
क्लीबोऽभिशस्तवाक् दुष्टभृतकाध्यापकस्तथा ।
कन्यादूषी वणिग्वृत्तिर्विनग्नः सोमविक्रयी ॥

भार्याजितोऽनपत्यश्च कुण्डाशी कुण्डगोलकः ।
पित्रादित्यागकृत्तेन वृषली पतितस्तनु ॥
अनुकर्तुप्तिसत्यागतः परिपूर्वापतिस्तथा ।
अजापालो माहिषिकः कर्मदुष्टाश्च निन्दिताः ॥
योऽसत्प्रतिग्रहग्राही यश्च नित्यं प्रतिग्रही ।
ग्रहसूतकदूतौ च पितृश्राद्धेषु वर्जिताः ॥
एकादशाहे भुञ्जन्तः शूद्रान्नरससंयुताः ।
गुरुतल्पगो ब्रह्मघ्नो रस्त्र चोपपति र्गृहे ॥
प्रेतधूक् चैवनिर्मुक्ता चोपयाचकयाचको ।
बककाकविडालाश्च शूद्रतुल्यश्च गर्हितः ॥
वाक्दुष्टवालदमको नित्यमप्रियवाक्यया ।
आसक्तो द्यूतकामाद्यावतिवाक् चैव दूषितः ॥
निराचाराश्च ये विप्राः पितृमातृविवर्जिताः ।
विद्वांसोऽपि हि नाभ्यर्च्याः पितृश्राद्धेषु सत्तमैः ॥
न वेदैः केवलैर्वापि तपसा केवलेन च ।
संदृष्टैः किन्तु तैः प्रोक्ताः पात्रता ब्राह्मणस्य च ॥
यत्र वेदास्तपो यत्र यत्र वृत्तं द्विजाग्रजे ।
पितृश्राद्धेषु तं यत्नाद्विद्वान्विप्रं समर्चयेत् ॥
वेदशास्त्रार्थविच्छान्तः शुचिर्धर्ममनाः सदा ।
गायत्री ब्रह्मचिन्ताकृत् पितृश्राद्धे स पावनः ॥
रथन्तरं वृहज्ज्येष्ठः सामवित् त्रिसुपर्णकः ।
त्रिमधुश्चापि यो विप्रः पितृश्राद्धेषु पूजितः ॥
मातामहश्च दौहित्रो भागिनेयोऽथ मातुलः ।
मातृस्वसेयश्च तथा तथा मातुलजोऽपि वा ॥

जामाता श्वशुरो बन्धुर्भार्य्या भ्राता च तत्सुतः।
सुहृच्चाथ सदाचारा ये ते श्राद्धेषु पावनाः॥
ऋत्विग्गुरुरुपाध्याय आचार्यः श्रोत्रियोऽपरः।
एते श्राद्धेषु वै पूज्याः ज्ञातिसम्बन्धिबान्धवाः॥
अग्निहोत्री च यो विप्र आवसथ्याग्निकोऽपि च।
पितृमातृपरावेतौ भोक्तारौ हव्यकव्ययोः॥
कव्येकवृत्तिजीवी यो भोक्ता मात्रादिकेषु च।
षट्कर्मनिरतः पूज्यो हव्यकव्ये सदैव हि॥
स्ववृत्तिः सदाचारो मातादिभक्तितत्परः।
शुचिः षट्कर्मयुक्तश्च हव्यकव्येषु पूजितः॥
गुणानुरूपतो यस्तु विद्याचारादिसंयुतः।
स पूज्योऽनभिशस्तः स षट्कर्मनिरतो द्विजः॥
इत्युक्तगुणसम्पन्नान् ब्राह्मणान् पूर्ववासरे।
निमन्त्रयेत सञ्ज्ञया नियोगस्थानपूर्वकम्॥
सव्येन देवतार्थन्तु पित्रर्थमपसव्यवान्।
ततस्तैश्चरितव्यं स्यादुक्तं पितृहितं द्विजैः॥
जितेन्द्रियैस्तु भाव्यं स्याद्घोरात्रमतन्द्रितैः।
तस्मिन्नहनि वा प्रातर्यत्र श्राद्धमवस्थितम्॥
निमन्त्रयेत तान् भक्त्या तैश्च भाव्यं जितेन्द्रियैः।
विप्रोरूपाश्चैव स्थिताः पितृमातामहादयः॥
भुञ्जन्ति क्रमशः श्राद्धे तथा पिण्डाशिनोऽपि च।
निमन्त्रित द्विजं श्राद्धे न शयीत स्त्रिया सह॥
अध्वानं न च वै यायान्न ब्रूयादनृतन्तथा।
नाधीयीत दिवास्वापं न कुर्वीत न सम्वदेत्॥

न म्लेच्छपतितैः सार्द्धं न वदेच्च निषिद्धकाम् ।
प्राङ्मुखौ दैविकौ विप्रौ विप्राश्चय उदङ्मुखाः ॥
एकैको वो भयत स्वा दक्ष्यक्षाविति क्रमः ।
पात्रं वा दैविकं कृत्वा विप्र एकश्च पैतृके ॥
इति वा निर्वपेत् श्राद्धं निर्धनश्चान्यदाचरेत् ।
गत्वारण्यमथानुष्य ऊर्द्धबाहुर्विरौत्यदः ॥
निरन्नो निर्धनो देवाः पितरो ह्यात्तृषाकुरु ।
न मेऽस्ति वित्तं न च दं न भार्या
श्राद्धं कर्म वः पितरः! करोमि ।
वने प्रविश्येह ददं मयोच्चै-
र्भुजाहते वर्त्मनि मारुतस्य ॥
आदर्शपेतद्दवतां प्रदत्तम्
मन्युं दयध्वं पितृदेवताभ्यः ।
यस्मा वचोऽत्विप्र भुजावतस्तात्
दिवाच रात्रिं समुपोष्य तिष्ठेत् ॥
भवेन्न चैतेन कृतेन तेषा
यथां न मुक्तः पितृदेवतानाम् ।
निर्वित्तनिर्भाग्य निराश्रयाणाम्
श्राद्धस्य मार्गः प्रथितो मुनीन्द्रैः ॥
ख्यातं मया वदित्वा वः पितरः श्राद्धदेवताः ।
आहार्यस्य विमुक्तोऽहं महतः पितरो मया ॥
कृतोपवासः स तस्मात् श्राद्धर्णाद्विप्रमुच्यते ।
एतैश्चापि न यः कुर्य्यात् पितरस्तेन वै हताम् ॥
सम्पन्नावथ पात्राणामेकैकस्य चयस्त्रयः ।

पित्रादौ ब्राह्मणाः प्रोक्ता श्चत्वारो वैश्वदेविके ॥
द्वौ वापि दैविके विप्रौ चैकैकोवा न दोषभाक्।
स्यान्मातामहिकेऽप्येवमेकोऽपि वैश्वदेविके ॥
नतु वैकतु सर्वेषां चाश्वलायनमतः स्थितम्।
पितृणामर्चयेद्विप्रो मन्त्रपिण्डनिदर्शनम् ॥
न मातामहिकं श्राद्धं श्रोतुमुक्तन्तु साग्निके।
अनग्निकस्य तत् कुर्य्यादिति केचिन्मतं विदुः ॥
साग्निकस्यापि कार्य्यं स्यात् श्राद्धं मातामहं द्विजैः।
षड् दैवत्यमितीत्येकेऽप्येकेन पार्वणद्वयम् ॥
अपुत्रस्य पितृव्यस्य तत्पुत्रैर्भ्रातृजो भवेत्।
स एव तस्य कुर्वीत पिण्डदानोदकक्रियाः ॥
पार्वणन्तेन कार्य्यंस्यात् पुत्रवत् भ्रातृजेन तु।
पितृस्थाने तु तं कृत्वा शेषे पूर्ववदुच्चरेत् ॥
श्राद्धं पत्यापि कार्य्यं स्यात् अपुत्रा यास्तु योषितः।
तस्यापि हि तया कार्य्यमेकत्वं हि तयोर्यतः ॥
भ्रातुर्ज्येष्ठस्य कुर्वीत कार्य्यं ज्येष्ठोऽनुजस्य च।
देवहीनन्तु तत् कुर्यात् इति धर्मविदो विदुः ॥
पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया।
पुत्राभावेतु पत्नीच तदभावे सहोदरः ॥
पित्रादीनान्तु कर्तव्यं समीक्ष्यते यतस्त्वमी।
नावद्येयास्तु ते सर्वे कृते तु स्यान्महत् फलम् ॥
पितामहस्य चान्येषां यस्य जीवन्नवा द्विजः।
प्रत्यक्षास्तेऽपि वै पूज्याः संस्थित्यर्थं यतश्च तत् ॥
विद्यमानस्त्वयाणां स्यात् प्रत्यक्षः पूज्य एव सः।

गौतमस्य मतं ह्येतदिति वाशिष्ठजोऽब्रवीत् ॥
विद्यमाने तु पितरि श्राद्धं कर्त्तुमुपस्थितः ।
पितृवर्त्पितृपित्रादेः कुर्य्याच्छ्राद्धमसंशयम् ॥
पुत्रिकायाः सुतः श्राद्धं निर्वपेन्मातुरेव सः ।
तत्पितुर्निर्वपत्यस्मात् तृतीयं तु पितुः पितुः ॥
अतएव द्विजः पुत्रीमुद्वहेन्न कथञ्चन ।
उद्वोढुः पुत्रः पुत्रोऽसौ पुत्रोऽसौ मातुरेव हि ॥
पुत्रस्य दुहितुश्चैव समौ तौ धार्म्मिकौ पथि ।
अर्थकृतौ च विप्रोक्तौ तुल्यौ तौ शक्रजोऽब्रवीत् ॥
मुख्यं यथा पितुः श्राद्धन्तथा मातामहस्य च ।
पुत्रदौहित्रयोर्लोके विशेषो नोपपद्यते ॥
दौहित्रः पार्वणश्राद्धे कालस्तु कुतपस्तथा ।
तथा कृष्णास्तिला विद्वान् इति शास्त्रविदो विदुः ॥
काम्यमभ्युदयश्चैव द्विविधं पार्वणं स्मृतम् ।
तथाकामन्तु काम्य स्याद् वृद्धावभ्युदये स्मृतः ॥
क्षत्रियायान्तु यो जातो वैश्यायान्तु तथा सुतः ।
ब्राह्मणस्य पितुस्तौ तु निर्वपेतां द्विजाग्रवत् ॥
क्षत्रियस्य सुतश्चैव तथा वैश्यसुतोऽपि च ।
स्वतान्नेन द्विजांस्तर्प्यश्राद्धद्वयञ्च निर्वपेत् ॥
आमान्नेन तु शूद्रस्य कर्षीन्तु द्विजपूजनम् ।
कृत्वा श्राद्धन्तु निर्वप्य सजातीनाशयेत्तथा ॥
यः शूद्रो भोजयेद्विप्रान् स्वतपाकाशनेन तु ।
सकृद्विप्रकृते ताभिर्लिप्यते स कुजोऽब्रवीत् ॥
शूद्रपाकं द्विजेभ्यश्च विभवान्यो ददाति यः ।

कृमीभवति पाताले स युगानेकविंशतिः॥
भोजितेन तु विप्रेण यत्पापं तस्य जायते।
तेनासौ लिप्यते मूढो यः शूद्रो भोजयेद्द्विजान्॥
योऽहं मन्ये द्विजाभ्यान्तु शूद्राहृतेन भोजयेत्।
स गच्छेन्नरकं घोरं पुनरावृत्तिदुर्लभाम्॥
यत्किञ्चिद्दुष्कृतं विप्रे पूर्वं कृतन्तु तिष्ठति।
तेनासौ लिप्यते पापी यः शूद्रो भोजयेद्द्विजान्।
शूद्रोच्छिष्टन्तु यो भुङ्क्ते मन्ये विप्रोऽधमः स तु॥
कृमित्वं याति विष्ठायां युगानि ह्येकविंशतिः।
शूद्रोच्छिष्टन्तु भुञ्जानः पञ्चाहानि द्विजोत्तमः॥
स तद्विष्ठाकृमित्वं हि प्राप्नोति हि शतं समाः।
अतो न भोजयेद्विप्रान्विप्रपैनैव पूजयेत्॥
शूद्रान्नं भोजनाद्युक्तं इति पाराशरोऽब्रवीत्।
अग्नौकरणपिण्डाद्य कुर्यादामान्नेन तु॥
इतिदैर्दधिमध्वाज्यैः सम्पृक्तः शक्तुकैरपि।
यवाद्यसंस्कृतान्नेन होमापि चरु निर्वपेत्॥
उत्सेन पयसा वापि नद्याद्स्राद्धकृत्तथा।
नामान्नेन द्विजैः कार्यं कदाचिदपि सद्द्विजैः॥
अर्पयित्वा द्विजौ कस्तु तथापि पाकमाश्रयेत्।
न कुर्य्यात् परपाकेन नैकपाकेन तु द्वयम्॥
नैकश्राद्धे द्वयं कुर्यान्नच कुर्यात् परान्नभुक्।
पित्रादीनां सगोत्रा ये तथा मातामहस्य च॥
तेषामेकेन पाकेन कार्यं पिण्डविवर्जितम्।
केचित् सपिण्डमिच्छन्ति समगोत्रन्तथा तथा॥

पिता मातामहश्चैव त्वाचिन्नगोत्रतथा तथा ।
पृथक् कर्तुमशक्यं स्यादर्थपात्राद्यसम्भवे ॥
एवमस्तत्र कर्तव्यमेकदैवमपात्रयेत् ।
येषां नोद्वाहसंस्कारो ह्यन्यसंस्कारसंस्कृताः ॥
सङ्कल्पितं भवेत्तेषां श्राद्धं कार्यं च तेऽहनि ।
केचित्तपिण्डमिच्छन्ति ग्राह्यं संस्कारवत्तथा ॥
श्राद्धो हि ग्राह्यसंस्कारस्तस्मात् पिण्डान् प्रदीयते ।
सर्वेष्वपि निमित्तेषु कर्तव्यं पिण्डसंयुतम् ॥
पितृणां त्रिविधा यस्मादाहुतिः प्रोक्ता मुनीश्वरैः ।
वैश्वदेवः सदा कार्यो श्राद्धे च समुपस्थिते ॥
पाकशुद्धार्थमेवैतत् पूर्वमेतद्विधीयते ।
वैश्वदेवोऽग्रतश्चैव श्राद्धकाले विशेषतः ॥
पाकशुद्धिस्तु विज्ञेया भुक्तोच्छिष्टं तु वर्जयेत् ।
संग्रामे पार्वणश्राद्धे एकोद्दिष्टे तथैवच ॥
अग्रतो वैश्वदेवं हि पश्चादेकादशेऽहनि ।
एकोद्दिष्टविशेषेण प्रागेव ह्यग्निपूजनम् ॥
कालस्तु कुतपस्तस्य रौहिणः पार्वणस्य च ।
वामतश्चासनन्दद्यात् पितृकार्येषु सत्तमः ॥
दैविके दक्षिणन्तद्ददिति पाराशरोऽब्रवीत् ।
आसने चासनन्दद्याद्वामे वा दक्षिणेऽपि वा ॥
पितृकार्येषु वामन्तु दैवे कर्मणि दक्षिणम् ।
पितृश्राद्धेषु यो दद्याद्दक्षिणं दर्भमासनम् ॥
नाश्नन्ति पितरस्तस्य साध्यानि वत्सराणि षट् ।
तस्माद्वामतो वा पात्रे पितृकर्मणि चासनम् ॥

द्वैविध्ये दर्शितेऽपि तद्दिति वाशिष्ठजोऽब्रवीत् ।
कुत्र कालेच कर्त्तव्यं श्राद्धन्तत् पैतृकं प्रभो! ॥
वदस्व निश्चयन्तत्र विवदन्त्यपरेऽत्र तु ।
पञ्चदशमुहूर्त्तो यस्तत्प्रागह्न दिनं स्मृतम् ॥
अपराह्णं स्मृता रात्रि सन्मध्यः कुतपोमतः ।
यथा यथा च ह्रस्वत्वं पुंसः स्यान्मेमसो भवेत् ॥
तथा तथा पवित्रं स्यात्कालः श्राद्धार्चनादिषु ।
च्छायेयं पुरुषस्यैनस्तत्पादाधो भवेद्यः ॥
प्राधान्यश्राद्धदानादेः स कालोऽक्षयस्तत् स्मृतः ।
अयुतं तु मुहूर्त्तानामह्नं त्वष्टदशाधिकम् ॥
त्रिंशद्भिस्तैः रहोरात्रमिति माध्यन्दिनी श्रुतिः ।
दिवसस्याष्टमे भागे मन्दीभवति भास्करे ॥
स कालः कुतपो ज्ञेयस्तत्र दत्तन्तु चाक्षयम् ।
मध्याह्ने तु गते सूर्य्ये न पूर्व्वे नच पश्चिमे ॥
तुल्याग्रसंस्थिते चैव सोऽष्टमो भाग उच्यते ।
मध्याह्नाद्विचलितो भानुः किञ्चिन्मन्दगतिर्भवेत् ॥
स कालो रौहिणो नाम पितॄणां दत्तमक्षयम् ।
तस्मात् सर्वप्रयत्नेन रौहिणान्तु न लङ्घयेत् ॥
अकाले विधिना दत्तं न देवपितृगामि तत् ।
अष्टवृद्धि भवेत्तत्र तत्ताव्दसुभयात्मकम् ॥
श्राद्धन्तत्र च कुर्वीत मासयो रुभयोरपि ।
पिण्डवर्ज्यं मसंक्रान्ते संक्रान्ते पिण्डसंयुतम् ।
षष्टिभिर्दिवसैर्मास स्त्रिंशद्भिः पक्ष उच्यते ।
संक्रान्तिरहितः पक्ष स्तत्र कार्यं विपिण्डकम् ॥

सिनीवालीमतिक्रम्य यदा संक्रमते रविः।
युक्तसाधारणैर्मासैः स काल उत्तरो भवेत्॥
संक्रान्तिवर्जितः काल मलः पापसम्भवः।
रक्तसाभागधेयोऽसौ उत्सवादिविवर्जितः॥
तत्र नैमित्तिकं कार्य्यं श्राद्धं पिण्डविवर्जितम्।
नित्यं तु सततं कार्य्य मिति पाराशरोऽब्रवीत्॥
अहोभिर्गणितैर्यत् स्यात् तत्कार्यं यत्र सर्व्वदा।
तिथिनक्षत्रयोगश्च जातकर्मादिकाश्च ये॥
नैमित्तिकाश्च दैवाद्ये कार्य्यास्तेऽपि मलिम्लुचे।
तीर्थस्नानं गजच्छायां द्विमुखीं गोप्रदानवत्॥
मलिम्लुचेऽपि कर्त्तव्यं सपिण्डीकरणन्तथा।
ग्रहणा ममावास्या मष्टकाग्रहसंक्रमम्॥
अधिमासेऽपि कार्य्यं स्यादिति पाराशरो ऽब्रवीत्।
नित्यश्च नित्यशः कार्यमिष्टकामांश्च वर्जयेत्॥
वार्षिकं पिण्डवर्जं स्यादन्यस्मिन् पिण्डसंयुतम्।
दृष्टिराग्रहणं श्राद्ध मन्वाद्यायश्च सर्वदा॥
कर्त्तव्यं सततं विप्रैरिष्टिकामांश्च वर्जयेत्।
दैवे कर्मणि संप्राप्ते तिथौ यत्रोदितो रविः॥
सा तिथिः सकला ज्ञेया विपरीता तु पैतृके॥
वृद्धिमद्दिवसे कार्यं श्राद्धमाभ्युदिकं द्विजः।
क्षीयमानदिने कार्यं श्राद्धं विद्वन्! क्षयादिकम्॥
मित्रे चैव सगोत्रे च पितृमातृसहोदरे।
आसनञ्चैव दातव्यं भोक्तव्या एवमेव ते॥
ब्राह्मणं न सगोत्रन्तु पूजयेत् पितृकर्मणि।

नोपतिष्ठन्ति तत्तेषां किन्तु स्यान्न निराशता ॥
स्वगोत्रं भोजयेद्यस्तु पितृश्राद्धेषु वै द्विजः।
हतास्तु पितरस्तेन न भुक्तमुपतिष्ठति ॥
श्राद्धं कुर्वन् द्विजोऽज्ञानात् स्वगोत्रं यस्तु भोजयेत्।
स लुप्तपितृदेवः सन्नरकं प्रतिपद्यते ॥
तस्मान्न गोत्रिणं विप्रं भोजयेद्विधिपूर्वकम्।
ज्ञातिमात्रो न भोज्यस्तु उच्छ्रितैस्तु द्विजोत्तमैः ॥
दक्षिणाप्रवणे देशे श्राद्धं कुर्य्यात्तु पैतृकम्।
पितृणां पावनो देशः स प्रोक्तोऽक्षयतृप्तिकृत् ॥
देशे काले च पात्रे च विधिना हविषा च यत्।
तिलैर्दर्भैश्च मन्त्रैश्च श्राद्धं स्यात् श्रद्धयान्वितम् ॥
तैजसानि तु पात्राणि ह्यर्घ्याय भोजनाय च।
शस्तानि तानि मन्यन्ते परापरविदः ॥
पलाशपद्मपत्राणि वनिविद्धानि यानि च।
तानि श्राद्धेषु कार्याणि पितृदेवहितानि च ॥
ऋषिश्राद्धेषु मन्यन्ते दारुमयानि तु केन च।
शौनकस्य मतं ह्येतत् ह्यथाकार्यन्तु मृण्मयम् ॥
एकद्रव्याणि कार्याणि पात्राणि भोजनार्थयोः।
त्रीणि पैतृककार्य्याणि भेदमेकत्र वर्जयेत् ॥
एकस्य वैश्वदेवानि पैतृकार्य्येकवस्तुनः।
इति वा तानि कार्य्याणि भेदमेकत्र वर्जयेत् ॥
वटाश्वत्थार्कपत्रेषु न भुञ्जीत कदाचन।
न जातिकुसुमैर्विद्वान् बिल्वपत्रैश्च नार्चयेत् ॥
सुरभीनागगन्धाद्यैः करवीरैश्च नारकैः।

विल्वपत्रैरर्चयेद्विद्वन् पितृश्राद्धेषु गर्हितैः ॥
तज्जुष्टान्नैः कृतः श्राद्धं निराशैः पितृभिर्गतैः ।
सर्वाण्यपि च पुष्पाणि निषिद्धान्यपराणि तु ॥
वर्जयेत् पितृश्राद्धेषु केतकीकुसुमानि च ।
गोरम्भाभृङ्गराजाद्यैर्मल्लिकाकुब्जकैरपि ॥
समर्चयेत् द्विजान् श्राद्धे हव्यकव्योदिते द्विजः ।
न दद्यात्कुङ्कुमं श्राद्धे द्विजानां पितृदैवते ॥
धूपाभावे तु कर्त्तव्यं घृतधूपं द्विजोत्तमः ।
कुङ्कुमाद्यं चन्दनञ्च देयं गन्धविमिश्रितम् ॥
ऊर्द्ध्वञ्च तिलकं कुर्यान्न कुर्याच्च त्रिपुण्ड्रकम् ।
ऊर्द्ध्वञ्च तिलकं कुर्याद्दैवे पित्ते च कर्मणि ॥
निराशाः पितरो यान्ति यस्तु कुर्यात् त्रिपुण्ड्रकम् ।
पवित्रं यदि वा दर्भं करे कृत्वा द्विजोत्तरः ॥
समालभेत् द्विजांस्तत्र तत् श्राद्धं मधुरं भवेत् ।
गन्धाश्च विविधा देयाः कर्पूरागुरुमिश्रिताः ॥
शक्त्या वस्त्राणि देयानि तदभावे च निष्क्रयम् ।
दीपश्च सर्पिषा देय स्तिलतैलेन वा पुनः ॥
न काष्ठतैलैरन्यैस्तु कदाचित् सार्षपादिभिः ।
देशधर्मं समाश्रित्य वंशधर्मं तथापरे ॥
सूरयः श्राद्धमिच्छन्ति पार्वणाद्यं चयान्यपि ।
स्त्रीणामपि पृथक् श्राद्धं न मन्यन्ते स्वधर्मतः ॥
मातामहस्वगोत्रेण मातुले तु सपिण्डताम् ।
मातामहास्तदिच्छन्ति मातुलोऽपि सपिण्डताम् ॥
स्त्रीणां स्त्रीगोत्रसम्बन्धात् पुंगोत्रेण नृणां यतः ।

सपिण्डीकरणं काले श्राद्धं इयमुपस्थितम्॥
देवाद्यं प्रथमं कुर्यात् पितृणां तदनन्तरम्।
देवाद्यं पार्वणं प्रोक्तं प्रेतश्राद्धमथापरम्॥
एकतश्च ततः पश्चात् कृत्वा विप्रांश्च भोजयेत्।
पितृणां सर्घ्यपात्राणि प्रेतपात्रमथापरम्॥
प्रेतपात्रन्तु तत् कृत्वा पितृपात्रेषु योजयेत्।
ये समाना इति द्वाभ्यां पूर्ववच्छेषमाचरेत्॥
सपिण्डीकरणं यस्य कृतं न स्याद्विजन्मनः।
आदेवं तस्य देयं स्यात् पिण्डमेकं तु निर्वपेत्॥
सपिण्डीकरणाद्वै तत् क्रियास्वेव यथाह्निकम्।
एकादशाह्निकं कृत्वा योऽहि मासि च मासिके॥
वर्षे वर्षे च कर्त्तव्यं मृतेऽहनि च तत् पुनः।
नापुत्रस्य सपिण्डत्वं केचिदिच्छन्ति तद्विदः॥
विशेषतोऽनपत्यस्य सत्यप्यत्राधिकारिणी।
विद्यमानः पिता यस्य स चेद्यदि विपद्यते॥
तदन्तरा सपिण्डत्वं वदन्ति श्राद्धवादिनः।
आभ्युदयिकसम्पत्तौ सर्वा प्रागेव कारयेत्॥
कुर्यात् परिजनेनैतत् स्वयं वापि द्विजोत्तमः॥
संन्यसन् सर्वकर्माणि तत् आदाय च तद्दिने।
अग्निदाप्यदिनश्चैके केचिन्मृतदिनं विदुः॥
विदेशस्थे मृताहस्तु शुक्लेवासि तु द्वादशी।
संग्रामे संस्थितानाञ्च प्रेतपक्षे प्रशस्यते॥
अग्निसर्पादि मृत्यूनां षण्मासोपरि सत्क्रिया।
तेषां पार्वणमेवोक्तं चयाहेऽपि च सत्तमैः॥

सन्तर्पिता इमे सर्वान् प्रीणयन्ति त्वयां पितॄन् ॥
प्राक् सङ्केतितान्विप्रान् स्नातान् काले समागतान् ।
दत्त्वार्घ्यान् क्रतवत् शौचान् आचान्तानुपवेशयेत् ॥
ये मृगन्धत स्वर्ग्येऽग्नि चाचमन्ति पिबन्ति च ।
तेषाञ्च आयते शुद्धिराचमन्त्यस्तजाह्नि ते ।
सर्वाणि स्वानि कार्याणि कार्यच्छिद्राणि चात्मनः ॥
तैराचान्तैर्भवेच्छुद्धिरशुचिरन्यथा भवेत् ।
व्याहृत्य वैष्णवान् मन्त्रान् स्मृत्वा च सर्वमात्मनम् ॥
शान्तस्वान्तो द्विजान् पृष्टे करिष्ये श्राद्धमित्यथ ।
करवै करवाणीति पृष्ट्वा ब्रूयु द्विजास्ततः ॥
अनुज्ञायै वणो ह्येतत् कुरुष्व यत् क्रतं कुरु ।
ततो दर्भासनं दत्त्वा देवेभ्यः समयं पुनः ॥
दक्षिणं जानुमन्वास्य दक्षिणश्च तथासनम् ।
पातश्च मतोऽर्घ्यार्थं तैजसञ्चैकवस्तुजम् ॥
आसनं सपवित्रं तत् समभ्यर्च्य विधानतः ।
प्राङ्मुखोऽमरतीर्थेषु प्रणोदेण्योदकं चयेत् ॥
यवोऽसीति यवांस्तत्र क्षिप्तौ पुष्पाणि चन्दनम् ।

यवोऽसि पुण्यमिति संश्रितोऽसि
सम स्थान्य प्रभुरस्यमुत्र ।
मवनृमनुष्य पितृगणस्य तृप्त्यै
क्षितावतीर्णोऽसि हितोऽसि पुंसाम् ॥
उत्पादपूर्वक मिमानवनेन वेधा
भूयः प्रसन्न मनसा तदुपासितः सन् ।

चिक्षेप तान् सलिलनाथ प्रसिच्यताब्धि-
तेनावृता वरुण दैवतका बभूवुः ॥
आनीयमाम्बुधिरिमान् वरुणस्य लोकान्
अन्नप्रभून्भुवि यवान् वसुलोक त्वमैर ।
तत्पिष्ट पक्वहविषा पितृदेवतानाम्
तृप्ता वसन्ति दिवि दानवशत्रव एव ॥
ततः सव्यं करं न्यस्य विप्रो दक्षिणजानुभिः ।
देवानावाहयिष्येव मिति वाच मुदीरयेत् ॥
आवाहये त्यनुज्ञा च विश्वे देवाः स आगतः ।
विश्वे देवा शृणुतेममिति मन्त्रद्वयं पठेत् ।
सोमेन सहराज्ञेति केचित्पठन्त्यदोऽपि च ॥
व्याहृत्य मन्त्रमावाह्य हस्ते दत्त्वा पवित्रकम् ॥
अर्चयेत्तं द्विजं पुष्पैः दद्यादर्घं करे पुनः ।
विश्वेभ्यश्चैव देवेभ्यस्तुभ्य मर्घ्यं प्रदीयते ॥
या दिव्या इति मन्त्रेण पाणौ विप्रस्य तं क्षिपेत् ।
अपसव्य मतः कृत्वा निर्वर्त्य वैश्वदैवकम् ॥
आपो भूमिगताः केचिदादित्ये त्यभिमन्त्र्य च ।
पुनस्ताभिवायाभ्याश्च कुर्वन्ति मुखमार्जनम् ॥
अर्घ्यं गन्धधूपांश्च वासांसि चन्दनं स्रजः ।
दत्त्वा आपः च प्रोद्धूता दद्यात् पितृ कुशासनम् ।
सोदकान् द्विगुणीभूतान् सतिलान् सकुशानपि ॥
गोकर्णमात्रकान् साग्रान् प्रदद्याद्वामपार्श्वतः ।
चतुर्थ्यन्तं सगोत्रञ्च पितृनाम च शर्मवत् ॥
उच्चार्य्य परयोश्चाहदिदं तुभ्यं कुशासनम् ।

पितृभ्यो मध्ये पात्राणि संपूज्य दक्षिणामुखः ॥
तिलोऽसीत्येतदुच्चार्य यवस्थाने तिलान् क्षिपेत् ।
भूलग्नः सव्यजानुः सन् पितृतीर्थे नचात्वरः ।
पितृध्यानमनाः कुर्यात् पितृकार्य्यमशेषतः ॥
आवाहयिष्ये पित्रादीन् अनुज्ञावाहयेति च ।
उशन्तः त्वेति तद्दीर्यं यथायन्तु न इत्यपि ॥
अन्येत्वपहता असुरा इत्यादि च पठन्ति हि ।
अन्यविघ्नव्यपोहार्थं वक्तव्य मिति केचन ॥
प्राग्व द्विप्रार्चनं कार्यं प्राग्वद्दर्घ्यप्रसेचनम् ।
प्राग्वमन्त्रं समुच्चार्य्य प्राग्वच्च मुखमार्जनम् ॥

एते तिलास्तु विधिना शशिलोकतस्तु
प्राकृत्य भोजन हिते न शुभाय धन्यः ।
क्षिप्ता मलानि पुरुषस्य च तर्पयायै
ये घ्नन्ति तेषु भुवि सत्सु कुतो भयं स्यात् ॥
तिलोऽसि चन्द्रामृतदैवतोऽसि
हितोऽस्यशेषे पितृ देवतानाम् ।
कर्त्तापि तृप्तिं परमां पितृणा
मुक्तोऽसि ते न भवता विधिसम्भवोऽसि ॥

अर्घ्यपात्राणि सर्वाणि कृत्वा तान् पाद्यपात्रके ।
पितृभ्यः स्थान मसीतिन्युब्जं कुर्य्यादधश्च तत् ॥
यस्तूद्धरेदविज्ञाना दर्घ्यपात्रन्तु पैतृकम् ।
तद्धि श्राद्ध मभोज्यं स्यात् कृत्यैः पितृगणौ गतैः ॥
आश्रित्य प्रथमं पात्रं तिष्ठन्ति पितरो नृणाम् ।
श्राद्धे तस्मान्न त द्विद्वानुद्धरेत् प्रथमं सुधीः ।

वाचयेत् परिपूर्णांस्तु वासोदत्त्वा विधानतः।
अस्त्वेतु परिपूर्णांस्तु ब्रूयुरेते द्विजातयः॥
ससर्पिः पात्र मादाय सपिधानं विधानतः।
नत्वा सर्वान् द्विजान् पृच्छेत्करिष्येऽग्नाविति द्विजः॥
कुरुष्वेति त्वनुज्ञाता जुहोत्यग्नौ ततः पुनः।
भोजने पितृविप्राणा मितिमन्त्र मुदीरयेत्॥
अग्निशब्दं चतुर्थ्येकवचनान्तं समुच्चरेत्।
कव्यवाहनशब्दं च सोमं पितृमदित्यपि॥
पङ्क्तिमूर्द्धान मेवात्र पृच्छेदितिह केचन।
पितृश्राद्धप्रदानत्वात् साम्नस्त्वे माथवा पुनः॥
तृतीयां मनसा दद्यात् यमाय त्वेतवा पुनः।
तुष्णीं यत्र तु होमादौ प्रजापतिस्तु तत्रतु॥
अहं वाक् तस्मिन् वाक् सम्वादो भूम्नतोगिरो:।
अहव्यवाद्यते वाणी अमुष्याग्नेः प्रजापतेः॥
अग्नावाहुतयः प्रोक्तास्तिस्रएव मनीषिभिः।
अग्निवह्निप्रपात्रेषु पश्चात्तज्जु हुयाद् द्विजः॥
अग्नौकरण शेषन्तु पितृपात्रेषु दापयेत्।
प्रतिपाद्य पितॄणां तु दद्याद्वै वैश्वदेविके॥
यत्राग्नौकरणं दद्यात् पितृविप्रकरेषु च।
तेनोच्छेषित मेतत् स्यात्समाप्तिस्तावतैव तु॥
पितरः कश्यवक्त्राश्च वह्निवक्त्राश्च देवताः।
अतः पाणौ न तद्देयं देयं पात्रे कुशान्विते।
वैश्वदेविकविप्राणां पात्रे वा यदिवा करे॥
अनग्निक स्तु तद् दद्यात् प्रथमं वैश्व देविके।

कृतशेषमशेषाणां पात्रे दद्याद् द्विजोत्तमः ।
पृच्छेत्सर्वांश्च यत् कृत्यं सामान्येन द्विजोत्तमान् ॥
दत्त्वान्ये करणञ्चान्यं विप्राणां तृप्तिरुद्भविः ।
परिवेष्य मिति ब्रूयु स्ततोविधिरनन्तरः ॥
प्रागग्नौ करणं दद्यात् अन्यत्दत्त्वा च तृप्तिकृत् ।
एकीकृतं तु भुञ्जाना: प्रीणयन्तु शुभां पितॄन् ॥
परिवेष्य हविः सर्वं तदर्थं यच्च वै स्मृतम् ।
अभिमन्त्र्य मतः पात्रमपोशनप्रदानवत् ॥
अन्नपूर्णास्य पात्रस्य कर्त्तव्य मभिमन्त्रणम् ।
आपो दत्त्वा तु संकल्पमेष श्राद्धविधिर्वरः ॥
वर्ज्जितानि न देयानि पितृप्रीतिं विजानतः ।
हविष्याणि प्रदेयानि वक्ष्यमाणानि वर्जयेत् ॥
निष्पावा राजमाषाश्च कुलत्थ कोरदूषकान् ।
मसूर सितपाकश्च पुष्पकं शाणमर्कटाः ॥
आढकाशितसिद्धार्थाः वश्चान्विस्वधनान्यके ।
पिण्याकं परिदग्धा च मथितश्च विवर्जयेत् ॥
नापि नीरस निर्गन्धं करञ्ज सर्वशक्तुकम् ।
अप्रोक्षितं च यत्किञ्चित् पर्युषितश्च वर्जयेत् ॥
लोहितान् वृक्षनिर्यासान् प्रत्यक्ष लवणानि च ।
लता: कृष्णतिला वर्णाः सर्वाः पालाक्कु जातयः ॥
कृष्ण जीरकवंशाग्रास्तृणानि च विवर्जयेत् ।
कुम्भिकेषु कपालाक्का: कट्फलं तण्डुलीयकम् ॥
नीलकाच समच्छत्रा शोभाञ्जन कुसुम्भिका: ।
कोविदार करञ्जौ च सुसुष्णामूलकं तथा ॥

कुष्माण्डं गौरखन्ताकं वृहत्याश्च फलानि च।
करीरफलपुष्पाणि विडङ्गमरिचानि च।
जम्बारिका सुजम्बीरा सुकत्री वीजपुरिका:॥
तुम्बालाबूनि पिप्पल्यः पटोलं पिण्डमूलकम्।
मसूराञ्जनपुष्पं च श्राद्धे दत्त्वा पतत्यधः॥
विषच्छन्नहतं मांस मन्यच्च चिरसंस्थितम्।
निम्बश्राद्धेऽपि वर्ज्यं स्याद्विट्वराहचकोरयोः।
स्वायम्भुवादिभिः सर्वैं र्मुनिभि र्धर्मदर्शिभिः।
निषिद्धानि न देयानि पितॄणां मलितानि च॥
एकेन किञ्चिदपरेण किञ्चित् किञ्चिच्च किञ्चित्परमस्तु सद्भिः।
श्राद्धे निषिद्धं श्ययनादि विद्वन्! सर्वं पितॄणां नतु किञ्च देयम्॥
सौवीरनिष्कूलवणादिभिः सुपाकस्य शुद्धिर्भवतीह यस्तु।
तद्वीजपूराम्मरिचादियोगात् सिद्धं प्रदेयं नतु दुष्यतीह॥
श्राद्धन्तु यस्य द्विजदीयमानं पित्रादिकस्येह भवेन्मनुष्यैः।
यदि स्मृतस्येह मनस्यभीष्टमासीत् पुरा यस्य तदेव देयम्॥
दातुस्तु यस्मिन् मनसोऽभिलाषः श्रद्धा भवेत्तत्र तु दीयमाने।
श्राद्धेऽपि देयं विधिवत्तदेव तदक्षयश्चेति इतिप्रवादः॥
आनीतमम्भोनिधिवत्कथञ्चित् तत्पाणिदत्तं भवतीह विद्वन्!।
हेमाम्बुनिक्षेपहरिस्मृताभ्या मच्छिद्रतामेति पराशरोक्तिः॥
यक्षीरसारैः कयखण्डयोगात् शाखाभिधेयं भवतीह विद्वन्!।
प्राप्यङ्गधूपान् मरिचादियोगात् पाकस्य शुद्धिं प्रवदन्ति तज्ज्ञाः॥
व्रीहयो यवगोधुमा मुद्गा माषास्तिला स्तथा।
नीवारश्यायकाद्यन्त मकृष्टसम्भवानि च॥
शर्करागुड़खण्डानि संशुद्धा क्षौद्रमेव च।

पितृश्राद्धे हविर्मुख्यं यद्वा तद्वास्य लोभतः ॥
यद्देहिना मत्र शरीरपुष्टैर्धाता ससर्जाशननाम किञ्चित् ।
तत्सर्वधान्यान्यमितं ह्यवादि त्रेधा मुनीन्द्रेण पराशरेण ॥
श्यामाशराधादिककङ्गुजादि यत्किञ्चदस्मिन् सुखसाररूपम् ।
अरण्यजं वा कृषिसम्भवं वा सस्यन्तदुक्तं ह्यशनेषु विद्वन् ! ॥
काण्डाद्भवं यच्चशनेषु किञ्चित्पङ्कोद्भवं वा स्थलसम्भवं वा ।
यत्तुच्छसारं बकराजमस्मिन् सर्वाणि धान्यानि च शूकवन्ति ॥
यत्सर्वसारं सतुदन्तु भक्ष्यं निःशूकस्तूनान्वितमत्र किञ्चित् ।
आप्यायनं देहभृता तु सद्य स्तत्प्रोक्तमन्नं ह्यशनेन सद्भिः ॥
प्रतिश्रुतश्च भुक्तश्च कटु तिक्तश्च यत्तथा ।
केचिदूचुरदेयानि ह्यश्वत्थप्रतिरोपिताः ॥
तुण्डीकरान्यलावूनि लिङ्गाख्यानि तु यानि तु ।
नित्यं श्राद्धेऽप्यदेयं स्यादाह सत्यवतीपतिः ॥
सोङ्कारया वै गायत्र्या दशावर्त्तितया जलम् ।
पूतन्तु तेन तत्प्रोक्तं सर्वमन्नविशुद्धये ॥
शुद्धवत्योऽथ कूष्माण्ड्यः पावमान्यस्तरत्समाः ।
पूतेन वारिणैताभि रन्नशोधनमुत्तमम् ॥
तद्विष्णोरिति मन्त्रेण गायत्र्या च प्रदक्षवान् ।
प्रोक्षयेदशनं सर्वम् शूद्रदृष्ट्यादिशुद्धये ॥
परिवेषयेत्समं सर्वं न कार्य्यं पङ्क्तिभेदनम् ।
पङ्क्तिभेदी वृथापाकी नित्यं ब्राह्मणनिन्दकः ॥
आदेशी वेदविक्रेता पञ्चैते ब्रह्मघातकाः ।
यद्येकपङ्क्त्यां विषमं ददाति स्नेहाद्भयाद्वा यदिवार्थलोभात् ।
वेदैश्च दृष्टं ऋषिभिश्च गीतं तद्ब्रह्महत्यां मुनयो वदन्ति ॥

देवान् पितॄन् मनुष्यांश्च वह्निमभ्यागतां स्तथा।
अभ्यर्च्य तु न भुञ्जानो वृथापाक इति स्मृतः॥
एतद्वै ब्राह्मणस्यास्ये जुहोमि चामृतेऽमृतम्।
इदं विष्णुरिति च्चोतन्मन्त्रमुच्चार्य्य चापरे॥
द्विजाङ्गुष्ठं च तत्रान्ने निवेशयन्ति तद्विदः।
जप्त्वा व्याहृतिभि र्गायत्रीमधुमतीरिति॥
सङ्कल्पान्न मपोशानं ब्रूयाच्च मधुमध्विति।
आपोशनं प्रदेयान्नं न तत्सङ्कल्पयेद्द्विजः॥
सङ्कल्पा नरके याति निराशैः पितृभिर्गतैः।
आपोशनो देवपत्नीः पाणौ तिष्ठति यो द्विजः॥
सङ्कल्पं कुरुतेऽज्ञानात् स्वस्तेन पितरो हताः।
जप्त्वाथ वैष्णवान् मन्त्रान् विप्रान् ब्रूयाद्यथासुखम्॥
भुञ्जीरन्वाग्यतास्ते तु पितृदेवहितैषिणः।
अत्युष्णमशनं कार्य्यं वचोवाच्य पितृव्रदः॥
शूद्रश्च शूकरध्वाङ्क्षकुक्कुटानपलापयेत्।
भुञ्जते ब्राह्मणा यावत्तावत् पुण्यं जपेज्जलम्॥
पावमान्यानुवाक्यानि पितृसूक्तानि चैव हि।
ततस्तृप्तान् द्विजान् पृच्छेत्तृप्ताः स्थेत्यनुशासनम्॥
तृप्ताः स्मेति द्विजा ब्रूयुस्तदन्नं विकिरेद्भुवि।
सकृत् सकृदपो दत्त्वा शेषमन्नं निवेदयेत्॥
यथाज्ञानं तथा कृत्वा पिण्डांस्तदनु निर्वपेत्।
यद्यद्भुक्तं द्विजैरन्नं तत्तदादाय विस्तरः॥
स्थालीपाकतिलोपेतं दक्षिणाभिमुखस्ततः।
अवनिज्य तिलान् दर्भान् पिण्डार्थं मवनीतले॥

तस्मिंश्च निर्वपेत्पिण्डान् गोत्रनामकपूर्वकान्।
यदेकलोकं पितृलोकमायुः प्राप्ता स्तथैवं नरकं नरा ये॥
अग्नौ हुतेन द्विजभोजनेन तृप्यन्ति पिण्डे भुवि ते प्रदत्तैः॥
यदन्नं लेपरूपन्तु क्रमात्तेषु च निक्षिपेत्।
प्रक्षाल्य सलिलं वारि अवनेजनवत् पुनः॥
निवृत्तानर्चयेत्पिण्डान् पुष्पगन्धानुलेपनैः।
दीपवासप्रदानेन पितॄनर्च्य समाहितः॥
वासो वस्त्रदशां दद्याद्विधिवन्मन्त्रपूर्वकम्।
केचिद्वृत्त्याविकं लोम केचिन्मतं न तत्त्विति॥
पञ्चाशद्वार्षिको यस्तु दद्याल्लोम स्वमंशुकम्।
तदवश्यं प्रदेयं स्याद्विधिसम्पूर्णताकृते॥
पवित्रं यदि वा दर्भं करात्ततोविनिक्षिपेत्।
प्रक्षाल्य हस्तावाचम्य प्रोक्षणादिकमाचरेत्॥
निर्वपन्त्यपरे पिण्डान् प्रागेव द्विजभोजनात्।
खादयेयुः शकुन्तैस्तान् पितॄणां तृप्तितत्पराः॥
मातामहानामप्येवं विप्रान्नाचामयेदथ।
वाक्यातीतद्विजान् स्वस्ति दद्याच्चैवाक्षतोदकम्॥
दक्षिणा हेम देवानां पितॄणां रजतं तथा।
शक्त्या दत्त्वा स्वधाकारं व्याहरेत् श्राद्धकृद्द्विजः॥
तिष्ठन् पिण्डान्तिके ब्रूयाद्वाचयिष्ये स्वधामिति।
वाच्यतामिति विप्रोक्तिः प्रवदेद्गोत्रपूर्वकम्॥
स्वधोच्यतामिति ब्रूयादस्तु स्वधेति तद्वचः।
ऊर्जं वहन्ति उच्चार्य्य जलं पिण्डेषु सेचयेत्॥
याः काश्चिद्देवताः श्राद्धे विश्वशब्देन जल्पिताः।

प्रीयता मितिच ब्रूयात् विप्रैरुक्तमिदं जपेत् ।
दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेवच ॥
श्रद्धा च नो मा व्यगमद् बहुदेयञ्च नोऽस्त्विति ।
न्युब्जपिण्डार्घ्यपात्राणि कृत्वोत्तानानि संश्रवान् ॥
क्षिप्त्वा पिण्डेष्वतो विप्रान् पितृपूर्वं विसर्जयेत् ।
वाजे वाजे इति ह्युक्त्वा आमावाजस्य तान् वहिः ॥
ब्रूयात्प्रदक्षिणीकृत्य तथा चमध्वमित्यपि ।
पिण्डानां मध्यमं पिण्डं पितृन्ध्यायं समाहितः ॥
प्राशयेत् पुत्रकाम्या तु भार्य्या तस्मान्नदस्य तु ।
स्नुषा वापि सगोत्रा वा पुत्रकामा द्विजाज्ञया ।
आधत्त पितरो गर्भं व्याहरेयुर्हि जातयः ॥
महारोगगृहीतोवा तद्रोगोपशमाय च ।
अत्तु मे पितरो रोगमित्युक्त्वा प्राशयेद्वितम् ॥
अन्यानप्सु हुताशे वा क्षिपेद्दद्याद्द्विजाय वा ।
अजाय वा प्रदद्यान्न पश्चाद्विप्रविसर्जनम् ॥
उद्दाहं पितृकादेके पाकान्मातामहाय तु ।
एकेनैव हि गच्छन्ति भिन्नगोत्रा स्तथा द्विजाः ॥
अदैवेऽथ्वस्थाने तु वक्तव्यमुपतिष्ठताम् ।
अभिरम्यतां स्वधास्थाने विप्रोक्तिरभिरताः स्म ह ॥
ऊर्ध्वन्तु प्रोष्ठपद्यास्तु प्रतिपादादिकाश्च याः ।
पुण्यास्तास्तिथयः सर्वाः दशापि सह पञ्चभिः ॥
तेषाञ्चतुर्दशी प्रोक्ता शास्त्रेणापहृता नराः ।
पितृभ्यश्च त्रयोदश्यां गयाश्राद्धाधिकं फलम् ॥
न तत्र पातयेत्पिण्डान् सन्तानेप्सुः कदाचन ।

पिण्डदानेन कवयो वंशक्षयं वदन्ति हि ॥
सन्तानेप्सु स्त्रयोदश्यां न पिण्डान् पातयेन्नरः ।
पातयेन्न मतीक्ष्णश्च प्राह सत्यवतीपतिः ॥
मघायुक्तत्रयोदश्यां पिण्डनिर्वपणं द्विजः ।
ससन्तानो नैव कुर्य्यादित्यन्ये कवयो विदुः ॥

यः संक्रमे भानुदिने च कुर्य्यात्
विशेषणं पारणकं द्विजन्मा ।
पिण्डप्रदानं पितृभे च तद्वत्
ज्येष्ठे प्रपद्ये : सुतोऽनुजोवा ॥

पुत्रदा पञ्चमी कर्तुस्तथैवैकादशी तिथिः ।
सर्वकामा त्वमावास्या पञ्चम्यथं शुभा स्मृता ॥
अन्नक्षीरघृतं क्षौद्रमैक्षवञ्चावशाकवत् ।
एतैस्तु तर्पितैर्विप्रैस्तर्पिताः पितरो नृणाम् ॥
देशः पर्वच कालश्च हविःपात्रे च शक्तितः ।
पितृदैविकचित्तत्वं योगश्चेत् पितृभादिभिः ॥
शौचञ्च पात्रशुद्धाच श्राद्धस्य परमा यदि ।
अन्नत्तृप्तिकृच्छ्राद्धे एतत् खलु नचामिषे ॥
यस्तु प्राणिबधं कृत्वा मांसेन तर्पयेत् पितॄन् ।
सोऽविद्वांश्चन्दनं दग्ध्वा कुर्य्यादङ्गारविक्रयम् ॥
छित्वा कूपे तथा किञ्चिद्वाल आदातुमिच्छति ।
पतत्यज्ञानतः सोऽपि मांसेन श्राद्धकृत्तथा ॥
सर्वथान्नं तथा न स्यात्तदैवामिषमाश्रयेत् ।
ब्राह्मणश्च स्वयं नाद्यात्ततः श्वादिहृतं यदि ॥
अथान्यत्पापमृत्यूनां शुद्ध्यर्थं श्राद्धमुच्यते ।

कुत्रचिन तेन येषान्तु प्रवृत्तमुपतिष्ठति ॥
दन्तिशृङ्गिगरव्याल निरग्निबन्धनैस्तथा।
विद्युन्निर्घातवृक्षैश्च विप्रैश्च स्वात्मना हताः ॥
प्राणसञ्जातकीटाश्च म्लेच्छैश्चैव हतास्तथा।
पापकृत्यव एवैते शुभगत्यर्थमुच्यते ।
नारायणबलिः कार्य्यो विधानन्तस्य उच्यते।
ऊर्द्धं षण्मासतः कुर्य्यादेक ऊर्द्ध्वन्तु वत्सरात् ॥
तेषां चैव व्यपोहार्थं कार्य्यो नारायणो बलिः।
धौतवासाः शुचिः स्नात एकादश्यामुपोषितः ॥
शुक्लायांतु संपूज्यो विष्णुमीशं यमन्तथा।
नदीतीरं शुचिर्गत्वा प्रदद्याद्दश पिण्डकान् ॥
क्षौद्राज्यतिलसंयुक्तान् हविषा दक्षिणामुखः।
अभ्यर्च्य पुष्पधूपाद्यैः पुन्नामगोत्रपूर्वकान् ॥
विष्णुध्यानमनाः कुर्य्यात् ततः स्नानाम्भसि क्षिपेत्।
निमन्त्रयीत विप्रांश्च पञ्च सप्ताथ वा नव ॥
द्वादश्यां कुतपे स्नातान्धौतवस्त्रान् समागतान्।
हर्याराधनभक्त्या प्रक्षालिताङ्घ्रियुग्मकान् ॥
दक्षिणाप्रवणे देशे शुचिस्तानुपवेशयेत्।
दैवे द्वौ तु त्रयः पित्र्ये प्राङ्मुखोदङ्मुखान् द्विजान् ॥
आसनावाहनार्घ्यैश्च कुर्यात् पार्वणवद्द्विजः।
भोजयेद्भक्ष्यभोज्यैश्च क्षौद्रैश्चवाज्यपायसैः ॥
तृप्तान् ज्ञात्वा ततो विप्रान् तृप्तिप्रश्नं यथाविधि।
भोज्येन तिलमिश्रेण हविष्येन च तान् पुनः ॥
पञ्च पिण्डान् प्रदद्याद्वै देवरूपमनुस्मरन्।

विष्णुब्रह्मशिवेभ्यश्च त्रीन् पिण्डांश्च यथाक्रमम् ॥
यमाय सानुगायाथ चतुर्थं पिण्डमुत्सृजेत् ।
मृतं सञ्चिन्त्य मनसा गोत्रनामकपूर्वकम् ॥
विष्णुं स्मृत्वा क्षिपेत् पिण्डं पञ्चमञ्च ततः पुनः ।
दक्षिणाभिमुखश्चैव निर्वप्य पञ्च पिण्डकान् ॥
आचम्य ब्राह्मणान् पश्चात् प्रोक्षणादिकमारभेत् ।
हिरण्येन च वासोभिर्गोभिर्भूम्याच तान् द्विजान् ॥
प्रणम्य शिरसा पश्चाद्विनयेन प्रसादयेत् ।
तिलोदकं करे दत्त्वा प्रेतं संस्मृत्य चेतसि ॥
गोत्रपूर्वं क्षिपेत्पाणौ विष्णुं बुद्ध्या निविश्य च ।
बहिर्गत्वा तिलाम्भस्तु तस्माद्दद्यात्समाहितः ॥
मित्रभृत्यैर्निजैः सार्धं पश्चाद्भुञ्जीत वाग्यतः ।
एवं विष्णुमते स्थित्वा यो दद्यात्पापमृत्यवे ॥
समुद्धरन्ति तं प्रेतं पराशरवचो यथा ।
सर्वेषां पापमृत्यूनां कार्यो नारायणो बलिः ॥
तस्मादूर्ध्वञ्च तेभ्योऽहि प्रदत्तमुपतिष्ठते ।
एवं श्राद्धैः समस्तान्यः सन्तर्पयति वै पितॄन् ॥
दद्युस्तानुत्तमांस्तस्य पितरस्तर्पिताः परान् ।
विद्यातपोमुखान् पुत्रान् पूज्यत्वमथ योषितः ॥
सौभाग्यैश्वर्यतेजश्च बलं श्रेष्ठमरोगताम् ।
यशःशुचित्वपुण्यानि सिद्धिञ्चैवात्मवाञ्छिताम् ॥
यशस्यन्दीर्घमायुश्च तथैवानुमतां मतिम् ।
अथान्यत् किञ्चिदाख्यामि पितॄणान्तु हिताय वै ॥
कृतेनैव स्वल्पेनापि प्राप्नुवन्ति विधेः फलम् ।

उच्छिष्टस्य विसर्गार्थं विधिस्तात्कालिको हि यः ॥
श्राद्धार्थैर्विहितं यत्प्राक् पितृगणाहितैर्षिभिः ।
आदाय सर्वमुच्छिष्टमवनेजनवद्बुधः ॥
तत्रैव भक्षयेद्भूमौ तिलदर्भसमन्वितम् ।
नरकेषु गता ये वै अल्पमृत्युमृता मम ॥
एतदाप्यायनन्तेषां चिरायैतद्ब्रवीन्मनुः ।
करस्य मध्यतो देवाः करपृष्ठे तु राक्षसाः ॥
पात्रस्यालम्भनादौच तस्मात्तत्र प्रदर्शयेत् ।
दर्भाश्च स्वयमानेया दक्षिणाग्रवणोद्भवाः ॥
तर्पणाद्युज्झिता ये वै इत्याद्यास्त विसर्जयेत् ।
न कुशन्तु शमित्याहुर्दर्भमूलं कुशः स्मृतः ॥
छिन्नदर्भा इति प्रोक्ता तदयं कुतपः स्मृतः ।
हरिता याज्ञिका दर्भाः पीतकाः पाकयाज्ञिकाः ।
समूलाः पितृदैवत्यच्छिन्ना वै वैश्वदेविकाः ॥
दर्भमूले स्थितो ब्रह्मा दर्भमध्ये जनार्दनः ।
दर्भाग्रे शङ्करस्तस्मौ दर्भाः देवमयान्विताः ॥
षडन्येकादे श्राद्धे प्रतिमासं तु वत्सरम् ।
प्रतिसम्वत्सरं कार्यमेकोद्दिष्टं तु सर्वदा ॥
एकस्य प्रथमं श्राद्धं मर्वागब्दाच्च मासिकम् ।
प्रतिसम्वत्सरस्यैव शेषं त्रिपुरुषं स्मृतम् ॥
सपिण्डीकरणादूर्ध्वं प्रतिसम्वत्सरं सुतैः ।
एकोद्दिष्टं प्रकुर्वीत पित्रोरप्यत्र पार्वणम् ॥
सपिण्डीकरणादूर्ध्वं प्रतिसम्वत्सरं द्विजैः ।
मातापित्रोः पृथक्कार्यं मेकोद्दिष्टं मयाहनि ॥

चतुर्दश्यां तु यच्छ्राद्धं सपिण्डीकरणे कृते।
एकोद्दिष्टविधानेन तत्कुर्याच्छस्त्रघातिते॥
पित्रादयस्त्रयो यस्य शस्त्रघातास्त्वनुक्रमात्।
स मृते पार्वणं कुर्य्यात् अष्टकानि पृथक् पृथक्॥
सपिण्डीकरणादूर्ध्वं पितुर्यः प्रपितामहः।
स तु लेपभुगित्येव प्रलुप्तपितृपिण्डतः॥
सपिण्डीकरणादूर्ध्वं कुर्यात् पार्वणवत्सदा।
प्रतिसम्वत्सरं विद्वान् च्छागलेपोविधिः स्मृतः॥
सपिण्डता तु कर्त्तव्या पितुः पुत्रैः पृथक् पृथक्।
स्वाधिकारप्रवृत्तत्वादितरः श्राद्धकर्तृवत्॥
यस्य सम्वत्सरादर्वाक् सपिण्डीकरणं भवेत्।
प्रतिमासं तस्य कुर्य्यात् प्रतिसम्वत्सरं तथा॥
अर्वाक् सम्वत्सरात् वृद्धौ पूर्णे सम्वत्सरेऽपि च।
एकपिण्डीकृतानान्तु पृथक्त्वंनोपपद्यते॥
सपिण्डीकरणादूर्ध्वं मृतकृष्णचतुर्दशीम्।
ये सपिण्डीकृतास्तेषां पृथक्त्वं नोपपद्यते॥
पृथक्त्वकरणे तस्य पुनः कार्या सपिण्डता।
स्त्रियं स्वश्र्वा पतिर्माता तया सह सपिण्डयेत्॥
तदभावे पितामह्या तन्माता चापरे विदुः।
नान्यथा तु पितामह्या मातामह्यास्तथापरे॥
उदके पिण्डदानञ्च भर्त्रा सह प्रदीयते।
अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषोऽपिवा॥
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम्।
अपुत्राश्च मृता ये च कुमाराः संस्कृता अपि।

समानता न तेषां स्यान्न स्वधा नाभिरम्यताम्॥
भर्त्रा सपिण्डता स्त्रीणां कार्येति कवयो विदुः।
श्वश्र्वा सहापरे तस्यास्तन्मात्रा वा परे विदुः॥
अनपत्येषु प्रेतेषु न स्वधा नाभिरम्यताम्।
एकोद्दिष्टेषु सर्वेषु न स्वधा नाभिरम्यताम्॥
मित्रबन्धुसपिण्डेभ्यः स्त्रीकुमारस्य चैव हि।
दद्याद्वै मासिकं श्राद्धं सम्वत्सरं तु नान्यथा।
अप्रत्ययगतश्चैव कुलदेशस्य वर्त्मना॥
यो यथा क्षपया युक्तः स तथैव हि निर्वपेत्।
दार्व्यार्थं दृश्यते रूढे मानवं लिङ्गमेव च॥
दृढीकृता च विद्वद्भिर्लोकरूढिर्गरीयसी।
विकल्पेषु च सर्वेषु स्वयमेवैक मादृतः॥
अङ्गीकरोति यः कर्ता सविधिस्तस्य नेतरः॥
बहून्याजयते यस्तु वर्णबाह्यांश्च नित्यशः।
म्लेच्छांश्च शौण्डिकांश्चैव स विप्रो बहुयाजकः॥
वर्त्तते यश्च चौर्येण सुवर्णेनोपहारकः।
स गृहीतसवर्णस्त्री स विप्रो गण उच्यते॥
मृते भर्त्तरि या नारी रहस्यं कुरुते पतिम्।
ते तु वै आपयेद्गर्भं सा नारी गणिका स्मृता॥
अन्यदत्ता तु या कन्या पुनरन्याय दीयते।
तस्या अभिन्नभोक्तव्यं पुनर्भूः कीर्तिता हि सा॥
कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता।
पुनः पत्युर्गृहं गच्छेत् पुनर्भूः सा द्वितीयका॥
असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते।

इतरे तुर्यवर्णेषु तपः परममुच्यते ।
भर्त्तुश्चित्यां समारोहेत् यात्र नारी पतिव्रता ।
अहन्येकादशे प्राप्ते पृथक्पिण्डं नियोजयेत् ॥
श्रौतैश्च स्मार्त्तमन्त्रैश्च दम्पत्या वेव तावुभौ ।
एकचित्तगतौ चैव वह्नावेकत्र यौ हुतौ ॥
एकत्वं तु तयोर्यस्मात् आतमाद्याय सानकम् ॥
एकादशाहिकं श्राद्धं एकमेव स्मृतं बुधैः ।
एकत्वमिच्छन्ति मतिप्रहीणा एकादशाद्येषु कृतान्तु मार्च्यः।
ते स्वर्गमार्गं विनिहत्य कुर्युः स्त्रीसत्वदाता नरकेऽधिवासम् ॥
समानमृत्युना यस्तु मृतोभर्त्ता च योषिताम् ।
तस्याः सपिण्डता तेन पिण्डमेकं तु निर्वपेत् ॥
स्त्रीपात्रं पतिपात्रे तु सिञ्चयेदेकमेवहि ।
श्राद्धे त्रिपुरुषे तीर्थि तत् प्रत्यक्षं पितृन् प्रति ॥
पत्या सह परा सुप्ता तेनैवास्याः सपिण्डता ॥
पितामह्यापि चान्यत्र ह्येतदाह पराशरः ।
अन्यप्रीतौ न चान्यस्य तृप्तिः कस्यापि दृश्यते ॥
एवं भीमवसुत्रापि तस्मान्नेकत्वमात्मने ।
एकत्वाश्रयणो धर्मो नार्थात्तुल्यो भवेद्ध्रुवम् ॥
तस्याः सुकृतसामर्थ्यात् पत्युः स्वर्गं हि ह्येष्यते ।
भर्त्रा सह मृता यातु नाकलोकमभीप्सती ॥
साद्यश्राद्धे पृथक् पिण्डो नैकत्वन्तु स्मृतं बुधैः ।
पतिमृत्युः स्त्रियोमृत्यो र्निमित्तमेव जायते ॥
निर्निमित्तो मवे मृत्यु र्मृत्युना चैकता भवेत् ।

भर्त्रा सह मृता भार्य्या भर्त्तारं सा समुद्धरेत्॥
तस्याः पतिव्रताधर्म एकत्वे तु हतो भवेत्।
बलीयस्त्वेन धर्मस्य तुच्छत्वाच्च समस्तया॥
धर्मेण लिप्यते पाप मेकत्वे समता तयोः।
नैकत्वन्तु तयो रस्माद्दत्तव्यं श्राद्धकर्मणि॥
पृथगहनि कर्त्तव्यं श्राद्धमेकादशादिकम्।
यानि श्राद्धानि कार्य्याणि तान्युक्तानि पृथक् पृथक्॥
कर्त्तव्यं यच्च तेऽप्युक्ता विशेषञ्च निबोधत।
औरसाद्या मृताः पुत्त्रा मुनिभिर्द्वादशैव तु॥
यथाजात्यनुसारेण वर्णानामनुसारतः।
श्राद्धप्रदाः क्रमेण स्युः पूर्वाभावे परः परः॥
यस्माद्यो जायते पुत्त्रः स भवेत्तस्य पिण्डदः।
तस्मात्तस्मादपीहन्ते मृताः प्रेतत्वमागताः॥
तस्मादवश्यमेवं हि श्राद्धं कार्य्यं विधानतः।
शूद्रस्य दासीजः पुत्त्रः कामदस्तु स पिण्डदः॥
जात्या जातः सुतो मातुः पिण्डदः स्यात् सुतोऽपि च।
जनकस्य न किञ्चित् स्यादर्थात्कामप्रवर्त्तनात्॥
वायुभूताश्च पितरो दत्ताभिकाङ्क्षिणः सदा।
तस्मात्तेभ्यः सदा देयं नृभिर्द्धर्मरतैः सदा॥
ये खड्गिमांसमधुपायससर्पिरन्यै-
र्दैशे च कालसहिते च सुपात्रदत्तैः।
प्रीणन्ति देवमनुजान् पितृवंशजांश्च
तेषां नृणां तु पितरो वरदा भवन्ति॥

उक्तश्राद्धविधिस्त्वेष वर्णानां पितृतृप्तिकृत्।
एवं दास्यति यः श्राद्धं वरान् सर्वानवाप्स्यति॥
इति श्रीवृद्धपाराशरीये श्राद्धनिर्णयो नाम
पञ्चमोऽध्यायः॥

---

## षष्ठोऽध्यायः।

### अगस्त्य उवाच।

अथातः सम्प्रवक्ष्यामि शुद्धिं पाराशरोदिताम्।
सूतके चाप्यशौचे वा यथावत्तां निबोधयेत्॥
प्रसवं सूतकं प्राहुः राशौचं शाव उच्यते।
यावत्कालञ्च यन्मासं तथा तावन्निगद्यते॥
केषाञ्चित्तेन वै मासं केषाञ्चिन्मरणान्तिकम्।
सद्यःशौचास्तथा चान्ये चान्ये चैकाहिकाः स्मृताः॥
त्रिषट्दशद्वादशाभ्यां दशापि वीह पञ्चभिः।
तान्येव त्रिगुणान्याहुः दिनान्येव मनीषिणः॥
वक्ष्यमाणं निबोध त्वं शुद्धक्रममिदं द्विज!।
शक्तिजो यन्मुनीनाञ्च प्राक् ब्रवीत् कलिधर्मवित्॥
विष्णुध्यानरतानाञ्च सदैव ब्रह्मचारिणाम्।
स्वहमेधिद्विजानान्तु तथैव व्रतचारिणाम्॥
वेदतत्त्वार्थवेत्तॄणां नित्यस्नानरतां तथा।
अन्तःसंसर्गिणामेषां नाशौचं नापि सूतकम्॥
संसर्गं वर्जयेद्यत्नात् संसर्गो दोषकारणम्।

वदन्ति मुनयः सर्वे वर्जने स्यान्न किल्बिषी ॥
वदन्ति मुनयः सर्वे संसर्गो दोषकारणम् ।
असंसर्गः स्वकर्मस्थो द्विजो दोषैर्न लिप्यते ॥
दानोद्वाहेष्टिसङ्ग्रामे देशविप्लवकादिके ।
सद्यः शौचं द्विजातीनां सूतकाशौचयोरपि ॥
दातॄणां वृत्तिनामेके कवयः सत्रिणामपि ।
सद्यः शौचमदोषाणां मूचुर्धर्मविदः कलौ ॥
सर्वमन्त्रपवित्रस्तु अग्निहोत्री षडङ्गवित् ।
राजा च श्रोत्रियश्चैव सद्यःशौचः प्रकीर्तितः ॥
देशान्तरगते ताते मृते वापि सगोत्रिणि ।
शेषाहानि दशाहार्वाक् सद्यः शौचमतः परम् ॥
पिण्डनिर्वर्तने जाते मृते वापि सगोत्रजे ।
सद्योऽपीहेति वासे स्यात् सद्यः शौचं विशोधनम् ॥
सद्यः शौचं विधातव्यं सर्वाह्न दत्तजन्मनः ।
बान्धवादिषु विज्ञेय मन्यदूर्द्ध्वं विधीयते ॥
नाशौचसूतके स्यातां नृपतीनां कदाचन ।
यज्ञकर्मनिवृत्तस्य ऋत्विजो दीक्षितस्य च ॥
पृथक् पिण्डमृते काले विदेशेऽन्यत्र च श्रुतेः ।
जाते वापि च शुद्धिः स्यात् सद्यः शौचादसंशयम् ॥
सवेदः साग्निको दाहात् ब्राह्मणः शुद्धिमाप्नुयात् ।
तथैकाहो नृपे संस्थे तथैव ब्रह्मचारिणि ॥
दुर्भिक्षे राष्ट्रभङ्गे च आपत्कालउपस्थिते ।
उपसर्गमृतेवापि सद्यः शौचं विधीयते ॥
गोविप्रार्थविपन्नानां आहवेषु तथैव च ।

ते योगिभिःसमाख्याताः सद्यः शौचं विधीयते ॥
विप्रे संस्थे व्रतादर्वाक् श्रोत्रिये च तथा द्विजैः।
अनूचाने गुरौ चैव आचार्य्ये वापि संस्थिते ॥
असंस्कृतस्त्रिया रात्रिं श्रोत्रिये निधनङ्गते।
त्रिरात्रमेव शौचं स्यात्तथैवोदकदायिनः ॥
विधानेनाग्निको विप्र स्त्रिरात्राच्छुद्धिमाप्नुयात्।
मनीषिणः परे ब्रूयु रसपिण्डे त्र्यहं स्त्रते॥
प्रेतभूतस्य यः शूद्रं ब्राह्मणस्त्वानदुर्बलः।
नियतं ह्यनुगच्छेत त्रिरात्रमशुचि र्भवेत् ॥
षड्रात्रं नवरात्रञ्च श्वस्त्रमां विशुद्धकृत्।
त्र्यहञ्चैव विशुद्ध्यर्थं धर्मशास्त्रविदो विदुः ॥
अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः।
पदे पदे यज्ञफल मनुपूर्व्वं लभन्ति च ॥
अशुचित्वं न तेषान्तु पापं वाशुभकारणम्।
जलावगाहनं तेषां सद्यः शौचं विधीयते ॥
असगोत्रम सम्बन्धं प्रेतीभूतं तथा द्विजम्।
उद्धृत्दग्धद्विजाः सर्व्वे स्नानान्ते शुचयः स्मृताः ॥
एकरात्रं वहन्त्येके सद्यः स्नाने तथा परे।
गोग्रहाद्धिहतानाञ्च मुनयः शुचिकारणम् ॥
हतश्च यो विपद्येत शत्रुभिर्यत्र कुत्रचित्।
स मुक्तो यतिवत्सद्यः प्रविशेत्परवेश्मसि ॥
सन्न्यासी युद्धसंस्थश्च सम्मुखं शत्रुभिर्नरः।
सूर्य्यमण्डलमेत्तारावेिति प्राङ्मनीषिणः ॥
पराङ्मुखे हते सैन्ये यो युद्धाय निवर्त्तते।

तत्यदानीष्टतुल्यानि स्मृत्वा चाह पराशरः ॥
वक्रेतु प्रविशेद्यस्य लोहितं शिरसः पतत् ।
सोमपानेन ते तुल्या बिन्दवो रुधिरस्य च ॥
सन्यासेन मृता ये वै प्रधने ये तनुत्यजः ।
मुक्तिभाजनकास्ते ते इति वेदो निदर्शनम् ॥
सद्यः शौचं विधातव्यं शुचिरेवं विधीयते ।
नोच्यन्ते ते मृता लोके सद्यो ब्रह्मवपुर्गमाः ॥
सन्ध्याचारविहीनानां सूतकं ब्राह्मणा ध्रुवम् ।
अशौचं वा दशाहं स्यादिति प्राह पराशरः ॥
राज्ञस्तु द्वादशाहं स्यात् पक्षो वैश्यस्य पावनः ।
वृषभस्य तथा मासं त्यक्त्वाद्यति धर्मतः ॥
क्षत्रियादि पक्षः सद्भिर्मातुलादिषु कीर्तितः ।
गर्भस्रावे तु तैरुक्ता रात्रयो माससम्मिताः ॥
स्रावद्गर्भस्य विद्वांसो मासादर्वाक् चतुर्थकम् ।
पाताद्गर्भं वदन्त्येके तत्राधिक्यं च सूतकम् ॥
ऋणव्यसनरोगार्तपराधीनकुदर्यकाम् ।
तृष्णावन्तो निराचाराः पितृमातृविवर्जिताः ॥
स्त्रीजितास्चानपत्याश्च देवब्राह्मणवर्जिताः ।
परद्रव्यं जिघृक्षन्तः सद्यः सूतिकिनः सदा ।
पूर्वे किं सत्वशुद्धे वा अन्यदापद्यते यदि ॥
पूर्वेणैव तु शुध्येत जाते जातं मृते मृतम् ।
एकपिण्डाः स्वदायादाः पृथक् दारनिकेतनाः ॥
जन्मनि मरणे वापि भवेत्तेषान्तु सूतकम् ।
अग्नौभृगुप्रपातेच देशान्तरमृतेऽपि वा ॥

बाले प्रेते च संन्यस्ते सद्यः शौचं विधीयते।
अजातदन्ता ये बाला येच गर्भाद्विनिःसृताः॥
न तेषामग्निसंस्कारो नाशौचं नोदकक्रिया।
विवाहोत्सवयज्ञेषु चान्तराशौचसूतके॥
पूर्वसङ्कल्पितानर्थान् तानशौच्यान् ब्रवीन्मनुः।
शिल्पिनः कारुकाश्चैव दासीदासास्तथैव च॥
इत्यादीनां न ते स्नातामनुष्ठन्ति यां द्विजः।
पिता पुत्त्रेण जातेन दद्यात् श्राद्धन्तथोदितम्।
पितॄणां विधिवद्दानं तत्र तत्राप्यनन्तकम्॥
प्रसवे च द्विजातीनां न कुर्य्यात्सङ्करं यदि।
दशाहाच्छुध्यते माता अवगाह्य पिता शुचिः॥
अतिमानादतिक्रोधात् स्नेहाद्वा यदि वा भयात्।
उद्बध्य म्रियते यस्तु न तस्याग्निः प्रदीयते॥
न स्नायान्नोदकं दद्यान्नापि कुर्य्याद्दशोचताम्।
सर्पेण शृङ्गिणा वापि जलेन चाग्निना तथा॥
न स्नानादौ विपन्नस्य तथा चैवात्मघातिनः।
अर्वाक् द्विहायनादग्निं न दद्यान्मृतकस्य च॥
किन्तु तान्निखनेद्भूमौ कुर्यान्नैवोदकक्रियाम्।
सर्पादिप्राप्यमृत्यूना मग्निदाहादिकाक्रियाः॥
षण्मासेतु गते कार्या इति प्राह पराशरः।
शास्त्रदृष्टं बुधैः कार्यमन्यत्सञ्चयनादिकम्॥
तत्कृत्वाऽप्युक्तदिवसैः शुद्धमर्हति धर्मतः।
अन्यायहतविप्राणां ये वोढारो भवन्तिहि॥
अग्निदाश्चैव ये तेषां तथोदकादिदायिनः।

उद्बन्धनमृतस्यापि यश्छिन्द्यात् रज्जुपाशकम्॥
ते सर्वे पाशसंयुक्ताः प्रायश्चित्तस्य भाजनाः।

यः सूतकाशौचविशुद्धवत् स्यात्
आख्याय कालन्तमनुक्रमेण।
पाराशरस्याम्बुजनिश्चिताया
वाच्यास्ततो निष्कृतयो द्विजास्ताः॥

सूतकाशौचयो रुक्ताः शुद्धिपन्थाऽनुपूर्वशः।
सर्वैनसां विशुद्ध्यर्थं प्रायश्चित्तमथाब्रवीत्॥
मनुर्वा याज्ञवल्क्यस्तु वशिष्ठः प्राह निष्कृतिम्।
सा कृतादिषु वर्णानां सति धर्मे वपुष्मति॥
मानसा वाचिका दोषास्तथा वै कार्य्यकारिताः।
धर्माधीना नृणां सर्वे जायन्ते तेऽप्यनिच्छताम्॥
तेषामुपरतात्मानां प्रेत्येह शुभमिच्छताम्।
शक्तिजो निष्कृतिं प्राह युगधर्मानुरूपतः॥
निष्कृतिं व्यवहाराणां सर्वं निष्कृतिकृद्यतः।
कति विप्रैः कथं रूपैरिति वाच्या भवेद्धि सा॥
तद्रूपञ्च प्रवक्ष्यामि यावद्भिः सा द्विजैर्भवेत्।
यथाविधाश्च विप्राः स्युरिति विद्वन्! प्रकीर्त्यते॥
पर्षद्दशवरा प्रोक्ता ब्राह्मणैर्वेदवित्तमैः।
तं यं ब्रूयुः स धर्मः स्यात् स्वयम्भूरित्यकल्पयत्॥
देशशास्त्रविदो विप्रा यं ब्रूयुः सप्त पञ्च वा।
त्रयो वापि स धर्मः स्यादेको वाध्यात्मवित्तमः॥
संयमं नियमं वापि उपवासादिकञ्च यत्॥
तद्गिरा परिपूर्णः स्यान्निष्कृतीर्धर्मचारिकाः।

न लक्ष्यो तु मूर्खाणां नचैवाधर्मवादिनाम् ॥
अविदुषां जातिलुब्धानां नचापि पक्षपातिनाम् ।
श्रुताध्ययनसम्पन्नः सत्यवादी जितेन्द्रियः ॥
सदा धर्मरतः शान्तः सदापर्षत्त्वमर्हति ।
न सा वृद्धैर्न तरुणैर्न कुरूपैर्धनान्वितैः ॥
त्रिभिरेकेन पर्षत् स्याद्विद्वद्भिर्विदुषापि च ।
तरुणा वयसापि स्युर्वृद्धधर्मविदो द्विजाः ॥
शिशवोऽपि हि मध्यस्थाः सर्वत्र समदर्शिनः ।
न सा विप्रैर्भवेद्वृद्धैर्वा स्तु धर्मप्रवादिभिः ॥
यत्र सत्यं स धर्मः स्यात् सत्यं यत्र न तादृशम् ।

न सा सभा यत्र न सन्ति वृद्धाः
वृद्धा न ते ये न वदन्ति धर्मम् ।
धर्मो हथा यत्र न सत्यमस्ति
सत्यं न तद्यच्छलदानुविद्धम् ।

निष्कृतौ व्यवहारे च वृद्धस्याशंसनेऽपि च ।
धर्मं वा यदि वाऽधर्मं पर्ष यत्प्राह तद्भवेत् ॥
स्त्रीणाञ्च बालवृद्धानां क्षीणानां कुशरीरिणाम् ।
उपवासाद्यशक्तानां कर्त्तव्योऽनुग्रहश्च तैः ॥
ज्ञात्वा देशञ्च कालञ्च वयः सामर्थ्यमेव च ।
कर्त्तव्योऽनुग्रहः सद्भिर्मुनिभिः परिकीर्त्तितः ॥
लोभान्मोहाद्भयान्मैत्र्याद्यदि कुर्युरनुग्रहम् ।
नरकं याति ते मूढा शतधा पापभागिनः ॥
प्रविश्य चोत्तमास्ते वै पर्षदानुग्रहात् स्थितः ।
यथाकामं प्रकुर्वन्ते प्रायश्चित्तन्तदीरितम् ॥

किन्त्वयं याचते देवः वदन्तोऽत्र द्विजातयः ।
सर्वे कुर्वन्ति नियतं गतपापं न संशयः ॥
प्रसादो विविधो दैव्यो दैत्याश्चासुरयेवच ।
क्रीड़यापि च तत्रैव देयास्तथैव ते द्विजाः ॥
व्यवहारी गोसमैस्तु ब्रूयाद्वापि च वै रतः ।
तयाकृतन्तु तत्पापन्तत्तथैव निवेदयेत् ॥
यस्तेषामन्यतो ब्रूयात् स पापीयान्पतत्यधः ।
सत्यमसत्य मेवात्र विपर्यस्तं वदेदितः ॥
स एवानृतवादी स्यात् सोऽनन्तनरकं व्रजेत् ।
ज्योतिषं व्यवहारञ्च प्रायश्चित्तं चिकित्सितम् ॥
अजानन्यो नरो ब्रूयात् साहसं किमतः परम् ।
व्यवहारश्च तैः प्रोक्तो मन्वाद्यै धर्मवत् क्रमैः ॥
प्रजाभिर्न तु सर्वाभिर्नान्यैश्चतुर्भिर्मानवैः ।
तत् साधकप्रमाणानि व्याख्यितानि न तैर्विना ॥
जलादिनीचदिव्यानि साक्ष्योक्त्या शपथानि च ।
अन्ये जनपदाचारा अथाधर्म स्तथापरः ॥
पर्षद्भि र्ब्राह्मणैर्मत्वा निर्णेतव्यो यथाविधिः ।
यत्र जात्यनुसारेण देशकालानुधर्मतः ॥
कर्त्तव्यः सत्तमैः सर्वं माननीयोऽभिवादिभिः ।
गोब्राह्मणहतानाञ्च ये स्युर्दोहादिकारिणः ॥
तत्तत्कृच्छ्रेण शुद्ध्येयुरिति पाराशरोऽब्रवीत् ।
भोजयेद्ब्राह्मणान् पश्चात् स दृषा गौश्च दक्षिणाम् ॥
जायते पापनिर्मुक्तः शक्तिसूनो र्यथा वचः ।
अनाग्निका निवृत्ता ये ब्रह्मचर्यात्तथा द्विजाः ॥

वैकालिकास्तु विज्ञेयाः सर्वकार्य्यविवर्जिताः।
सर्वे प्रविशयेयु र्वैते च वैडालिकैः समाः॥
तेषां सर्वाख्यपत्यानि पुत्रकैः सह घातयेत्।
ब्रह्मघ्नश्च सुरापश्च स्तेयी गुर्वङ्गनागमाः॥
एतेषां निष्कृती ब्रूयादेतत् संसर्गिणा मपि।
द्वादशाब्दन्तु विचरेद्ब्रह्मघ्नस्तत्कपालधृक्॥
सर्वत्र ख्यापयन् कर्मभिक्षा विप्रेषु सञ्चरन्।
दृष्ट्वा सेतुं समुद्रस्य स्नात्वा तु लवणाम्भसि॥
ब्राह्मणेषु चरन् भिक्षां स्वकर्म ख्यापयन् शुचिः।
मुण्डितस्तु शिखावर्जं स कौपीनो निराश्रयः॥
चीरचीवरवासा वै त्रिः स्नायी सन् शुचिव्रती।
संयताश्चरेच्छान्त स्छत्रोपानह्वर्जितः॥
ब्रह्मघ्नोऽस्मीत्यहं वाच मिति सर्वत्र वै वदेत्।
गवाञ्च विंशतिर्दद्याद्दक्षिणां वृषसंयुताम्॥
ब्राह्मणेभ्यो निवेद्यैताः शुचिराख्याय भूपतेः।
पूर्वोक्तप्रत्यवायानां प्रायश्चित्त मिदं स्मृतम्॥
ब्राह्मणानां प्रसादेन तीर्थेषु गमनेन च।
गोशतस्य प्रदानेन शुध्यन्ति नात्र संशयः।
अवभृत्येश्च मेधस्य स्नात्वा शुद्धि मवाप्नुयात्॥
आख्याय नृपतेर्वापि तेन संशोधितः शुचिः।
महापापानि सर्वाणि कथयित्वा महीपतेः॥
निष्कृतिं तद्गिरा दद्या दन्यथा तेऽपि तत्समाः।
रोगार्ताङ्गं द्विजं वापि मार्गे खेदसमन्वितम्॥
दृष्ट्वा कृत्वा निरातङ्कं ब्रह्मघ्नः शुद्धिमाप्नुयात्।

असंख्यातं धनं दत्त्वा विप्रेभ्यो वापि शुद्ध्यति ॥
अरण्ये निर्जने यद्वा शुद्ध्येत् त्रिवेदसंहिताम् ।
सुरापस्य प्रवक्ष्यामि निष्कृतिं श्रोतु मर्हसि ॥
सुरापस्तु सुरान्तप्तां पयो वा जलमेव वा ।
तप्तं गोमूत्रमाज्यं वा पीत्वा मृतोऽपि शुद्ध्यति ॥
यदि वा चैलवासो वा ब्रह्महत्याव्रतञ्चरेत् ।
यद्यज्ञानात्पिबेद्विप्रो द्विजातिर्वा सुरां पुनः ॥
पुनः संस्कारकरणात् शुद्ध्येदाह पराशरः ।
स्तेयं कृत्वा सुवर्णस्य शुद्धमेव द्विजातयः ॥
समर्प्य मूषलं राज्ञः ख्यापये स्तेय कर्मकृत् ।
शक्तिञ्चोभयतस्तीक्ष्ण मायसं दण्डमेव च ॥
खादिरं लगुडं वापि हन्यादेकेन तं नृपः ।
जीवतोऽपि भवेत् शुद्धो मुक्तो वा तेन पावनः ॥
मृतश्च प्रेत्य संशुद्ध्येत् पाराशरवचो यथा ।
न स्त्री प्रतिकृतं कृत्वा अग्निवर्णां च तां धमेत् ॥
गुर्वङ्गना गमन्तस्या लोहमय्यां तु स्थापयेत् ।
वृषणौ पुनरुत्कृत्य नैऋत्यामुत्सृजेत्ततुम् ॥
स मृतः शुद्धिमाप्नोति नान्यस्तस्य तु निष्कृतिः ।
सम्वत्सरं चरेत् कृच्छ्रं प्राजापत्य मथापि वा ॥
चान्द्रायणं चरेद्वापि त्रीन् मासानि जितेन्द्रियः ।
व्रते तु क्रियमाणे वै विपत्तिः स्यात् कथञ्चन ॥
स मृतोऽपि भवेच्छुद्ध इति धर्मविनिर्णयः ।
अनिर्दिष्टस्य पापस्य तथोपपातकस्य च ॥
तच्छुद्धौ पावनं कुर्यात् चन्द्रव्रत समाहितः ॥

तिष्ठेन्मासं पयोऽशित्वा पराकं वा चरेद्व्रतम्।
अनिर्दिष्टस्य पापस्य शुद्धिरेषा प्रकीर्तिता॥
क्षत्रियं ब्राह्मणं हत्वा गवां दद्यात् सहस्रकम्।
वृषभैकेन संयुक्तां पापादस्मात् प्रमुच्यते।
त्रीणि वर्षाणि शुद्ध्यर्थं ब्रह्मघ्नस्य व्रतं चरेत्॥
चान्द्रायणानि वा त्रीणि कृच्छ्राणि त्रीणि वा चरेत्।
वैश्यं हत्वा द्विजश्चैव अब्दमेकं व्रतञ्चरेत्॥
गवां त्र्येकशतं दद्याच्चरेच्चान्द्रायणानि च।
कृच्छ्राणि वाचरेत् त्रीणि वचनाद्विदुषा मतौ॥
दुष्ट कार प्रदुष्टां स्त्रीं चातुर्वर्णां द्विजातयः।
शूद्रहत्या व्रतं तेतु चरन्तः शुद्धिमाप्नुयुः॥
अनुलोमेन शूद्रं वा योषामव्यभिचारिणीम्।
शुद्धि मिच्छन्ति कवयश्चन्द्रवृत्तेन केचन॥
व्यभिचारात्तु ते हत्वा योषितो ब्राह्मणादयः।
दन्तिधनुर्बस्त गवां क्रमाद्दद्युर्विशुद्धये॥
साध्वीना मनस्वीनाञ्च नरो हत्वा सहस्रकम्।
चीर्णेन शुद्धिमागच्छेत् योषा सत्या व्रतेन तु॥
गोघ्नस्यातः प्रवक्ष्यामि निष्कृतिं श्रोतु मर्हथ।
यथा यथा विपत्तिः स्यात् तथा तत्रोपपद्यते॥
गोघाती पञ्चगव्याशी गोष्ठशायीच गोऽनुगः।
संयुक्तो मासमासेन गोप्रदानेन शुद्ध्यति॥
एकपादे तु लोमानि द्वये श्मश्रु निकृन्तयेत्।
पादत्रये शिखावर्जं सशिखं तु निपातिते॥
सशिखं वपनं कृत्वा त्रिसन्ध्य मवगाहनम्।

गवां मध्ये वसेद्रात्रौ दिवा गाः समनुव्रजेत् ॥
तिष्ठन्तीभिश्च तिष्ठेत व्रजन्तीभिः सह व्रजेत् ।
पिबन्तीभिः पिबेत्तोयं सम्विशन्तीभिश्च संविशेत् ॥
शृङ्गकर्णादिसंयुक्तं चर्मौत् कृत्य तदाव्रतः ।
विपैकः सुचरेद्भिक्षां स्वकर्म ख्यापयन् व्रती ॥
गोघ्नस्य देहि मे भिक्षां इति वाचमुदीरयेत् ।
मासमेकं व्रतं कृत्वा गोप्रदानेन शुद्ध्यति ॥
चौरव्याघ्रादिकेभ्यश्च सर्वप्राणैः समुद्धरेत् ।
गर्त्तप्रपातपङ्काच्च तथान्यादुपकारतः ॥
भोजयेद्ब्राह्मणान् पश्चात् पुष्पधूपादिपूर्वकम् ॥
दद्याद्गाश्च वृषश्चैकं ततः शुद्ध्यति किल्बिषात् ।
मुनयः केचिदिच्छन्ति विचित्रासु विपत्तिषु ॥
यथा सम्भवतस्तासु पृथक्पृथग्विनिष्कृतिम् ।
शस्त्रवस्त्राश्ममृत्पिण्डयष्टिमुष्टिप्रघातनम् ॥
योक्त्रगन्तारणं रोधो बन्धनं विद्युदग्नयः ।
शङ्कपङ्कप्रपातश्च बद्धव्याघ्रादिभक्षणम् ॥
क्षुत्तृट्रोगचिकित्सा च तथादिदोहवाहने ।
मृत्युस्थानानि चैतानि गवामिति प्रबोधनम् ॥
प्रब्रूयात् पृथगेतेषु प्रायश्चित्तं पराशरः ।
उपेक्षणाच्च पङ्कादौ तथोपविषभक्षणैः ॥
वक्ष्यमाणक्रमेणैतत् शृणुध्वन्द्विजसत्तमाः ! ।
शस्त्रेण त्रीणि कृच्छ्राणि तदर्द्धं वासमाचरेत् ॥
अश्मना द्वे चरेत् कृच्छ्रे मृत्पिण्डे नास्ति कृच्छ्रकम् ।
यष्ट्या च द्वे चरेत् कृच्छ्रे साक्षात् यष्ट्या तु ते चरेत् ॥

योक्त्रेण पादमेकन्तु तारणे पादमेव च।
रोधने कृच्छ्रपादे द्वे कृच्छ्रमेकं तु बन्धने॥
कूपपाते चरेत् कृच्छ्रमर्धं वाप्यां समाचरेत्।
गोघ्नकृत्पिण्डपाते च प्राजापत्यञ्चरेद्द्विजः॥
क्षुत्तृट् रोगचिकित्सासु कृच्छ्रेण प्रेक्षणं चरेत्।
पतितां पङ्कलग्नां वा अवलिप्ताश्च यो नरः॥
स्वस्य चान्यस्य चोत्प्रेक्ष्य सार्धकृच्छ्रं चरेच्छुचिः।
एकश्चेद्बहुभिर्विद्वान् चेष्टिता चेन्नयेत गौः॥
पादं पादञ्चरेयुस्ते इति पाराशरोऽब्रवीत्।
स्वबुधां योऽवलिप्ताङ्गां पश्यन्तो नोपकुर्वते॥
पातनोत्पेक्षणप्रोक्तञ्चरेयुस्ते व्रतं नरः।
या गर्त्तादौ विपद्येत चेष्टिता स प्रपत्य वा॥
पातचेष्टितयोरुक्तं तत्कर्त्ता व्रतमाचरेत्।
अज्ञात्वा रज्जुदोषेण गौर्विपद्येत यस्य सः॥
व्रतपादञ्चरेत् शुध्येत्किञ्चिद्दद्याच्च दक्षिणाम्।
यो गामपालयन् दुग्ध्वा इतिवा वाहयेद्वृषम्॥
यदि म्रियेत तद्दोषात्तदा कृच्छ्रार्द्धमाचरेत्।
ग्रासं यो ना क्षुधार्तस्य तृषार्तस्य न वा जलम्॥
क्षीणतस्य नरो दद्यात्स तत्पादव्रतञ्चरेत्।
या तु बद्धा चिकित्सार्थं विशल्यकरणाय च॥
औषधादिप्रदानाय विपन्ना नास्ति पातकम्।
विद्युत्पाताग्निदाहाभ्यां कुण्ड्यांश्च पतनादिभिः॥
गोभिर्विपत्तिमापन्ने तत्र दोषो विपद्यते।
पालस्य रक्षतोऽरक्षे व्याघ्रादिर्गां निपातयेत्॥

अकुर्वतः प्रतीकारं कृच्छ्रार्धं तस्य पावनम्।
स्पृशन् शून्येषु पालेषु तथान्यारण्यगामिषु॥
पाले सम्भाषयत्युच्चैर्हन्यात्तत्र न दोषभाक्।
गर्भिणीगर्भतुल्यात्तु तद्गर्भं न विशत्यतः॥
यत्नतोऽपि विपद्येत तत्र दोषो न विद्यते।
गर्भस्य पातने पादं द्वौ पादौ गात्रसम्भवे॥
पादोनं व्रतमाचष्टे हत्वा गर्भमचेतनम्।
अङ्गप्रत्यङ्गभूतेन तद्गर्भे चेतनान्विते॥
द्विगुणं गोव्रतं कुर्य्यादेषा गोघ्नस्य निष्कृतिः।
वस्त्रादित्रासने गोश्च बालदामकदोषतः॥
पादयोर्बन्धने चैव पादोनं व्रतमाचरेत्।
घण्टाभरणघोषेण गोश्च बन्धनमाप्नुयात्॥
चरेदर्धव्रतं तत्र भूषणार्थञ्च यत् कृतम्।
गोश्चेन्नादावधाशङ्की स्यात् कुर्यान्नैव निष्कृतिम्॥
तदा गोरोमतुल्यानि नरकाण्यविशत्समाः।
यः स्नात्वा पापसम्भीतो विप्राराधनतत्परः॥
तद्दत्तां निष्कृतिं कुर्याद्गवेना नाप्नुतेऽशुभम्।
अन्यत्प्राणिवधस्याथ प्रवक्ष्यामि च निष्कृतिम्॥
गजादिवधशुद्ध्यर्थं यद्व्रतं याच दक्षिणा।
हस्तिनन्तुरगं हत्वा वृषभं खरमेव च॥
वृषाणाञ्चाशुकं गुञ्जान्दद्याद्वृषं यथाक्रमम्।
घेणाङ्गोनिष्कृयन्दत्त्वा परगोबधकृन्नरः॥
तस्यातिनिष्कृतिं कुर्य्याद्वधशुद्धिमपेक्षया।
हंसं श्येन कपिं गृध्रं जलस्थलशिखण्डिनम्।

भासञ्च हत्वा सुग्रीवः शुद्ध्यै देयाः पृथक् पृथक्॥
हंससारसचक्राङ्क मयूरमद्गुकुक्कुटान्।
आटीपारावतक्रौञ्चशुकहा नक्तभोजनात्॥
येषां जन्मे वृषन्दद्यात् प्रत्येकं शुद्धये द्विजः।
मनीषिणो वदन्त्येनां प्राणिनां वधनिष्कृतिम्॥
क्रौञ्चसारसहिंसाटिट्टिखिदक्राङ्ककुक्कुटान्।
शुक टिट्टिभ मुद्गणो नक्ताशी नक्तहा शुचिः॥
पारावतकपोतश्चसारितित्तिचसापहा।
त्रिसन्ध्यान्तर्जले प्राणान् आचम्य स्याच्छुचिर्द्विजः॥
कङ्कं गृध्रञ्च श्येनञ्च भ्रमकव्यालिपक्षिणम्।
हत्वा स्यादुपवासेन शुचिरास्ह पराशरः॥
मण्डोरिमुखकं सर्वं हत्वागजरडिण्डिभौ।
शर्कराभोजनन्दण्ड मायसे च ददन् शुचिः॥
मेषञ्च शशकङ्गोधां हत्वा कर्मं च शल्यकम्।
वार्त्ताकुङ्कुञ्जरञ्जग्धाहोरात्रोपषणात् शुचिः॥
वृश्चिकान् जम्बुकान् हत्वा तरक्षून् तथा द्विजः।
त्रिरात्रोपोषितः शुद्धोत्तिलप्रस्थप्रदानतः॥
द्विजः शाखामृगं हत्वा सिंहं चित्रकमेव च।
हत्वा सप्तोपवासानि दद्याद्ब्राह्मणभोजनम्॥
महिषोष्ट्रगजाश्वानां हत्वा चान्यतमं द्विजः।
त्रिः स्नात्वाचोपवासेन शुद्धः स्याद्द्विजपूजनात्॥
वाराहं यदिवा रोहं हत्वा खगमकामतः।
अकालक्लिष्टभोजी सन्नक्तकैकेन शुध्यति॥
अथाय्यत् संप्रवक्ष्यामि स्पर्शने दर्शनादिषु।

अभक्ष्यभक्षणादीच निष्कृतिं श्रोतुमर्हथ ॥
उदक्या ब्राह्मणी स्पृष्टा मातङ्गपतितेन च।
चान्द्रायणेन शुध्येत द्विजानां भोजनेन च ॥
कापालिकादिनारीं तु गत्वाऽगम्यास्तथा पराम्।
भुक्त्वा विप्रस्तदन्नं स्याच्छुद्धिश्चन्द्रव्रतेन तु ॥
कामतस्तु व्रतं कुर्यादुक्तस्त्रीगमनादिषु।
चन्द्रव्रतद्वयं शुद्धौ पराशरवचो यथा॥
दुग्धं सलवणं शक्तु सदुग्धं निशि सामिषान्।
दन्तच्छिन्नान् ससङ्कलान् पृथक्पावजलानपि ॥
योऽश्नादुच्छिष्टमाज्यं तु पीतशेषं जलं पिबेत्।
एकैकशो विशुध्यर्थं विप्रश्चन्द्रव्रतं चरेत्।
वासांसि यावतो यस्य पतन्ति जलबिन्दवः॥
तद्पुण्यं जलस्थानं नरकस्य शिलान्तिकम्।
तत्र पीत्वा जलं विप्रः श्रान्तस्तृट्परिपीड़ितः॥
तदेनसो विशुद्ध्यर्थं कुर्य्याच्चान्द्रायणव्रतम्।
नटीं शैलूषिकीञ्चैव रजकीं वेणुजीविनीम् ॥
गत्वा चान्द्रायणं कुर्य्यात् तथा चर्मोपजीविनीम्।
गां वृषञ्चैव वैश्यञ्च शूद्रं वाश्वानुलोमजम् ॥
क्षत्रियादिस्त्रियं गत्वा विप्रश्चान्द्रायणं चरेत्।
ब्राह्मणान्नं ददत् शूद्रः शूद्रान्नं ब्राह्मणो ददत् ॥
द्वावप्येतावभोज्यान्नौ चरेतां शशिनो व्रतम्।
विप्रेणामन्त्रितो विप्रः शूद्राहृतञ्च योऽश्नुते ॥
अमुत्र पितृभोक्तारौ शुद्ध्येतामैन्दवेन तु।
समानार्थां स यो गच्छेन्मात्रा सह सगोत्रजाम् ॥

मातुलस्य सुतां चैव विप्रश्चान्द्रायणं चरेत्।
पीतशेषं जलं पीत्वा भुक्तशेषं तथा घृतम्॥
अथ मूत्रपुरीषे तु द्विजश्चान्द्रायणं चरेत्।
सूनाहस्ताच्च गोमांसं अद्यादापद्यकामतः॥
पीत्वा चन्द्रव्रतं कुर्य्यात् पावनं शुद्धिदं परम्।
प्राप्तः सन् पञ्च यज्ञान् यो न कुर्वीत द्विजाधमः।
परपाकरतो नित्यं आत्मपाकविवर्जितः॥
अदाता च सदा लुब्धः सोऽपचः परिकीर्तितः।
द्विजस्तस्यान्नमश्नाति स कुर्यादैन्दवं व्रतम्॥
मणिकागणयोरन्नं यदन्नं बहु याचकम्।
सीमन्तोन्नयने भुक्त्वा द्विजश्चान्द्रायणं चरेत्॥
अजानन् यः समश्नीयात् पञ्चष्ठे द्विजाधमः।
सोऽभक्ष्यसममश्नाति द्विजश्चान्द्रायणं चरेत्॥
महापातकिनामन्नं योऽद्यादज्ञानतो द्विजः।
अज्ञानात्तप्तकृच्छ्रं तु जानंश्चान्द्रायणं चरेत्॥
प्रपातविषवह्न्यम्बुप्रव्रज्याधर्मचासकान्।
यथा हताश्च हन्ताश्च प्रत्यवसन्तिकाः स्मृताः॥
केचिदेतद्विशुद्ध्यर्थमिच्छन्ति व्रतमैन्दवम्।
दक्षिणां सहस्रां गाश्च दद्युश्च द्विजभोजने॥
मृतद्वारेऽतिथौ प्राप्ते तस्मादन्त्वा समश्नुते।
तदन्नमभोज्यं स्याद्भुक्त्वा चान्द्रायणं चरेत्॥
सव्यहस्तस्थदर्भो यो ब्राह्मणः समुपस्पृशेत्।
अस्वकृपानेन तत्तुल्यं पीत्वा शशिव्रतं चरेत्॥
भुङ्क्ते सव्यासनस्थोऽतः पिबेद्वापि द्विजोत्तमः।

अभक्ष्ये च हि तत्तुल्यं चरेच्चान्द्रायणं व्रतम्॥
आसनादूढपादः सन् वस्त्रस्यार्द्धपटे कृतम्।
मुखेन धमिते भुङ्क्ते द्विजश्चान्द्रायणं चरेत्॥
उद्धृत्य वामहस्तेन यत्किञ्चित् पिबति द्विजः।
सुरापानेन तत्तुल्यं पीत्वा चान्द्रायणं चरेत्।
अश्नीयात् येन स्पृष्टेन उच्छिष्टं चाशुचि हि सः॥
चरन् चान्द्रायणं शुद्ध्येत् त्रीणि कृच्छ्राणि वा द्विजः।
चान्द्रायणं नवश्राद्धे पारकी मासिके यथा॥
आब्दिके पादकृच्छ्रं स्यादेकाहः पुनराब्दिके।
स्नान मन्येषु कुर्वीत प्राणायामञ्जपन् तथा॥
यः स्वैरिणीनाञ्च पुनर्भुवाञ्च यः कामचारी द्विजयोषिताञ्च।
रेतोऽधृतां पाकमना यदद्याद्विप्रः स चन्द्रव्रतकृच्छुचिः स्यात्॥
वेश्मन्यज्ञातचाण्डालो द्विजाते र्यदि तिष्ठति।
ब्रह्मकूर्चं चरेन् मासन्त्रिः स्नायी नियतेन्द्रियः॥
स्नेहांश्च घृततैलादीन् वस्त्राणि स्वासनानि च।
बहिः कृत्वा दहेद्गेहं संशुद्धो भोजयेद्द्विजान्॥
गोविंशतिं वृषञ्चैकन्तेभ्यो दद्याच्च दक्षिणाम्।
इमं हि निष्क्रयं ब्रूयु श्चन्द्रव्रतस्य केचन॥
अस्य पापस्य शुद्ध्यर्थं चरेद्वा त्वैन्दवं व्रतम्।
इमं वा निष्क्रयं दद्यात् इत्येके कवयोविदुः॥
महापातकशुद्ध्यर्थं सर्वनिष्कृतये नरैः।
तपश्चाभेश्वविदितैः कुर्वाणैः शुद्धिराप्यते।
सुरामूत्रपुरीषाणां लीढ्वा त्वेकमकामतः।
पुनः संस्कारकरणात् शुद्धेरदाह पराशरः॥

अभक्ष्यभक्षणे विप्र स्तथैवापेयपानतः।
व्रतमन्यत् प्रकुर्वीत वदन्त्यन्ये द्विजोत्तमाः ।
कुशाब्जाश्वत्थपालाशबिल्वोदुम्बरवारिणाम् ।
पानेन जायते शुद्धिः षड्रात्रेण न संशयः ॥
द्रोणीचर्म्मक्षीरकुम्भभस्त्रस्पृष्टं केशवारि च ।
पीत्वारण्ये प्रयातोऽयं पञ्चगव्यं पिबन् शुचिः ॥
भाण्डस्थितमभोज्यानां पयो दधि घृतं पिबन् ।
द्विजाति रुपवासेन शूद्रो दानेन शुद्ध्यति ॥
तप्तोयपीतजीर्णार्थं तप्तकृच्छ्रं चरेद्द्विजः ।
सर्व्वे ते तु जले सद्यः प्राजापत्यं समाचरन् ॥
रजकाद्यम्बुपाने तु प्राजापत्यं समाचरेत् ।
वान्ते जले तदर्थं तु शूद्रः स्यात् पादकृच्छ्रतः ।
जलकूपकाद्यम्बु पीत्वा शुद्धा द्विजातयः ।
गोमूत्रयावकाहाराः शुद्ध्येयुर्दिवसैस्त्रिभिः ॥
घृतं दधि तथा दुग्धं गोष्ठेवा शौचसूतके ।
अभिचारस्य तद्भुक्त्वा भुक्त्वा वा शूद्रभोजनम् ॥
कुण्डा वा द्विजो भुक्त्वा मासन्तोष्यामथापि वा ।
क्षुधातिपीड़ितैः पेयमित्याहैतत् पराशरः ॥
सूतकान्नं द्विजो भुक्त्वा त्रिरात्रोपोषणाच्छुचिः ।
तौयपाने त्वसौ कुर्यात् पञ्चगव्यस्य चाशनम् ।
द्रोणस्योदकं तदर्धं वा प्रस्थं प्रस्थार्धमेव च ॥
घृतमुच्छिष्टसंस्पृष्टं प्रोक्षणाच्छुचितामियात् ।
चरुपक्कं घृतं पक्कं पक्वं काकाद्युपाहृतम् ॥
तद्ग्रासः स्थानसन्त्यागात्पूतं हेमाम्बुसेचनात् ।

केचिद्वदन्ति तज्ज्ञास्तु तस्याग्निनावचूडनम् ॥
केचित् प्रणवयुक्तेन वारिणा प्रोक्षणं विदुः।
केशकीटकसंदुष्टं अन्नं मक्षिकयापि च ॥
भस्मना वारिणा तत्र प्रक्षेप्तव्यं विशुध्येत्।
उदक्या ब्राह्मणी स्पृष्टा क्षत्रियापि ह्युदक्यया ॥
अर्द्धकृच्छ्रं चरेत् पूर्वं तदर्द्धमपराचरेत्।
प्राजापत्यं च विट्स्त्र्याः विट्स्त्री पादमाचरेत्॥
शूद्रां स्पृष्टाचरेत् कृच्छ्रं शूद्री दानेन शुध्यति।
ब्राह्मण्या ब्राह्मणी स्पृष्टा उदक्योदक्यया च ते।
चरेतां पादकृच्छ्रे द्वे क्रमे स्नाने विशुध्यति ॥
ब्राह्मणी क्षत्रियां स्पृष्ट्वा ब्राह्मणीव्रतमाचरेत्।
अपरा क्षत्रियायास्तु वक्तव्यमेव मन्ययोः ॥
रजस्वला तु संस्पृष्टा श्वविट्शूद्रैश्च वायसैः।
स्नानं यावन्निराहारं पञ्चगव्येन शुध्यति ॥
ब्राह्मण्युदक्या संस्पृष्टा मातङ्गैर्मेदभिल्लकैः।
गोमूत्रयावकाहारा षड्रात्रेण च शुध्यति ॥
उच्छिष्टं ब्राह्मणः स्पृष्ट्वा द्विजातिस्त्रीरजस्वलाम्।
प्राजापत्येन संशुध्येत् चीर्णकृच्छ्रेण वा पुनः ॥
वदन्ति कवयः केचिदेतद्दोषविशुद्धये।
प्राणायामशतञ्चास्य पञ्चगव्यस्य प्राशनम् ॥
उच्छिष्टं ब्राह्मणः स्पृष्ट्वा ब्राह्मण्युदक्यया चरेत्।
प्राजापत्यञ्च गायत्री मयुतं नियमं सकृत् ॥
क्षत्रियादिभिरेतस्य स्पर्शने व्रतमाचरेत्।
अनुच्छिष्टस्य तत्स्पर्शे स्नानकर्म यतः स्मृतम् ॥

रजकादिकसंस्पर्शे द्विजन्मोदक्ययोषितः।
प्राजापत्यञ्चरेद्विप्रा अन्यांश्चरेयुरंशतः॥
उदक्यां ब्राह्मणीं गत्वा क्षत्रियो वैश्ययेव च।
त्रिरात्रोपोषितः प्राश्य गव्यमाज्यं शुचिर्भवेत्॥
क्षत्रियाचैव वैश्यां च स्नानं गत्वा तु कामतः।
चरेत् सान्तपनं विप्रस्तत्पापस्य विमोक्षकृत्॥
वैश्यायाञ्च क्षत्रियो गत्वा वैश्यश्च शूद्रिणीं तथा।
प्राजापत्यञ्चरेत् मासं इति ब्रूयात् पराशरः॥
उच्छिष्टा ब्राह्मणी स्पृष्टा शुना वा वृषलेन वा।
शुद्धा भवति सा तावत् यावत् पश्यति शीतगुम्॥
विप्रामश्वजनीं वैश्यां महिष्युष्ट्रीमजां खरीम्।
प्राजापत्यञ्चरेद्गत्वा ह्येकैकस्य विशुद्धये।
शूद्रीन्तु ब्राह्मणो गत्वा मासं मासार्द्धमेव च।
गोमूत्रयावकाहारो मासार्द्धेण विशुद्ध्यति॥
नृपोऽप्यश्वजनीं गत्वा प्राजापत्यं समाचरेत्॥
वैश्यपत्नीमसौ गत्वा कृत्वा सान्तपनं शुचिः।
शुद्रीन्तु क्षत्रियो गत्वा गोमूत्रयावकाशनः॥
दशभिर्दिवसैः शुद्ध्येत् वैश्यः सोऽप्येवमेव हि।
उत्तमागमने नार्याः सर्वे ते स्युः कटाग्निना॥
महापथचरं ब्राह्मं खरयानेन योषितः।
चण्डालमेदभिल्लानामभिगम्य स्त्रियं नरः॥
शुद्ध्येत्पयोव्रतं कुर्वन् मासार्द्धं मघमर्षणम्।
पतितां च द्विजाग्र्यः स्त्रीं प्राजापत्यञ्चरेद्द्विजः॥
तैलिकस्य स्त्रियं गत्वा गत्वा मद्यकृतः स्त्रियम्।

अन्त्यानाभिगतः स्त्रीणां पुंस्त्वनुलोमजेन तु ॥
इमां निष्कृतिमिच्छन्ति हतयोनिश्च केचन।
पितृव्यमातृभार्य्यां च मातृष्वसारमेव च।
भगिनीञ्चैव धात्रीञ्च गत्वा कृच्छ्रं समाचरेत्॥
षण्मासं केचदिच्छन्ति इमां गत्वा विशुद्ध्यति।
कृच्छ्रं धर्मविदो विप्राः शुद्धितत्वार्थवेदिनः॥
गुरुपत्नीं द्विजो गत्वा मातृष्वसृदुहितृषु।
क्षिपेत् शुद्ध्यर्थमात्मानं सुसमिद्धे हुताशने॥
उपाध्यायनृपाचार्य्यशिष्ययोषिद्गमी नरः।
षण्मासात् कृच्छ्रचरणात् शुद्धिं दाह पराशरः।
कृतचाण्डालसंस्पर्शः कृतमूत्रकरो द्विजः॥
षड्रात्रोपोषणात् शुद्ध्येत् भुक्त्वाचान्तो भवेत् शुचिः।
उर्द्धोच्छिष्टस्य संशुद्ध्यै केचित्प्राजापतिव्रतम्॥
पराकं पञ्चगव्यञ्च केचित् ब्रूयुर्मनीषिणः।
उच्छिष्टं ब्राह्मणः स्पृष्ट्वा उच्छिष्टेन द्विजेन तु॥
आचम्यैव तु शुध्येतां विष्णुनामानि कीर्त्तनात्।
क्षत्रियेण तु संस्पृष्टो ब्राह्मणो नक्तभोजनात्॥
वैश्येन तु च संस्पृष्टो नक्ताशी पञ्चगव्यपः।
शूद्रेण तु च संस्पृष्ट एकरात्रोपवासकृत्॥
उच्छिष्टैः पुनरेतैस्तु प्रोक्तं द्विगुणमर्हति।
उच्छिष्टः शूद्रसंस्पृष्टः शुना वापि द्विजोत्तमः।
उपोष्य पञ्चगव्येन शुद्धिः स्यादपरे विदुः॥
अनुच्छिष्टोऽपि यत्स्पर्शात् स्नाति वर्णो विशुद्धये।
उच्छिष्टस्तस्य संस्पर्शे चरेत्प्राजापतिव्रतम्।

रजकाद्यन्त्यजस्पृष्टः शुद्ध्यै तदर्धमाचरेत् ।
ब्राह्मण्युदक्या कृच्छ्रेण प्राजापत्येन चापरे ॥
उदक्या ब्राह्मणी स्पृष्टा मृताङ्गपतितेन वा ।
तावत्तिष्ठेन्निराहारा स्नात्वा कालेन शुद्ध्यति ॥
उदक्यासूतकान्त्यस्पृष्टसंस्पर्शेऽस्तमिते रवौ ।
उक्तदानादिधर्मेण शुद्ध्येत् द्विजोऽग्निसन्निधौ ॥
वन्दयित्वा पवित्रत्वं मन्दार्करश्मिवायुभिः ।
मुनयो धर्मवेत्तारो रात्रौ चन्द्रांशुरश्मिभिः ॥
क्षमित्व ब्राह्मणः प्राश्य षड्रात्रं पञ्चगव्यकम् ।
हेम्नो दद्यात् षण्मासांस्तथा गाश्च विशुध्यति ॥
पञ्चाहेन नृपः शुध्येत्तथा हेम दद्यात् गाम् ।
चतुर्थाहेन वैश्यस्तु चतुर्मासान् गवा सह ॥
त्र्यहेण च चतुर्थेन तस्माच्छूद्रश्च नयश्च गाम् ।
सकृत्पश्चात्कृते स्नानमेतदाह पराशरः ॥
पङ्क्तिं निःसार्य विप्रस्त्वां कामतोऽकामतोऽपि वा ।
गायत्र्या च सहस्रेण जप्तेन तु भवेच्छुचिः ॥
यः कश्चिद्धरते भूमिं हेम गामश्वमेव वा ।
स तं यत्नात्प्रसाद्यापि तद्भक्तः शुद्धिमाप्नुयात् ॥
आख्याय भुङ्क्ते वापि तेन संशोधितः शुचिः ।
द्रव्यदण्डादिमुक्तिर्वा तपसा वा शुचिर्नरः ॥
निराहारा आयते च एतदाहुर्मनीषिणः ॥
विनिर्गता यदा शूद्रादुदक्यान्ते व्यवस्थिता ।
तदा द्विजैस्तु द्रष्टव्य इति धर्मविदो विदुः ॥
दुःस्वप्नदर्शने चैव वान्ते वा क्षुरकर्मणि ।

मैथुने कूटधूमे च सद्यः स्नानं विधीयते ॥
चिताञ्च चितिकाष्ठञ्च यूपं चाण्डालमेव च ।
स्पृष्ट्वा देवलकञ्चैव सवैत्र जलमाविशेत् ॥
जम्बुकश्च शूकरैस्तु यदि स्पृष्टो भवेन्नरः ।
अष्टोत्तरशतं जप्त्वा गायत्र्याः शुद्धिमर्हति ॥
शुनोघ्राणावलीढस्य नखैर्विलिखितस्य च ।
अद्भिः प्रक्षालनं कार्य्य मग्निना वावधूननम् ॥
अवज्ञान्तु गुरोः कृत्वा नक्तं तस्य तु भोजनम् ।
नक्षत्रदर्शनं त्वन्ये इति प्राह पराशरः ॥
कुमारी तु शुना स्पृष्टा जम्बुकेन वृषेण वा ।
यां दिशं व्रजते सूर्य्यं तां दिशं सा विलोकयेत् ॥
दिवसे तु यदा ग्रामे शुना स्पृष्टो भवेद्द्विजः ।
विप्रं प्रदक्षिणीकृत्य घृतं प्राश्य विशुध्यति ॥
चातुर्वर्ण्यान्तु या नारी कृताभिगमनापि च ।
प्रक्षाल्य नाभिं यावत्तत् लिङ्गशौचं निजं विदुः ॥
अभिगच्छन् सुतार्थञ्च ऋतावृतौ स्त्रियं द्विजः ।
न च कुर्वीत स स्नानं नाभेरधस्तु शोधयेत् ॥
तुङ्कारन्तु गुरोरुक्त्वा हुङ्कारन्तु गरीयसम् ।
प्रसाद्यैतावेनस्येत्वात् स्नात्वा शुद्धो द्विजोत्तमः ।
विवादे शास्त्रतोजित्वा भार्य्या यस्य तु जायते ॥
श्मशाने जायते तस्य तमोभावेन दुष्कृतम् ।
ताडयित्वा तृणेनापि स्कन्धेनाबध्य रज्जुना ॥
विवादेनापि निर्जित्य तं प्रसाद्य विशुध्यति ।
उद्गीर्य च चरेत् कृच्छ्र मतिकृच्छ्रं निपातने ॥

कृच्छ्रातिकृच्छ्रोऽसृक्पाने कृच्छ्रोऽस्यान्तरशोणिते।
प्रेतं स्पृष्ट्वा च दग्ध्वा च शुद्धिः स्नानात् द्विजन्मनाम्।
उपवासमथो वापि ब्रह्मकूर्चञ्च पावनम्।
प्रेतभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः॥
नीयते ह्यनुगच्छंस्तु त्रिरात्रमशुचिर्भवेत्।
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम्॥
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति।
अङ्गुल्या दन्तकाष्ठन्तु प्रत्यक्षलवणं यथा॥
मृत्तिकाभक्षणञ्चैव तुल्यं गोमांसभक्षणम्॥
कृत्वान्यतममेतेषां शुध्यर्थं मात्मनो हितम्।
चरेत् शशिव्रतं विप्र इति प्राहुर्मनीषिणः॥
केचिद्वदन्ति मुनयः कृच्छ्रं प्राजापतिं तथा।
तदर्धं पादकृच्छ्रं वा ब्रुवुरन्ये द्विजोत्तमाः॥
अधोच्छिष्टं द्विजोऽज्ञानाद्यद्यद्दद्यं हि किञ्चन।
भुक्त्वा नाचम्य वा कुर्य्यात् विण्मूत्रं केह निष्कृतिः॥
नक्तोपवासकाले तु अन्यत्र द्विगुणञ्चरेत्।
अष्टोत्तरशतं जप्त्वा गायत्र्याः शुद्धिमर्हति॥
अधोच्छिष्टं द्विजः स्पृष्ट्वा स्वोच्छिष्टं वृषलेन तु।
नक्षत्रदर्शनेऽश्नीयात् पञ्चगव्यपुरःसरम्॥
अथोधोच्छिष्टं विप्राद्यैश्चोच्छिष्टं शूद्रं स्पृशः।
उपवासेन शुध्येयुः पञ्चगव्यस्य पावनम्॥
श्वकाकीकाकसंस्पृष्टो भुञ्जानो ब्राह्मणश्च यः।
तदन्नस्य परित्यागात् कृत्वा स्नानन्तु शुध्यति॥
यज्ञोपवीतेन विना भोजनं कुरुते द्विजः।

अपि मूत्रपुरीषे वा रेतःसेवनमेव च॥
त्रिरात्रोपोषितो विप्रः पादकृच्छ्रन्तु भूमिपः।
अहोरात्रोषितो वैश्यः शुद्धिरेषा पुरातनी॥
विप्रः कुकृत्यनिष्ठीव्यं कृत्वाऽनृतभाषणम्।
वचनं पतितैः कृत्वा दक्षिणं श्रवणं स्पृशेत्॥
विप्रस्य दक्षिणे कर्णे नित्यं वसति पावकः।
अङ्गुष्ठे दक्षिणे पाणौ तस्मात्तेन च तं स्पृशेत्॥
प्रेक्षणं शशिनोऽर्कस्य ब्रह्मेशविष्णुसंस्मृतिम्।
गायत्र्याः शतसाहस्रं सर्वपापहरं स्मृतम्॥
गायत्र्यष्टसहस्रन्तु ब्रह्महत्याविशोधनम्।
शूद्रवधे द्विजाग्र्यस्य गायत्र्यष्टसहस्रकम्॥
राज्ञः पञ्चसहस्राणि स्याद्द्विजस्य तदर्धकम्।
योगेन गतिशीलस्तु यदि वा स्यात्सदा नरः॥
ता वुभौ सर्वदा त्याज्यौ निश्चितं सर्वकर्मसु।
मक्षिकासन्ततिर्धारा विप्रुषो ब्रह्मबिन्दवः॥
स्त्रीमुखं बालवृद्धञ्च न दूष्यन्ति कदाचन।
आत्मस्त्री ह्यात्मबालञ्च आत्मवृद्धं तथैव च॥
आत्मनः शुचयस्तानि परेषा मशुचि स्तथा।
उत्पन्नमातुरे स्नानं दशकृत्वो ह्यनातुरः॥
स्नात्वा स्नात्वा स्पृशेदेनं ततः शुद्ध्येत्स आतुरः।
विवाहोत्सवयज्ञेषु संग्रामे जनसङ्कुले॥
पलायने वनेऽरण्ये स्पृष्टास्पृष्टिर्न दूष्यति।
आद्यस्पर्शे भवेत् स्नानं द्वितीयस्यापि तत्स्मृतम्॥
शिरःप्रोक्षणमन्येषा मन्यत्राचमनं स्मृतम्।

पलाशशमिपाकाष्टदन्तधावनमन्तरः॥
दिवा कीर्तिं समश्नीयाद्गृयावद्यां नैव पश्यति।
पश्चाश्मलोष्टं फलकाष्ठचर्म भाण्डस्यतोयैः स्वयमेव शौचात्।
पुंसां निशाश्वार्धकनिःसपानां स्त्रीणां च शुद्धिर्विहिता सदैव॥
स्नानस्पृष्टेन येन स्यात्काष्ठाद्यैर्यदि तं स्पृशेत्।
नावाऽोदयावत् स्पृशन् तत्तोपस्पर्शनाच्छुचिः॥
म्लेच्छलूनाशनस्पर्शे च्छेते वा यदि वा स्थले।
उपस्पर्शे शिरः प्रोक्ष्य संशुद्धो जायते द्विजः॥
वस्त्रसंस्पर्शनं तस्य सचेलाङ्गाऽवगाहनम्।
अङ्गस्पर्शनवस्त्रस्य वन्दति द्विजसत्तमाः॥
चण्डालोदकसंस्पर्शे शुद्धिः स्नानेन जायते।
तथा तद्भाण्डसंस्पर्शे स्नानमाहुर्मनीषिणः॥
उदक्यास्पर्शने स्नायादंशुकेनाङ्गतोऽपि वा।
स्याद्यतः स्पृश्यपि स्नानं तुल्याः सर्वरजस्वलाः॥
संस्पर्शे मेदभिल्लानां तथैव ब्रह्मघातिनाम्।
पतितानां च संस्पर्शे स्नानमेव विधीयते॥
रजस्वलाद्यैः संस्पर्शे उपस्पर्शनमेव च।
उदक्यायास्तृतीयेऽह्नि केचिदाचमनं विदुः॥
प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी।
तृतीये रजकी प्रोक्ता चतुर्थे तु विशुध्यति॥
पुरुहूतः पुरा दैत्यं त्रिशिर्षाख्यं जघान यत्।
तद्वधः ब्रह्महत्यायास्ततृफलं स ददौ स्त्रियम्॥
यासां तत्प्रभृति स्त्रीणामस्पृश्यत्वं समाभवत्।
यांशे दिनत्रयं ह्येतच्छक्रगुर्वादिकल्पितम्॥

शबराश्च पुलिन्दाश्च नटाश्च केवटास्तथा।
एतान्रजकसन्तुल्यान् केचिदाहुर्मनीषिणः॥
रजकाद्यभिगामित्वे वैश्यो गोमूत्रयावकम्।
चरन्ति षड्गुणाहोभिः कृच्छ्रं वा द्विगुणञ्चरेत्॥
ब्रह्मक्षत्रियविट्जाता शूद्रास्तेऽनुक्रमेण तु।
क्रमातिक्रमतश्चान्ये म्लेच्छान्त्यवर्णसम्भवः॥
भोज्याशनास्तु तच्छूद्रा अन्ये भोज्यासना: स्मृता:।
आमाशनानि भोज्यानि स्तमुच्छिष्ट सुच्यते॥
दासनापितगोपाल कुलमित्रार्द्धसीरिणः।
भोज्यान्नो नापितश्चैव यश्चात्मानं निवेदयेत्॥
पर्युषितं चिरस्थञ्च भोज्य स्नेहसमन्वितम्।
यवगोधूमावस्नेहो तथा गोरसविक्रय:॥
आपन्नतो द्विजोऽश्नीयात् गृह्णीयाद्वा यतस्ततः।
न स लिप्येत पापेन पद्मपत्रमिवाम्भसा॥
श्रापितं शूद्रगेहेऽन्नञ्च पक्वञ्च यद्भवेत्।
नीत्वा नद्यादिके तद्वै प्रोक्ष्य भुञ्जन्नकिल्बिषी॥
गायत्र्योङ्कारपूताभिः केचिदद्भिश्च प्रोक्षणम्।
मन्यन्ते विष्णुमन्त्रेण कलिधर्मसमाः स्मृताः॥
आममांसं घृतं क्षौद्रं स्नेहाश्च फलसम्भवाः।
म्लेच्छभाण्डस्थिता ह्येते निष्क्रान्ताः शुचयः स्मृताः॥
आभीरभाण्डसंस्थानि पयोदधिघृतानि च।
तावत्पूतं हि तद्भाण्डं यावत्तत्र तु तिष्ठति॥
पूतानि सर्वपुण्यानि काकहस्थस्थितानि च।
स्वादत्तानि च भक्ष्याणि यत्नतस्तु द्विजातिभिः॥

सर्वैः स्वोपस्करैर्युक्ता शय्या रक्तांशुकानि च ।
पुष्पाणि चैव शुद्ध्यन्ति प्रोक्षणानि न संशयः ॥
सलेपं चर्ममयं भाण्डं भाण्डं संशयमेव च ।
प्रोक्षणादेव शुद्ध्येत सलेप मग्निताडनात् ॥
भस्मना शुद्ध्यते कांसं क्षुरयाथ न लिप्यते ।
सुरा मूत्रपुरीषाभ्यां शुद्ध्यते तापलेपनैः ॥
अलिप्तं मद्यमूत्राद्यैस्ताम्रं मस्लेन शुद्ध्यति ।
रजसा स्त्री मनोदुष्टा नद्यश्च वेगसंयुताः ॥
अवेगमपि यद्वारि सरिद्वारि ह्रदश्च यत् ।
सकृदस्पृश्यसंस्पृष्टं न तद्दूष्यन्ति सज्जिरः ॥
सत्येन ब्रूयते वाणी धर्मः सत्येन वर्तते ।
तस्मात्सत्यं हि वक्तव्यमात्मशुद्ध्यै द्विजातिभिः ॥
रथ्याकर्दमतो यानि नावः पथि तृणानि च ।
मारुतार्केण शुद्ध्यन्ति निशि चन्द्रर्क्षमारुतैः ॥
यथासम्भव मुक्तानि प्रायश्चित्तानि सत्तम ! ।
उक्तानुक्तानि सर्वाणि ज्ञातव्यानि द्विजातिभिः ॥
प्रायश्चित्तं न यत्प्रोक्तं धर्मशास्त्रप्रवर्तृभिः ।
द्विजैस्तत्र प्रकल्प्यं स्याद्धर्मशास्त्रार्थचिन्तकैः ॥

उक्ता मया निष्कृतयः समासात्संशुद्धये वर्णचतुष्टयस्य ।
व्रतानि तासां विहितानि यानि वक्ष्याम्यतस्तानि निबोधयेति॥

इति श्रीहस्त्यारामरीये धर्मशास्त्रे सुव्रतप्रणीते प्राय-
श्चित्तनिर्णयो नाम षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः।

व्रतान्यथ प्रवक्ष्यामि ह्यैन्दवादिक्रमेण तु।
पापक्षयकृतैर्यैः स्याद्धर्मार्थी च महोदयः॥
चन्द्रवृद्ध्याश्नीयाद्‌ग्रासान् शुक्ले कृष्णे च ह्रासयेत्।
चन्द्रक्षयेन भोक्तव्यं मध्ये शशिव्रतञ्चरेत्॥
विपरीतान् क्रमाद्‌ग्रासानादावादौ च ग्रासयेत्।
वर्धन्ते दैन्यपर्वेतु पिप्पलीमध्यमैन्दवम्॥
अष्टावष्टौ समश्नीयात्स व्रती प्रतिवासरम्।
अष्टाग्रासिकमित्याप चान्द्रायण मथापरम्॥
शतद्वयन्तु पिण्डानां चत्वारिंशत्समन्वितम्।
मासेनैवोपभुञ्जीत चान्द्रायण मथापरम्॥
चतुरः प्रातरश्नीयात्सायं ग्रासांश्च तावता।
शिशुचान्द्रायणं तज्ज्ञैः प्रोक्तं पापापनोदनम्॥
मध्यन्दिने यदश्नीयात्सायं ग्रासांश्च तावता।
चान्द्रायणं यतीनां तत्तत्त्वज्ञैः परिकीर्तितम्॥
शिखण्डसम्मितान् ग्रासान् चन्द्रव्रतप्रयोजने।
दोषः स्यादन्यथाभावे तस्मादुक्तं न दापयेत्॥
एकभुक्तैश्च नक्तैश्च तथैवायाचितैरपि।
उपवासैश्चतुर्भिश्च कृच्छ्रं षोडशभिर्दिनैः॥
उष्णं जलं पयः सर्पिरेकैकञ्च त्र्यहं पिबेत्।
वायुभक्षस्त्र्यहं तिष्ठेत्तप्तकृच्छ्रोऽय मुच्यते॥
पलमेकं जलं पीत्वा पलमेकं तथा पयः।
पलमेकं तथाज्यस्य मानमेतत्प्रकीर्तितम्॥

एतत्तु त्रिगुणं प्रोक्तं महासान्तपनं स्मृतम्।
प्राजापत्यश्च कृच्छ्रश्च पराकस्त्रिगुणो महान्॥
पद्मोदुम्बरराजीवं विल्वपत्रं कुशोदकम्।
प्रत्येकं प्रत्यहं प्राश्य पर्णकृच्छ्रः प्रकीर्तितः॥
प्रत्येकं प्रत्यहं गव्यं सक्तत् शुद्धौ पयो दधि।
घृतं कुशोदकं पीत्वा उपवासश्च सप्तमः॥
एभिः सप्राशनैरेकं दिव्यं सान्तपनं द्विजैः।
सप्ताहेन तु कृच्छ्रोऽयं मुनिभिः परिकीर्तितः॥
एतत्तु त्रिगुणं तज्ज्ञैर्महासान्तपनं स्मृतम्।
प्राजापत्यश्च कृच्छ्रश्च पराकस्त्रिगुणो महान्॥
एकभुक्तश्च नक्तश्च अयाचितविशेषणे।
पादकृच्छ्रोऽयमुद्दिष्टस्त्रिघ्नं प्राजापतिव्रतम्॥
त्र्यहमेवातिकृच्छ्रः स्यात्पाणिपूतान्नभोजनः।
कृच्छ्रातिकृच्छ्रपयसा दिवसानेकविंशतिम्॥
दिनैर्द्वादशभिः प्रोक्तः पराकः समुपोषितैः।
एकाद्युत्तरहादीनि नक्तस्यैव यथा स्मृतम्॥
सम्प्राश्य तिलपिण्याकं तक्रं तोयं कुशोदकान्।
पञ्चमे तूपवासः स्यात्सौम्यकृच्छ्रोऽय सुच्यते॥
चान्द्रायणे च कृच्छ्रे च त्रिकालं स्नानमाचरेत्।
स्नानद्वयन्तु कर्त्तव्यं व्रतेष्वेवापरेषु च॥
शक्तिं ज्ञात्वा शरीरस्य स्नानं कार्य्यं तथा व्रतम्।
असामर्थ्येन कार्य्यञ्च याच पर्षदनुग्रहम्।
अतःपूर्वं प्रवक्ष्यामि व्रतानां सुत्तमं व्रतम्॥
कृतेन येन मुच्यन्ते प्राणिनः सर्वकिल्बिषैः।

नीलिकायास्तु गोमूत्रं कृष्णायाः सकृदुद्धरेत् ॥
पयश्च ताम्रवर्णाया: पीतायाश्च तथा दधि ।
कपिलायाः घृतञ्चैव महापातकनाशनम् ॥
अभावे सर्ववर्णानां कपिलायाः समुद्धरेत् ।
पलानि पञ्च मूत्रस्य अङ्गुष्ठार्धन्तु गोमयम् ॥
क्षीरं सप्तपलं ग्राह्यं दध्नः पलत्रयं तथा ।
घृतं चाष्टपलं ग्राह्यं पलमेकं कुशाम्भसः ॥
मन्त्रैः सर्वाणि चैतानि अभिमन्त्र्याथ मिश्रयेत् ।
गायत्र्या चैव गोमूत्रं गन्धद्वारेति गोमयम् ॥
आप्यायस्वेति वै क्षीरं दधिक्राव्णस्तथा दधि ।
तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम् ॥
निष्पन्नं पञ्चगव्यञ्च पात्रैः क्रमेण तत्पिबेत् ।
मध्यमेन पलाशस्य तत्पत्रेण पिबेद्द्विजः ॥
द्वितीयं पद्मपत्रेण ब्रह्मपत्रेण चापरम् ।
चतुर्थं ताम्रपत्रेण तत्पिबेद्व्रतकृद्द्विजः ॥
आलोड्य प्रणवेनैव निर्मथ्य प्रणवेन तु ।
उद्धृत्य प्रणवेणैव तत्पिबेत्प्रणवेन तु ॥
विष्णुं संस्नापयेद्भक्त्या पञ्चगव्येन चार्चयेत् ।
कूश्माण्डैर्जुहुयान्मन्त्रैः पञ्चगव्यं हुताशने ।
सव्याहृत्या च गायत्र्या तथैव प्रणवेन च ॥
ब्रह्मकूर्चमिदं प्रोक्तं व्रतं पञ्चदिनात्मकम् ।
पञ्चगव्यञ्च संप्राश्य पञ्चरात्रोपवासकृत् ।
नक्तेन वासमश्नीयाद्यावच्छक्त्या दिनानि च ।
पञ्चाहिकम्पारणकं व्रतस्यास्य प्रकीर्तितम् ॥

निर्दहेत्सर्वपापानि ब्रह्मकूर्च्चमिति स्मृतम् ॥
अन्ये वदन्ति कवयः उपवासं विना व्रतम् ॥
जप्यं होमञ्च कर्त्तव्यं देवतार्च्चनमेव च ।
पञ्चगव्यञ्च होतव्यं पञ्चगव्यं समश्नीयात् ॥
ब्राह्मणान् भोजयेत्तावद्यावत्कुर्यादिदं व्रतम् ।
यत्त्वगस्थिगतं पापं तिष्ठते पुरुषस्य च ॥
ब्रह्मकूर्च्चो दहेत् सर्वं समिद्धाग्निरिवेन्धनम् ।
यानीह पापानि भवन्ति पुंसां दैवादकामादथ कामतोवा ।
उक्तानि तेषां मुनिना व्रतानि शुद्धर्थमेतान्यपराणि चैवम् ॥
धर्मार्थमेतानि कृतानि पुंसां दद्युर्दिवौकस्त्वविमुक्तसिद्धिः ।
अवाप्यपूज्यत्वमशेषलोकैस्तेजःशरीरीति चरेन् गता भीः ॥
यस्यास्ति भीतिः पुरुषस्य पापात् इच्छेच्च कर्त्तुं त्वयमेनसाञ्च ।
प्रीत्येव तं च व्रतदानजप्यं प्रोद्दिष्ट मेतन्नतदन्यतस्तु ॥
वदन्ति दानं मुनयः प्रधानं कलौ युगे नान्यदिहास्ति किञ्चित् ।
विशेषमं स्वर्वमिहापि पूज्यं वदामि तस्मादथ दानधर्मात् ॥
इति श्रीवृद्धपाराशरीये सुव्रत प्रायश्चित्तनिर्णयः सप्तमोऽध्यायः ।

---

# अष्टमोऽध्यायः ।

दानानि विधिना सार्धं जगौ यानि पराशरः ।
व्यासस्य तानि वक्ष्यामि श्रूयतां द्विजसत्तमाः ! ॥
दानेन प्राप्यते स्वर्गो दानेन सुखमश्नुते ।
इहामुत्र च दानेन पूज्यो भवति मानवः ॥

न दानात् परतो धर्मस्त्रैलोक्ये सचराचरे।
मुमुक्षवोऽपि योगीशा भिक्षादानोपजीविनः॥
अन्नं तोयसमायुक्तं पृथगेते तथैव च।
सर्वोपस्करसंयुक्तं गृहञ्च गृहमात्रकम्॥
वृषादियुक्तसीरञ्च एकं वृषं तथैव च।
गृह्याग्निना प्रदानेन गोप्रदानं तथैव च।
सौरभेयीं द्विवक्त्राञ्च तिलधेनुमतःपरम्।
घृतधेनुं अम्बुधेनुं हेमधेनुं सविस्तरम्॥
कृष्णाजिनप्रदानञ्च वाजिस्यन्दनमेव च।
एकहस्तिप्रदानञ्च कन्यादानफलं तथा॥
भूमिदानफलञ्चैव तुलापुरुषमेव च।
हेमरूप्यप्रदानञ्च ननाकारादिसमन्वितम्॥
त्रपुसीसकताम्रादिसर्वधातुप्रदानवत्।
नक्षत्रतिथियोगेषु यद्यद्दानञ्च तत् फलम्॥
विद्यादानं फलं तस्य प्रजादान मथैव च।
अभयादिकदानानि प्रतिग्रहे यथाविधि॥
इष्टापूर्त्तौ फलोपेतौ सर्वं विस्तरतो मया।
शक्तिसूनाश्रुतं पूर्वं क्रमात्कथयतः शृणु॥
गोहिरण्यादिदानानां सर्वेषामप्यनुत्तमम्।
अन्नदानमपेक्षन्ते सर्वेऽपि हि दिवौकसः।
अन्नार्थं मातरिश्वाह ह्यन्नार्थञ्च तथानलः॥
अन्नार्थं सविता चैव चातिज्वलति भासते।
अन्नकामः ससर्जेदं विधिरप्यखिलं जगत्॥
तस्मादन्नात्परं तत्त्वं न भूतं न भविष्यति।

दद्याद्दरिद्रस्तस्मादन्नं विप्राय मानवः॥
मृतं वा यदि वा चामं स स्वर्गे सुखमेधते।
शोभनान् प्रभूतान् सर्वान् पक्वान्नपरिपूरितान्॥
अपूपे लड्डुकाद्यैश्च दत्त्वा दिवं सुखं व्रजेत्।
द्विजान् यः पाययेत्तोयं अन्यानपि पिपासितान्॥
प्रपां तु कारयेद्ग्रीष्मे प्राप्नोति देवलोकताम्।
षट् पात्राण्यादिकं दद्याद्वर्षासु च प्रतिश्रयम्॥
पादाभ्यङ्गन्तथैवैधः शीते चावरणानि च।
उपानत्पादुके चैव दत्त्वा मानवाप्नुयात्॥
सप्तव्रीहिसमायुक्तं सर्वस्नेहसमन्वितम्।
सर्वोपस्करसंयुक्तं सर्वालङ्कारभूषितम्॥
हिरण्यं गोवृषांश्चैव कुलिशाद्युपधानकैः।
चारुशीभूषणैर्युक्तं सकांस्यं ताम्रभाजनम्॥
कण्डण्यादिसमायुक्तं ददत्पात्राय मानवः।
पर्कष्टकाचितं कृत्वा सर्वलक्षणसंयुतम्॥
तृणमयं वा तथा सद्यः कृत्वा चाश्ममयं तथा।
दत्त्वा स्थान मवाप्नोति प्रजापतेरशंसयम्॥
प्राकारा यत्र सौवर्णाः स्हाण्यद्भुतसराणि च।
माणिक्यगारुडैर्वज्रैर्मौक्तिकैर्भूषितानि च॥
देवकन्यासहस्रेण स वृतो गीतनृत्यकैः।
सेव्यमानोऽप्सरःसङ्घैः प्रजापतिसमं वसेत्॥
अनडुाहौ च धूर्वाहौ बलवन्तौ सुलक्षणौ।
तरुणौ सविषाणौ च घण्टाभरणभूषितौ॥
अदुष्टावेकवर्णौ तु शरीरौ दक्षिणान्वितौ।

य आहूय द्विजाग्राय दद्याद्भक्त्या तु मानवः ॥
सोऽनडुद्रोमतुल्यानि स्वर्गे वर्षाणि तिष्ठति ।
अमरीभिर्वृतोऽजस्रं सेव्यमानश्च दैवतैः ॥
एकोऽपि हि वृषो देयो धूर्धरः शुभलक्षणः ।
अरोगश्चापरिक्लिष्टो यस्मात्स दशगोसमः ॥
एकेन दत्तेन वृषेण येन दत्ता भवेयुर्दश सौरभेयाः ।
आहेमपीताद्धरणीसमानात्तस्माद्वृषात् पूज्यतमोऽस्ति नान्यः ॥
वृष्टिदानं प्रवक्ष्यामि यथादेयं द्विजातिभिः ।
यो विधिर्दक्षिणायाश्च तथा सर्वं निबोधत ॥
एकरात्रोषितः स्नातो गोदाता पञ्चगव्यतः ।
पश्चात्तेन संस्नाप्य संपूज्य मधुसूदनम् ॥
सवत्सां वस्त्रसंयुक्तां शतयज्ञोपवीतिनीम् ।
सुविषाणां सुरूपाञ्च सर्वलक्षणसंयुताम् ॥
हेमकल्पितशृङ्गाञ्च सुरूपां चरणाग्रकाम् ।
पयस्विनीं सुशीलाञ्च हिरण्योपरि संस्थिताम् ॥
हिरण्यं वाचयित्वाग्रे स द्विजायोपपादयेत् ।
प्राङ्मुखाय च विप्राय वृष्टिन्ताञ्च उदङ्मुखीम् ॥
इमां त्वं प्रतिगृह्णीष्व प्रीतोऽस्तु केशवो हयोः ।
इति दत्त्वोदकं हस्ते पादान्यष्टौविसर्जयेत् ॥
व्यावर्त्तते ततः पश्चात् प्रणम्य शिरसा द्विजम् ।
अनेन विधिना धेनुं यो विप्राय प्रयच्छति ॥
स विष्णुप्रीणनाद्याति विष्णुलोकमसंशयम् ।
आत्मनः पुरुषान् सप्त प्रागस्तान् सप्त सप्तच ॥
आत्मानं सप्तजन्मोत्थान् पापाद्विमुच्यते नरः ।

पदे पदे तु यज्ञः स्याद्गोवत्सस्य च मानवः ॥
फलमाप्नोति विप्रेन्द्राः भुक्त्वा वै तत्पुरा हरेः।
सर्वकामसमृद्धात्मा सर्वलोकेषु पूजितः।
नाम्ना पापापहा तावद्यावदिन्द्राश्चतुर्दश ॥
इक्ष्वाकुणा तथा चान्यैर्बहुधा वसुधाधिपैः ॥
यैर्या नृभिरियं दत्ता जम्मुस्तेऽपि च विष्टपम्।
दीयमानं च पश्यन्ति ये भवन्त्यनुमोदकाः ॥
तेऽपि पापविनिर्मुक्ताः विष्णुलोकमवाप्नुयुः।
पादद्वयं मुखं योन्यां प्रसवन्त्यां प्रदृश्यते॥
यदा च द्विमुखी गौः स्यात् देया यावन्न सूयते।
चौणीतुल्या तदा सा गौः सर्वैरुक्ता मुनीश्वरैः ॥
सापि प्राग्विधिना देया सवत्सा दोहना द्विजाः ! ।
एतत्र पृथिवी सर्वा सशैलवनकाननाः ॥
तस्या गौर्ज्यायसी साक्षादेकतोभयतोमुखी।
गोर्वत्सस्य च लोमानि यावत्संख्यानि सत्तमाः ! ॥
तावत्संख्यानि सर्वाणि ध्रुवं ब्रह्मजने वसेत्।
यथारोगामक्लिष्टाङ्गान्धेनुं वा यदि वा तनुम् ॥
दद्यात् स्वर्गमवाप्नोति देया यथा तथाहि गौः।
तिलधेनुं प्रवक्ष्यामि प्रीणनाय हरेरिमाम्।
यया तुष्यति गोविन्दो दत्तया तु गवाऽनघः ॥
ब्रह्महा स्वर्णहा गोघ्न पितृमातृसुहृद्धात्।
अग्निदो गुरुहा चैव तथैव गुरुतल्पगः ॥
सर्वपापसमायुक्तो युक्तो यश्चोपपातकैः।
सर्वैनोभिः प्रमुच्यन्ते तिलधेन्वा प्रदत्तया ॥

अनुलिप्ते महीपृष्ठे वस्त्राजिनप्रसारिते।
धर्मज्ञाः केचिदिच्छन्ति कृतपेच तिलाढके॥
प्रस्तीर्य चाविकं भूमौ तत्र कृष्णाजिनं पुनः।
तिलांस्तु प्रक्षिपेत्तत्र कृष्णाढकचतुष्टयम्॥
कुर्यादुत्तरतोऽभ्यर्च्य आढकेन तु वत्सकम्।
सर्वरत्नैरलङ्कुर्यात् सौरभेयीं सवत्सकाम्॥
कार्ये हेममये शृङ्गे सास्ना सूत्रमयी तथा।
ताम्रपृष्ठेतु पादाच कार्या मुक्ताफलेक्षणा॥
प्रशस्तपत्रश्रवणा फलरत्नवती तथा।
शुभस्रग्दामलाङ्गूली नवनीतस्तनान्वित॥
नारङ्गैर्बीजपूरैश्च जम्बीरैर्नारिकेलकैः।
बदराम्रकपित्थैश्च मणिमुक्ताफलार्चिताम्॥
सितवस्त्रयुगच्छन्नां सितच्छत्रसमन्विताम्।
ईदृग्विधाश्च तां कुर्यात् श्रद्धया परयान्वितः॥
कांस्यापदोहनां दद्यात् केशव! प्रीयतामिति।
कुर्याद्धि दृष्टवद्विद्वानिमां प्रत्युत्तरामुखीम्॥
सम्यगुच्चार्य विधिना दत्त्वैतेन द्विजोत्तमः।
सर्वपापैर्विनिर्मुक्तः पितरं स पितामहम्॥
प्रपितामहन्तथा पूर्वं पुरुषाणां चतुष्टयम्।
द्विजेन्द्रास्तारयन्त्ये तां तिलधेनुप्रदा नरः॥
यश्च स्पृशति विधिवत् पुरुषान् सोऽपि तावतः।
चतुर्दश तथा येच दत्तवन्तश्चानुमोदिकाः॥
दीयमानञ्च पश्यन्ति तिलधेनुञ्च ये नराः।
शृण्वन्ति येच तां भक्त्या परया नाम तद्भवाः।

तेऽप्यशेषाघनिर्मुक्ताः प्रयान्ति विष्णुलोकताम् ॥
प्रशान्ताय सुशीलाय तथा मत्सरिणे बुधः ।
तिलधेनुं नरो दद्याद् दम्भात्तु प्रधार्मिके ॥
चिरात् यस्तिलाधारस्तिलधेनुं प्रयच्छति ।
तथैकरात्रन्तु पुनस्तिलानत्ति सभक्तिकः ॥
दातुर्विशुद्धपापस्य तस्य पुण्यवतो द्विजः ।
चान्द्रायणादप्यधिकं शस्तं तत्तिलभक्षणम् ।
एवं प्रतिग्रहीतापि श्राद्धे विधिना द्विजः ॥
स तारयति दातारं आत्मानञ्च न संशयः ।
प्रतिग्रहन्तु दीप्ताग्निदग्धविप्रमुखेरिताः ॥
न कुर्वन्तीह यज्ञांश्च जपहोमादिकेषु च ।
तदा न दीयते तस्य न तं कर्मणि योजयेत् ॥
निष्फलं तत्कृतं कर्म घृतस्यैव वदानवत् ।
अथातः संप्रवक्ष्यामि घृतधेनुमपि द्विज ! ।
येन सा विधिना देया तां प्रवक्ष्यतः शृणु ॥
वदामि धेनुं घृतकल्पितां यो विधिश्च यैवे निश्चयैः प्रकल्पम ।
फलं प्रदाने मनुजस्य यस्मात् कृपाच पालनवनुपर्व यस्य ॥
गोक्षीरसर्पिर्मधुशर्करद्भिः संस्थाप्य विष्णुं शुभवारिणाच ।
संपूज्य पुष्पैश्च विलेप्य गन्धैर्दत्त्वा निवेद्यञ्च सधूपदीपम् ॥
घृतञ्च वह्निर्घृतमेव सोमो घृतञ्च सूर्यो घृतमेव चाम्भः ।
प्रदेहि तस्मात् घृतमेव विद्वन् ! घृते प्रदत्ते सकलं प्रदत्तम् ॥
घृतेन गव्येन तु पूर्णकुम्भं प्रकल्पयते गौः करकञ्च वत्सः ॥
हिरण्यगर्भां मणिरत्नशोभां तुरुष्ककर्पूरसुवासनासम् ॥

शृङ्गे च कृष्णागुरुदारवे च सौवर्णनेत्रे पटसूत्रसास्ना ।
क्षौमञ्च पुच्छं गुडदुग्धवक्त्रं जिह्वाच तस्या वरशर्करायाः ॥
द्राक्षोत्थैश्च हि खर्जूरैरन्यैः स्वादुफलैरपि ।
उरस्तस्याः प्रकर्त्तव्यं पृष्ठन्ताम्रञ्च धीमता ॥
इक्षुयष्टिमयाः पादाः शफा रौप्यमयास्तथा ।
धान्यैश्च सप्तभिः पार्श्वौ लोमानि सितसर्षपैः ॥
कांस्यदोहाच कर्त्तव्या सितवस्त्रच्छदा तथा ।
शितच्छत्रसमायुक्ता सितचामरभूषिता ॥
सितयज्ञोपवीता च सितस्रग्दाम भूषिता ।
वत्सस्य कुर्यादिति सङ्गतानि प्रोक्तानि सर्वाण्यपि यानि धेनोः ।
अङ्गानि सर्वाणि च तद्वदस्य छत्रं सवस्त्रं च तथैव विप्र ? ॥
गृहाण चेनां मम पापहृत्यै दुस्तारसंसारपयोधिपोतः ॥
संसारतारो भुवि भूमिदेव ! स्वर्गं प्रदेहि त्वम विप्रराज ! ।
विष्णुः सुरेशो घृतरश्मिरस्याः प्रीतोऽस्तु दानेन वरं प्रदातुः ॥
व्याहृत्य चैतन्निजहस्ततोयं दत्त्वा नमस्तेति च वाग्विधेया ।
दाता द्विजेनात्र तु पूर्वमुक्तं संप्राश्य सर्पिर्व्रतमात्मशुध्यै ॥
कार्य्यं प्रमुक्तोऽखिलकिल्बिषैस्तु प्राप्नोति लोकान् घृतदुग्धदिग्धान् ॥
घृतक्षीरवहा नद्यो यत्र पायसकर्दमाः ।
तेषु लोकेषु विप्रेश ! सुपुण्येषु प्रजायते ॥
पितुरूर्ध्वन्तु ये सप्तपुरुषास्तस्य येऽप्यधः ।
तांस्तेषु द्विजलोकेषु स नयंस्त्यक्तकिल्बिषः ॥
स कामानामियं दृष्टिः कथिता तव सत्तम ! ।
विष्णुलोकं नरा यान्ति निष्कामाः घृतधेनुदाः ॥
जलधेनुं प्रवक्ष्यामि प्रीतये दत्तया यया ।

देवदेवो हृषीकेशः सर्वगः सर्वभावनः॥
जलधेनुं द्विजश्रेष्ठ! सम्पूर्णरजतान्वितम्॥
रत्नगर्भमयीस्तु ग्रामैर्वन्यैः समन्वितम्।
सितवस्त्रयुगच्छन्नं दूर्वापल्लवशोभितम्॥
कुष्ठमांसीमुरोशीर वालकामलकैर्युतम्।
प्रियङ्गुपत्रसंयुक्तं सितयज्ञोपवीतिनम्॥
सोपानत्कञ्च सच्छत्रं दर्भविष्टरसंस्थितम्।
चतुर्भिः संवृतं पात्रैः तिल पूर्णैश्चतुर्दिशम्॥
स्थगितं दधि पात्रेण घृतक्षौद्रवता मुखे।
उपोषितः समभ्यर्च्य वासुदेवं सुरेश्वरम्॥
पुष्पधूपोपहारैश्च यथा विभवसम्भवम्।
संकल्प्य जलधेनुञ्च समभ्यर्च्य जनार्दनम्॥
पूजयेद्वत्सकं तद्वत् कृतञ्जलमयं बुधः।
चतोऽपरपरे केचित् पूजयेत् घृतवत्सकम्।
पञ्चांशेन तु कुम्भस्य चतुर्थांशेन वा परे।
एवं संपूज्य गोविन्दं जलधेनुं सवत्सकाम्॥
सितवस्त्रधरः शान्तो वीतरागो विमत्सरः।
दद्याद्विप्राय विप्रेन्द्र! प्रीत्यर्थं जगन्नाथिनः॥
जगन्नाथो जगद्योनिः प्रियतां मम केशवः।
इति चोच्चार्य विप्रेन्द्रो विप्राय प्रतिपादयेत्॥
पयःप्राशनिना स्थेयं ह्यहोरात्र मतः परम्।
अनेन विधिना दत्वा जलधेनुं द्विजोत्तम!॥
सर्वदाप्य मवाप्नोति यत् यत् ध्यायेत् स मानवः।
शरीरारोग्य माप्नोति प्रशमः सर्वकामिकः॥

तृप्ता भवति दत्तायां जलधेन्वां न संशयः ।
इमामपि प्रशंसन्ति जलधेनुं द्विजोत्तम ! ॥
ये नरास्तेन वै यान्ति विष्णुलोक मसंशयम् ।
हे गावाभवितैर्विहग ! यद्यपि गो प्रकल्पिताम् ॥
भक्त्यास्तु ते तथाप्येवं धर्मशास्त्रमतो द्विज ! ।
अथातः संप्रवक्ष्यामि दानानामुत्तमं परम् ॥
यद्दत्त्वा मानवो याति सायुज्यं परवेधसः ।
धेनुर्देया सुवर्णस्य कारयित्वा द्विजातये ॥
यान्दत्त्वा प्राप्तकीपालाः ब्रह्माद्याः सहस्रशः ।
सा चतुर्भिः त्रिभिर्वाप्यथ सुवर्णपलैर्द्विजः ॥
द्वाभ्यां वापि पलाभ्यान्तु पलेनैकेन वा पुनः ।
हीनं तु नैव कर्त्तव्यं सत्यां सम्पदि स द्विजः ॥
हीनन्तु कुर्वतो दानं दातुस्तु निष्फलं भवेत् ।
चतुर्थांशेन धेन्वास्तु हेमवत्सं प्रकल्पयेत् ॥
सर्वरत्नैरलङ्कुर्य्याद्दक्षमापक्रमणे तु ।
राजतं वत्सकं कुर्य्यादन्ये गुरन्ये च तद्विदः ॥
अलङ्काराश्च सर्वेऽपि गोवद्वत्से प्रकल्पयेत् ।
सकाशाद्वासुदेवस्य सुशालायां युधिष्ठिरः ॥
दत्त्वा प्राप्तो हरेर्लोकं सा मयेयमुदीरिता ।
मुक्ताफलशफा कार्या प्रवालकविषाणका ॥
पद्मरागमयियुक्ता च हतपालसनान्विता ।
कर्पूरागुरुनासा च शर्करारसना तथा ॥
सुखुहग् युग्मपार्श्वा च चोमसास्नावती तथा ।
दुग्धादिगुडजानुश्च पञ्चगव्य मपानकम् ॥

नारीकेलैश्च कर्त्तव्यौ कर्णौ पृष्ठञ्च कांस्यकम्।
सप्तदत् स्नुतलाङ्गूल सप्तधान्यसमावृता॥
फलपुष्पोपसंपन्ना च्छत्त्रोपानत्समन्विता।
सुवर्णधेनुः कार्य्या च विप्राय प्रतिपादयेत्॥
अश्वमेधसहस्रस्य दत्त्वा फलमवाप्नुयात्।
कुशानां हि सहस्रन्तु स्वर्गं नयत्यसंशयः॥
किमन्यैर्बहुभिर्दानै रत्नहेमगवाऽनया।
हेमधेनुप्रदानेन कृतकृत्यो हि वर्त्तते॥
हिरण्यगर्भो भगवान् प्रीयतामिति कीर्त्तयेत्।
उपवासी विशुद्धात्मा दत्त्वा सोमरविग्रहे॥
दीयमानञ्च पश्यन्ति ये नरा हेमगामिमाम्।
रक्षोभूतपिशाचाद्या सतो नश्यन्ति सद्विज!॥
एता मयोक्तास्तव वत्स! सर्वा हृष्टादिका वत्सरतोऽत्र गावः।
इक्ष्वाकुभूभृत्प्रभृति चितीशा जग्मुर्दिवं यं विधिवत् प्रदाय।
कृष्णाजिनस्य दानस्य प्रवक्ष्यामि यथाविधिम्॥
प्रमाणञ्च विधिर्यस्य यस्मै विप्राय दीयते।
वैशाख्यां पूर्णिमायाञ्च कार्त्तिक्यां कृष्णवाऽपि वा।
एतयोस्तु प्रदातव्यं रविसोमग्रहेऽपि च॥
अक्लिष्टमच्छिद्रमलोमकञ्च सश्मश्रुरन्ध्रं सशफं सशोफम्।
साण्डं प्रदेयं सविषाणवक्त्रं श्रमं प्रदाने मितकृष्णचर्म।
एतमेव विधं चर्म गृहीत्वा द्विजपावनम्।
कलयेद्गुदस्तात्र हेमशृङ्गादिकां पुनः।
शृङ्गे हेममये तस्य शफांश्च राजतस्य च॥
मुक्ताफलैश्च लाङ्गूलं कुर्य्यात् ग्राह्यं विवर्जयेत्।

अनुलिप्ते महीपृष्ठे प्रसृते कुतपेऽंशुके ॥
तत्र प्रसारयेन्मार्गं तिलैस्तदपि पूरयेत् ।
वदन्ति तद्विदश्चैव चतुर्द्रोणांस्तु पूरयेत् ।
नाभिपुष्पात्मकं कुर्य्यादपरे कवयो विदुः ॥
नाभिमात्रं वदन्त्यन्ये राशिं कुर्यादिति द्विजः ।
हेमनाभञ्च तं कुर्यात् हेमकर्षेण तु द्विजः ॥
शक्त्या वापि प्रकर्त्तव्यं मनः शुद्धिर्यथा भवेत् ।
सौवर्णक्षीरपूर्णन्तु प्राच्यपादे च दापयेत् ॥
राजतं दधिपूर्णन्तु यथा दक्षिणतो द्विजः ।
ताम्रमाज्यभृतं पात्रं पश्चिमस्यां तथा दिशि ॥
क्षौद्रपूर्णं तथा कांस्यं चतुर्दिक्षु क्रमेण तु ।
शक्त्या वापि च कर्त्तव्यं वित्तशाठ्यं विवर्जयेत् ॥
तद्दद्याद्वेदविदुषे ब्राह्मणायाहिताग्नये ।
परिधाप्यापि ते वस्त्रे अलङ्कृत्य च भूषणैः ॥
अतश्चो वृष्टयः कार्य्या इत्यन्ये कवयो विदुः ।
वदन्ति कवयो गाथां मार्गमाहात्म्यवेदिनः ॥
न सा विद्वांश्च विद्वांसः पुराणार्थविदोऽपरे ।
यस्तु कृष्णाजिनं दद्यात् सखुरं शृगसंयुतम् ॥
तिलैः प्रच्छाद्य वासोभिः सर्वरत्नैरलङ्कृतम् ।
ससमुद्रगुहान्तेन सशैलवनकानना ॥
चतुरन्ताश्च संयुक्ता पृथिवी नात्र संशयः ।
कृष्णाजिने तिलान् दत्त्वा हिरण्यमधुसर्पिषा ॥
ददाति यस्तु विप्राय सर्वन्तरति दुष्कृतम् ।
यः कृष्णाजिनमासीर्य हेमरत्नयुतैस्तिलैः ॥

वर्षाहृतं सोपवासो विष्णोराप्तनोस्तथा।
वैशाख्यां पूर्णिमायाञ्च कार्त्तिक्यां वा समाहितः।
दद्याद्वृत्ततपोयुक्ते ब्राह्मणे च जितेन्द्रिये॥
शान्तानीके वाहिताग्नौ प्रदद्याद्भूरिदक्षिणाम्।
यावन्त्यजिनलोमानि तिलाः वस्त्रस्य तन्तवः॥
तावन्त्यब्दसहस्राणि दाता विष्णुपुरे वसेत्।
विशेष मपरे ब्रूयुर्विषुवायनयोर्द्वयोः॥
तद्व्रणवच्छिर्लोम प्रग्रीवं तु प्रसारयेत्।
चतस्रषु तथा दिक्षु सौवर्णराजतानि च॥
निधाय शय्या पात्राणि क्षीराद्यैः पूरितानि च।
तस्याः पश्चात् समिद्धाग्निं परिसंमृज्य तं पुनः॥
पर्युक्ष्य च परिस्तीर्य महाव्याहृतिभिस्ततः।
सद्यो हुत्वातिलांस्तत्र विप्राय प्रतिपादयेत्॥
नाभिं स्पृशन्दीतीयं मार्गं यच्छाम्यहं त्विदम्।
धीमान्दद्याद् द्विजेन्द्राय वाचयित्वा प्रतिग्रहम्॥
पश्चाद्दशादिकं दद्यात् एष प्रतिग्रहे स्थितः।
मया गीताप्यथो गाथा मुदाहरन्ति तद्विदः॥
दातॄणां सप्तमानान्तु विशेषप्रतिपत्तये।
गोभूहिरण्यसंयुक्तमार्गमेकं ददाति यः॥
स सर्वपापकर्मापि सायुज्यं ब्रह्मणो व्रजेत्।
प्रोक्तेन चैतेन मुनीशमार्गं दद्याद्द्विजेन्द्रे विधिना प्रयुक्तम्।
पापानि हत्वा स पुरातनानि यायात्म वेधोवपुषा च योगी॥
सुखासनञ्च यो दद्यात् जापनाख्य मथोत्तमम्।
देवयानै र्दिवं याति स्तूयमानैः स दैवतैः॥

यं रथं हयसंयुक्तं हेमपुष्पैरलङ्कृतम् ।
कृतरज्जुश्च पादाद्यै र्नेत्रपादकृतैरपि ॥
तत्सर्वं स्थगितं वस्त्रैः परिपट्टालकैः शुभैः ।
मुक्ताफलै स्तथानेकै र्मणिभिर्व्युपशोभितम् ॥
अग्रे चैव शुभे वस्त्रे भूषितावत्यलङ्कृतम् ।
तद्भूषणैरलङ्कृत्य सुखयन्त्रसुशोभितौ ॥
सपर्याणौ कशायुक्तौ ग्रीवाभरणभूषितौ ।
शुभलक्षणसंयुक्तौ तरुणौ तत्र योजयेत् ॥
रविसोमग्रहे दद्याच्छुभवान् यत्र कर्मणि ।
अयनयोर्वा द्विजाग्र्याय स प्राप्नोत्यर्कलोकताम् ॥
वसेद्रवि समन्तत्र सेव्यमानः स दैवतैः ।
एकमर्मपि हि यं दद्यात् सर्वालङ्कारभूषितम् ॥
स लब्ध्वा सुवर्णञ्च सोऽश्वलोक मवाप्नुयात् ।
दद्यादश्वरथं यस्तु हेमरत्नविभूषितम् ॥
दिव्यवस्त्रपरिच्छन्नं नेत्रपट्टादिभिः शुभैः ।
सौवर्णैरर्धचन्द्रैश्च राजतैर्वा विभूषितम् ॥
शुभैर्मुक्ताफलैरन्यै र्नीलवस्त्रादिभि स्तथा ।
गजौ सुलक्षणोपेतौ सुशीलौ निरुजावपि ॥
सुरदानौ सुरूपौ च हेमालङ्कारभूषितौ ।
दिव्यवस्त्रैः परिच्छिन्नौ कर्णशाखावलम्बिनौ ॥
पटिनेत्रादिकाद्यौ तौ विशिष्टमणिभूषितौ ।
ईदृग्रथञ्च संयोज्य पताकाभि र्विभूषितम् ॥
शोभितं पुष्पमालाभिः शङ्खदुन्दुभिनिस्वनैः ।
चतुर्वेदाय विप्राय त्रिवेदाय तथा पुनः ॥

शुचये च द्विवेदाय श्रोत्रियाय कृतेष्टये ।
अलङ्कृत्य स मालाभि रक्तक्षौमसुवाससी ॥
तस्य हस्तोदकं दद्यात् प्रीयतां केशवस्त्विति ।
एवं हस्तिरथं दद्यात् समभ्यर्च्य द्विजातये ॥
निहत्य सर्वपापानि विष्णुलोके महीयते ।
वसेच्चतुर्भुजस्तत्र सेव्यमानश्चतुर्भुजैः ॥
अनन्तकाले स तिष्ठेच्छङ्खचक्रगदाधरः ।
पश्यन्तीह रथं ये तु दीयमानं नरा द्विज ! ॥
तेऽपि विष्णुपुरं यान्ति वाशिष्ठस्य वचो यथा ।
एके मेऽपि कपो दद्याद्धस्तिनश्च स भूषणम् ॥
सवस्त्रं हेमरदनं नखे रजतकल्पितैः ।
मणिमुक्ताफलैर्युक्तं सुवर्णरजतान्वितम् ॥
पूर्वोक्ताय च विप्राय चतुर्वेदाय वा द्विजः ।
दद्याच्च विधिवत् सोऽपि सदा विष्णुपुरं वसेत् ॥
त्रिधिवद्यश्च गृह्णाति सर्वमपि प्रतिग्रहम् ।
दाहलोकमवाप्नोति पराशरवचो यथा ॥
अलङ्कृत्य तु यः कन्यां ब्राह्मोद्वाहेन यच्छति ।
अन्योद्वाहेन केनापि हस्तिदानशतं लभेत् ॥
हस्तिदानस्य यत् पुण्यं तस्माच्छतगुणं फलम् ।
कन्यादा विधिवत्सर्वं प्राप्नुवन्ति ह्यसंशयम् ॥
पुत्रदानं समिच्छन्ति योविद्वान् स मनीषिणः ।
कन्यान्तरोऽपि मन्यन्ते पुत्रदानशतं वरम् ॥
भूमिं शस्यवतीन्दद्याद्यस्तु विप्राय मानवः ।
स भुक्तभुक्ततुल्यस्तु विष्णुलोके समावसेत् ॥

योगे चर्मप्रमाणेच भूमिं दद्याद्द्विजातये ।
स विष्णुलोकमाप्नोति केचिद्दूचर्मनीषिणः ॥
षड्भिस्तु प्रहिता विप्रा वंशास्तू भयतो द्विजः ।
तेनैव द्विगुणानाङ्करिति केचिन्निवर्त्तनम् ॥
पञ्चहस्तकदण्डानां चत्वारिंशद् दशाहत ।
पञ्चभिर्गुणिता सा तु निवर्तनमिति स्मृतम् ॥
बालवत्सकधेनूनां सहस्रं यत्र तिष्ठति ।
तद्वै निवर्तनं ज्ञेयं इति केचिद्वदन्ति हि ॥
ताम्रपट्टे पटे वापि लेखयित्वा च शासनम् ।
ग्रामं विप्राय वा दद्याद्दशसीरचितं पुनः ॥
सीरस्यैकस्य वा दद्यात्तस्य पुण्यं किमुच्यते ।
भूम्यंशु कणिकातुल्याः समा विष्णुपुरे वसेत् ॥
भूमिदानात्परो धर्मो त्रैलोक्येऽपि न विद्यते ।
पादैकमात्रदानेन तस्य विष्णुपुरे स्थितिः ॥
तस्य दानात्परो धर्मस्तद्वृत्तेश्च त्वयन्तथा ।
तस्मात्तां यत्नतो दद्याद्धरणाञ्च विवर्जयेत् ॥
इहैव भूमिदानस्य प्रत्यक्षं चिह्नमीर्य्यते ।
क्षितिदः स्वर्गतो भ्रष्टः क्षितिनाथः पुनर्भवेत् ।
भुनक्ति च पुनर्भोगी यथा दिवि तथा भुवि ।
गजैरश्वैर्नरैर्युक्तो हेमरत्नविभूषितः ॥
वरस्त्रीगणसंसेव्यः स्तूयमानः स्वबन्धुभिः ।
छत्रालङ्कारसंयुक्तो वस्त्रवाद्योत्सवादिभिः ॥
इत्यादि भूमिदानस्य चिह्नन्ते वत्स ! कीर्तितम् ।
वित्तेनापि हि यः क्रीत्वा भूमिं विप्राय यच्छति ।

यावत्तिष्ठति सा भूमिस्तावत् स्वर्गे महीयते ।
गृहभूमिञ्च यो दद्याद्दद्याद्दाद्यसममात्रकाम् ॥
गृहस्योपस्करान्दद्याद्गृहदानफलं लभेत् ।
कियन्मात्रञ्च यो दद्याद्भूमिं विप्राय मानवः ॥
तस्यापि हि महापुण्यं स्यादङ्गुलमात्रकम् ।
नैतस्मात्परमं दानं किञ्चिदस्ति धरातले ॥
पुण्यफलं प्रवक्ष्यामि विशेषेण तु तत् शृणु ।
हैमानि यत्र यानानि मणिभिर्भूषितानि च ॥
प्राकारा तत्र सौवर्णाश्चतुर्द्वाराः सुतोरणाः ।
दिव्याश्चाप्सरसो यत्र तासां सङ्ख्या ह्यनेकशः ॥
सुपर्वाणौ कलायुक्तौ ग्रीवाभरणभूषितौ ।
दृष्ट्वा याः कामदेवोऽपि भवेत्कामातुरः क्षणात् ।
सुकेशाः सुललाटास्ता बालचन्द्रोपमभ्रुवः ॥
सुनासाकर्णगण्डाश्च शुभोष्ठाधरपल्लवाः ।
सुग्रीवा भुजपाल्यग्राः पीनोत्तुङ्गस्तनास्तथा ॥
सुमध्योरुनितम्बाश्च सुश्रोण्यश्च शुभोरुकाः ।
सुजानुजङ्घागुल्फाश्च सुपादाः सुनखास्तथा ॥
केन रूपेण ता वर्ण्या भवन्त्यप्सरसो द्विजाः ।
वेषज्ञाः गणिकाः सर्वाः दिव्यस्रग्वस्त्रभूषणाः ॥
दिव्यानुलेपलिप्ताङ्गा दिव्यालङ्कारभूषिताः ।
मन्मथोऽपि हि तान् दृष्ट्वा भवेत्कामातुरः क्षणात् ॥
वर्ण्यन्ते ताः कथं देव्यो या लक्ष्मीप्रतिमोपमाः ।
वैणवाप्सरसो सङ्घैर्वेष्टिताश्चामरादिभिः ।
गीयमानश्च गन्धर्वैः स्तूयमानश्च दैवतैः ॥

वसेन्विष्णुपुरे तावद्यावत् विष्णुरजः क्षितौ ।
पुण्यं वै भूमिदानस्य कथितन्तव वत्सक ! ॥
मोक्तुर्धरित्री कुलपर्वताश्च पाथोऽर्णवः स्वर्गतलादिकादिः ।
देयानि सर्वाणिच सर्वकामैः प्रोक्तानि दानानि पुरावदद्भिः ॥
आत्मतुल्यं सुवर्णस्या रजतं द्रव्यमेव च ।
यो ददाति द्विजाग्रेभ्योस्तस्याप्येतत् फलं भवेत् ॥
ब्रह्महत्यादिपापैस्तु यदि युक्तो भवेन्नरः ।
स तत्पापविनिर्मुक्त प्रोक्ते विष्णुपुरे व्रजेत् ॥
तुलापुरुषभूम्यो च दीयमानौ च ये नराः ।
पश्यन्ति तेऽपि यान्त्येव येच स्युरनुमोदकाः ॥
गुडं वा यदि वा खण्डं लवणञ्चापि तोलितम् ।
यो ददात्यात्मना तुल्यं नारी वा पुरुषोऽपि वा ॥
पुमान् प्रद्युम्नवत्स ! स्यान्नारी स्यात्पार्वतीसमा ।
सौभाग्यरूपसंयुक्ते भुञ्जीतान्ते त्रिविष्टपम् ॥
हिरण्यदक्षिणायुक्तं सवस्त्रं भूषणान्वितम् ।
अलङ्कृत्य द्विजाग्र्यन्तं परिधाप्य च वाससी ।
खण्डादितोलितं पश्चाद्विप्राय प्रतिपादयेत् ।
सर्वकामसमृद्धात्माऽनन्तकालं वसेद्दिवि ॥
उष्ट्रं खराजं महिषञ्च मेषं अश्वान् करेणुं महिषीमजांश्च ।
ब्रूयुः खरोष्ट्री मविकां मुनीन्द्रा! हेमादियुक्तं सकलञ्च दानम् ।
वराणि रत्नानि च हैमरूप्य शुभानि वासांसि च कांस्यताम्रे ।
व्याधिमात्रं काभादि कृत्वा हेमादिदानं द्विज ! दीयते हि ॥
केचिद्वदन्ति चैतानि कृत्वा हेममयानि च ।
सर्वोपस्कारयुक्तानि देयानि हेमधेनुवत् ॥

अर्चयित्वा हृषीकेशं पुष्पेऽङ्क्षि विधिपूर्वकम् ।
अग्निगुत्रं सुवर्णञ्च विप्रमाऽऽहूय यच्छति ॥
स मुक्त्वा विष्णुलोकन्तु यदा गच्छति संस्कृतौ ।
तदासौ तेन पुण्येन धनयुक्तो द्विजो भवेत् ॥
यो रौप्यमुत्तमं दद्यादर्थिने ब्राह्मणाय च ।
सोऽतीवधनसंयुक्तो रूपयुक्तश्च जायते ॥
माणिक्यानि विचित्राणि नानानामानि यो नरः ।
तथा ताम्रञ्च कांस्यञ्च त्रपुं वा सीसकादि वा ॥
यो दद्याद्भक्तितो विप्रे स सोमलोकमवाप्नुयात् ।
सम्पूज्य सततं लोकं रूपवानिह जायते ।
घृतं ददाति यो विप्रे सोऽत्यन्तं सुखमश्नुते ॥
भोजनाभ्यञ्जनार्थं वा भवेत्सोऽपि सुखी नरः ।
तैलदानेन सततं भोजनाभ्यञ्जनाय च ॥
स्निग्धदेहोऽपि तेजस्वी रूपयुक्तश्च जायते ।
कस्तूरी कर्पूरं तुरुष्कं चन्दनादिकम् ॥
गन्धद्रव्याणि दत्त्वा तु शुभगन्धः प्रजायते ।
ताम्बूलं पुष्पमालाञ्च पुष्पालङ्करणानि च ॥
सुमतिर्वीर्यवांश्चैव धनयुक्तश्च जायते ।
शिशिरर्त्तौ च यो दद्यादनलं सेन्धनं नरः ॥
स सर्वभक्ष्योदराग्निः सन् प्रभामुयुतो भवेत् ।
यो दद्याद्ब्राह्मणेभ्यश्च नित्यं मेधांसि मानवः ॥
श्रियायुक्तो भवेद्दक्षः संग्रामे चापराजितः ।
किञ्च वा बहुनोक्तेन दानस्य विस्तरेण च ॥
यद्यदिष्टतमं यस्य तत्तस्मै प्रतिपादयेत् ।

तिलान् दर्भांश्च नित्यार्थं तृणान्यास्तरणाय च ॥
भुक्ता स तु सुखं स्वर्गे जातश्चात्र भवेद्भुवि ।
गुडमिक्षुरसङ्खण्डं दुग्धखर्ज्जूरसाधकान् ॥
फलानि दत्त्वा सर्वाणि स्वादूनि मधुराणि च ।
सर्वाणि फलशाकानि लवणानि तथा द्विज ! ॥
स्थाप्यानि गृहपात्राणि शुभगोत्रो भवेन्नरः ।
कूष्माण्डन्त्रपुषं दत्त्वा हन्ताकादिपटोलकान् ॥
शुभानि कन्दमूलानि सुहृष्टः पुत्रवान् भवेत् ।
वदराम्रकपित्थानि खर्जूरदाड़िमानि च ॥
चिञ्चाश्चामलकं दत्त्वा पुत्रवानिह जायते ।
या नारी द्विज ! चैतानि द्विजे भक्त्योपपादयेत् ॥
सर्वं तस्य भवेत्तद्धि धेनुदानसमन्वितम् ।
भोजनाच्छादनं दत्त्वा दत्त्वा चोपानहौ द्विजः ॥
स्वर्गलोकन्तु सम्भुज्य सर्वकामोऽत्र जायते ।
याः पुण्यनार्यश्च सकामिपुंसां कामोपभुक्त्यै निजदेहदाः स्युः ।
गीर्वाणचेतोहररूपवत्यः पौरन्दरास्ता गणिका भवन्ति ॥
गृहं वा मणिकां वापि शयानासनविष्टपम् ।
दत्त्वा च कश्चिपं विद्वान् विप्रान् यः पाठयेन्नरः ॥
धरादानादिकं व्यास विद्यादानं शताधिकम् ।
विद्यार्थिनाञ्च विप्राणां पादाभ्यङ्ग मुपानहौ ॥
यो ददाति द्विजश्रेष्ठ ! ब्रह्मलोकं स गच्छति ।
आदावारभ्य वेदांस्तु शास्त्रं वाच्यतमं द्विजः ! ॥
अध्यापयेत् द्विजान् शिष्यान्विद्यादानं तदुच्यते ।
उपाध्यायं निवेश्याग्रे तस्य कृत्वा च वर्त्तनम् ॥

विद्यां भक्त्या प्रयच्छेद्यः परब्रह्मण्यसौ विशेत्।
विद्यार्थिनेऽथ विप्राय यो दद्याद्भोजनं द्विज:॥
पादाभ्यङ्गं तथा स्नानं सोऽपि दानांशभाग् भवेत्।
यः स्वयं पाठयेद्विप्रान् स्नात्वा भक्त्या च स द्विजः॥
साक्षात्स ब्रह्मणभ्येति नागच्छेत्स संसृते।
ऋचं वा यदि वार्द्धं च पादं पादार्द्धमेव च॥
अध्यापयति तस्यापि नास्ति शिष्यस्य निष्कृतिः।
मन्त्ररूपं द्विजो दद्यादेकमपि शुभाक्षरम्।
तस्य दानस्य वै शिष्यो न कर्तुं निष्कृतिं क्षमः॥

यद्विप्र! शिष्यप्रतिपादितेन विद्याप्रदानेन न तुल्यमस्ति।
नूनं धरित्र्यामविनाशि किञ्चित् तस्मात्प्रदेयन्तु तदेव विद्वन्!॥

रोगार्त्तस्यौषधं पथ्यं यो ददाति नरस्य तु।
अन्यस्यापि च कस्यापि प्राणदः स तु मानवः॥
किञ्चरैर्भूषणैर्दत्तैर्गोभिर्वासोभिरेव च।
आढ्यत्ते प्राणहीनेन प्राणदानं मतः परम्॥
अन्नं प्राणो जलं प्राणाः प्राणश्चौषधमुच्यते।
तस्मादौषधदानेन दाता सुरसमो द्विज!॥
प्राणदानं हि यो दद्यात्सर्वेषामपि देहिनाम्।
स याति परमं स्थानं यत्र देवश्चतुर्भुजः॥
यो दद्यान्मधुरां वाचमाश्वासनकराञ्चतम्।
रोगक्षुधादिनार्त्तस्य स गोमेधफलं लभेत्॥
क्लीबान्धबधिरादीनां रोगार्त्तानां शरीरिणाम्।
यच्चित्किञ्चीयते तेषां यद्दानं तदुच्यते॥
ये यच्छन्ति दयादानं कृत्वा दीनदयां नरः।

तेऽपि तद्दानधर्मेण विष्णुलोकमवाप्नुयात् ॥
अथान्यत्सम्प्रवक्ष्यामि तिथिमासगतं द्विज ।
यत्प्रदाने मुनिश्रेष्ठ ! विशिष्टं फलमिष्यते ॥
मासे मार्गशिरे दानं पूर्णचन्द्रतिथौ नरः ।
विधीनथ प्रवक्ष्यामि यत्प्रदानं महत् फलम् ॥
कांस्यपात्रमक्लिष्टन्तु लवणं प्रस्थपूरितम् ।
हिरण्यनाभं वस्त्रेण कुसुम्भेन च छादितम् ।
स्नाताचान्ताय विप्राय सवस्त्रं प्रतिपाद्य च ।
सौभाग्यरूपलावण्ययुक्तो भवति मानवः ॥
गौरसर्षपयुक्तेन पौष्यानुत्सादितो नरः ।
स पुनरभिषेक्तव्यः कुम्भेन हव्यसर्पिषा ॥
सर्वगन्धोदकैस्तोयैः फलरत्नसमन्वितैः ।
सुवर्णप्रमुखं दृष्ट्वा प्रदद्यात्तु द्विजातये ॥
घृतेन स्नापयेद्विष्णुं भक्त्या सम्पूज्ययेद्धरिम् ।
घृतञ्च जुहुयाद्वह्नौ घृतं दद्याद्द्विजातये ॥
छत्रं वस्त्रयुतं दद्यात्सोपवासः समाहितः ।
कर्मणा तेन धर्मज्ञः पुष्टिमाप्नोत्यनुत्तमाम् ॥
माघ्यां कुर्व्वंस्तिलैः श्राद्धं मुच्यते सर्वकिल्बिषैः ।
शुभं शयनमास्तीर्य फाल्गुण्यां स द्विजातये ॥
रूपद्रविणसंयुक्तो भार्य्यां रूपवतीं लभेत् ।
नरः प्राप्नोति धर्मज्ञः श्रियं प्राप्नोत्यनुत्तमाम् ॥
नार्य्यपि शुभभर्त्तारं रूपसौभाग्यसंयुतम् ।
प्राप्नोति विपुलान् भोगान्नात्र कार्य्या विचारणा ॥
पौर्णमासीषु चैतासु मासर्क्षसंयुतासु च ।

एतेषामेव दानानां फलं दशगुणं भवेत् ॥
महापौर्णासु चैतासु फलमक्षय मश्नुते ।
द्वादश्यां चैव शुक्लस्य चैत्रे वस्त्रप्रदो नरः ॥
अक्षयं फलमाप्नोति नागलोक मनुत्तमम् ।
इत्यन्तं कथितं विप्र ! फलं चैतस्य सत्तम ! ॥
दद्याद्धेमच वैशाखे द्वादश्यां यो नरः सितम् ।
शुक्लेच्छत्रोपानहौ च विष्णुलोक मवाप्नुयात् ॥
ज्यैष्ठे ऽथ शयनं दत्त्वा प्रणस्य भोगशायिनम् ।
आषाढशुक्लद्वादश्यां श्वेतद्वीप मवाप्नुयात् ॥
श्रावणे वस्त्रदानेन विष्णुसायुज्य मृच्छति ।
गोदः प्रयाति गोलोकं मासे भाद्रपदे द्विजः ॥
पौर्णेऽश्वशिरसम् अश्वं दत्त्वा तथाश्विने ।
विष्णुलोक मवाप्नोति कुल मुद्धरते स्वकम् ॥
स नरो वस्त्रदानेन कार्त्तिक्यां दिवमाप्नुयात् ।
प्रदानं लवणानां तु मार्गशीर्षे महाफलम् ॥
धान्यानाञ्च तथा पौषे दारूणा मप्यनन्तरे ।
फाल्गुणे सर्वगन्धानां भवेद्दानं महाफलम् ॥
गजर्क्षसंयुता चैत्रे द्वादश्यां तु महाफलम् ।
माघे तु माधवे शुक्लद्वादश्याद्या ऽसंयुता ॥
वायव्येन युताशुक्ले शुचौ मूलेन वैष्णवी ।
नभस्यश्विनयोः पुण्या श्रावणयजर्क्षसंयुता ॥
पौष्णर्क्षं संयुता चैव हेमार्गे कृत्तिकायुता ।
सहस्ये रिक्थकोपेता तपसि चादित्यसंयुता ॥
गुर्वर्क्षयुक्तपुष्ये च द्वादशी पावना स्मृता ।

नक्षत्रयुक्तास्वेतासु दत्त्वा दानान्यनन्तकम् ॥
मेषं च मेषसंक्रान्तौ गोवृषं वृषसंक्रमे ।
शयनासनदानञ्च मिथुनोपगमे तथा ॥
कर्कप्रवेशे शक्तून् हि प्रदद्याच्छर्करां तथा ।
सिंहप्रवेशे पात्राणां तैजसानां तथैव च ॥
तुलाप्रवेशे धान्यानां बीजाना मतिचोत्तमम् ।
कीटप्रवेशे वस्त्राणां वेश्मानां दानमेव च ॥
धनुः प्रवेशे वस्त्राणां यानानाञ्च महाफलम् ।
झषप्रवेशे सर्वेषां अन्नानां दानमुत्तमम् ॥
स्नेहानाञ्चैव दारूणां दानमग्ने स्तथैव च ।
कुम्भप्रवेशे दानन्तु गवामर्थे तृणस्य तु ।
मीनप्रवेशे स्नानानां माल्याना मपि चोत्तमम् ॥
दानान्यशेतानि मया द्विजेन्द्र! प्रोक्तानि कालेनु नरः प्रदाय ।
प्राप्नोति कामान् मनसात्यभीष्टांस्तस्मात्प्रशंसन्ति हि कालदानम्॥
अशौचसूतके वापि न दातव्यः प्रतिग्रहः ।
सतोरपि तयो देया परन्तूभयदक्षिणा ॥
रात्रौ दानं न दातव्यं दातव्य मभयं द्विज ! ।
त्रयाणामपि देयानि विद्याकन्या प्रतिश्रयाः ॥
पान्थानामतिथीनाञ्च गवामपि च पूजनम् ।
रात्रावपि च कर्त्तव्य मिति पाराशरोऽब्रवीत् ॥
शुचिः सन्नशुचिर्वापि दद्यात् गृह्णीत चोभयम् ।
अक्षयं दानकालोऽयं यदाभय मुपस्थितम् ॥
अन्यप्रतिग्रहो विद्वान् ग्राह्यश्च शुचिना सह ।
अशौचसूतके चैव न तु ग्राह्या भवन्ति ते ॥

अव्यक्तेनच धर्मज्ञ! तथा मुक्तशिखेन च।
स्नात्वाचम्य पयः स्पृश्य गृह्णीत प्रयतः शुचिः॥
द्रव्यस्य नाम गृह्णीयाद्दाता तथा निवेदयेत्।
तोयं दत्त्वा तथा दाता दाने विधिरयं स्मृतः॥
प्रतिगृहीता सावित्रं सर्वमत्र प्रकीर्त्तयेत्।
सार्धं द्रव्येण तत् सर्वं तद्द्रव्यस्य दैवतम्॥
समाप्य च ततः पश्चात्कामं स्नात्वा प्रतिग्रहम्॥
प्रतिग्रही पठेदुच्चैः प्रतिगृह्य द्विजोत्तमात्।
मन्दं पठेत राजान्यादुपांशु च तथा विशः॥
मनसा च तथा शूद्रात् कर्त्तव्यं स्वस्तिवाचनम्।
सोङ्कारं ब्राह्मणो ब्रूयात् निरोङ्कारं महीपतिः॥
उपांशु च तथा वैश्ये स्वस्ति शूद्रे तथैव च।
न दानं यशसे दद्यात् नभयान्नोपकारिणे॥
न नृत्यगीतशीलेभ्यो हासिकेभ्यश्च धार्मिकः।
पात्रभूतोऽपि यो विप्रः प्रतिगृह्य प्रतिग्रहम्॥
असत्सु विनियुञ्जीत तस्मै देयं न तद्भवेत्।
सञ्चयं कुरुते यस्तु समादाय व्रतस्ततः॥
धर्मार्थं नोपयुञ्जीत न तं तस्कर मर्चयेत्।
यस्मै दद्याद्विजा! दस्युं नत्वा तमुत्तरी नरः॥
दानञ्च हृदि संचिन्त्य जलमध्ये जलं क्षिपेत्।
वदन्ति मुनयो गाथां परोक्षे दानसत्फलम्॥
परोक्षे चैव यद्दानं प्रत्यक्षात्कोटिशो भवेत्।
पात्रं मनसि सञ्चिन्त्य गुणवन्त मभीप्सितम्॥
अप्सु ब्राह्मणहस्ते वा भूमावपि जलं क्षिपेत्।

दानकाले तु संप्राप्ते पात्रे चासन्निधौ अथम् ॥
अन्यविप्रकरे दद्याद्दानं पात्राय दीयते ।
विष्णुस्ते तारयायास्तु स्पृशन्ति हि करोदकम् ॥
तद्दानं ब्रह्म संप्राप्त मद्दत्त मिति विष्णुगाः।
लक्ष्मीप्रष्टा च यद्दत्तं दरिद्रायार्थिने द्विज ! ॥
तदक्षय्यं समुद्दिष्ट मिति पराशरोऽब्रवीत् ।
राज्यभ्रष्टञ्च राजानं यस्तं राज्ये निवेशयेत् ।
विष्णुलोकसमं भुक्त्व भवेत्पतिर्दिवौकसाम् ॥
प्रतिश्रुत्य द्विजार्थं यो न यच्छति च तं पुनः ।
न च स्मारयते विप्र स्तुल्यन्तदुपपातकम् ॥
प्रतिश्रुत्य तु यत्किञ्चिद्द्विजेभ्यो न ददाति यः ।
स वै द्वादश जन्मानि शृगालीं योनिमाप्नुयात् ॥
धेन्वादीनि प्रवक्ष्यामि यथा लक्षणदीक्षिताम् ।
मानभूमिन्निकादीनां यथावत्तां निबोधत ॥
अजातदन्ता या तु स्यादृर्भेदन्तसमन्विता ।
वर्षादर्वाक् चतुर्थाचे यावदेतत् प्रकीर्तिता ।
सुशीला च सुवर्णा च अरोगा च यशस्विनी ॥
सुवत्सा प्रथमं सुता धेनुर्गैरभिधीयते ।
अरोगा या परिक्लिष्टा प्रसवत्यप्रसूतिका ॥
सूता सातिपयोयुक्ता सा गोसामान्यतः स्मृता ।
पूर्वोक्तगुणसंयुक्ता प्रत्यक्षे प्रसवा तथा ॥
साथ गौर्धेनुरित्युक्ता वाशिष्ठस्य वचो यथा ॥
पञ्चगुञ्जो भवेन्माषः कर्षः षोडशभिश्च तैः ।
तैश्चतुर्भिः पलं प्रोक्तं दाने मानं च पुण्यदम् ॥
भद्रनालैकहस्ताभिः प्रहतीभिश्च ताभिः ।

माषकास्तै चतुर्भिश्च सेतिकेति प्रकीर्तिता: ॥
ताभिश्चतसृभिः प्रस्थश्चतुर्भिराटकैश्च तै:।
द्रोणाश्चतुर्भिस्तै ह्यको धान्यमानं प्रकीर्तितम् ॥
तैलप्रसृतिभिर्भाण्डं चतसृभिर्यत्प्रपूर्यते।
तैश्चतुर्भिश्च कूर्चश्च तैश्चतुर्भिश्च वैफलम् ॥
पातैश्चतुर्भिः स्यात्कम्भी पाटी तस्य चतुष्टयम्।
कारकं चतसृभि स्ताभिश्चतुर्भिस्तैर्घटः स्मृतः ॥
इत्येतैः कविभिः प्रोक्तं घृतगोतिलगोसमा:।
किञ्चिच्च बहुनोक्तेन दानस्य तु पुनः पुनः॥
दीयते यद्दरिद्राय कुटुम्बिने तदक्षयम्।
सकृद्दधाय विप्राय भक्त्या परमया वसु ॥
दीयन्ते वेदविदुषे तदुपतिष्ठन्ति यौवने।
अथान्यत्सम्प्रवक्ष्यामि दानानि निष्फलानि तु ॥
तथा निष्फलजन्मानि तथा तव निबोधत।
वृथा जन्मानि चत्वारि वृथा दानानि षोड़श ॥
तानि पृथक् प्रवक्ष्यामि निबोध त्वं द्विजोत्तम ! !
अपुत्रस्य वृथा जन्म ये च धर्मवहिष्कृता:॥
दरिद्रस्य वृथा जन्म व्याधितस्य तथैव च।
अपुण्यस्थाने यद्दत्तं वृथादानं प्रकीर्तितम् ॥
आरूढपतिते दानं अन्यायोपार्जितस्य यत्।
व्यर्थं मब्राह्मणे दानं पतिते तस्करेऽपि च ॥
गुरोरप्रीतिजनके कृतघ्ने ग्रामयाचके।
ब्रह्मबन्धौ च यद्दानं यद्दत्तं वृषलीपतौ ॥
वेदविक्रयिणे चैव यस्य चोपपतिगृहे।

स्त्रीजिते चैव यद्दत्तं व्यालग्राहे तथैव च ॥
परिचारके तु यद्दत्तं वृथा दानानि षोड़श ।
तमोवृत्तश्च यो दद्याद्भयात् क्रोधात्तथैव च ॥
विद्वद्वृत्तं हि तत्सर्वं भुङ्क्ते गर्भस्थ एव हि ।
ईर्ष्यया मन्युना दानं यद्दान मर्थकारणात् ॥
यो ददाति द्विजातिभ्यो बालाभावे तदश्नुते ।
स्वयं नीत्वा च यद्दानं भक्त्या पात्रे प्रदीयते ॥
अप्रमेयगुणं तद्धि उपतिष्ठति यौवने ।
यत्सद्विप्राय वृद्धाय भक्त्या परमया च तु ॥
दीयते वेदविदुषे तदुपतिष्ठति वार्द्धके ।
तस्मात्सर्वास्ववस्थासु सर्वदानानि सत्तम ! ॥
दातव्यानि द्विजातिभ्यः स्वर्गमार्ग मभीप्सता ।
भूमेः प्रतिग्रहं कुर्याद्भूमिं कृत्वा प्रदक्षिणाम् ॥
करे गृह्य तथा कन्यां दासदासी तथा द्विजः ।
करन्तु हृदि विन्यस्य धर्मो ज्ञेयः प्रतिग्रहः ।
आरुह्य च गजस्योक्तकर्णस्याश्वः प्रकीर्तितः ॥
तथा चैकशफानाञ्च सर्वेषा मविशेषतः ।
प्रतिगृह्णीत गां शृङ्गे पृष्ठकृष्णाजिनं तथा ॥
कर्णजाः पशवः सर्वे ग्राह्याः पुच्छे विचक्षणैः ।
प्रतिग्रहं तथोष्ट्रस्य आरुह्येव तु पादुके ॥
ईशायान्तु रथो ग्राह्यः छत्रं दण्डे तु धारयेत् ।
द्रुमाणा मथ सर्वेषां मूले न्यस्तकरो भवेत् ।
आयुधानि समादाय तथासुच्य विभूषणम् ।
धर्मध्वज स्तथा स्पृष्ट्वा प्रविश्य च तथागृहम् ॥

अवतीर्य तु सर्वाणि जलस्थानानि यानि तु।
उपविश्य च शय्यायां स्पर्शयित्वा करेण वा॥
द्रव्याण्यन्यान्यथादाय स्पृष्ट्वा वा ब्राह्मणः पठेत्।
कन्यादाने तु च पठेद् द्रव्याणि तु पृथक् पृथक्॥
प्रतिग्रहं द्विजश्रेष्ठ! तथैवाक्त भवन्ति ते।
द्रव्याणामथ सर्वेषां द्रव्यसंश्रयणाम्बरः॥
वाचयेज्जलमादाय हुङ्कारेण प्रतिग्रहम्।
प्रतिग्रहस्य यो धर्मं यो जानाति द्विजो विधिम्॥
सद्द्रव्यस्तेन्यसंयुक्तो नरकं प्रतिपद्यते।
अथापि वक्ष्यामि विधिं विशेषं वाजिदानतः॥

दातुग्रहीत्रोरपि येन पुण्यं स्वर्गाय जायेत शृणुष्वमेतत्।
गृह्णीत योऽश्वं विधिवद्द्विजेन्द्रः कुर्य्यादसौ पञ्च दिनानि पूर्वम्॥
पञ्चोपचारैर्युतविष्णुपूजां कुष्माण्डमन्त्रैर्घृतदुग्धहोम।
यद्ग्राम इत्यादि गरुत्मतीयं सौङ्कारभूरादिभिरन्वितं च॥
प्रत्येकमष्टौ जुहुयाद्द्विजाग्र्याः! तदा तथामानसयेद्द्विजेन्द्राः!।
सौर्येण मन्त्रेण च तद्वदष्टौ षष्ठ्या प्रयुक्तं त्रिशतं जुहोति॥
कुर्य्याच्च गायत्र्यजपं सहस्रं पश्चात्प्रगृह्णीत तुरगं द्विजेन्द्रः।
दातापि चैतद्व्रतमाविदध्याद्द्विजाग्र्यवत्प्राज्ञनयोर्विशुद्धौ।
द्वावप्यमू स्वर्ग्यं जलं लभेते अत्रापि पूज्यौ द्विजवृन्दमध्ये॥

अश्वप्रतिग्रहविधिः।

पुराणगीता सु भवन्ति गाथा विशिष्ट पुण्यप्रतिपादनाय।
तिथौ प्रदत्तं द्विज! यत्र पूर्वं क्रमेण चैतं पुनरुच्यतां तु॥
श्रावणे शुक्लपक्षे तु द्वादश्यां दीयते द्विज!।
गोप्रदानेन गोविन्दो वन्द्यस्त्वेतन्मनीषिणः॥

पक्षे शुक्ले तथा वत्स ! द्वादश्यां घृतधेनुकाम्।
घृतार्चिः प्रशनायालं प्रदद्यात् फलदायिनीम् ॥
तथैव माघद्वादश्यां प्रदत्ता तिलगौर्द्विज ! ।
केशवं प्रीणयन्त्याशु सर्वान् कामान् प्रयच्छति ॥
ज्यैष्ठे मासि सिते पक्षे द्वादश्यां जलधेनुकाम्।
दत्त्वा विप्राय विधिना प्रीणयन्त्यम्बुशायिनम् ॥
यत्र वा तत्र वा काले यद्वा तद्वा प्रदीयते।
विशेषार्थमिदं प्रोक्तं नान्यत्काले निषेधनम् ॥
विष्णुमुद्दिश्य विप्रेभ्यो निःस्वेभ्यो यत् प्रदीयते।
भवेत्तदशनं दानं उक्तमल्पाक्षरैरिदम् ॥
काले पात्रे तथा देशधनं न्यायार्जितं तथा।
यद्दत्तं ब्राह्मणश्रेष्ठे तदनन्तं प्रकीर्तितम् ॥
चन्द्रे वा यदिवा सूर्ये दृष्टे राहौ महाग्रहे।
यद्यच्च कथितं सर्वं तदप्यर्के विशिष्यते।
द्वादशी पुण्यशुक्लासु विशेषाच्छ्रावणेन तु ॥
यत्र प्रदीयते किञ्चित्तदनन्तं द्विजोत्तम ! ।
वैशाखे शुक्लपक्षे तु विशेषादपि मानवः ॥
आषाढी कार्त्तिकी चैव फाल्गुणी तु विशेषतः।
तिस्रश्चैताः पौर्णमास्यो दाने विप्र ! महाफलाः ॥
व्यतीपातेषु सर्वेषु समस्तेषु द्विजोत्तम ! ।
ग्रहसंक्रमकाले तु तीव्ररश्मे विशेषतः ॥
तुला मेषप्रयागेषु योगेषु मिथुनस्य च।
रवेर्महाफलं दानन्तेभ्योऽपि स्यान्महाफलम् ॥
यदा प्रविशति भानु मकरं द्विजसत्तम ! ।

आषाढेऽश्वयुजे पौषे चैत्रे शुक्ले तथैव च ॥
द्वादशीसहितं प्रोक्तं पुण्यं दिनचतुष्टयम् ।
मिथुनञ्च तथा कन्यां धन्विनां मीनमेव च ॥
प्रविष्टे भास्करे पुण्यं कथितं द्विजसत्तम ! ।
षड़शीतिमुखं नाम दाने दिनचतुष्टयम् ॥
अच्छिन्ननाद्यां यद्दत्तं पुत्रे जाते द्विजोत्तम ! ।
संस्कारे चैव पुत्रस्य तदक्षय्यं प्रकीर्तितम् ॥
एताश्च विविधाः प्रोक्ताः स्ताश्च कार्य्या यथोदितम् ।
सर्वास्वपिहि सद्विप्रैर्नित्यं धर्म्म मभीप्सुभिः ॥
सत्यश्च नैधिद्विज नालकश्चि मिद्ध्यर्थमुक्तानि क्रियन्ति विप्राः ! ।
दानानि व ज्ञाप्यथ पूर्व्वधर्म्मं माघेन पुंसोर्विहितेन धर्म्मः ।
ब्रह्मेशहरिसूर्य्याणां स्कन्धे भास्याम्बिने तथा ।
दुर्गागणेशानाञ्च मन्दिराणि कारयेन्नरः ॥
इष्टकामयतं वापि यश्चार्पयति विष्णवे ।
अनेन विधिना कुर्यात् विष्णुलोक मवाप्नुयात् ॥
एवं यः सर्वदेवानां मन्दिरं कारयेन्नरः ।
स याति वैष्णवं लोकं परितुष्टो हरिर्नरः ॥
समाचरति यो भग्नं सुधया लेपयेद्यथा ।
शुभ्रं पतिश्च यस्तु विशिष्टै र्देवलेपनैः ॥
सम्मार्ज्जयति यस्तु यथाचैवानुलेपयेत् ।
प्रदीपन्तत्र योदद्यात् स याति विष्णुलोकताम् ॥
पूजयेद्यस्तु विधिना पञ्चोपचारसंयुतः ।
स विष्णुलोकमभ्येति क्रीड़ते च चतुर्भुजे ॥
यावन्तत् श्रेष्ठिकास्तत्र विसदैस्य सद्मनि ।

तावन्त्यब्दसहस्राणि विष्णुलोकं समाविशेत् ॥
स नित्यन्तत्तड़ाकानि पुष्करिण्यश्च दीर्घिकाः ।
तथा कूपाश्च कर्त्तव्या वाप्यश्च स्वहमेधिभिः ॥
खातमात्रश्च कर्त्तव्यं एकाढ़कजलं नरैः ।
यावत्पीत्वा जलं गौस्तु तृषार्त्तापि तृषी भवेत् ॥
पिबन्ति सर्वसत्वानि तृषार्त्ता यम्भसामिव ।
गण्डूषानि तु तावन्ति तत्कर्त्ता तत्समन्दिवि ॥
यावन्ति ह्युपकुर्वन्ति गण्डूषानि क्रिया तु च ।
कुर्वतां स्नानशौचादि यावदाचमनं तथा ॥
तावत्संख्यानि वर्षाणि लक्षाणि दिवि मोदते ।
अथ स च विशेत् स्वर्गं सेव्यमानोऽप्सरोगणैः ॥
आरामाश्चापि कर्त्तव्याः शुभवृक्षैः सुशोभितैः ।
अश्वत्थोदुम्बरप्लक्षचूतराजादनीवरैः ॥
जम्बूनिम्बकदम्बैश्च खर्ज्जूरैर्नारिकेलकैः ।
वकुलैश्चम्पकैर्वृक्षैः पाटलाशोककिंशुकैः ।
द्रुमैर्नानाविधैरन्यैः फलपुष्पोपयोगिभिः ॥
जातीजपादिपुष्पैस्तु शोभिताश्च समन्ततः ।
फलोपयोगिनः सर्वे तथा पुष्पोपयोगिनः ॥
आरामेषु च कर्त्तव्याः पितृदेवोपयोगदाः ।
गाथामुदाहरन्त्यत्र तद्विदः कवयोऽपरे ॥
वृक्षारोपणकं पुंसा मुक्ता याः पुरुषवाचकाः ।
अश्वत्थमेकं पिचुमर्दमेकं न्यग्रोधमेकं दशचिञ्चिणीश्च ॥
षट्चम्पकं तालशतत्रयं च पञ्चाम्रवृक्षैर्नरकं न पश्येत् ॥

यावन्ति खादन्ति फलानि वृक्षाः सुहृक्क्रियस्य तु वल्लरीणाम्।
वर्षाणि तावन्ति वसन्ति नाके वृक्षौघकल्पे पुरुषाः समरौघसेव्याः॥
पुष्पाणि यावन्ति च पुष्पिणां तु दिवौकसां मूर्ध्नि धरातले वा।
पतन्ति तावन्ति च वत्सराणां कल्पानि वृक्षैर्दिवमारुहन्ति॥
यत्कालपक्वैर्मधुरैश्च सम्यग् ग्राह्यच्युतैः स्वादुफलैर्नगानाम्।
सर्वाणि सत्त्वानि समर्पयस्व तत्स्यात्तु दानेन च वृक्षनाथान्॥
उद्दिश्य विष्णुं जगतामधीशं नारायणं यत्पुरुषः करोति।
आनन्त्यमाप्नोति कृतं तु तस्मादनन्ततोयं भगवान् पुराणः॥
दानानि सर्वाण्यभिधाय विद्वन्! नष्टस्य पूर्तं त्विष्टमेधिकर्म।
कुर्वन्ति शान्तिं मनुजाः शुभाय वक्ष्यामि तत्स्यादथ सर्वशान्त्यै॥
उक्तानि सर्वदानानि इष्टापूर्तञ्च सत्तमाः!।
अतःपरं प्रवक्ष्यामि गणेशादिकशान्तयः॥

इति श्रीवृद्धहारीते धर्मशास्त्रे सुव्रतप्रणीतायां
धर्मसंहितायां दानधर्मेषु पूर्तविनिर्णयो
नामाष्टमोऽध्यायः॥

---

## नवमोऽध्यायः।

शान्तीनामथ सर्वासां ग्रहशान्तिः परा स्मृता।
ग्रहेभ्योऽपि गणेशस्तु तस्य शान्तिरथोच्यते॥
यदि पुम्भिः कृतकर्माणि भवन्ति फलदानि हि।
तदा धर्मार्थकामास्तु संसिध्येरन् सदा नृणाम्॥
तन्नृभिः क्रियमाणानां सर्वेषां कर्मणामयम्।
विघ्नार्थमसृजद्ब्रह्मा शङ्करश्च विनायकम्॥

तेनोपहतपुंसान्तु कर्म स्यान्निष्फलं कृतम्।
स्त्रीणामपि तथा सर्वं क्रियमाणन्तु निष्फलम्॥
जलावगाहनं स्वेन क्रव्यादारोहणं तथा।
खरोष्ट्रम्लेच्छसंसर्गं गुड़काषायवाससम्॥
पश्यन्त्यात्मानमेवेह सीदन्तं प्रतिवासरम्।
यानि कर्माणि कुर्वीत तानि स्युः क्लेशदानि हि॥
राजपुत्रो न राज्याप्ता यद्याप्ता न तु कन्यका।
अन्तर्वर्त्तिन्यपत्याप्ता आचार्यैं तु न सा द्विज!॥
अधीयानाश्च विद्याप्ता कृषिकृत्सस्यसम्पदा।
वणिग्वर्त्तन लाभेन युज्यन्ते तद्वतश्च सन्॥
तस्मात्तदुपाशम्यर्थं समभ्यर्च्य गणेश्वरम्।
स्नपनङ्कारयेत्तस्य विधिवत्पुण्यवासरे॥
स्वासनासीन संस्नाप्य आरक्तार्षभचर्मणि।
सितसर्षपकल्केन साज्येनाच्छादितस्य च॥
विलिप्त शिरसस्तस्य गन्धैः सर्वैस्तथौषधैः।
अष्टौ वा चतुरो वापि स्वस्ति वाच्यं द्विजान् शुभान्॥
एकवर्णैश्चतुर्भिश्च पुम्भिः कुम्भैश्च यज्जलम्।
समानीतं क्षिपेत्तत्र वक्ष्यमाणस्त्वदस्त्विमाः॥
अश्वेभस्थानवल्मीके हृदसङ्गमवर्त्तिका।
रोचनां गुग्गुलं गन्धान् तस्मिनम्भसि तान् क्षिपेत्॥
यत्ते द्वैपायनं स्नानं सहस्राक्ष ऋषिस्मृतम्।
तेन त्वा शतधारेण पावमान्यः पुनन्त्विमाः॥
ऋचाभिः पावमानीभिः कुम्भन्तर्गाहमन्त्रयेत्।
शक्रादिदशदिक्पाला ब्रह्मेशकेशवादयः॥

आपस्ते घ्नन्तु दौर्भाग्यं शान्तिं ददतु सर्वदा।
सुचित्रियान इत्यादौ मन्त्रैर्नैकाभिषेचनम्॥
वदन्ति वदतां श्रेष्ठाः दौर्भाग्यस्योपशान्तये।
समुद्रा गिरयो नद्यो मुनयश्च पतिव्रता॥
दौर्भाग्यं घ्नन्तु मे सर्वे शान्तिं यच्छन्तु सर्वदा।
पादजङ्घोरुजङ्घाश्च नितम्बोदरनाभिषु॥
स्तनांसे बाहुहस्ताग्रग्रीवा अंसाङ्गसन्धिषु।
नासा ललाटे कर्णभ्रू केशान्तेषु च यत्स्थितम्॥
तदपो घ्नन्तु दौर्भाग्यं शान्तिं यच्छन्तु सर्वदा।
स्नातस्य मस्तके दर्भान् सव्येन परिरुच्यते॥
जुहुयात्सर्षपन्तैलमौदुम्बरस्रुवेण तत्।
मितश्च संमितश्चैव तथा सालकटङ्कटौ॥
कूष्माण्डो राजपुत्रश्चेत्यन्तस्वाहा समन्वितैः।
नामभिश्च बलिं दद्यान्मन्त्रैर्नाम स्वधान्वितैः॥
चतुष्पथं समाश्रित्य सूर्य्ये कृत्वा कुशांस्ततः।
निधाय तेषु दर्भेषु शुक्लाशुक्लांश्च तण्डुलान्॥
ओदनं पललोपेतं यत्कामान् मत्स्यकानपि।
तथा मांसञ्च कुल्मापान् तत्रैव त्रिविधां सुराम्।
शरिकेण्डेरिकान् पूपान् फलानि मूलसंस्रजः॥
गच्छेत् स मातुः पार्वत्याः कुर्यादुपस्थितं पुनः।
दूर्वासर्षपपुष्पैश्च पूर्णमाषाञ्जलिं क्षिपेत्॥
सौभाग्य मम्बिके! देहि भगरूपं यशोऽपि च।
श्रियो युक्तांश्च कामांश्च तथा शौर्यञ्च देहि मे॥
गणेशमात! रम्बाले! यत्किञ्चिन्मदभीप्सितम्।

एतच्चाम्बे! च तद्देहि देहि गौरि! वरान् वरान्॥
अनस्तु वाससी शुक्ले परिधायाह ते शुभे।
सितचन्दनलिप्ताङ्गः सितस्रग्भूषणान्वितः॥
तान् नत्वा च द्विजान् सर्वान् भोजयेद्विविधाशनैः।
वस्त्रयुग्मं गुरोर्दद्यात्तेतु तस्य वराशिषः॥
एतानि सम्पूज्य गणाधिदेवं विघ्नोपशान्त्यै जननी तथास्य।
आर्त्तोक्तमस्यग्निविधिना समासात्प्राप्नोति चान्यान्मनसा यमिच्छेत्॥
स्नात्वा विधायाऽर्चनमम्बिकायाः सम्पूज्य लोकान् सखिबन्धुलोकान्।
आचार्यदत्तान्वनिताकुमारी प्रध्वस्तविघ्नः श्रियमेति गुर्वीम्॥
मृत्युञ्जमन्त्रैर्विधिवत्स युक्तै र्नित्यं द्विजानन्दनपूजनं च।
कृतान्तरायान्विनिहत्य सर्वान् कुर्याद्यतो ग्रहयागमेनम्॥
इति श्रीबृहत्पाराशरीये धर्मशास्त्रे शान्त्यध्याये विनायकशान्तिः सम्पूर्णा॥

---

मुनीनां व्याससुख्यानां शुश्रूषानुपुरोऽब्रवीत्।
शुभाय ग्रहपूजायां वदतस्तानि बोधत॥
यद्वर्णा यत्कुलान्विद्वान् जाता देशेषु येषु च।
तेषां तदधिदैवत्यं सन्निधौ दक्षिणाय च॥
यस्य यस्य च दिग्भागे मण्डलं स्याद्विवस्वतः।
होमकर्मणि यो विप्रो या स्नुच्या समिधावपि।
अग्निकुण्डप्रमाणं तु प्रमाणं समिधामपि॥
सर्वमेव यथोद्देशं वक्ष्यामि द्विजसत्तम!।
रक्तः काश्यपजो भानुः शुक्लो ब्रह्मसुतः शशी॥
रक्तो रुद्रसुतो भौमः पीतः सोमसुतो बुधः।

पीतो ब्रह्मा सुराचार्य्यः शुक्लः शुक्रो भृगूद्भवः ॥
कृष्णः शनीरवेः पुत्त्रः कृष्णो राहुः प्रजापतिः ।
कृष्णः केतुः कृशानुश्च कृष्णपापास्त्रयोऽधमौ ॥
कालगोऽयं पुनः सोम आवन्त्यः सोम उच्यते ।
मागधो बुधइत्युक्तो गौतमस्तु बृहस्पतिः ॥
सैन्धवो दानवाचार्यः सौरिः सौराष्ट्रदेशजः ।
राहुश्शङ्कदेशोत्थो मध्यदेशभवोऽग्निभूः ॥
जन्मदेश इमे प्रोक्ताः ग्रहजातक वेत्तृभिः ।
शम्भुं रविं पुमान् चन्द्रं स्कन्दभौमं हरिं बुधम् ॥
ब्राह्मणश्च गुरुं विद्याच्छुक्रं शुक्रं यमं शनिम् ।
कालं राहुं चित्रगुप्तं केतु मित्यधिदैवतम् ॥
एतद्विज्ञाय यत्कुर्य्यात्तत्सर्वं सफलं भवेत् ।
अर्कस्त्वर्काय होतव्यः सर्वव्याधिप्रणाशनः ॥
सुधामुचे च सोमाय पालाशः सर्वकामिकः ।
खदिरश्चार्थलाभाय मङ्गलाय विवेकिभिः ॥
स्वरूपकल्पामार्गो होतव्यश्च बुधाय च ।
प्रभाप्रदस्तथाश्वत्थो होतव्योऽमरमन्त्रिणे ॥
शमी सौभाग्यदाह्येषा दैत्यामात्याय सद्द्विज ! ।
धर्मविद्यार्थदाह्युर्भान् स द्विजै र्वङ्किसूनवे ॥
दधिक्षीराज्यसंश्लिष्टाः समिधः शुभहूतये ।
शमी पापोपशान्त्यर्थं होतव्या मन्दगामिने ॥
दीर्घायुर्धर्मदा दूर्वा होतव्या राहवे द्विज ! ।
प्रादेशमात्रका सर्वा अष्टा वष्टोत्तरं शतम् ॥
अष्टाविंशतिरेकैकं रुद्रैषा प्रतिदैवतम् ।

दद्यात्तु फलभूयस्त्वं मुक्तादन्यत्र राक्षसम् ॥
नव भुवनकं लेख्यं चतस्रं मण्डलं द्विज ! ।
ग्रहांस्तत्र प्रतिष्ठाप्य वक्ष्यमाणक्रमेण तु ।
मध्ये तु भास्करः स्थाप्य पूर्वदक्षिणतः शशी ।
दक्षिणेन धरासूनुं बुधः पूर्वोत्तरेण तु ॥
उत्तरस्यां सुराचार्यः पूर्वस्यां भृगुनन्दनः ।
पश्चिमायां शनिः कुर्य्यात् राहुर्दक्षिणपश्चिमे ॥
पश्चिमोत्तरतः केतुरिति स्थाप्याः ग्रहाः क्रमात् ।
पटे वा मण्डले लेख्या ईशान्यां दिशि पावकान् ॥
भास्करः स्फाटिकश्चन्द्रो रक्तचन्दनकोऽपरः।
सोमसूनु सुराचार्य्यौ स्वर्णाशोभौ प्रकीर्तितौ ॥
रजतो भृगुपुत्रस्य कार्य्यश्च स शनैश्चरः ।
राहुश्च सैसकः कार्यः कार्यः केतुश्च कांस्यकः ॥
सर्वानेतन्मया कृत्वा समभ्यर्च्य सदा गृही ।
लेखयेद्वर्णकैः स्वैः स्वैर्विधिवत्पीठकेन वा ॥
ग्रहाणां साधिदेवानां प्रतिष्ठापन मन्त्रकान् ।
वदन्ति मन्त्रतत्त्वार्थवेदिनो द्विजसत्तम ! ॥
आदित्यं गर्भमित्युक्त मग्निं दूतमनेन वा ।
एताभ्यां स्थापयेदर्कं त्र्यम्बकम् इति शङ्करम् ॥
अप्स्वन्तरीति शीतांशुः श्रीश्च त इति पार्वती ।
स्योना पृथ्वीति भौमञ्च य इन्द्रं देति वा गुहम् ॥
इदं विष्णु बुधः स्थाप्य तद्विष्णोरिति वै हरिम् ।
इन्द्र आमां सुराचार्य्यं आब्रह्मणां निवोधकम् ॥
इन्द्र देवी भृगोः सूनुं सयोषेत्यमराधिपम् ।

शन्नो देवी रवेः सूक्तं यमाय त्वा तथा यमम् ॥
अयं गौरिति राहोश्च कालं कार्षीरसीति च ।
ब्रह्मजज्ञेति केतुश्च चित्रं चित्रावसोरिति ॥
ब्रूयुरेतानि मन्त्राणि मूलमन्त्राणि चापरे ।
आकृष्णेन च तीव्रांशोरिमन्देवा निशाकरम् ॥
अग्निर्मूर्धेति भूसूनोरुद्बुध्यस्व बुधस्य च ।
बृहस्पतेरिति गुरो रन्नात्परिस्रुतो भृगोः ॥
शन्नो देवी शनेर्गन्तुः काण्डात् काण्डात्परस्य च ।
केतुं कृण्वन्नग्निसूनुरयमंशः प्रकीर्त्तितः ॥
वेदमन्त्रैः सदा पूज्या विधिना ते द्विजन्मना ।
कर्त्तव्याश्चरवो रुक्षैः स्वैः स्वैश्च प्रतिदैवतम् ॥
सघृता सयवाश्चापि होतव्याश्च द्विजैस्तिलाः ।
मध्यमानामिकामूललग्नाङ्गुष्ठं चतसृभिः ॥
यावन्तोऽङ्गुलिभिर्ग्रासा स्तिला स्तावत्तवाङ्गतिम् ।
हस्तमात्रं पृथिव्यां न वेधोऽपि तावतैव तु ॥
बाहुमात्रं वदन्त्येके एके चारत्निमात्रकम् ।
चतुरस्रं खनेत्कुण्डमेकयोनिसमन्वितम् ॥
शुभमेखलया युक्तं सुशान्तिकरमुत्तमम् ।
होमार्थं मण्डलं कुर्य्याच्चतुर्द्वारसमन्वितम् ॥
चतुर्दिक्षु ध्वजाः कार्या नानावर्णाः शुभावहाः ।
तथा तत्रोदकुम्भाश्च दूर्वापल्लवसंयुताः ॥
पुनर्नवीकृतं पद्मं मण्डपाभावमाश्रयेत् ।
षट्कर्मनिरताः शान्ता ये न दग्धाः प्रतिग्रहे ॥

नियोज्यास्तेऽग्निकार्यादौ स्मरन्मन्त्रा द्विजोत्तमाः ।
प्रतिग्रहा निदग्धस्य जपहोमादि कुर्वतः ॥
यस्य मन्त्रास्यवीर्याणि तत्कृतं कर्म निष्फलम् ।
ओदनं सगुडं भानोः पायसं शशिन स्तथा ॥
हविष्यं भूमिपुत्रस्य क्षीरान्नञ्च बुधस्य च ।
पूर्णं हविः शनैः केतो मांसं राहोः हुताच्युतम् ॥
चित्रान्नमग्निसूनोश्च भाज्यानामपि यस्य याः ।
होमं कृतस्तथान्येऽपि सदृष्टत्वाय द्विजाग्रजाः ॥
यथावर्णानि वासांसि देयानि कुसुमानि च ।
देया गन्धाश्च सर्वेषां देयो धूपश्च गुग्गुलुः ॥
धेनुः शङ्खो वृषः स्वर्णं वासोभ्यश्चासिता च गौः ।
आविच्छागलकश्चैव क्रमशो दक्षिणाः स्मृताः ॥
प्रत्यहं प्रतिमासञ्च प्रत्यब्दं वा विधानतः ।
वर्णिभिश्च ग्रहाः पूज्या राजभिस्तु सदैव हि ॥
दुःखितो यस्य यस्तु स्यात् पूज्यस्तस्य स यत्नतः ।
वेधसैते नियुक्ताः प्राक् स्वभक्तं पूजयिष्यथ ॥
वरं ददाति संहृष्टा विप्रा अग्नि नृपा ग्रहाः ।
असन्तुष्टा दहन्त्येते तस्मात्तानर्चयेत्सदा ॥
ग्रहाधीन मिदं सर्वं उत्पत्तिप्रलयात्मकम् ।
जगत्यभावभावौ च तस्मात्पूज्यतमा ग्रहाः ॥
सानुकूलै ग्रहैर्यानि कुर्यात्कर्माणि मानवः ।
सफलानि भवन्त्यस्य निष्फलानि स्युरन्यथा ॥
कुर्वन्ति चैतद्विधिना ग्रहाणां मातिथ्यमब्दं प्रतिवासरं ये ।

आरोग्यदेशा धनधान्ययुक्ताः दीर्घायुषः स्त्रीरतगा भवन्ति ॥

इति श्रीवृहत्पाराशरीये धर्मशास्त्रे ग्रहशान्तिर्नाम शान्त्यध्यायः ।

---

वसेत्तु कस्मात्तदनिष्वतोऽद्भुतं वयोवसेयुर्यदरण्यवासिनः ।
विशेषतो गृध्रकपोतपिङ्गलास्तथैव चोलूकसकाकवायसाः ॥

तरक्षुगोमायुखगायुगोभि-
र्हिंधाप्यकस्मादकुतोऽपि निर्भयः ।
विशन्ति यस्वेतदतीव चाद्भुतम्
गृहे पुरे तच्छनिकृते हि सिद्धये ॥

अथाद्भुतानि जायन्ते वर्णानां गृहमेधिनाम् ।
नानाविधानि तेषान्तु प्रशान्त्यै शान्तिरिष्यते ॥
यस्याद्भुतानि जायन्ते गृहे तस्य समादिशेत् ।
धनधान्यक्षयो वापि पुत्रभार्य्याक्षयस्तथा ॥
भयञ्चा जायते शत्रो राज्ञो वा जायते भयम् ।
शान्तिस्तत्र विधातव्या यथोक्तं मुनिपुङ्गवैः ॥
यदि गोधूमशाखायां यवशाखोपजायते ।
यवगोधूमशाखाञ्च देवसर्वाशनेषु च ॥
सर्षपे तिलशाखा च तिले शाखासु सर्षपम् ।
माषे मुद्गन्तु मुख्ये स्यात् घटगवृष्टिर्भवेद्यदि ॥
अम्भः पूर्णो तु कुम्भेतु ज्वलदग्निमवेक्षते ।
उद्वपनन्तु कूपानां मक्षो वा मधुजालकम् ।
विधिवद्वायुलिङ्गैश्च निर्वाप्य पायसं चरुम् ॥
झञ्झावाताय वाताय तद्वद्यं प्रशास्यतु ।

त्रिपञ्चसप्त वा कृत्वा सर्वत्र ह्यथ तुल्यता ॥
स्त्रियो गौर्वा महिष्यावा सुतौ वत्सौ च पण्डकौ ।
द्वौ द्वावाशु प्रजायेते तत्र शान्तिर्विधीयते ॥
वृषवक्त्रोदयं नर्देत् वडवाश्ववदाहरेत् ।
अश्वतरी प्रसूते वा प्रस्वेदः प्रतिमासु च ॥
खड्गपटहादीनामकुतोऽपि ध्वनिर्यदा ।
काकगृध्रकपोताद्याः प्रविशेयुर्गृहे पुरे ॥
यवपिष्टेन निर्लिप्य विधिवद्वारुणं वरम् ।
मन्त्रैर्वरुणदैवत्यै र्जुहुयाद्वरुणाय तम् ॥
महावरुणदेवाय ह्यपाम्पतये तथा ।
अन्यैर्वरुणदैवत्यैर्मन्त्रैश्च जुहुयाच्चरुम् ॥
विप्रस्तु जुहुयान्मन्त्रैरेतेन वरुणाय तम् ।
अन्यस्य तुल्यतां कृत्वा स्वाहान्तैर्वरुणदैवतैः ॥
इन्द्रचापेक्षणं रात्रौ शस्त्रप्रज्वलनन्तथा ।
गजस्य शफतस्तान्तज्ज्वलनं प्रतिवीक्षणम् ॥
स्थूणाप्ररोहणं यत् स्याच्छाखस्यानप्ररोहणम् ।
विद्युन्निर्घातवज्राणां पतनं वा भवेद्यदि ॥
मृदाकुड्यकसंसर्गं विपरीतप्रदर्शनम् ।
शुभाय चरुराग्नेयो निर्वाप्यो विधिवद्द्विजैः ॥
अग्नये त्वग्निराजाय महावैश्वानराय च ।
हृदये मम यत्त्वेतत्सर्वत्र च वदेद्बुधः ॥
गृहशान्तिश्च सर्वत्र शनिपूजा तथैव च ।
दक्षिणा सवृषा गौस्तु वस्त्रयुग्मं द्विजातये ।

एतेषु चान्येष्वपि चाङ्गुतेषु जातेषु सावित्रजपं सहस्रम्।
होमं विदध्यादपि विष्णुमन्त्रै र्ब्रह्मेशमन्त्रैरपिवा द्विजोत्तमैः॥
इति श्रीवृहत्पाराशरीये शान्त्यध्याये अद्भुतशान्तिः।

---

अभिधास्येऽथ रुद्राणां शान्तये गृहमेधिनाम्।
पञ्चाङ्गस्य विधानन्तु यत्कृतं हन्ति पातकम्॥
ब्राह्मणाः विधिवत् स्नात्वा सर्वोपद्रवनाशनम्।
कुर्युर्विधानं रुद्राणां यजुर्विधाननिर्मितम्॥
इषेत्वादिषु मन्त्रेषु खं ब्रह्मा तेषु या क्रिया।
दशप्रणवयुक्तेषु भूर्भूवःस्वरितीति च॥
आर्षच्छन्दश्च दैवत्यं न्यासश्च विनियोगतः।
पराशरोदितं वच्मे शेषं मुनिविभाषितम्॥
मनोज्योतिरबोध्याग्निमूर्धानश्च मर्माणि ते।
मानस्तोक इतिह्येतत्प्रथमं पञ्चकं स्मरेत्॥
याते रुद्रेति व आयाशिरोऽस्मिन्महदर्णवे।
असंख्यातसहस्राणि ललाटे विन्यसेद्बुधः॥
चक्षुषोर्विन्यसेद्दृष्टेतु त्र्यम्बकञ्च यजामहे।
मानस्तोक इति ह्येतन्नासिकायां न्यसेद्बुधः॥
अवतत्य धनुर्वक्त्रे नीलग्रीवाय वा गले।
नम आयुध इत्येतत्स्मरे मन्त्रप्रकोष्ठके॥
विन्यसेद्बाहुमन्त्रोऽयं ये तीर्थानिति हस्तयोः।
नमोऽस्तु किरिकेभ्यो वै हृदये मलनाशनम्॥
ताभ्यां विद्वान् न्यसेत् पात्रं नमो हिरण्यबाहवे।

गुह्यमन्त्रस्तु संख्यार्थं इमा रुद्राय इत्यपि ॥
मानो महान्त इत्योर्वौ एष ते रुद्रेतिवानुनो: ।
अवरुद्रमिति ह्येतज्जङ्घयोर्मन्त्रमुच्चरेत् ॥
कवचे मध्यमितद्वै तदुपरिस्थित इति ।
नेत्रं तु नीलग्रीवाय प्रमुञ्चन् मनोऽस्त्रकम् ॥
य एतावन्त एतेन विदध्युर्दिक् प्रबन्धनम् ।
ॐमितिच नमस्कारभवा च ते ततः पुनः ॥
रुद्रायेति विधानज्ञो दशाचरन्तदा न्यसेत् ।
प्रणवं विन्यसेन्मूर्ध्नि नकारं नासिकान्तरे ॥
मोकारन्तु ललाटे तु भकारं मुखमध्यतः ।
गकारं कण्ठदेशेतु वकारं हृदये न्यसेत् ॥
तेकारं दक्षिणे हस्ते रुकारं वामतो न्यसेत् ।
द्राकारं नाभिदेशेतु यकारं पादयोर्न्यसेत् ॥
त्रातारमिन्द्रं त्वन्ताग्ने सुगन्धः पन्थानमिति ह्यपि ।
तत्त्वा यामि वद्दानो निबुद्धिरित्यपीरयेत् ॥
वयं सोम तमीशानं असौरुद्रा इति स्मरेत् ।
स्योना पृथिवी ह्येतत् कुर्वीत संपुटं द्विजः ।
सुत्रामादिदिशांपालान् प्राच्यादिषु स्मरेदथ ॥
रौद्रीकरणमेतद्वै कृत्वा पापैः प्रमुच्यते ।
यक्षरक्षःपिशाचाद्याः प्रेतभूतग्रहादिकाः ॥
दुष्टदैत्याश्च शाकिन्यो रेवत्यो वृद्धकाश्च याः ।
सिंहव्याघ्रादयोऽरण्या ये दुष्टश्वापदश्च निजाः ! ॥
म्लेच्छबञ्चकचोराद्या यमदूतवदाकवः ।
रौद्रभूतमिमं सर्वे द्विजं पश्यन्ति वह्निवत् ॥

देदीप्यमानमर्चिर्भिर्दुष्टदृग्बधकारकः।
दह्यमानो दवीयः सु सप्तधामसु धामभिः॥
प्रणश्यन्ति हि ये दुष्टा द्विजास्ते रुद्ररूपिणः।
पश्चात्स्वमौख्यमात्मानं सर्वाभरणभूषितम्॥
मृगलाञ्छनमूर्धानं शुद्धस्फटिकसन्निभम्।
फणासहस्रविस्फूर्जदुरगेन्द्रोपवीतिनम्॥
सप्तार्चिषं ज्वलज्ज्वालं जटाजूटकिरीटिनम्।
सहस्रकरपादाब्जखड्गाङ्गाङ्गविभूषितम्॥
ब्रह्माण्डखाण्डवक्तारं कृकपालकधारिणम्।
देदीप्यमानचन्द्रार्कज्वलदग्नित्रिनेत्रिणम्॥
त्रैलोक्यज्योतिः कङ्कास्वत्स्कन्धकपालमालिनम्।
दीप्तनक्षत्रमालाभदक्षमल्लाधरद्विजः॥
निःशेषवारिसम्पूर्णां कमण्डलुधरं भुजम्।
जगत्व्याधिपयक्षन्नादण्डमेरुकधारिणम्॥
केयूरबद्धनागेन्द्रमूर्धमणि विराजितम्।
विचित्र किङ्किणीं मालां मुक्ताराव विराजितम्॥
घर्घराव्यक्तनिर्गच्छद्गम्भीरारावनूपुरम्।
सहेमपट्टनीं शाभ व्याघ्रचर्मोत्तरीयकम्॥
विद्युल्लताप्रभागङ्गं शुभ्रमूर्धसुरार्चितम्।
समस्त भुवनाभाव धरणोच्चासनस्थितम्॥
त्रैलोक्यवनितामूर्धानं तद्देहार्धञ्च पार्वतीम्।
लसत्सूर्यप्रभाभास्वत् त्रैलोक्यक्षतपाण्डुरम्॥
अमृतप्लुत हृष्टाङ्गं दिव्यभोगसमाकुलम्।
दिग्दैवतैः समायुक्तं सुरासुरनमस्कृतम्।

नित्यं शाश्वत मव्यक्तं व्यापिनं नन्दिनं ध्रुवम्॥
द्विजो ध्यात्वा भवात्मानं सम्यक् ग्रहस्वरूपिणम्।
सम्प्रपद्यस्तान्तराय: सन्ततोयजनमारभेत्॥
अनुलिप्ते सुगुप्ते च देशे गोचर्ममात्रके।
स्थण्डिलाम्बुजमालिख्य मन्त्रैः प्रक्षाल्य तं पुन:॥
तत्र पूजादिकं कुर्यान्नमश्च शाम्भवाय च।
मानो महान्त इति च सिद्धमन्त्रं स्मरेद्द्विज:।
स ललाटे पुनर्ध्यात्वा तेजोरूपं पुनर्द्विज:।
दशाक्षरेण मन्त्रेण दद्यात्पाद्यादिकौ पुन:॥
न्यासमन्त्रैश्च सोङ्कारैर्मानस्तोक इति च्यपि।
शम्भवे इति मन्त्रेण दद्याद्गन्धोदकादिकम्॥
पुष्पधूपञ्च दीपादि यथालाभं निवेदिकम्।
दशाक्षरेण तेनैव तत: कुर्यात् पुनर्द्विज:॥
शिखा तस्य तु रुद्रस्योत्तरंनारायणं द्विज:।
शिर: पुरुषसूक्तञ्च शिवसङ्कल्पहृद्यकृत्॥
कवचञ्चाप्रतिरथ नेत्रविभ्राट् वृहत्पिवन्।
शतरुद्रीयमन्त्रेण देवस्यास्त्रं प्रकल्पयेत्॥
पञ्चाङ्गानि स्मरेद्दृष्टप्रणवं पूजयेद्द्विज:।
उद्धृत्य प्रणवेनेशं विकिरन्द्रेति विसर्जयेत्॥
रुद्ररूपी द्विजो यच्च कुर्यात्तद्विच सिध्यति।
अक्षताम्वा तिलाम्वापि यवाम्वा समिधोऽपि वा॥
शम्भवे इति जुहुयात् सर्वांस्तानाज्यसिक्तकान्।
पञ्चपञ्चाथ षड्वाथ अष्टावष्टौ तथापि च॥
दशदशैकादश वा जुहुयात्साधको द्विज:।

द्विजः स्वदारसन्तुष्टः शुचिः स्नातो जितेन्द्रियः ॥
जपतर्पणहोमादौ रतो यो वत्सरं जपेत्।
दशानामश्वमेधानां फलं प्राप्नोति वै द्विजः ॥
सौवर्णं पृथिवीदान पुण्यभावः प्रजायते।
महापापोपपापैश्च मुक्तो रुद्रत्वमृच्छति ॥
एकादशगणान् रुद्रानावर्त्यं याति रुद्रताम्।
रुद्रजापी शुचिः पुण्यः पाङ्क्तेयः आत्मभास्वरः ॥
वंशानां विंशतिश्चैकान्तारयेद्रुद्रजाप्यकृत्।
एकतो योगिनः सर्वे ज्ञातिभिः सह संहतैः ॥
एकतो रुद्रजापी तु मान्यः सर्वैश्च दैवतैः।
पात्रमत्र पवित्रञ्च नाधिकं रुद्रजापिनः ॥
तस्मै दत्तं कृतम्भुक्तन्तदानन्त्याय कल्पते।
अथातः सिद्धिकामः सन् कन्दमूलफलाशनः ॥
गोमूत्रयावकक्षीर दधिशाकान्न भोजनः।
हविष्यभोजनो वाऽपि विप्रायोत्पन्नभोजनः ॥
जपहोमादि कुर्वाणो यथोक्तफलभाग्भवेत्।
शिरः साङ्गञ्च रुद्राणां जप्तैर्दशशतैर्ध्रुवम् ॥
सर्वे मन्त्रा भवन्त्यस्य ब्राह्मणस्योक्तकारिणः।
सिद्धमन्त्रा भवन्त्यस्य चिन्तितार्थफलप्रदाः ॥
रुद्रस्यैवास्य सर्वे ते भवन्तीश्वरनोदिताः।
एकादशशुभान् कुम्भानाहृत्य विधिसम्मितान् ॥
सहिरण्यान् सवस्त्रांश्च फलपुष्पोपशोभितान्।
गन्धोदकाद्यैर्युक्तान्नमस्कृत्वाऽभिमन्त्र्य च।
एकादशमहात्मान मन्त्रं वा हितकाम्यया।

विनायकोपसृष्टश्च स्थापयेत् का पदाहृतम् ॥
मृतवत्सां काकवन्ध्यां स्नापयेच्च तथातुराम् ।
जपन्नेतत्सकृद्विप्रः सर्वदोषैर्विमुच्यते ॥
अनड्वाहश्च वस्त्रञ्च दद्याद्धेनुञ्च दक्षिणाम् ।
भोजयेद्विदुषो विप्रान् समाप्तौ कर्मणो द्विजः ॥
अन्नैर्वैकादशवस्त्राद्यैर्यथाशक्त्या समर्चयेत् ।
अथवा चरुभिः साक्षी शिरो रुद्रसहस्रकम् ॥
जपेद्गृहे तथारण्ये लिङ्गे च शिवालये ।
अग्न्यागारे समुद्रे च नदीनिर्झरपर्वते ॥
जपेदन्यत्र वा विद्वान् शुचौ देशे मनोरमे ।
धीरो दृढव्रतो मौनी जितक्रोधो जितेन्द्रियः ॥
श्वेतवासास्त्वधःशायी रुद्रलोके महीयते ।
नमो गणेभ्य इत्यस्य मन्त्रस्य ब्राह्मणोऽयुतम् ।
जप्त्वा च श्रीफले कृत्वा सर्वकार्य्ये तु सिद्धिभाक् ।
नमोऽस्तु नीलग्रीवायेत्येतन्मन्त्रेण सप्तधा ॥
आवर्त्त्योदकमामन्त्र्य विषार्त्तश्रवणे जपेत् ।
विषेण मुच्यते सद्यः काकदष्टोऽपि जीवति ॥
विषस्यापि भवेन्न स्यात्तस्य नरस्य कर्हिचित् ।
ग्रहग्रस्तं ज्वरग्रस्तं रक्षःशाकिनि दूषितम् ॥
ब्रह्मराक्षसग्रस्तञ्च अन्यदोषोपदंहितम् ।
प्रमुञ्चन् धन्विन इति भस्मना सर्षपैस्तथा ।
ताडयेन्मुञ्च मुञ्चेति शीघ्रमेव विमुञ्चति ॥
नमः शम्भवइत्यस्य मन्त्रस्यापशुभं द्विजः ।
जप्त्वा खादिरसमिद्भाश्च कृत्वा विप्रः सहस्रकम् ॥

तीक्ष्णतैलहुतं सम्यक् मन्त्रान्ते मोचनम् वरम्।
फट्कारेण च जुहुयात् तयोरेवाचिराद्भवेत्॥
जलमध्ये शतावर्त्या सद्योवृष्टिर्निगद्यते॥
नाभिमात्रे जले विप्रः प्रविश्य जुहुयाज्जलम्।
कुर्यादेकार्णवां धात्रीं मन्त्रमाहात्म्यतो भ्रमम्॥
नमः स्वभ्य इत्यनेन मन्त्रेण तु सहस्रकम्।
लवणं मध्वाहुतीनान्तु राजा शीघ्रं वशी भवेत्॥
द्विगुणाम्र्लाग्रसमिधं महावाणी प्रजायते।
त्रिगुणां नवपद्मानां पाताले सिद्ध्यति ध्रुवम्॥
चतुर्गुणेन मन्त्रेण वरदा श्रीः प्रजायते।
समुद्रगा नदीतीरे पुलिने वा पवित्रके॥
खड्गोपरि श्रीफलानां कृत्वा त्रिगुणसहस्रकम्।
अणिमादिकसिद्धीनामेभिरेव भवेद्द्विजः॥
छन्दोदैवतमार्षेयमथातः शतरुद्रिये।
ज्ञानेन कर्मसम्पत्त्वं द्विजानां येन जायते॥
आद्यानुवाके रुद्राणां आद्यायाश्च कचिद्द्विजः।
छन्दोगायत्र्यमन्यास्तु अनुष्टुप्तिसृषु स्मरेत्॥
पङ्क्तिस्तिसृषु विज्ञेया अनुष्टुप् तिसृषु स्मृताः।
द्वयोश्च जगती विप्र उक्तमाद्यानुवाककम्॥
आद्यानुवाके प्रथमा बृहती जगती तथा।
अनुष्टुप्च तृतीयायां द्वयोस्त्रिष्टुप् स्मृता द्विज!॥
अपरासु तथाऽनुष्टुप्सु अनुवाकद्वयं स्मृतम्।
रुद्रः सर्वासु देवत्वं विनियोगो यथोचितः॥
यज्जाग्रतनादि षट्केच शिवसंकल्पमार्षकम्।

रुद्रस्तु देवता षट्सु विनियोगो जपादिषु ॥
अद्भ्यः सम्भृत इत्यादौ उत्तरनारायणस्त्वृषिः।
पूर्वानुवाके दैवत्यं अनुष्टुप्छन्दः प्रकीर्तितम् ॥
आशुः शिशान इत्यादिरप्रीतिरथ उच्यते।
एतन्नाम्ना मुनिस्तत्र देवताऽमरेश्वरः ॥
दैवत्यमापतेत् स्यात छन्दस्त्रिष्टुप् प्रकीर्तितः।
विभ्राट् बृहदित्यादौ सूर्यो दैवतमुच्यते ॥
एतत्सञ्चिन्त्य सकलं द्विजाग्र्यो रुद्रजाप्यकृत्।
यद्यदारभते तत्तद्यथोक्तफलदम्भवेत् ॥
तदा ध्यायन् यन्तितृणां आज्ञानान्द्रविणस्य च।
प्रजानामायुषः कीर्तिर्भूयस्त्वं रुद्रजापिनः ॥
इमं पुण्यं पवित्रञ्च रहस्यं पापनाशनम्।
रुद्रविधिं विधिश्रेष्ठ ! कुर्याद्विप्रः शिवे रतः ॥

कुर्याद्य एवं विधिवद्विधानं शम्भोरजस्रमर्चितं द्विजेन्द्राः !।
प्राप्नोति नाकं स शिवस्य साक्षादत्रापि स स्याच्छिववत्सुपूज्यः॥
मन्त्राणि सर्वाणि च स द्विजस्य आदेशकर्तॄणि भवन्ति यस्य।
यः साधयेत्प्रोक्तविधानयत्नो मन्त्राभिपूज्यः स तु शम्भुवत्स्यात् ॥
इति श्रीबृहत्पाराशरीये शान्त्यध्याये रुद्रशान्तिः समाप्ता।

---

मन्त्रन्त्रिनेत्रं जुहुयाद्धुताशे योबिल्वपत्रैर्घृतदुग्धयुक्तैः।
मृत्युञ्च हत्वा श्रियमेव ध्यात्वा प्राप्नोति पश्चाच्छिवलोकमेव ॥
पञ्चभागास्तथा पञ्च पञ्चेन्द्राः पञ्चनारणाम्।
षष्ठाहुतीर्जपित्वाथ सर्वपापैः प्रमुच्यते ॥

अथातः सम्प्रवक्ष्यामि तटागेष्टिविधिं शुभम्।
येन कृतेन तेषान्तु प्रतिष्ठा सा प्रजायते॥
अस्मात्तातस्य तातेन पृच्छति रघुपुङ्गवे।
तटागाद्युत्सवविधिः प्रोक्तो सोऽयं प्रकीर्त्तितः॥
दीर्घिकासु तटागेषु सन्निहितासु यो विधिः।
वशिष्ठः प्रोक्तवान् सम्यक् दशरथस्य पृच्छतः॥
तस्माद्यः श्रुतवान् शक्तिसूनवेऽतः पराशरः।
तत्प्रसादेन तत्प्रोक्तो योविधिः संप्रचक्षते॥
तटागादिनिपातानां यावदुत्सर्जनं कृतम्॥
तावन्न परकीयन्तु स्नानादीनामनर्हकम्।
अप्रतिष्ठितदेवानां न कार्यं पूजनं यथा॥
अप्रतिष्ठितपापानां प्रोक्तन्तोयमपेयवत्।
तदुत्सर्गः प्रकर्त्तव्यो निजवित्तानुसारतः॥
वित्तशाठ्यं प्रकुर्य्यं स्यादित्यब्रवीत्पराशरः।
तद्विधिज्ञः शुचिः शान्तो ब्राह्मणो धर्मवित्तमः॥
तत्कृत्यर्थं वरेण्योऽसौ चतुर्भिर्ब्राह्मणैः सह।
सतोयं स तु कर्त्तव्यः प्रतिधर्मविदृद्धये॥
विपरीतमतिर्यः स्यात् तत्कृतं कर्म निष्फलम्।
तटागपालिपृष्ठेतु मण्डपं तत्र कारयेत्॥
पूर्व्वोत्तरप्लवे देशे शुभे शौचसमाहितः।
चतुरस्रं चतुर्द्वारं दशहस्तप्रमाणतः॥
सार्द्धहस्तप्रमाणेन तोरणानि तु कारयेत्।
कार्य्याः विचित्राः पताका नानावर्णाः समन्ततः॥

शुभपल्लवसंयुक्ता द्वारेषु कलशाः स्मृताः।
यथावर्णं यथाकाष्ठं यथाकार्य्यं प्रमाणतः॥
तथा यूपान् प्रवक्ष्यामि सर्वेषां हितकाम्यया।
पालाशो ब्राह्मणस्योक्तो न्यग्रोधः क्षत्रियस्य च॥
वैल्वो वैश्यस्य यूपः स्याच्छूद्रस्योदुम्बरः स्मृतः।
शिरः प्रमाणं विप्रस्य स्यात्कण्ठं क्षत्रियस्य च॥
उरःप्रमाणं वैश्यस्य शूद्रस्य नाभिमात्रकम्।
पूर्वस्य दक्षिणे भागे तोरणं तत्र कारयेत्॥
ब्रह्मस्थानञ्च तन्मध्ये अष्टौ भागाः प्रकीर्त्तिताः।
तेषामुत्तरतः सोमं कुबेरं कुविदङ्गतम्॥
धनदं धननागेति ईशावास्येति शङ्करम्।
आकृष्टेनेत्यादिमन्त्रैश्च स्वैः स्वैः कल्प्यास्तथा ग्रहाः॥
त्रातारमिन्द्रमितीन्द्रं अग्निदं ते च पावकम्।
अग्निपृथुरित्यादि धर्म्मविच्च द्विजोत्तमः॥
तद्विष्णोरिति वै विष्णुं नमः सूर्त्तेति नैर्ऋतम्।
सप्त ऋषय इत्यादि मन्त्रेण सप्त ऋषिंस्तथा॥
वरुणस्योत्तम्भनमसि वरुणन्तु प्रकल्पयेत्।
एतद्वा विंशतिः स्थाना निमन्त्रोक्ताः पृथक् पृथक्॥
इमं मे त्वन्नसत्वन तत्वायामि ह्यनुत्तमम्।
समुद्रोऽसि समुद्रेति त्रीन् समुद्रानिति स्मसि॥
दशवारुणमन्त्रैस्तु आहुतीनां शतद्वयम्।
अष्टशतं शतं वापि विंशमष्टोत्तरं शतम्॥
गोसहस्रशतं वापि शतार्द्धं वा प्रदीयते।
अलाभे चैव गां दद्यादेकामपि पयस्विनीम्॥

अरोगां वत्ससंयुक्तां सुरूपां भूषणान्विताम्।
सौवर्णा राजतास्ताम्राः कांस्याः सीसाश्च शक्तितः॥
मत्स्यनक्रादयः कार्य्या विविधाः पूर्वतुष्टये।
गोवत्सौ वस्त्रबद्धौ च आग्नेय्यां दिशि संस्थितौ॥
वायव्यभिमुखौ तत्र तारयेद्वारिमध्यतः।
वस्त्रकुम्भाग्नि त्रिः स्थाप्य छत्रिकामुद्रिकां शुभाम्॥
शक्त्यान्वितैः प्रदातव्यं विप्रान् प्रसाद्य भक्तितः।
दद्याद्विप्रेभ्यः सन्तोष्य छत्रोपानहमेव च॥
सुहेम वृषसंयुक्तां शय्यां दद्याच्च शक्तितः।
आसनानि च शस्तानि भाजनानि निवेदयेत्॥
एतत्प्रदक्षिणीकृत्य स्वात्मना च विपश्चितः।
प्रसादयेद्द्विजान् भक्त्या इष्टापूर्त्तं फलं नरः॥
कृताञ्जलिपुटो भूत्वा विप्राणामग्रतः स्थितः।
ब्रूयादेवं भवन्तोऽत्र सर्वे विप्रवपुर्धराः॥
तद्रूपन्तारयध्वं मां संसारार्णवतो द्विजाः!॥
आगता मम पुण्येन पूर्वपुण्यप्रसाधकाः।
कूर्मश्च मकरांश्चैव सौवर्णं तत्र कारयेत्॥
मीनश्च राजतश्चैव ताम्रदर्दुरकाः स्मृताः।
जलकुम्भचराद्यांश्च मैन्धवांस्तत्र प्रकल्पयेत्।
अन्ये च जलजास्तत्र शक्त्या ताम्रान् प्रकल्पयेत्॥
इमं पुण्यं पवित्रञ्च तटाकादिविधिं नरः।
खातयित्वा तटागानि स्वभावात् सत्त्ववर्जिताः॥
मानवः क्रीडते स्वर्गे यावदिन्द्राश्चतुर्दश।
एतद्विधानं विदधाति भक्त्या सर्वेषु खातेषु तड़ागकेषु।

सर्वैश्च कामैः परिपूर्णदेहो भुङ्क्ते धरित्र्यामपि सर्वभोगान् ॥
वदान्ति केचिद् वरुणस्य लोके प्रयाति लोकान् वरुणस्य कुक्षौ।
संपूज्यतां तत्र पुनर्धरित्र्यां नरेन्द्रतामेति पराशरोक्तिः ॥

इति श्रीबृहत्पाराशरीये शास्त्यध्याये वापीकूपतडागादि शान्तिविधिः समाप्तः।

---

अथातः संप्रवक्ष्यामि नरेन्द्राः! श्रूयतामयम्।
लक्षहोमविधिः पुण्यः कोटिहोमविधि स्तथा ॥
स्वयम्भूर्यमुवाच प्राक् अस्मत्तातपितामहः।
तमिमं संप्रवक्ष्यामि श्रूयतां पापनाशनम् ॥
ये चेह ब्राह्मणाः कार्य्याः भूमिर्यावत्तु मण्डपम्।
समिधो याश्च मन्त्राश्च अन्यच्च तत्र यद्भवेत् ॥
लक्षहोमविधिं विप्राः! कथ्यमानं निबोधत।
युग्माश्च ऋत्विजः कार्य्या ब्राह्मणा ये विपश्चितः ॥
नियमव्रतसम्पन्ना मण्डिताः पार्थिवेन तु।
नित्यं जपपराश्चैव नियोज्यास्तादृशा द्विजाः ॥
कन्दमूलफलाहाराः दधिक्षीराशिनोऽपि वा।
प्रागुदक् पूर्वदेशेषु समे स्थण्डिलमेव च ॥
तत्र वेदिं च कुर्वीत पञ्चहस्तसमन्वितम्।
दक्षिणोत्तर आयामे त्रिंशत्तु पूर्वपश्चिमे ॥
कुण्डानि खनितव्यानि अङ्गुल्या नैकविंशतिम्।
निधापयेद्धिरण्यञ्च रत्नानि विविधानि च ॥
सिकता परिदेया च तत्राप्यग्निं समिन्धयेत्।
आज्यभागाहुतीर्हुत्वा स्वाहया च कं.मयेत् ॥

अग्निं सोमञ्च सूर्य्यञ्च विष्णुञ्चैव प्रजापतिम्।
विश्वेदेवान् महेन्द्रञ्च मित्रं स्विष्टिकृतं तथा॥
दधिमधुघृताक्तानां समिधाञ्चैव यज्ञिनाम्।
होमयेञ्च सहस्रञ्च तत्र चैव यथाक्रमम्॥
चतुर्विंशति गायत्र्या मानस्तोकेति षड् तथा।
विंशच्छाभिमन्त्रैश्च चत्वारि विष्णुदैवतैः॥
कुष्माण्डैर्जुहुयाद्दश्च विकिरेद्दाश्च षोड़श।
जुहुयाद्दशसहस्राणि जातवेदस ईदृशे॥
पञ्चसहस्राणि जुहुयात् जुहुयादिन्द्रदैवतैः।
होमे शतसहस्रे तु अभिषेकन्तु कारयेत्॥
इन्द्राभिषेकं यत्प्रोक्तं तदुक्तापि शुभप्रदम्॥
अथवा षोड़शं कुम्भैः सहिरण्यैः समङ्गलैः।
सर्वौषधिसमायुक्तैः सर्वरत्नविभूषितैः॥
अभिषेकं ततस्तस्मिन् प्रधाना दक्षिणाः स्मृताः।
हयाश्वरथयानानि भूमिवस्त्रे युगानि च॥
अजञ्च गोशतं हेम ऋत्विग्भ्यश्चैव दक्षिणाम्।
वृषानेकादशैवाथ दश दद्याश्च धेनवः॥
अशक्त्या वा प्रदद्यादुगां वित्तशाठ्यं विवर्जयेत्।
एवं कृते तु यत्किञ्चिद् ग्रहपीड़ासमुद्भवम्॥
भौममाकाशजं वापि असद्वा यदि जायते।
तत्सर्वं लक्षहोमेन प्रशमं यात्यसंशयम्॥
शान्तिर्भवति पुष्टिश्च बलं तेजः प्रवर्द्धते।
दृष्टिर्भवति राष्ट्रे च सर्वोपद्रवसङ्क्षयः॥
इति श्रीहन्मारायरीये लक्षहोमविधिः सम्पूर्णः॥

अथातः सम्प्रवक्ष्यामि कोटिहोमविधिं द्विजाः ! ।
श्रूयतामादरेणायं सर्वकामफलप्रदः ॥
सानुष्ठाना द्विजाः प्रोक्ता ऋत्विजो यागकर्मणि ।
विधिज्ञाश्चैव मन्त्रज्ञाः सदाचारिरताश्च ये ।
कार्यश्चैव विशेषेण ग्रहयागविधिर्विदः ! ॥
एकाङ्गविकलो विप्रो धनधान्यापहारकः ।
सर्वाङ्गविकलो यस्तु यजमानं स हिंसति ॥
वर्ज्यः सर्वप्रयत्नेन विधिमन्त्रविदिद्द्विज ! ।
कार्यश्चैव विशेषेण यज्ञयज्ञस्य विद्द्विजैः ॥
ग्रहाः फलन्तु साङ्गाश्च सुराश्चैव नरेश्वराः ! ।
अधीर्ध्वं येच मन्त्राणां कृत्वा चाष्टोत्तरं शतम् ॥
स एव ऋत्विग्विज्ञेयः सर्वकामफलप्रदः ।
आवाहनीयो यत्नेन प्रणिपत्य मुहुर्मुहुः ॥
एवं कृते तु यत्किञ्चिद्दुष्टग्रहपीडासमुद्भवम् ।
तत्सर्वं नाशयेत्येश शतघ्नः सौहृदं यथा ॥
अष्टाच्छतगुणाः प्रोक्ताः कोटिहोमः स्वयम्भुवा ।
आहुतीभिः प्रयत्नेन दक्षिणाभिः फलेन च ॥
पूर्ववद्ग्रहदेवाना मावाहनविसर्जने ।
होममन्त्रास्त एवोक्ताः स्नानदानस्तथैव च ॥
मण्डपश्चैव वेद्याश्च विशेषञ्च निबोधत ।
कोटिहोमे चतुर्हस्तं चतुष्कस्तायतं पुनः ॥
योनिवक्त्रत्रयोपेतं तदप्याहुर्निमेखलम् ।
अङ्गुलोद्गतकार्याच प्रथमा मेखला बुधैः ॥
त्यङ्गुलैरुद्गतातद्वद् द्वितीया मेखला स्मृता ।

षडङ्गुले ऽखला या तु तृतीया चतुरङ्गुला ॥
द्व्यङ्गुलस्तत्र विस्तारः पूर्वयो रेव शस्यते ।
वितस्तिमात्रा योनिः स्यात् षट्सप्ताङ्गुलविस्तृता ॥
कूर्मपृष्ठोन्नतं मध्ये पार्श्वतश्चाङ्गुलोच्छ्रिता ।
गजोष्ठसदृशा तद्वदायामाच्छिद्रसंयुता ॥
एतत्सर्वेषु कुण्डेषु योनिलक्षणमुच्यते ।
मेखलोपरि सर्वत्र अश्वत्थपत्रसन्निभाम् ॥
वेदीच कोटिहोमे स्यान्मण्डपश्च चतुर्मुखः ।
पूर्वद्वारेऽपि संस्थाप्य बह्वृचं वेदपारगम् ॥
यजुर्वेदन्तथा याम्ये पश्चिमे सामवेदिनम् ।
अथर्ववेदं तद्वच्च उत्तरे स्थापयेद्बुधः ॥
अष्टौ तु होमकाः कार्या वेदवेदाङ्गवेदिनः ।
एवं द्वादशविप्राणां वस्त्रमाल्यानुलेपनैः ॥
पूर्ववत् पूजयेद्भक्त्या सर्वाभरणभूषितैः ।
रात्रिसूक्तञ्च रौद्रञ्च पावमानन्तु मङ्गलम् ॥
पूर्वतो बह्वृचः शान्तिं पठमानोह्युदङ्मुखम् ।
सौक्तं रौद्रञ्च सौम्यञ्च कूष्माण्डं शान्तिमेव च ॥
पाठयेद्दक्षिणे द्वारे यजुर्वेदिनमुत्तमम् ।
सौवर्णमथ वै राज्य माग्नेयीं रुद्रसंहिताम् ॥
ज्येष्ठसामन्तथा शान्तिं च्छन्दोगं पश्चिमे जपेत् ।
पञ्चभिः सप्तभिर्वाथ होमः कार्यश्च पूर्ववत् ॥
स्नाने दाने च मन्त्राः स्युस्तएव द्विजसत्तमाः ॥
वसोर्धाराविधानन्तु लक्षहोमवदिष्यते ॥
अनेन विधिना यस्तु ग्रहपूजां समाचरेत् ।

सर्वान् कामानवाप्नोति ततो विष्णुपुरं व्रजेत् ॥
यः पठेत् शृणुयाद्वापि ग्रहयागमिमं नरः ।
सर्वपापविशुद्धात्मा पदमैन्द्रं स गच्छति ॥
अश्वमेधसहस्राणि दश चाष्टौ च धर्मवित् ।
कृत्वा यत् फलमाप्नोति कोटिहोमात्तदश्नुते ॥
ब्रह्महत्यासहस्राणि भ्रूणहत्यार्बुदानि च ।
नश्यन्ति कोटिहोमेन स्वयम्भूवचनं यथा ॥
प्रपेदिरे तस्य पितामहाद्याः शुभेषु पापेन गरीयसा तान् ।
उद्धृत्य नाकं स नयेद्धि सर्वान्यो लक्षहोमे नृपतीरतः स्यात् ॥
राष्ट्रं मनोवाञ्छितहृष्टपुष्टं धान्यैश्च रत्नैः पशुभिः समेतम् ।
निर्द्वन्द्वनीरोगमदस्यु तस्माद्भूयो लक्षकोटीहवनं विदध्यात् ॥
यो लक्षहोमं विदधाति भूभृत् तदव्यलक्षं शतहोमकः स्यात् ।
प्रत्यब्दमाप्नोति स दीर्घमायुर्भुङ्क्ते सपत्नान् विजयें धरित्रीम् ॥
यो ब्रह्मघाती गुरुदारगोऽपि ग्रामाविदाहोद्भवपापयुक्तः ।
राजा स मुक्तः शतलक्षहोमाग्निः शेषपापैर्विबुधत्वमेति ॥
तस्मात्तदा भूपतयो विदध्युर्वृष्टीः प्रजासौख्यबलस्य पुष्ट्यै ।
आयुःप्रवृद्ध्यै विजयाय कीर्त्त्यै लक्षस्य होमे ग्रहयोगमेतम् ॥
इति श्रीबृहत्पाराशरीये कोटिहोमः सम्पूर्णः ॥

---

अथो अन्यत्प्रवक्ष्यामि विधिम्स्नवनमुत्तमम् ।
अश्वत्थातप्रतातोऽयं रघुपुत्राय धीमते ॥
अनपत्यस्य पुत्रार्थं कुर्याद्वैभाण्डिकं स्वयम् ।
सहस्रमीर्मन्त्रस्य विधानश्रपाककम् ॥

यैर्यैः कृतं नृपैः पूर्वैरन्यैरपि द्विजोत्तमैः ।
उपार्जितन्तु सङ्गत्या श्रोत्रियैर्वेदपारगैः ॥
आत्मविद्भिर्निराहारैर्व्रीहिभिर्मन्त्रउत्तमैः ।
क्रियमाणाः क्रियाः सर्वाः सिध्यन्ति व्रतचारिभिः ॥
न पाठाच्च धनात् ध्यानात् नाम्नः प्रतिपादनात् ।
प्रोक्तस्य कर्मणः पुंसां सर्वा भवन्ति सिद्धयः ॥
शुक्लपक्षे शुभे वारे शुभनक्षत्रगोचरे ।
द्वादश्यां पुत्रकामाय संकुर्वन्ति च वैष्णवम् ॥
दम्पत्योरुपवासश्च ह्येक दश्यां सुरालये ।
ऋग्भिः षोडशभिः सम्यगर्चयित्वा जनार्दनम् ॥
चरुं पुरुषसूक्तेन श्रपयेत् पुत्रकाम्यया ।
प्राप्नुयाद्वैष्णवं पुत्रं चिरायुः सन्ततिक्षमम् ॥
द्वादश्यां द्वादश सम्यग्विधिवन्निर्वपेच्चरून् ।
यः करोति दृढायाति स विष्णोः परमं पदम् ॥
हुत्वाज्यं विधिवत्पूर्वं ऋग्भिः षोडशभिस्तथा ।
समिधोऽश्वत्थवृक्षस्य हुत्वाज्यं जुहुयात् पुनः ॥
उपस्थानं ततः कुर्यात् ध्यात्वा च मधुसूदनम् ।
हविर्होमं पुनः कृत्वा जुहुयाच्च घृताहुतीः ॥
हविःशेषं नमस्कृत्य नारी नारायणं पतिम् ।
संप्राश्य च हविःशेषं लघ्वासीत वसेद्गृहे ॥
ततः स्नात्वा इदं कर्म कर्त्तव्यं द्विजतर्पणम् ।
रजः स्त्रीषु निवर्त्तेत यावद्गर्भं न विन्दति ॥
प्रसूता मृतपुत्रा वा यावत्कन्या प्रसूयते ।
क्षिप्रं सा जनयेत् पुत्रं पराशरवचो यथा ॥

होमान्ते दक्षिणान्दद्यात् धेनुं वासस्तथा तिलान् ।
भूमिं हिरण्यं वस्त्राणि यथासम्भवमेव वा ॥
यः सिद्धमन्त्रः सततं द्विजेन्द्राः! संपूज्य विष्णुं विधिवत्सुतीर्थे।
इमं विधानं विदधाति सम्यक् स पुत्रमाप्नोति हरेः प्रसादात् ॥
इति श्रीबृहत्पाराशरीये शान्त्यध्याये पुत्रकामोऽयं पुरुषसूक्तविधिः सम्पूर्णः ॥

अथातः सम्प्रवक्ष्यामि ग्रहमन्त्रोऽधिदैवतम् ।
आर्षच्छन्दश्च यज्ज्ञानात्कर्म स्यात्समलङ्कृतम् ॥
आकृष्णेनेति मन्त्रेऽस्मिन्दैवत्यं सविता मतम् ।
ऋषिर्हिरण्यरूपाख्यं त्रिष्टुप्छन्दः प्रकीर्तितम् ॥
आप्यायस्वेति सोमोऽत्र दैवतं गौतमो मुनिः ।
गायत्रीच्छन्द उद्दिष्टं विनियोगो यथोदितम् ॥
अग्निमूर्धेति मन्त्रोऽत्र दैवतां भौममुच्यते ।
विरूपाक्षो मुनिर्धीमान् छन्दोगायत्र्य मिष्यते ॥
उद्बुध्यस्वेति मन्त्रस्य बुधश्चैव तु दैवतम् ।
मुनिर्बुधश्च मन्त्रस्य त्रिष्टुप्छन्दः प्रकीर्तितम् ॥
शुक्रत्वमिति होत्यत्र शुक्र इत्यधिदैवतम् ।
शुक्रस्यापि तथार्षञ्च विराट्छन्दः प्रकीर्तितम् ॥
शन्नो देवीतिचेत्यत्र शनिदैवत मुच्यते ।
सिन्धुर्नाम मुनिर्विद्वान् छन्दोगायत्र्य मुच्यते ॥
काण्डात्काण्डादिभिर्मन्त्रस्य राहुदैवत मुच्यते ।
ऋषिः प्रजापतिः प्रोक्तोऽनुष्टुप्छन्दः प्रकीर्तितम् ॥
केतुं कृण्वन्निति प्रोक्तं दैवतं केतुरेव हि ।
मधुच्छन्दस आर्षञ्च गायत्र्यं छन्द एव हि ॥

स्योना पृथिवीत्यत्र छन्दस्य देवता स्मृता।
इन्द्रकुत्सेति दैवत्य मिन्द्र एव स्मृतो बुधैः॥
आर्षन्तत्स्वस्य चापुत्र त्रिष्टुप्छन्दः प्रकीर्तितम्।
यस्मिन्वृचेति चात्यत्र यमोवै देवता परा॥
ऋषिस्तु कुशलो नाम छन्दोऽनुष्टुप् स्मरेद्बुधः।
ब्रह्मजज्ञमित्यत्र च कालो दैवतकं महत्॥
मुनिर्यमानतुर्नाम त्रष्टुप्छन्दो विधीयते।
आयाते मेतिच ह्यस्यां चित्रगुप्तस्तु दैवतम्॥
आर्षन्तु वामदेवस्य त्रिष्टुप्छन्दो ह्ययो बुधैः।
अग्निं दूतमितिह्यं स्यादग्निर्वै देवता स्मृता॥
आर्षं मेधातिथेरत्र छन्दोगायत्र्यमेव हि।
अस्यस्तु सोम इत्यत्र सोमं वैदैवतं स्मरेत्॥
मेधातिथिरिहाप्यर्कोऽनुष्टुप्छन्दश्च उच्यते।
भूतिपृथिव्यन्तरिच्च मित्यत्र दैवतं चिंतितः॥
ऋषिः शातातपः स्मृत्वा छन्दश्चानुष्टु कुवुष्यते।
पुरुषसूक्तस्य दैवत्यं पुरुषेच हितं बुधैः॥
आर्षं नारायणस्येह छन्दस्यानुष्टुवित्यपि।
इन्द्रोपेन्द्रौ मरुत्वन्तो मरुत्वान्दैवतं महत्॥
आर्षन्तु काश्यपस्येह गायत्र्यच्छन्दएव हि।
मरुत्वनित्यत्रबुधैः सुरेन्द्रो देवता मता॥
अत्रापि कश्यपस्यार्षं गायत्र्यच्छन्दएव हि।
उत्तानपर्ण मित्यत्र इन्द्रो दैवत मुच्यते॥
आर्षं साङ्ख्यस्य चैवोक्तम् अनुष्टुप्छन्द इत्यपि।
प्रजापते इति ह्यत्र देवता च प्रजापतिः॥

हिरण्यगर्भस्यार्षन्तु त्रिष्टुप्छन्दो मतं बुधैः।
आयं गौरिति चात्र देवता पूजने मता॥
सर्पराजमुनिश्चात्र गायत्र्यं छन्द इष्यते।
एष ब्रह्मा ऋत्विज इति ब्रह्मद्विषोऽधिदैवतम्॥
ऋषिर्वै वामदेवोऽत्र गायत्र्यच्छन्द इष्यते।
आत्मन्वन् इन्द्र इन्दत् सुरेन्द्रं शर्मणोश्वरः॥
वामदेवोह्यस्य आर्षं गायत्र्यच्छन्द इत्यपि।
जातवेदस इत्यत्र जातवेदास्तु दैवतम्॥
कश्यपस्यार्षमत्रापि छन्दोऽनुष्टुप् प्रकीर्तितम्।
आनोनियुद्भिरित्यस्मिन् वायु दैवतमुच्यते॥
आर्षञ्चात्र वसिष्ठस्य अनुष्टुप्छन्द एव हि।
नमः प्रकाशदैवत्यं मुनिप्रोक्तं प्रजापतिः॥
गायत्र्यं छन्दसाञ्चरं विनियोगो यथोचितम्।
ईषो ऊर्जेति चात्यत्र अश्विनौ दैवते स्मरेत्॥
प्रस्कण्वस्यार्षमत्रापि गायत्र्यच्छन्द उत्तमम्।
मरुतो यस्य हिक्षस्य मरुद्दैवत मुच्यते॥
गौतमश्च मुनिर्विद्वन्! छन्दसः प्रथमं मुने!।

दैवत्य मार्षं सह च्छन्दसा यो मत्वा द्विजाग्राक्रुरुते विधानम्।
वेदोक्तमर्थं भवतिस्म सर्वं सम्यक्फलं कर्त्तुमिहाप्यमुत्र॥
यो लक्षहोमं त्वथ कोटिहोमं राजा विदध्यात्प्रतिवर्षमेकम्।
राष्ट्रे सुवृष्टिर्विजयः सुभिक्षम् आरोग्यता स्यात् सुकृतस्य वृद्धिः॥
भवन्ति पुत्राः शुभसन्ततिक्षमाश्चिरायुषो राजहिता धरित्र्याम्।
सुकीर्तिमन्तो जयिनोऽपि राज्ये प्रतापवन्तो रविचन्द्रतुल्याः॥
इति श्रीवृहत्पाराशरीये शान्तिविधिर्नाम नवमोऽध्यायः।

# दशमोऽध्यायः।

अथातो नृपतेर्धर्मं वक्ष्यामि हितकाम्यया।
पराशरोदितं विप्रा! वक्ष्यमाणं निबोधत॥
भूभृत् भूमा परो देवपूज्योऽसौ परदेवकः।
स विधाता च सर्वस्य रक्षिता शासितापि च॥
इन्द्रादित्यमवित्तेशवारीशमातरिश्वनः।
शीतांशुस्तीव्रभासश्च ब्रह्मादयो हि जो नृपः॥
नृपो वेधा नृपः शम्भु र्नृपोऽर्को विष्टरश्रवाः।
दाता हर्त्ता नृपः कर्त्ता नृणां कर्मानुसारतः॥
नाघृक्ष्येद्यदि राजानं दण्डं नाप्याचरिष्यतः।
नामास्या स्समेष्यतिच नाभविष्यज्जगत्स्थितिः॥
नाग्रहिष्यन् पुरोडाशामनुष्यपितृदेवताः।
नाभविष्यत् स्वकाकानां भागधेयं हुतं हविः॥
निगुणोऽपि यथा पूज्यः स्त्रियाश्च सत्पतिर्भवेत्।
तथा राजा प्रजानान्तु पूज्यः स्याद्विगुणोऽपि सन्॥
स्वधर्मस्थान् नृपो लोका नन्यान् पुत्रानिवौरसान्।
शास्य धर्मविदोदण्ड मधर्मकारिणश्च तान्॥
दण्डधृतो नरान् कुर्य्याद्धर्मज्ञानार्थसाधकान्।
समर्थानश्वपत्यादौ शूरान् स्वामिहितोद्यतान्॥
शुचीन् प्रज्ञांश्च धर्मज्ञान् विप्रान् मुद्राकराङ्कितान्।
लेखकानपि कायस्थान् लेख्यकृत्तु हितैषिणः॥
अमात्यान्मन्त्रिणो दूतान्ययोदितपुरोहितान्।
प्राड्विवाकं समस्तान्वा हितांश्च रक्षकानपि॥

शूरानथ शुचीन् प्राज्ञान् परिविश्वासकारिणः।
सर्व्वस्थानेषु चाध्यक्षं सतकृत्य वेदिनोऽपरे ॥
मदायत्तं कुमाराणां मन्तःपूरुषलक्षणम्।
वृद्धानशुचिनो विप्रां स्त्रुचीननघान् भीरुकान्।
यथोदितानि दुर्गाणि कुर्य्युस्ते परिरक्षणम् ॥
उद्वाहमुदितं स्त्रीणां यौवने बन्धुकारणात्।
पुरस्कृत्य च विज्ञान मात्मरक्षा च यत्नतः ॥
प्रातः सन्ध्यार्चनादूर्द्ध्वं गुडं पुंसवनं स्मृतम्।
यथोक्तकार्य्यं श्राद्धे च नित्यं कुर्य्यात् परीक्षणम् ॥
कोशेभाश्वरथादीनां क्षेतीनां वर्मणामपि।
कुर्य्याच्च दर्शनं नित्य मतन्द्रितो महीपतिः ॥
अमात्यमन्त्रयोक्तृणां सम्यक्तं नित्यशोऽपि च।
वेदार्थश्च सदा होमशान्तिश्च वृद्धसेवनम् ॥
अन्नदानं तथोत्पातं समये शान्तयोऽपि च।
वर्जनं विषयासक्तो भूमिदानस्य शासनम् ॥
अग्निवर्जितदेशे तु नीतिज्ञो मन्त्रवद्भवेत्।
नित्यमुत्साहयुक्तः स्याद् विजिगीषु रुदायुधः ॥
सदालङ्कारयुक्तश्च सदैव प्रियवाक्चयः।
सदाप्रियार्चिते युक्तः पूज्यो नाकेऽप्यसौ नृपः ॥
सदा साधुषु सम्मानं विपरीतेषु घातनम्।
दण्डं दण्ड्येषु कुर्वाणो राजेष्टिफलमश्नुते ॥
वृद्धान् साधून् द्विजान् मौलान् यो न सम्मानयेन्नृपः।
पिण्डं कुर्व्वीत नारीणां भूभृत् क्षिप्रं क्षयं व्रजेत् ॥
यस्तु सम्मानयेदेतान् नित्यं विप्रांश्च पूजयेत्।

पराजयेत सोऽरातीनजेयोऽप्यपि जायते ॥
पीड्यमानाः प्रजा रक्षेत् कायस्थैश्चोरतस्करैः।
धाम्ये तु हयतोयैश्च सम्पन्नं परमण्डलम् ॥
हीनवाहनपुंस्कन्तु मत्वा तत्प्रविशेन्नृपः।
मासे सहसि यात्रार्थी कृतपुण्यश्च घोषवान् ॥
विधिवद्दूयानकं कुर्य्यात् सहायै रक्षयेद्बलम्।
यत्राचलशरीरत्वा हृदरक्षा तु यत्र तु ॥
वासं तत्र विधायैव रात्रौ रक्षेद्बलं स्वकम्।
चतुर्दिक्षु च सैन्यस्य शूरान्धनुर्धरान्निधि ॥
स्वयं राजा नियुञ्जीत समीक्ष्य भूबलाबलम्।
राज्यस्य षड्गुणान् मत्वा सन्धिविग्रहयानकान् ॥
आसनं संश्रयं द्वैधं सम्यक्ज्ञात्वा समाचरेत्।
निर्भेदं स्वबलं कुर्य्यात् हन्याच्च भिन्नचेतसा ॥
दासीकर्मकरान् दासान् भिद्यन्ते न चरेन्नृपः।
निकटस्थायिनो नित्यं जानन्ति चेष्टितं प्रभोः ॥
तस्मात्ते यत्नतो रक्ष्या भेदमूलं यतस्त्वमी।
ये ते परस्य यत्नेन भेदनीयास्ततोऽपरे ॥
यथा परो न जानाति तथा भेदं समाचरेत्।
परमात्मविधानानां व्यलीकछलशङ्कितम् ॥
उत्थापयेत् स्वसेनायाः स्याद्यताचित्तभेदिनः।
परसैन्ये बहून् पातान् विविधान् कुहकानपि ॥
करीषाङ्गारदानादि वह्निपातानेकशः।
स्वसैन्येऽभवदित्यादि नृपो यत्नेन रक्षयेत् ॥
नियुज्य यष्टि पुरुषान् नक्तं सर्वं निशामयेत् ॥

अन्तर्भौकन् वहि: शूरान् साग्निकान् ब्राह्मणोत्तमान् ।
धर्मज्ञान् कुलसम्भूतान् विदध्यादात्मसन्निधौ ॥
प्रविशेत्परदेशे तु प्रजां स्वीकृत्य संविशेत् ।
उत्साद्यं मार्गतो दूरीकृत्वापि मार्गतो व्रजेत् ॥
शस्यानि दाहयेत्सर्वं सयवानि धनानि च ।
भिन्द्यात्सर्वं निपानानि प्राकारं परिखां तथा ॥
अगमत्युमुपादाय भूमिसाधारणं पुन: ।
गमयेद्वार्षिकान् मासानसौ च वसुधानृप: ॥
न युद्धमाश्रयेत् प्राज्ञो न कुर्य्यात् स्वबलक्षयम् ।
न प्रभेदेन दानेन त्रिभिरेवं वशं नयेत् ॥
वदन्ति सर्वे नीतिज्ञा दण्डस्यागतिका गती: ।
तद्वशं वशमायाति यथा रिपुस्तथा श्रयेत् ॥
आक्रान्ता दर्भसूच्योऽपि विद्युदुम्टश्रोपपातनम् ।
न तापित युक्ते च युद्धसिद्धौ चरसिद्धिवत् ॥
स्वस्थस्यात्ययिके देशे युद्धमिच्छेत् स्वधर्मवित् ।
तत: प्रविश्य तद्दूरं भूमियुद्धं समारभेत् ॥
किञ्चित् सुप्तेषु लोकेषु क्षपायां यद्वसुत्सृजेत् ।
सञ्चीरवासतोवापि पीड़येत्परसैन्यकम् ॥
व्यूहैर्व्यूहयथोक्तैर्वा रक्षां कृत्वापि चात्मन: ।
सैन्यकांस्तान् समस्तांश्च नृपो युद्धाय प्रेषयेत् ॥
समानयेत् समस्तांश्च यो वसेदायतौ नृप: ।
अभिवाञ्छन् जयलक्ष्मीं तु नीतिज्ञ: पृथिवीपति: ॥
प्रयाशेनापि पत्त्या च शस्त्रास्त्रोऽपि च मानव: ।
पुष्पैरपि न युद्धेत युद्धं तत्र विपत्तये ॥

हीनं परबलं मत्वा निरुत्साहमनादरम् ।
समस्तबलसंयुक्तः स्वयमुत्थाप्य योधयेत् ॥
न हन्यान् मुक्तकेशस्तु नाशयेन्न निरायुधम् ।
पराङ्मुखश्च प्रहतं न तवास्मीति वादिनम् ॥
अन्यानपि च विद्वांश्च न हन्यात् धर्मयुद्धकृत् ।
हन्याच्चेन्नरकं याति भ्रूणहत्यासमेनसा ॥
पराङ्मुखीकृते सैन्ये यो युद्धाच्च निवर्त्तते ।
तत्पदानीष्टितुल्यानि भूत्यर्थमेकचेतसः ॥
शिरोहतस्य ये वक्त्रे विशन्ति रक्तविन्दवः ।
सोमपानेन तत्तुल्या इति वसिष्ठोऽब्रवीत् ॥
युद्धन्ते भूभृतो येच भूम्यर्थमेकचेतसः ।
इष्टैस्तैर्बहुभिर्योगैरेवं यान्ति त्रिविष्टपम् ॥
येषु एवापरो धर्मो नृपतेर्यद्रणार्जितम् ।
वित्तन्दीयेत विप्रे स्यात् प्रजाभ्यश्चाभयं सदा ॥
तदा तु वशतां याति स देशो न्यायतोऽर्जितः ।
तद्देशव्यवहारेण यथावत्परिपालयेत् ॥
रणार्जितेन वित्तेन राजा कुर्य्यान्मखान् द्विजान् ।
अर्चयेद्विविधैर्विद्वान् सताम् सम्मानयेदपि ॥
मातुलः श्वशुरो बन्धु रम्यो वापिच यो जितः ।
अदण्ड्यः कोऽपि नो राजा राजनीतिविदो विदुः ॥
सुसहायमशपादं शूरं प्रज्ञानुरागदम् ।
सोत्साहं विजिगीषुश्च भूभृत् क्षिप्रं निवेदयेत् ॥
मत्वाचार्थवतः सर्वान् नियुक्तार्थनियुग्भवेत् ।

सार्थकांश्चैव युञ्जीत सर्वतोऽर्थमुपार्जयेत् ॥
सर्वाण्यपि च वित्तानि यतस्ततोऽपि राजनि ।
नृपस्य यदि जातानि देवद्रव्याणि कोशवत् ।
आदाय रक्ष चात्मान ततस्तत्र च तत् क्षिपेत् ॥
वित्तं वार्द्धुषिकाणान्तु कदर्यस्यापि यद्भवेत् ।
पाषण्डिगणिकावित्तं हरन्नातो न किल्बिषी ॥
देवब्राह्मणपाषण्डिगणिका गणिकादयः ।
वणिग्वार्द्धुषिकाः सर्वे स्वस्थे राजनि सुस्थिताः ॥
सप्तार्चिश्वाश्वगोमांसान् यस्य हन्त्यकिल्बिषी ।
गृह्णीयात् सर्वतो राजा करान् यः पीडयेत् प्रजाः ॥
स्तोकं स्तोकन्तु फलकं मांसं भुङ्क्ते चिरन्तराम् ।
सदा चोद्यमिना भाव्यं नृपेण विजिगीषुणा ॥
विजिगीषुनृपो नान्यैः कदाचिदभिभूयते ।
तदैवं हृदि सन्ध्यायन् नित्यमाढ्यो नृपो भवेत् ॥
दैवपूरुषसंयोगे सर्वाः सिध्यन्ति सिद्धयः ॥
नैकेन चक्रेण रथः प्रयाति नचैकपक्षोऽङ्ग ! चयाति पक्षी ।
एवं हि दैवेन च केवलेन पुंसोऽर्थसिद्धिं नरकारतो वा ॥
केचिद्धि दैवस्य तु केवलस्य प्राधान्यमिच्छन्ति विधिप्रवीणाम् ।
पुंस्कारयुक्तस्य नरस्य केचिदप्यत दृष्टा पुरुषार्थसिद्धिः ।
अत्युद्यमी क्रियतएवच यः श्रमी च
शौर्य्यान्वितश्च गुणवांश्च सुधीश्च विद्वान् ।
प्राप्नोति नैव विधिना स पराङ्मुखेन
स्वीयोदरस्य परिपूरणमन्नमात्रम् ॥

शुभानि हर्म्याणि वराङ्गनाश्च नानाप्रकारो विभवो नरस्य ।
उर्वीपतित्वञ्च शृङ्गारता च सर्वं हि मन्ये क्षयमेति दैवात् ॥
केषां हि पुंसां महतो हि दैवात् स्थानस्थितानामपि चार्थसिद्धिः ।
एषां प्रभुत्वं बहुजीविताच एको हि दैवो बलवानतोऽत्र ॥
पुंस्त्रीप्रयोगादथ युक्तयोगात् तयोर्हि मध्ये विदधाति गर्भम् ।
स्त्रीणान्तु तत् विप्र! नचापि पुंसां सर्वाणि चैषां मनुजेश्वरत्वम्
कासान्तु गर्भस्य न सम्भवोऽस्ति कासान्तु शुक्रं नतु वीर्य्यहीनम् ।
अथस्त गर्भोऽपि जहाति गर्भं काचिच्च गर्भं न विभर्ति दैवात् ॥
धाता विधाता निजकर्मयोगाद् विधेस्वभीष्टं त्वनुभावभाव्यम् ।
देवासुराणां नच दैत्यकानां स ह्येव कर्त्ता तु मनुष्यकानाम् ॥
दैवाम्बुधेनापि सहस्रमत्स्यां दैवाद्द्विमांशोः क्षयरोगता च ।
दैवात्पयोधौ लवणोदकत्वं दैवाद्रवेश्चित्रतरा च दृष्टिः ॥
यद्यप्यसुख्यं न परोऽस्ति दैवात् कुर्य्यात्तथापीह नरो शृङ्गारम् ।
उद्दीपयेत्कर्मकरो शृङ्गाराद्दुद्दीपितं श्रीरिवचै तनोति ।
दैवेन केचिच्च हठेन केचित् केचिन् शृङ्गारेण नरस्य चार्थाः ।
सिध्यन्ति यत्नेन विधीयमाना स्तेषां प्रधानं नरकारमाहुः ॥
स्वामिप्रधानं नयदुर्गकोषान् दण्डञ्च मित्राणि च नीतियज्ञाः ।
अङ्गानि राज्यस्य वदन्ति सप्त सप्ताङ्गयुक्तो नृपतिर्धराभुक् ॥
दुष्टंतसहृत्तनरेषु दण्डं राज्ञा विधेयं निपुणार्थसिद्ध्यै ।
दण्डश्च मत्याऽर्जितवित्तसम्वात् हीनार्थं पुंसाश्च दमन्ति हीनम् ।
अन्यायतो ये जननं जनेश्वराः संपीड्य वित्तानि हरन्ति लोभात् ।
तत्क्रोधवह्नि परिदग्धकायाः क्षीणायुषस्ते तु भवन्ति भूपाः ।
दण्डो महान्मध्यकमन्यशस्तु मानन्तु तस्य त्रसरेणुकादि ॥
साशीति साहस्रपणमहान् स्यादर्धादिके चैव तदर्धको वा ।

सर्वार्थपादस्य हरस्य दण्डः पात्यो नृपेणेति वदन्ति सन्तः॥
पारुष्यादिपरिच्छेदनमारणञ्च निर्वासनं राष्ट्रत एव सद्यः।
ज्ञात्वापराधं मनुजस्य यस्तु देशञ्च कालञ्च वयोवपुश्च॥
दण्ड्येषु दण्डं विदधाति भूभृत्साम्यं स बध्नाति पुरन्दरस्य।
यः शास्त्रदृष्टेन यथा नरेश्वरो दण्डं विदध्याद्विधिवत्करांश्च॥
स चैवकीर्तिर्वितनोति सुर्वीरायुश्च दीर्घं दिवि देवभोगान्।
यस्तूक्तमार्गाणि कुलानि राजा श्रेणीश्च जातीश्वरतांश्च लोकान्॥
आमीय मार्गे विदधाति धर्मे नागेशगीर्वाणगणैः प्रशस्तम्।
अन्यच्च वह्निर्जलवित्तनाथशीतांशुरूपाणि ह बिभ्रतीह॥
सर्वे च भूपस्त्विह रूपकञ्च तत्कथ्यमानं शृणुत द्विजेन्द्राः!।
यदा जिगीषुर्धृतशस्त्रपाणिः श्रियं समालम्ब्य स विद्वसैन्यः॥
सर्वान् सपत्नांश्च स हन्तुकामस्तदास्वयंश्च इवावभाति।
आकारणात्कारणतोऽपि एष प्रजा हतेयं स सवह्निकीर्तिः॥
यदा तदैनं नृपतीति विज्ञास्तनूनपात्सं प्रवदन्ति भूपम्॥
धर्मास्त्रनस्त्वश्रुतिशास्त्रदृष्टाः शुभाशुभाचारविचारदक्षात्॥
धर्म्येषु दानं त्वपकृत्सु दण्डं यदावनीशः सच धर्मराजः।
धनप्रदानेन करोति हृष्टा भूभृत्तदासान्द्रविणेशवश्यान्॥
समस्तशीतांशुगुणप्रयोक्ता यदायदामेष शुभाय शास्येत्।
प्रसन्नमूर्तिर्गतमत्सरः सन् तदोच्यते सोम इव क्षितीशः॥
आज्ञा नृपाणां परमं हि तेजो येषां न मन्ये त समस्तवश्यः।
ब्रूयाच्च कुर्याच्च वदेच्च भूभृत्कार्यन्तदेवं भुवि सर्वलोकैः॥
दुर्धर्षतीक्ष्णांशुसमानदीप्तो ब्रूयान्मनुष्यः परुषं नृपस्य।
यस्तस्य तेजोऽप्यवमन्यमान्यः सद्यः स पश्चत्व मुपैति पापात्॥

योऽक्षाय सर्वं विदधाति पश्येत्
शृणोति जानाति चकास्ति शास्ति।
कस्यापि चाज्ञां न बिभर्ति राजा
समस्तदेवांशभवो हि यस्मात्॥
यः स्वधर्मे स्थितो राजा प्रजां धर्मेण पालयन्।
सर्वकामसमृद्धात्मा विष्णुलोक मवाप्नुयात्॥
इति श्रीहन्त्याराशरीये राजधर्मः सम्पूर्णः।

---

अथ विप्रो वनं गच्छेद्विना वा सह भार्यया।
जितेन्द्रियो वसन्नेव नित्यशौचाग्निकर्मकृत्॥
वन्यैर्मुन्यन्नैर्मेध्यैः श्यामनीवारकङ्गुभिः।
कन्दमूलफलैः शाकैः स्नेहैश्च फलसम्भवैः।
सायं प्रातश्च जुहुयात् त्रिकालं स्नानमाचरेत्॥
चर्मचीरवासा वै श्मश्रुलोमजटाधरः।
पितॄंश्च तर्पयेन्नित्यं देवांश्चाजस्रमर्चयेत्।
अर्चयेदतिथीन् नित्यं भृत्यांश्चापि प्रपोषयेत्॥
न किञ्चित् प्रतिगृह्णीयात् स्वाध्यायेनैत्यमाचरेत्।
सर्वसत्त्वहितोपेतो दान्तश्चाध्यात्मचिन्तकः॥
सम्यक्स्वान्तको नित्य दानशीलः सदा द्विजः।
किञ्चिद्देहं समाश्रित्य स वृत्त्या वर्तयेत्सदा॥
एकादिकासु कुर्वीत मासैकार्थसञ्चयम्।
षाण्मासिकञ्चाब्दिकञ्च यथार्थं च वने वसेत्।
त्यक्त्वा तदाश्विने मासि चान्य स्थानं समाचरेत्॥
यथावदग्निहोत्रं तु समिधाग्नौ च पालयेत्।

कृच्छ्रचान्द्रपराकाद्यैः पक्षमासोपवासकैः ॥
त्रिरात्रैर्वैकरात्रैश्च आश्रमस्थः क्षपेत्तनुः ।
तिष्ठन्नाव्रतिकस्तत्र स्वपेद्वस्तथा निशि ॥
अतन्द्रितो भवेन्नित्यं वासरं प्रपदैर्नयेत् ।
योगाभ्यासरतोनित्यं स्थानासनविहारवान् ॥
वसन्तग्रीष्मवर्षासु जलाग्न्याकाशमाश्रयेत् ॥
दन्तोलूखलिको वापि कालपक्वभुगेव च ।
स्यादश्मकुट्टकोविप्र. फलस्नेहैश्च कर्मकृत् ॥
शत्रौ मित्रे समः स्यात्तु तथैव सुखदुःखयोः ।
समदृष्टिश्च सर्वेषु न विशेद्वनगह्वरम् ॥
म्लेच्छव्याप्तानि सर्वाणि वनानि हि कलौ युगे ।
न भूयः शासितारस्तु ग्रामोपान्ते वसेदतः ॥
ग्रामाच्च नगराद्दीर्घात्तथारण्यवनानि च ।
नित्यं संरक्षिताश्चैव सर्वेषां फलदानि हि ॥
भूपतेः प्रथमं तत्स्यात् कृत्यं शंसेद्द्विजाग्रतः ।
यागं वाऽरण्यवासं वा कुर्यात्तु तदनुज्ञया ॥
सुत्रामानलवायूनां यमस्येन्द्रविवस्वताम् ।
यदा वित्तेशयोर्ब्रह्मा मात्राभ्यो निर्ममौ नृपम् ॥
पारत्रिकं तु यत्किञ्चित् यत्किञ्चिदैहिकं तथा ।
नृपाज्ञया द्विजातीनां तत्सर्वं सिध्यति ध्रुवम् ॥
नृपतेः प्रथमं न स्यात् स वै द्विज ! मखादिकम् ।
रक्षार्थं कथयित्वा तु यथाकार्यं समापयेत् ॥
धेनुपूर्वं वशिष्ठस्य व्यासो दुर्वाससोऽपि च ।
वनवासाश्रमस्थस्य ह्यग्निकार्याय ताम्रयेत् ।

मलक्लेशाय दानस्य कालवैगुण्यतो द्विजः॥
तथा गोदुग्धसर्पिष्य मग्निकार्यं समापयेत्।
सर्वकालेषु सर्वेषु तथा चैवाश्रमेषु च॥
गोदुग्धादि पवित्रं स्यात् सर्वकार्येषु सत्तमाः!॥
सर्वकार्येषु सर्वेषु भिक्षां कुर्याद्वनाश्रमी।
तथा सर्वे प्रकुर्वन्ति पितृदेवार्चनादिकम्॥
अष्टौ भुञ्जीत वा ग्रासान् ग्रामादाहृत्य यत्नवान्।
आश्रमः संशयं गच्छेदनिलां प्रागुदीचिकाम्॥

विप्रोविधाय वनवासविधेयधर्मान्
सर्वानिमानुक्तविधिक्रमेण।
संशुद्ध पापानि वपु र्विशोध्य
ब्रह्माधिगच्छेत् परमं द्विजेन्द्रः॥

आश्रमत्रयधर्मात् प्राक् चरित्वा ते द्विजातयः।
द्वयोश्च वा ततः पश्चाच्चतुर्थाश्रममाचरेत्॥
द्विजाग्रजो यदा पश्येद्वलिं पलित मात्मनः।
उपरतिं तथाचाप्यां मोक्षकामः स्वै द्विजः॥
समीक्ष्य पुत्रपौत्रं वा दृष्ट्वा वा दुहितुः सुतम्।
अधीत्य विधिवद्वेदान् कृत्वा यागविधानताम्॥
निश्चयं मनसा कृत्वा चतुर्थाश्रममाचरेत्।
प्राजापत्यं विधायेष्टिं वनाद्वासमनोऽपिवा॥
समस्तदक्षिणायुक्तां सर्ववेदास्त्रशास्त्रवान्।
अग्निनात्मनि चारोप्य दण्डान्विधिवदाचारेत्॥
किञ्चिच्छ्रेष्ठं समाश्रित्याय तद्धर्मेण च वर्त्तयेत्।
वाङ्मनःकायदण्डांश्च तथा सत्त्वादयो गुणाः॥

सुमुख्यो नियतो यस्य स त्रिदण्डीति कथ्यते।
कमण्डलुस्त्वक्षमालाच भिक्षापात्र मथापरम्॥
काषायवासःकौपीनकार्यार्थं वस्त्रमेव च।
शिखायज्ञोपवीतञ्च दण्डानां त्रितयं तथा॥
द्विकालविधिवत् स्नानं भिक्षया चापि भोजनम्।
शुद्धेकष्टत्तिविंप्रेषु सत्कर्मं निरतेषुच॥
भिक्षाचर्य्योयतिः प्रोक्तो वृत्तवर्जन्तथैव च।
असंभाष्यं स्वशून्येच तथाच शिल्पकारुभिः॥
अवलत्यं तथा स्त्रीभिरेतत्कृत्यं यतेः स्मृतम्।
सर्वदा दम्भसंरोधो नित्यमेकान्तशीलतः।
सदैव प्राणसंरोधः सदैवाध्यात्मचिन्तनम्।
मृद्वेणुदार्वलाब्वश्ममयं पात्रं यतेः स्मृतम्॥
शुचिरम्भस्त्वमीषाञ्च गोबालश्वावमर्षणम्।
न दण्डेनैव दण्डेन विना वातेन वा तथा॥
मोक्षावाप्ति भंवेत्पुंसां किन्तु साध्यात्मचिन्तनम्।
समत्वं सुखदुःखेषु तथा वै द्वेषरागयोः॥
आत्म समानधर्म्मत्व मजस्रं चात्मचिन्तनम्।
यतिभिस्त्रिभिरेकत्वं द्वाभ्यां पञ्चभिरेव च॥
न स्थातव्यं कदाचित्स्यात्शिस्यन्तो नाशमाप्नुयुः।
बहुत्वं यत्र भिक्षाणां वार्तास्तत्र विचित्रकाः॥
स्नेहपैशुन्य मात्सर्यभिक्षाणां नृपतेरपि।
तस्मादेकान्तशीलेन भवितव्यं सदा द्विज!॥
आत्मास्यासरतो नित्यं ब्रह्मावाप्ति मभीप्सताम्।
त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते॥

अध्यात्मयोगस्तु तस्य ब्रह्मावाप्तिर्भवेद्ध्रुवत: ।
यतेन्द्रियोऽपि दण्डार्हो युवा तस्य तथा निवसन् ॥
युवा निवसयाभिक्षुरात्मदृग्ब्रह्मदर्शक: ।
भिक्षुर्गृहे वसेत्तत्र कामार्थान्योऽभिगच्छति ॥
ततस्थानेन तथा चैव सह तेनैव तापयेत् ।
निवसेदेकरात्रञ्च वर्षियत्न तु वेश्मनि ॥
स तारयति वंशान्वै विंशतिं पितृमातृत: ।
भिक्षुर्यस्त्वात्मनन्तु ब्रह्म योगाभ्यासरतो भवेत् ॥
परिणामस्य योगेन कृतकृत्यो व्रती स तु ।
निर्ममो निरहङ्कार: सर्वं सङ्ग प्रयच्छति ।
ब्रह्मण्यात्मनि गोमायो मुक्ते इच्छास दामहक् ।
चिह्नानि धात्रा कथितानि यस्यवक्ते सयस्याभिहितेव भिक्षा ॥
योऽध्यानग्नान् वा सततं जितात्म: स ब्रह्मकाम्योगमनं करोति ॥
वनस्य भिक्षुधर्मान् वै यानब्रवीत्पराशर: ।
तथावदभिधायेतान् वक्ष्याम्याश्रमभेदकान् ॥

इति श्रीबृहत्पाराशरीये धर्मशास्त्रे वानप्रस्थयति-
धर्मोनाम दशमोऽध्याय: ।

---

## एकादशोऽध्याय: ।

अथात: संप्रवक्ष्यामि भेदमाश्रमसम्भवम् ।
ब्रह्मचर्यादिकानान्तु तथा तथ्यं निबोधत ॥
चतुर्णामाश्रमाणां तु भेदो दृष्टो मनीषिभि: ।
प्रत्येकशो वदाम्येतत् शृणुध्वं द्विजसत्तमा: ॥

ब्रह्मचारी गृहस्थश्च वानप्रस्थस्तथा यती।
एतद्भेदं प्रवक्ष्यामि शृणुध्वं पापनाशनम्॥
चतुर्धा ब्रह्मचारी च स्नाता यत्र यतस्तथा।
प्राजापत्या बृहन्नेति लक्षणानि पृथक् पृथक्॥
क्षारलवणाभित्या गायत्र्याच स प्रत्यहम्।
वर्तते क्षपया नित्यं गायत्र्यं तत्प्रकीर्तितम्॥
चतुर्धा द्वादशाब्दानि योऽधीयानश्चतुः श्रुतीः।
भिक्षया ब्रह्मचर्येण तेष्वभ्यात्मं तदुच्यते॥
ऋतुकालाभिगामी सन् परस्त्रीपर्ववर्जकः।
वेदानध्येति भिक्षाभुक् प्राजापत्योऽयमुच्यते॥
गुरोर्वा गुरुपुत्रस्य तत्पत्न्या वापि सन्निधौ।
यो वसेदात्मसंग्रामं ब्रह्मचारी स नैष्ठिकः॥
गृहस्थस्य चतुर्भेदो मतः शालीनतीव्रकौ।
यायावरास्तथा वान्ये घोरसंन्यासिकास्तथा॥
कृषिगोरक्षवाणिज्यैः सर्वान् कुर्वन् क्रियां द्विजः।
विहितोऽप्यात्मविद्यश्च वार्तावृत्तिः स उच्यते॥
ददात्यध्येति यजते याजयेत् चैव पाठयेत्।
कुर्यात्कर्म प्रतिग्राही शालीनोऽध्यानकृद्विजः॥
भक्तः सन् कारयेदन्यां क्रियां कुर्यात्प्रतिग्रहे।
पाठको नियतात्मा च यायावरः स उच्यते॥
तिष्ठेद् यश्च शीलोञ्छाभ्या मुद्धृताद्भिश्च वर्तते।
आत्मविच्च क्रियां कुर्यात् घोरसंन्यासिकः स तु॥
वानप्रस्थचतुर्भेदो वैखानस उदुम्बरः।
वालखिल्यो वनेवासी तल्लक्षणमथोच्यते॥

फलैर्मूलैरक्लष्टान्नैरग्निकल्पेन वै वसन्।
कुर्यात्पञ्च महायज्ञानात्मविद्वैखानसः स तु॥
इमानि तत्फलः कष्टधने धनुः चद्स्वरे।
योवा वसेदतो ज्ञानी पञ्चयज्ञाग्निकर्मकृत्॥
वनस्थो वालखिल्यो यो वसेत् वल्कलचीवरम्।
अग्निकार्यकृदात्मज्ञः कुर्जातसेवितं त्यजेत्॥
चतुरोऽन्यानमूनग्निकार्यं कुर्वन्वने वसेत्।
फलस्नेहैः फलैर्वन्यै र्बहुभिः श्रुतिचोदितम्॥
उद्धृत्य परिभूतादि तथा वै विप्रवृत्तिकः।
फलैर्वन्यैर्वनान्तैश्च फेनपः पञ्चयज्ञकृत्॥
पुत्रस्य भ्रातृपुत्रस्य भ्रातृदौहित्रयोरपि।
न दुष्यात्तः कुटीस्थोवा यद्भैक्ष्यं वृत्तिभुक् द्विजः॥
ज्ञेयो बहूदयो नाम यश्च पवित्रपादुकः।
शिखासनोपवीतानि धातुकाषायवासकृत्॥
चतुर्भेदपरिव्राट् स्यात् कुटीचरबहूदकौ।
हंसाः परमहंसाश्च वक्ष्यन्ते तु पृथक् पृथक्॥
साधुवृत्ति द्विजो यस्तु भिक्षाभुगात्मचिन्तकः।
बहूदकः स्वयं ज्ञेयः परिव्राट् स त्रिदण्डधृक्॥
एके दण्डधरा हंसाः शिखोपवीतधारिणः।
वार्याचारकराः शान्ता भूतानामभयप्रदाः॥
वसेदेकत्रपां ग्रामे नगरे पञ्च सर्वशः।
मर्षयन्तो व्रतैर्हंसात्मध्याने सदा रताः॥
एकदण्डधरा मुण्डा कन्थाकौपिनवाससः।
अत्यन्तलिङ्गिनोऽव्यक्ताः सर्वदैव च मौनिनः॥

शिखादिरहिताः शान्ताः दण्डान्तरवधारिणः ।
नग्नाः शूद्रामरैः केचिद् वासिनो ब्रह्मचिन्तकाः ॥
ये ते परमहंसा वै नैष्ठिका ब्रह्मभिक्षवः ।
उक्ता स्वव्रतभेदश्चै रात्मनः प्रार्थनापराः ॥
यो ब्रह्मचर्ये व्रतचारिभेदो
भेदो गृहस्थस्य तथैव यत्नतः ।
हिरण्यवासी द्विजकर्मभेदो
ह्युक्तो मयासीद् द्विजभिक्षुभेदः ॥

इति बृहत्पाराशरीये वानप्रस्थयत्याश्रमभेदो नाम एकादशोऽध्यायः ॥

---

## द्वादशोऽध्यायः ।

मुमुक्षवो विरज्यन्तो देहाद्दुःखादितो यथा ।
शरीरत्यागस्तथा प्राज्ञाः परब्रह्मलयं गताः ॥
स्वेदाद्यम्बुधातीभि सारम्भामाशुनाशि तत् ।
तन्मुख्ये गुणसंयुक्ते तत्पञ्चात्मकं व्रजेत् ॥
शुक्रशोणितसंयोगात् स्त्रीकोष्ठपाकसम्भवम् ।
दुःखेन दशभिर्मासैर्व्यापितम्भूरि दोहदैः ॥
जनन्यादौ स्पृहाभावे गर्भस्थस्यापि दुःखितः ।
च्युतस्य जायमानस्य योनियन्त्रनिपीडनात् ॥
जातस्य बालरोगाद्यैः योगिनीग्रहदोषतः ।
देहिनः सर्वदा दुःखं पूजाजन्मादिकैर्ग्रहैः ॥
एवं बाल्ये महद्दुःखं कामान्धे यौवनेऽपि च ।

क्रियया विना तु स्यात्क्षुधोद्दरितृड्भ्यर्थयोरपि ॥
क्षुत्तृड्भ्यां प्रथमे विरक्तं रक्तपाद्वे द्वितीयके ।
वृद्धत्वे वा तयोर्दुःखन्तस्मादुःखमयं वपुः ॥
मासेन लोपितं वातं स्नायुभिः कुल्यतस्वचम् ।
मेदोमिश्रनसम्पूर्णं कफपित्तस्य साश्रयम् ॥
अमेध्यपूर्णभस्त्रावं दग्धे वै सर्वदा शुचिः ।
इष्मायाः स्नानगन्धाद्यैर्निर्गन्धी क्रियते बहिः ॥
दुर्गन्धः सर्वरन्ध्रेषु सम्प्राणोद्वेगकारणम् ।
सततञ्च स्वावमेध्यङ्गिं देहे शोच्यते शुभम् ॥
यद्दग्धं भवेन्मृत्स्ना दग्धभस्मत्वमाप्नुयात् ।
मृतस्य दृश्यते किञ्चित्तृणाक्रोपरतस्य च ।
क दृष्टाभ्युद्यते विद्वान् कस्येह म्रियते पुनः ।
यन्नोपममिदन्धीमन् ! वायुत्यक्तं स्वतन्मायेत् ॥
पृथगात्मा पृथक्खातं पृथक् खानि दर्शानि च ।
पृथक्भूतानि भूतानि पृथग्तेषां गुणोत्तरः ॥
पृथक् पापं दिवायुश्च तद्गतिश्च पृथक् पृथक् ।
पृथक् पृथगिति ह्येतत् पृथग्भिः किमिहोच्यते ॥
आरम्भकाणि यान्येव तेषु यान्ति तदंशकाः ।
अत्ययाद्द यदवाप्नोति याति तीयं पुनर्वपुः ॥
शृणुयात् पादपस्पर्शं जिघ्रेत् स्वादेन्द्रियां चरेत् ।
स्वपेच्च जागृयाद्गच्छेद्भुयाद्गायेत वा ॥
श्लाघीयाद्यदवाप्य जातेन म नयेदपि ।
सोऽस्मिकचेतृपरो देहादोदेहीति निगद्यते ॥
नैकस्य स्यान्नदेहे वै प्रत्यगात्मा वाग्भवेत् ।

एकदृक् दंष्ट्ररूपस्य पुनरन्येन पश्यतः ।
अद्राचं यदहो वस्तु तदेवैतत्स्पृशाम्यथ ॥
यच्चास्पृश्यं च पश्यामि प्रतीतिर्यस्य जायते ।
दर्शनाभ्यां तु सततं ग्रहेशादेकवस्तुनः ॥
अस्ति ह्यात्मा परो देहात् यो देहीति च कथ्यते ।
गृहीव गृहमध्यस्थो लग्नादिच समाचरेत् ॥
देहे क्षतादिसंरोहात् तयो देह्यस्ति कश्चन ।
स एव पूज्यते कुर्वन् उद्देशो तस्य तात्विति ।
वार्यते कर्मणा चायं बाध्यते कर्मणापि च ॥
उभयस्यापि चैवात्र प्रत्यक्षं दृश्यते द्विजाः ! ।
मायावित्तश्च मूकत्वमतिक्रान्तागताश्रुमान् ॥
अन्नं बाधान्यहर्तृणां पिशुने पूतिनासिना ।
भरतो वर्णकैश्चित्रैर्देहस्य वर्णयेत्तथा ॥
कुर्वन्नानाविधं कर्म तथात्मा कर्मजस्तनूः ।
जरायुजाण्डजादीनि वपूंसि यो ग्रहेन्निजैः ॥
कर्मभिर्वर्णभेदैश्च चित्रदैर्गत्यरुग्यतः ।
बधिरान्धकिनः क्लीवा जायन्ते पुरुषाधमाः ॥
निरतः स पुनर्भूत्वा विद्वद्विप्रकुलेषु च ।
महाकूर्चाश्च जायन्ते लक्षणाङ्कितयान्विताः ॥
धनवन्तः प्रजायन्ते वेदवन्तो यशस्विनः ।
रूपसम्भाग्यसम्पृक्ताः सर्वेषां नयनप्रियाः ॥
ब्रह्माद्याश्चरतां शान्ताः षट्कर्मनिरतास्तथा ।
पञ्चयज्ञकृतो नित्यं अग्निष्टोमादिषु स्थिताः ॥
द्विजोपास्तिकरा नित्यसुर्वोचार्यादि पूजकाः ।

चतुराश्रमधर्माणां कथिताः समदर्शिनः॥
गुणैः सर्वैः समायुक्तास्तेजस्विनो द्विजप्रियाः।
एवम्भूताश्च ये विप्रास्तेषां विष्णुः सदान्तिके॥
विष्णुश्च सर्वदैवत्यं तस्माद्विष्णुमयो भवेत्।
दैवत्यार्चाङ्गतां नित्यं गुरूपास्तिष्टतान्तथा॥
ब्रह्मैवाचामतां सम्यक् ब्रह्मसान्निध्यमृच्छति।
तदुपास्यं सदा ब्रह्म यावत्साधनकञ्च यत्॥
बहुपापान्विदित्वा यः संसरेन्नेह मानवे।
वदन्ति ब्रह्मदेवेशे ब्रह्मन्यासमनेकधा॥
ब्रह्मापि द्विविधं धाम न परं परमेव च।
समाव सपरं ब्रह्म शब्दब्रह्मेति कीर्तितम्॥
प्रणवाख्यन्निरूपज्ञात् प्रागेव हि विशेषतः।
प्राणायामे तदभ्यस्य पूरकाद्यैश्च वायुभिः॥
पूरको कुम्भको वायू रेचकस्तु द्वितीयकः।
येन व्यावर्तते वायुर्नासाग्रान्निःसरन्बहिः॥
श्वासयोगेन तं प्राहुः पूरकं तद्विदोऽनिलम्।
श्वासयोगं वदन्त्येनं कथय स्तन्तु पावनम्॥
विदुस्तं रेचकं तज्ज्ञाः रेच्यश्च शनकैः शनैः॥
न वेगाद्रेचयेद्वायुः सर्वथा विघ्नभाक् भवेत्।
मोचयेन्मन्दमन्दन्तु वह्निः स्यात् कुम्भितो यथा॥
नासाग्रस्थितपाणिस्तु सशिखश्वासनं समम्।
अनिलं रेचयेद्योगी न मन्दं वाति वेगवान्॥
न श्रायतेऽनिलो यस्य निःसरन्नासिकाग्रतः॥
यस्मात्ते कुम्भितो जन्म प्राणयोगी स उच्यते।

दीर्घाद्दुःखं परं ज्ञानं समस्ता योगसिद्धयः ॥
देहे तस्यावतिष्ठन्ति प्राणायामवशीकृताः ।
यत्र तिष्ठति जीवोऽस्य निःश्वासोऽप्यत उच्यते ।
स किन्न धार्य्यते प्राणो ब्रह्मा तिष्ठति यत्र तु ॥
प्राण एव हि चात्मा च प्राणो देहस्य वाहकः ।
शरीराग्निःश्वासे प्राणे नात्मा विग्रहवाहकः ॥
देहत्यक्ता यदा जीवो बहिराकाशमाश्रितः ।
तदा निर्विषयो वायुर्भवेदत्र न संशयः ॥
तदा ससर्ज देहेषु नासाग्रमाश्रितः शिवः ।
प्रत्यक्षः सर्वभूतानां तिष्ठति नच लक्ष्यते ॥
तदा न श्वसते वायुस्तदा निष्कल उच्यते ।
नाभिसंस्थन्तु विज्ञाय जन्मबाधाद्विमुच्यते ॥
देहस्थः सर्वसत्वानां स जीवति शृणोति च ।
धर्माधर्मौ प्रवृत्तौ देहे देहे व्यवस्थितौ ॥
सुहृत्कण्ठसंस्थस्तु अथ ऊर्द्धं प्रधावति ।
धर्माधर्ममेशापाशै र्गृहीतः स प्रवर्त्तते ॥
अत्र सुच्छ्वसते यावत् प्राणो द्रव्यसमीरणात् ।
तावत्प्राणस्तु विज्ञेयो यावन्नासाग्रमाश्रितः ॥
अव्यक्तं निष्कलं ब्रह्म यावन्न श्वसते द्विजः ।
श्वसनेन समायोगादाकाशात्पुनरागतः ॥
नासारन्ध्रसमालीन स्तदा निष्कल उच्यते ।
स जीव इति विख्यातः स विष्णुः स महेश्वरः ॥
ध्यातव्या देवतास्तत्र क्रमेण पूरकादिषु ।
विष्णुब्रह्मेश्वरास्तेषु स्थानेषु स्थावरा द्विजैः ।

नीलपङ्कजविख्यातं आनीय नाभिमध्यतः ॥
महात्मानं चतुर्बाहुकेयूराद्यं हरिं स्मरेत्।
हृत्पद्मे कुम्भके ध्यायेद् ब्रह्माणं पङ्कजासनम् ॥
रक्तेन्दीवरवर्णाभं चतुर्वक्त्रं पितामहम्।
रेचके शङ्करं ध्यायेत् ललाटस्थं त्रिशूलिनम् ॥
शुद्धस्फटिकसङ्काशं संसारार्णवतारकम्।
एवं श्वाससंरोधी देवतात्रयचिन्तनात्।
अग्निर्वायुसंयोगादन्तरं शुध्यते त्रिभिः ॥
निरोधाद्भवद्वायु स्तस्मादग्निस्ततोजलम्।
इति त्रिदेवतायोगात् शुद्धमन्येनं पुनर्हि ताः ॥
भवन्ति प्रणवोपेताः प्राणायामस्तु षोडश।
अपि भ्रूणहनं मासात् पुनात्यहरहः कृतः ॥
प्रातरहसायञ्च पूरकं ब्रह्मणोऽन्तिकम्।
रेचकेन तृतीयेन प्राप्नुयात् परमं पदम्।
न प्राणेनाप्यपानेन वायुवेगेन रेचयेत् ॥
प्रागुक्तेन प्रयोगेण मोचयेत्प्राणसंयमी।
शरीरञ्च शिरोग्रीवं विहत्याणि च पादयम् ॥
सर्वाङ्गं निश्चलं धार्य्यमापूर्य्य सर्वनाड़िकाः।
संहृत्याङ्गानि सर्वाणि कर्मविज्ञानसद्विजः ॥
बद्धासनो बलात्तस्तु कुर्यादसुनिरोधनम्।
ज्ञात्वासुसञ्चयं विद्वान् विधिज्ञः समुपक्रमेत् ॥
अन्तरे शुध्यते यस्मात् कुर्यादाचमनं स्मृतम्।
इत्युक्तः प्राणसंरोधो देवतात्रयसंयुतः ॥
त्रिमात्रप्रणवस्तत्र ध्यातव्यः सर्वयोगिभिः।

ध्मायमानस्य यातस्य विश्रान्तिः स्यादमानवैः ॥
तत्परं निष्कलं ध्यानं तद्विदु ब्रह्मचिन्तकाः ।
मृदुमध्योत्तमत्वाच्च स्थूलसूक्ष्मानुभावतः ॥
त्रिविधं प्राणसंरोधं विदुस्तत्त्ववेदिनः ।
क्रियमाणो विशेषेण प्रत्याहारोऽथ मुच्यते ॥
सर्वं प्रागुक्तमेव स्याद्विशेषं तु निबोधत ।
बाह्यं वायुं यथोत्साहं आकृष्य यच्छनैः शनैः ॥
निरुध्य विधिवद्योगी प्रत्याहारः स उच्यते ।
व्यावृत्यातिमुखी यत्र खानि यत्र निरुध्य च ॥
चिन्तयेन्निश्चलीकृत्य प्रत्याहारः स उच्यते ।
प्राणाद्यवयवस्थूलाः संकल्पाद्यास्तुवायवः ॥
निरोद्धव्या दशोऽप्येते प्राणसंयमकारिभिः ।
वायुरेकोऽपि देहस्थः क्रियाभेदेन भिद्यते ॥
प्रकर्षेण समन्ताच्च न यानादिक्रिया स्मृताः ।
भविष्यातीतकालेभ्यः कर्मभ्यश्चास्तु संयमी ॥
सर्वानिलांस्तथा खानि निरुध्यैकत्र धारयेत् ।
स धीमान्वेदविद्विद्वान् स योगी ब्रह्मवित्तमः ॥

स्नानं द्विजन्मा विधिवत् प्र...स्य मायस्य यद्वयातिविधिः परस्य
पाराशरोक्तैर्बहुभिः प्रकारैरुक्तोविधिः प्राणनिरोधनस्य ॥

प्रत्याहारो विशेषस्तु प्रोक्तस्तस्यैव वित्तमाः ! ।
यदभ्यस्याप्नुयाद्ब्रह्म सर्वदा नैदमव्ययम् ॥
इति श्रीबृहत्पाराशरे प्राणायामप्रत्याहारविधिः ।

यातैस्तु पुनरावृत्तिः कदाचिदिह दृश्यते।
संस्मृतिं नाम्नु यात्येन शक्रस्तु गुरुस्तदाब्रवीत्॥
उक्तोऽसि संयमं पूर्वं विधिहीनोऽपि नाशनः।
निबोधध्वं चतुर्थन्तु ध्यानं प्रणववैभवाः॥
विधिवत्प्रणवध्यान मेकचित्तस्तु योऽभ्यसेत्।
ब्रह्माभ्येति स मुक्तात्मा स योगी योगिनां वरः॥
तद्ध्यानमसुसंरोधं तुर्यसम्यगिहोच्यते।
तद्ध्याध्यान पेयन्तु चिन्तापेयविवर्जितम्॥
तच्छान्तं निर्मलं शुद्धं ध्यातव्यं हृत्सरोरुहे।
तद्ध्येयन्तद्वरेण्यन्तु मुक्तिबीजं तदुच्यते॥
सञ्चित्य व्याहृतीः सप्त प्रणवाद्या स्तदन्तकाः।
सम्यगुक्त मिदं ध्यात्वा परब्रह्मणि योजयेत्॥
हुतभुक् पवनो जीवस्त्रयोऽप्येते हृदि स्थिताः।
ये तत्सर्वन्तु वैकत्र संसारे ध्यानकृद्द्विजः॥
ॐकारावर्त्तनालेन उद्धृत्य परियोजयेत्।
योजयेत्सर्वमेवैतत्सिद्धयोगी स उच्यते॥
शून्यभूतं तु यत्प्राणो ह्रासजीवितसंज्ञितम्।
यस्मादुत्पद्यते श्वासः पुनस्तत्र निवेशयेत्॥
आद्यन्तप्रणवं विद्वान् घटाकाशवदुत्सृजेत्।
स पश्यन् निर्गलं योगीपुरुषं मम संशयम्॥
अन्तर्वक्रः बहिः रूक्ष्यकुण्डलीभूतसर्पवत्।
ध्यातव्यः प्रणवस्तस्य मध्यमं धाम संस्मरेत्॥
स ध्यातात्मा स विन्दुश्च तदेवं परमं पदम्।
तदभ्यस्तं हि तज्ज्ञात्मा स तस्मिन्नेव लीयते॥

प्रथमं प्रणवो वक्त्र ह्यक्षरः परमाक्षरः ।
ह्यजत्वमव्ययदाप्नोति संप्राप्य परमं पदम् ॥
पञ्चमं तु पदं विद्वन् ! तन्मूर्धन्यवतिष्ठते ।
नादबिन्दुः समाख्यातोद्विजेन्द्राः ! परमंपदम् ॥
यत्प्राप्य न निवर्त्तन्ते भारत्यस्तात्मयमेव च ।
सर्वेभ्यो मातृकावर्णाः पुनस्तत्र विशन्ति च ।
वर्णात्मासन्नवर्णास्तु समस्तं वर्णजीवनम् ॥
न दीर्घं न च ह्रस्वश्च न घोषं नाप्यघोषवत् ।
न विसर्गश्च वा विद्वान् नानुस्वारविपर्ययः ॥
हृद्याकाशनिविष्टं यदचलत्वं प्रयाति चेत् ।
ध्यानयोगे विपश्चिद्भिर्यो विभर्त्यक्षराणि तु ॥
तत्परं योगिभिर्ध्येयं व्योम यस्य तु मध्यमम् ।
व्योमान्तगं यत्तुध्येयमनन्ताकाशमव्ययम् ॥
चिन्तयामो वयं तत्त्वं धियो यो नः प्रचोदयात् ।
ये तत्त्वज्ञास्त्रयीरूप मेतद्धर्मं त्रयीमयाः ॥
येषां स परमा मुक्तिर्गत्वा यां न निवर्त्तते ।
आदाय चापं प्रणवं च वाणं सन्धाय चात्मानमवेक्ष्य लक्ष्यम् ॥
सम्यग्विधिं तं प्रविविश्य तस्मिन् प्राप्नोति योगी स तु मुक्तिधाम
उद्देशभक्तिं विधिनाहि विद्वन् ! ध्यानं विधेयं ध्वनिपूर्वकञ्च ॥
सर्वं विधानं विधिवच्च सम्यक् यस्तु समर्थोविधिरेव चास्य ॥

इति श्रीवृहत्पाराशरीये योगाध्यायप्रणव-
ध्यानविधिः सम्पूर्णः ।

---

अथान्यत्सम्प्रवक्ष्यामि विधानं ध्यानकर्मणाम् ।
नानामतोदितं कार्य्यं परब्रह्माप्तिकारकम् ॥
कामात्मकर्मिभिः प्रोक्तं परमात्मा किमुच्यते ।
वक्ष्यमाणमिदं विप्राः ! शृणुध्वं भक्तितत्पराः ! ॥
स्वीयेन कर्मणा येषां शरीरग्रहणं भवेत् ।
कर्मात्मन स्तदुच्यन्ते निर्गताः परमात्मनः ॥
ये न स्पृशन्ति सत्त्वांशं तथा सत्त्वदयोगुणाः ।
कदाचित्केन कर्माणि परमात्मा ततः परम् ।
निष्ठानाशौचविद्येति गुणत्रयं स्पृशन्ति हि ॥
सो यस्मिन् कथमेतस्मिन् लोकपालो विधीयते ।
स्वात्मानमेव चात्मानं वेष्टकोष्टककारवत् ॥
कर्मणैव प्रजातस्तु बाह्यस्वार्थविमोहितः ।
तस्माद्विवर्जयेत्कर्म स्वर्गादेरपि साधकम् ॥
संसारेस्वर्गतिः कर्मचयः सतु पुनर्यतः ।
सीमैषा परमाविप्रा ब्रह्मणः पातमोक्षयोः ॥
कर्मस्थानमिदं धात्री कृतमत्रोपभुज्यते ।
वैदिकः कर्मयोगश्च दिवोऽप्यावत कस्य तु ॥
योतिह्याप्तृत्तिकस्वश्च ज्ञानयोगमतोऽभ्यसेत् ।
हृद्विनिःसृतनाडीनां सहस्राणां हि सप्ततिः ॥
तन्मध्यावस्थितं तेजः शशिप्रभया भाति यत् ।
यन्मध्यमण्डलेह्यात्मा विधूमाननदीववत् ।
संज्ञातव्योविदित्वा तं संसरेन्न पुनर्यतः ॥
भूरिभुवमधोवक्त्रं तत्वज्ञातव्यं व्यवस्थितम् ।
नानुच्छेदेन वातेन कृत्वोद्धास्य विकासयेत् ॥
विकास्य तस्य मध्यस्थ मचलं दीपशिखेव तत् ।

तदूर्द्ध्वं निःसरेत्सूक्ष्मं सूक्ष्मं तत्तु विचिन्तयेत् ॥
ललनद्वारनिर्गच्छन् कुन्तयोगीव चिन्तयेत् ।
तावत्तु चिन्तयेद्यावन्निरालम्बञ्च दृश्यति ॥
निरालम्बं यदा ध्यानं कुर्वाणो निश्चलो भवेत् ॥
तदा तदुच्यते ब्रह्म स योगी ब्रह्मवित्तमः ।
तत्पदञ्च पदातीनां तत्प्राप्तौ मुक्त उच्यते ॥
इति ध्यानं विधातव्यं मुक्तिकाङ्क्षि द्विजैर्द्विजाः ! ।
भूतानामात्मभूतस्य तानि सम्यक् प्रपश्यतः ॥
विमुच्यत्यमरो मार्गं पदं किं न पदस्य तु ।
यो न तिष्ठति यो याति न कश्चित्सर्वथैव यः ॥
अवाच्यो वाङ्मयोऽन्यस्तु सर्वश्रुति प्रचोदितः ।
योऽन्तिकेऽपि दवीयांश्च योऽस्तिनास्तिस्वरूपकः ॥
यस्येदं नममेति स तत्रैव च प्रलीयते ।
यस्तु सर्वाणि भूतानि पश्यत्यात्मगतानि तु ॥
आत्मानं तेषु सर्वेषु ततो यो न विमुच्यते ।
सर्वभूतानि भूतात्मा यत्र तिष्ठति धीमते ! ॥
मोषमोहौ च को तस्य शोकश्च ह्यनुपश्यतः ।
समाप्तावृक्षमादीनां यन्मन्त्रं ब्रह्म यो द्विजः ॥
ॐ खं ब्रह्मेति चाम्नायो दर्शकश्चैव वेधसः ।
आत्मज्ञानबहूपाया उक्ता ह्यन्ये च कोविदैः ॥
तै स्तैः सर्वैः स मन्तव्यो स ज्ञातव्योपदेशतः ।
ज्ञातव्यः परमात्मैवं भक्तिं कृत्वा परेण तु ।
ध्यानज्ञानस्य तद्भक्ते यत्र विश्रमते मनः ॥
तदेवोपदिशेत्तस्य वस्तुज्ञानोपदेशकम् ।

मनो यस्य विशत्यन्तु यत्र याति च वस्तुनि ॥
ध्यायेत्स तु तदेवेति यावत्स्यात् ध्यानसन्ततिः ।
ध्याने तत्र तु संलग्ने परावात्मनि वा पुनः ॥
ध्यानं नियोजयेद्योगी तं निरालम्बतां नयेत् ।
योगशास्त्रेषु यत्प्रोक्तं रहस्यारण्यकेषु च ॥
तत्तथोपदिशेद्ध्यानं ध्यायेदपि तथैव च ।
प्रवदन्त्यन्यथा केचिच्छुभादिभेदवांस्ततः ॥
त्रैविध्यं विदुषो विद्धि तस्य परे पदम् ।
चित्तजं श्रुतिजं वाचं भावनाभावमेव च ॥
त्रिविद्यमात्मविद्योत योगाभ्यासफलाफलम् ।
आत्मयन्त्रिविधस्येति चैतन्यमतिसंस्थितम् ॥
उत्तरोत्तरवैशिष्ट्यात् योगाभ्यासः प्रवर्त्तते ।
स एको निष्कलीभूतः कर्मात्मा यत्र योजितः ॥
न बिभेति सचैकाकी भयं वै आयतेऽन्यतः ।
न देवगतिर्भि भ्राम्यं ध्यानं यस्याहि योगिनः ॥
सञ्चितोऽत्र स्मृतं शान्तं कदाचित् कुबरेश्वतत् ।
त्र्यम्बकश्च चतुर्वक्त्रश्चतुर्बाहुः परेश्वरः ॥
एषएव महेशो वै तत्त्रिधेति कीर्तितः ।
नाभिमध्यस्थितं विद्धि विज्ञानेन सुनिर्मलम् ॥
रविवद्भ्रममानस्तु कामद्रुग्धिशमयैर्द्विजाः ! ।
चिन्तयेद्धृदि मध्यस्थं दीप्तिमत् सूर्यमण्डलम् ॥
तस्य मध्यमतो सोमवह्निचन्द्रशिखा कृशान् ।
तन्मध्यस्तु परं सूक्ष्मन्तद्ध्यायेद्योगमात्मनः ॥
तन्मध्ये चिन्तयेद्देवं वक्ष्यमाणक्रमेण तु ।

विम्बमध्यगतो नादो नादमध्यगतो ध्वनिः ॥
ध्वनिमध्यतः सारः सारमध्यगतोंऽशुमान् ।
तस्य मध्यगतं ब्रह्म शान्तं तस्य तु मध्यगम् ॥
परं पदन्तु यच्छान्तं सम्यगुद्दृत्य यो व्रजेत् ।
जीवात्मा कायमध्यस्य सत्रापि देहवर्जितः ॥
वक्त्रनासापुटस्थस्तु भुञ्जीत हृदयान् प्रभुः ।
इत्येतद्ध्यानमार्गन्तु वदन्ति कवयो द्विजाः ॥
कश्चिदन्यान्यथा ब्रूयुरूपं ब्रह्मविदो विदुः ।
न ममापि हि दुःखस्य शर्म यत्र निरन्तरम् ॥
ब्रह्मणोरूपमानन्दन्तन्मुक्तरूप मुच्यते ।
सर्वव्यापी य एकस्तु यश्चानन्तश्च भावकः ॥
स मन्तव्योऽजरोह्यात्मा सर्वं व्याप्य च यः स्थितः ।
एकं व्योम यथानेकं प्रविभे रुपलभ्यते ॥
एकोऽप्यात्मा तथानेको जलाधारेषु सूर्य्यवत् ।
विश्वरूपोमणिर्यद्वद्वर्णान् गच्छात्यनेकशः ॥
उपाधिस्य स्तथा त्वेको न नादेहेषु कर्मतः ।
कलाकाष्ठादिभेदेन वत्समा ादिभेदतः ॥
एकः कालो यथा नाना तथात्मैकोऽप्यनेकधा ।
देहमध्यस्थितं देवं यो न ध्यायति मूढधीः ॥
सोऽर्कंलब्धं मधु त्यक्त्वा क्ले शायाशो गिरौ व्रजेत् ।
यत्तीर्थयानं जपयागहोमान् कुर्य्याद्दपुण्यान् सतु वैष्णवः स्यात्
सचैव पिण्डं परिहृत्य दूरादन्यप्रभावैश्च वरिष्ठदृष्ठे ॥
संध्यास्य वै विधिवद्यात्करणोग्रपक्षे
पापेन कुम्भदवधात्तवरेण नूनम् ।

आरोप्य सोऽर्थवृत दण्डमुखेन तूर्णं
कृत्यग्रसंस्थमिवतत्वमतिप्रहीणाम् ।
द्वौ मार्गावात्मनौ ज्ञेयौ ब्राह्मणैर्ब्रह्मचिन्तकैः ।
अभियाति विदित्वाथ सायुज्यं परवेधसः ॥
विद्वन्धूमादिरेको वै द्वितीयस्तु विराडिकः ।
यत्र देवौ प्रतीतव्यौ यत्प्रतीतिरजायत ॥
धूमः क्षिप्रं सितः पक्षो दक्षिणायनमेव च ।
लोकपित्र्यश्च चान्द्रश्च मातरिश्वानुकर्षणाः ॥
पाथोधात्री कषादेरे सम्भवन्ति ममाश्रिताः ।
अर्चिरहः सितः पक्ष स्तथाचैवोत्तरायणम् ॥
देवलोक स्तथा सूर्यः विद्युतश्च क्रमादिमान् ।
मनसा पुरुषा यान्ति तानतो ब्रह्मलोकताम् ॥
यत्र जातो पुनर्देहं संसरन्ति पुनर्द्विजाः ! ।
मार्गं द्वय पुनर्धीमन्मन्तव्यं सद्विजैर्द्विजः ॥
यत्र ज्ञातेन विज्ञातुं नाकमोक्षौ च सिध्यतः ।
स आरण्यस्थभिक्षूणां त्रयाणामपि स द्विजाः ! ॥
समानज्ञानमेतद्धृति ब्रह्मविदोविदुः ।
यथा दहति वैधांसि समिद्धस्वाशुशुक्षणिः ॥
ज्ञानमभ्यस्तमानन्तु तथा दहति संहृतीः ।
तस्मान्मार्गद्वयेनापि ज्ञात्माज्ञेयो भवेद्द्विजैः ॥
येन जानन्ति तेषान्तु दूरं यूकादियोनिषु ।
पन्नगत्वं कृमित्वं वा कीटत्व मथवाप्नुयुः ॥
इतेभ्यस्त्वधमेभ्यश्च जायन्ते तासु योनिषु ।
विद्याविद्भिः स मन्तव्यः स हेतुः स्वर्गमोक्षयोः ॥

विद्यामोक्षप्रदा सा च ह्यविद्यामन्युनाशकृत् ।
ज्ञानयोग स्तथाकर्म विद्याविद्भिः स्मृतो बुधैः ॥
अपवर्गाय वै नृणां कर्म त्रिविष्टपाय च ।
कर्मापि क्रियमाणं निरपेक्षं मोक्षकृद्भवेत् ॥
विष्णवे गुरवे वापि कर्म कृत्वा निवेदयेत् ।
आत्मनः फलमिच्छद्भि र्यत्कर्म क्रियते नृभिः ॥
तेनैव वाञ्छितावाप्ति स्तेनान्यन्नोपजायते ।
हरिं वानित्यमभ्यस्य सर्वभावेन सद्द्विजैः ॥
तदभ्यासवदाप्नोति मृत्युदाहात् हरिस्मृतेः ।
एक एव हि स ध्येयो यत्परं नास्ति किञ्चन ॥
विनाशमान् महानेष स ध्येयः संयतेन्द्रियैः ।
महान्तं पुरुषं देवं हृदिरूप मतःपरम् ॥
ब्रह्मविन्मृत्युमृत्युर्वै प्रयाति ह्यनिवर्त्तकम् ।
एष एव नृणां पन्था ब्रह्मा वै य मुपासते ॥
दास्य जन्मस्वनेकेषु विचितस्यैकचेतसाम् ।
नाभिभक्तापि वै केन नान्यभ्यासकृतेरपि ॥
ब्रह्माप्तिजन्मनां पुंसां किन्तु सा भूरिजन्मभिः ।
यतयः सर्वदाभ्यासाद्ब्रह्म यत्र प्रपेदिरे ॥
तन्मनुष्यैः कथं प्राप्य मेकेनैव तु जन्मना ।
ज्ञानाभ्यासेन तद्ब्रह्म तैस्व दम्भस्वरूपकैः ॥
न प्राप्यते परं ब्रह्म न वाप्यासनमुद्रया ।
बहुभिः किमुपायैस्तु मोक्षैर्वा ग्रन्थविस्तरैः ॥
एकमेवाभ्यसेत्तन्तु येन चित्ते भवेद्धरिः ।
एकैव बुद्धिस्तु सदा यथा स्यात् क्रियतां तथा ॥

नैव कुर्य्यान्मनस्त्वं विरुद्धमिति सर्वथा।
भावः स्वर्गाय मोक्षाय नरकायापि स स्मृतः॥
तस्मात्तं शोधयेद्यत्नाच्छुचिः स्यात्रावशुक्तितः।
एकस्य पुत्रकर्त्तारौ चान्यस्यापि च योषितः॥
भिन्नभावौ भवेतान्तावतीव वै विशोधयेत्।
परिष्कृतो नरो नार्य्याः संछादयति यौवनम्॥
तल्पस्थोऽपि सकामान्तां भावहीनो न कामयेत्।
एकीभावो ह्यसैकार्थो यथा स तु न वै चलेत्॥
तद्बुद्ध्या पश्यतामिच्छन् स्वर्गमोक्ष मवाप्नुयात्।
कृत्वापि विविधान्यागांस्तपस्तप्त्वा सुदुष्करम्॥
मृत्युकाले मतिर्यस्याद्गतिं तामेव विन्दति।
योगप्रयोगः कथितः द्विजेन्द्रा! ध्यानस्य मार्गो बहुधापि वापि।
योऽभ्यस्यमानस्तु भवद्विधानां ब्रह्माग्निकृदस्तु तथा द्विजानाम्।
प्रत्याहारश्च योगश्च ध्यानविस्तरतस्तथा।
उक्तं द्विजहितार्थं वै ब्रह्मावाप्तिकरं द्विजाः!॥
अङ्गुल्यङ्गुष्ठयोर्नादक्षणं स्यात्तद्वयं तुटिः।
द्वाभ्याञ्चैव लवस्ताभ्यां निमेषोऽपि लवद्वयम्॥
तैः पञ्चदशभिः काष्ठास्ताश्च त्रिंशत्कलाः स्मृताः।
द्वाविंशति त्रिभागस्तु त्रुटिकेति प्रकीर्तिता॥
तद्द्वयञ्च मूहूर्त्तः स्यात्ते त्रिंशच्चतुर्दयादिनम्।
तत्पञ्चदशकं पक्षस्तद्वयं मास उच्यते॥
तद्वयं ऋतुरित्युक्तं तद्वयं काल उच्यते।
तत्साद्धमयनं प्रोक्तं तद्वयं वत्सरस्तथा।
पञ्चभिस्तैर्युगः प्रोक्तो तद्द्वादशकषष्ठकम्॥

षष्ठकः षष्टिगुणितो वाक्पते युगमुच्यते ।
षष्टिघ्नः सोऽपि कालज्ञैः प्रजानाञ्च युगः स्मृतः ॥
तद्द्वयन्तु कलिः प्रोक्तो तद्द्वयं द्वापरं भवेत् ।
कलित्रयाणां त्रेता स्यात् कृतं कलिचतुष्टयम् ॥
कलिभिर्दशभिर्विद्वान् चतुर्युग मिति स्मृतम् ।
चतुर्युगसहस्रेण त्वजाह्नः कल्प उच्यते ॥
अष्टयुगा पितृसन्ध्या सायंसन्ध्या पितावती ।
तदेकसप्ततिगुणं मन्वन्तर मिति स्मृतम् ॥
मन्वन्तरद्वयेनेह शक्रत्रयः प्रकीर्तितः ।
एवं मानेन वर्षाणां शतं ब्रह्मवयः स्मृतः ॥
ब्रह्मवयशतेनापि विष्णोरेक महर्भवेत् ।
एतद्विधाः समासेन प्रयान्तेऽब्दशते द्विजाः ! ॥
रुद्रस्यात्मनि लीयन्ते भूतभौतिकसृष्टयः ।
लब्धं यथानेन परंपदं तत्तद्ध्यानयोगात् सतु तत्र लीयते।
परम्पराणां परमव्यचिन्त्यं परात्परं दिष्टपदादतीतम् ॥
क्षणादिकालं क्रमशोऽप्यमत्तः प्रयाति चैतत्पदमव्ययं तत् ।
कालज्ञानेन योगेन योगिभि र्ध्यानकारिभिः ॥
मुमुक्षुभिः सदा ध्येयं निरालम्बं परं पदम् ।
पराशरोक्तयास्त्वन्तु चातुर्वर्ण्यं जनाश्चरेत् ॥
हितमुक्तं प्रयत्नेन सदा ध्येयं विजायते ।
श्रावयिष्यति यः श्राद्धे ब्राह्मणान् भक्तितत्पराः ॥
प्राप्स्यन्ति पितरस्तस्य तृप्तिं वै शाश्वतीं द्विज ! ।
द्वादशं दश वा सप्त षड्ष्टौवाथवा नव ॥

दैविके पैतृके वापि श्लोकाः श्राव्या द्विजातिभिः।
य इदं शृणुयाद्विप्रः श्रावयेत्पाठयेदपि॥
स प्रध्वस्तसमस्तैना ब्रह्मलोक मवाप्नुयात्।
त्रिभिः श्लोकसहस्त्रैस्तु त्रिभि र्द्दतशतैरपि॥
पाराशरोदितं शास्त्रं सुव्रतः प्रोक्तवान् मुनिः॥

इति श्रीवृहत्पाराशरस्मृतिः सम्पूर्णा।

---

# लघुव्याससंहितायाम् ।

## प्रथमोऽध्यायः ।

ऋषय ऊचुः ।

अहन्यहनि कर्त्तव्यं क्रमाणां हि क्रमाद्विधिम् ।
ब्राह्मे मुहूर्त्ते उत्थाय धर्मार्थावनुचिन्तयेत् ॥
कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च ।
उषःकाले तु संप्राप्ते कृत्वाचावश्यकं बुधः ॥
स्नायान्नदीषु शुद्धासु शौचं कृत्वा यथाविधि ।
प्रातः स्नानेन पूयन्ते येऽपि पापकृतो जनाः ॥
तस्मात्सर्वः प्रयत्नेन प्रातःस्नानं समाचरेत् ।
प्रातः स्नानं प्रशंसन्ति दृष्टादृष्टफलप्रदम् ॥
ऋषीणां कुर्वतां नित्यं प्रातःस्नानं न संशयः ।
मुखे सुप्तस्य सततं लालानित्यं स्रवन्ति हि ॥
ततो नैवाचरेत्कर्माण्यकृत्वा स्नानमादितः ।
अलक्ष्मी कालकर्णीच दुःस्वप्नं दुर्विचिन्तनम् ॥
प्रातःस्नानेन पूयन्ते सर्वपापान्न संशयः ।
न हि स्नानं विना पुंसां प्राशस्त्यं कर्मसु स्मृतम् ॥
होमे जप्ये विशेषेण तस्मात् स्नानं समाचरेत् ।
अशक्तोऽवशिरस्कं वा स्नानमात्रं विधीयते ॥
आर्द्रेण वाससा चाङ्गमार्जनं कापिलं स्मृतम् ।

अप्राशस्त्ये समुत्पन्ने स्नानमेव समाचरेत् ॥
ब्राह्मादीन्यथवाशक्तौ स्नानान्याहुर्मनीषिणः।
ब्राह्ममाग्नेयमुद्दिष्टं वायव्यं दिव्यमेव च ॥
वारुणं यौगिकं चैव सदा स्नानं प्रकीर्त्तितम्।
ब्राह्मं तु मार्जनं मन्त्रैः कुशैः सोदकविन्दुभिः॥
आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम्।
यत्तु सातपवर्षेण तत् स्नानं दिव्यमुच्यते ॥
वारुणञ्चावगाहश्च मानसञ्चात्मवेदनम्।
यौकिकं स्नानमाख्यातं योगोऽयं विष्णुचिन्तनम् ॥
आत्मतीर्थमिदं ख्यातं सेवितं ब्रह्मवादिभिः।
मनःशुद्धिकरं पुंसां नित्यं तत् स्नानमाचरेत् ॥
शक्तश्चेद्वारुणं विद्वानप्राशस्त्ये तथैवच।
प्रक्षाल्य दन्तकाष्ठञ्च भक्षयित्वा विधानतः ॥
आचम्य प्रयतोनित्यं प्रातःस्नानं समाचरेत्।
मध्याङ्गुलिसमस्थौल्यं द्वादशाङ्गुलिसम्मितम्॥
सत्वचन्दन्तकाष्ठं स्यात्तस्याग्रेण तु धावयेत्।
क्षीरवृक्षसमुद्भूतं मालिनीसम्भवं शुभम् ॥
अपामार्गञ्च विल्वञ्च करवीरं विशेषतः।
वर्जयित्वा निषिद्धानि गृहीत्वैकं यथोदितम् ॥
अपहृत्य दिनं पापं भक्षयित्वा विधानवित्।
आचम्य प्रयतोनित्यं स्नानं प्रातः समाचरेत् ॥
नोत्पाटयेद्दन्तकाष्ठमङ्गुल्या धावयेत् क्वचित्।
प्रक्षाल्य भक्त्वा तर्जन्या शुचौ देशे समाहितः ॥
स्नात्वा सन्तर्पयेद्देवान् ऋषीन् पितृगणान् क्रमात्।

आचम्य मन्त्रवन्नित्यं पुनराचम्य वाग्यतः॥
मार्जनं वारुणैर्मन्त्रैरात्मानं सकुशोदकैः।
आपोहिष्ठादिभिश्चाहृतिभिः सावित्र्या वारुणैस्तथा॥
ओङ्कारव्याहृतियुक्तां गायत्रीं वेदमातरम्।
जप्त्वा जलाञ्जलिं दद्याद्भास्करं प्रति तन्मनाः॥
प्राक् तु तेन समासीनो दर्भेषु सुसमाहितः।
प्राणायामत्रयं कृत्वा ध्यायेत्सन्ध्यामिति श्रुतिः॥
या सन्ध्या सा जगत्सृष्टिस्थितिसंयमकारिणी।
ऐश्वरी तु पराशक्तिः सत्त्व यत्र समुद्भवा॥
सवितु र्मण्डलगतां गायत्रीं वै जपेद्बुधः।
प्राङ्मुखः प्रयतोविप्रः सन्ध्योपासन माचरेत्॥
सन्ध्याहीनोऽशुचिर्नित्य मनर्हः सर्वकर्मसु।
यदन्यत् कुरुते कर्म न तस्य फलमाप्नुयात्॥
अनन्यचेतसो शान्ता ब्राह्मणा वेदपारगाः।
उपास्य विधिवत्सन्ध्यां प्राप्ताः पूर्वं पराङ्गतिम्॥
योऽन्यतः कुरुते यत्नं धर्मकार्ये द्विजोत्तमः।
विहाय सन्ध्याप्रणतिं स याति नरकायुतम्॥
तस्मात्सर्वप्रयत्नेन सन्ध्योपासं समाचरेत्।
उपासितो भवेत्तेन देवयोगतनुः परः॥
सहस्रपरमां देवीं शतमध्यां दशावराम्।
गायत्रीं वै जपेद्विद्वान् ब्राह्मणः प्रयतः स्थितः॥
इति लघुव्यासस्मृतौ प्रथमोऽध्यायः।

---

## द्वितीयोऽध्यायः।

यथागस्य गृहं विप्रः समाचम्य यथाविधि।
अग्निं प्रज्वाल्य विधिवत् जुहुयाज्जातवेदसम्॥
ऋत्विक् पुत्रोऽथवा पत्नी शिष्योऽपि च सहोदरः।
प्राप्यानुज्ञां विशेषेण जुहुयाद्वा यथाविधि॥
पवित्रपाणिः शुद्धात्मा शुक्लाम्बरधरोऽपरः।
अनन्यमानसो वह्नौ जुहुयात्संयतेन्द्रियः॥
विना दर्भेण यत्कर्म विना सूत्रेण वा पुनः।
नाक्षयस्तद्भवेत्सर्वं नेहामुत्र फलप्रदम्॥
देवतादीन्नमस्कुर्यादुपहारं निवेदयेत्।
दद्यात्पुष्पादिकां तासां वृद्धांश्चैवाभिवादयेत्॥
गुरुञ्चैवाप्युपासीत हितं तस्य समाचरेत्।
वेदाभ्यासं ततः कुर्यात्प्रयत्नाच्छक्तितो द्विजः॥
वेदमध्यापयेच्छिष्यान् धारयेच्च विपाठयेत्।
अपेक्षेत च शास्त्राणि मन्वादीनि द्विजोत्तमाः!॥
वैदिकान्नियमान्वेदान्वेदाङ्गानि च सर्वशः॥
उपेयादीश्वरञ्चैव योगक्षेमार्थसिद्धये।
साधयेद्विविधानर्थान् कुटुम्बार्थे तथैव च॥
ततो मध्याह्नसमये स्नानार्थं मृदमाहरेत्।
पुष्पाक्षतान्कुशतिलान् गोमयं गन्धमेव च॥
नदीषु देवखातेषु तटाकेषु सरित्सु च।
स्नानं समाचरेन्नित्यं नदीप्रस्रवणेषु च॥
परकीयनिपानेषु न स्नायाद्वै कदाचन।
पञ्च पिण्डान् समुद्धृत्य स्नायाद्वा सम्भवात् पुनः॥

एकैकया शिरः क्षाल्य द्वाभ्यां नाभेस्तथोपरि ।
अधश्चतसृभिः कार्यं पादौ षड्भिस्तथैव च ॥
मृत्तिका च समादिष्टा त्वार्द्रामलकमात्रतः ।
गोमयस्य प्रमाणं तत् तेनाङ्गं लेपयेत्ततः ॥
लेपयेद्वतीरस्थस्तल्लिङ्गेनैव मन्त्रतः ।
प्रक्षाल्याचम्य विधिवत् ततः स्नायात्समाहितः ॥
अभिमन्त्र्य जलैर्मन्त्रैस्तल्लिङ्गैर्वारुणैः शुभैः ।
आपो नारायणोद्भूता स्तानेवास्यायनं पुनः ॥
तस्मान्नारायणं देवं स्नानकाले स्मरेद्बुधः ।
प्रोक्ष्य सोङ्कारमादित्यं त्रिर्निमज्जेज्जलाशये ॥
आचान्तः पुनराचामेन्मन्त्रेणानेन मन्त्रवित् ।
अन्तश्चरति भूतेषु गुहायां विश्वतोमुखः ॥
त्वं यज्ञस्त्वं वषट्कार आपोज्योतीरसोऽमृतम् ।
द्रुपदां वा त्रिरभ्यस्येद्व्याहृतिं प्रणवादिकाम् ॥
सावित्रीं वा जपेद्विद्वान् तथैवाघमर्षणम् ।
ततः सम्मार्जनं कुर्यादापोहिष्ठामयोभुवः ॥
इदमापः प्रवहत व्याहृतिभिस्तथैव च ।
ततोऽभिमन्त्र्य तत्तोयमापोहिष्ठादिमन्त्रकैः ॥
अन्तर्गतजले मग्नो जपेत् त्रिरघमर्षणम् ।
द्रुपदां वाथ गायत्रीं तद्विष्णोः परमम्पदम् ॥
आवर्त्तयेद्वा प्रणवं देवं वा संस्मरेद्धरिम् ।
द्रुपदादि परो मन्त्रो यजुर्वेदे प्रतिष्ठितः ॥
अन्तर्जले त्रिरावृत्त्या सर्वपापैः प्रमुच्यते ।
आपः पाणौ समादाय जप्त्वा वा मार्जने कृते ॥

विन्यस्य मूर्ध्नि तत्तोयं सर्वपापैः प्रमुच्यते।
यथाश्वमेधः क्रतुराट् सर्वपाप प्रणोदनः॥
तथाघमर्षणं सूक्तं सर्वपाप प्रणोदनम्।
अथोपतिष्ठेतादित्य मूर्द्ध्वं पुष्पान्वितम्॥
प्रक्षिप्य देवमादित्यं ऋग्यजुः सामरूपिणम्।
उदित्यञ्चित्रमित्येतत् तच्चक्षुरितिमन्त्रतः॥
हंसः शुचिषु इत्येतत्सावित्या च विशेषतः।
अन्यैश्च वैदिकैर्मन्त्रैः सर्वपाप प्रणाशनैः॥
सावित्रीं वै जपेत् पश्चाज्जपयज्ञः प्रकीर्तितः।
विविधानि पवित्राणि गुह्यविद्यास्तथैव च॥
तिष्ठन् न देवमाक्रोऽक्तं जपं कुर्यात्समाहितः।
आसीनः प्राङ्मुखो नित्यं जपं कुर्याद्यथाविधि॥
स्फटिकेन्द्राक्षपद्माद्यैः पत्र दीप कुशार्कैः।
कर्तव्या त्वक्षमाला स्यात् विशिष्टा चोत्तरोत्तरा॥
जपकाले न भाषेत नाङ्गानि चालयेत्तथा।
न कम्पयेच्छिरोग्रीवां दन्तान्नैव प्रकाशयेत्॥
गुह्यका राक्षसाः सिद्धा हरन्ति प्रसभं हि तत्।
एकान्ते तु शुचौ देशे तस्माज्जप्यं समाचरेत्॥
चण्डाला शुच पतितान् दृष्ट्वाचम्य पुनर्जपेत्।
आचम्य प्रयतो नित्यं जपेदशुचिदर्शने॥
सौरान्मन्त्रान्यथोत्साहं पावमानांश्च शक्तितः।
आचम्य च यथाशक्त्या श्रद्धया स्वाध्यायमाचरेत्॥
ततः सन्तर्पयेद्देवान् ऋषीन् पितृगणान् क्रमात्।
आदौ ॐकारमुच्चार्य नाम्नोऽन्ते तर्पयामि च॥

देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः ।
पितॄन् तिलोदकैश्चैव विधिना तर्पयेद्बुधः ॥
अपसव्येन सव्येन पाणिना दक्षिणेन तु ।
देवर्षीं स्तर्पयेद्धीमान् उदकाञ्जलिभिः पितॄन् ॥
यज्ञोपवीती देवानां निवीति ऋषितर्पणे ।
प्राचीनावीति पित्र्येषु स्वेन तीर्थेन भाषितम् ॥
निष्पीड्य च तु वस्त्रञ्च समाचम्य यथाविधि ।
स्वैर्मन्त्रैरर्चयेद्देवान् पुष्पैः पत्रैस्तथाम्बुभिः ॥
ब्रह्माणं शङ्करं सूर्यन्तथैव मधुसूदनम् ।
अन्यांश्चाभिमतान् देवान् पूजयेद्भक्तितो द्विजः ॥
प्रदद्यादाथ पुष्पाणि विन्यसेद्वा पृथक् पृथक् ।
न विष्ण्वाराधनात् पुण्यं विद्यते कर्म वैदिकम् ॥
तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम् ।
तद्विष्णोरितिमन्त्रेण सूक्तेनापौरुषेण च ॥
नैताभ्यां सदृशो मन्त्रो वेदेषूक्तश्चतुर्ष्वपि ।
निवेदयित्वा चात्मानं विमलन्तत्र तेजसि ॥
तदात्मा तन्मनः शान्तः तद्विष्णोरितिमन्त्रतः ।
अथवा देवमीशानम्भगवन्तं सनातनम् ॥
आराधयेन्महेशानं महादेवं महेश्वरम् ।
मन्त्रेण रुद्रगायत्र्या प्रणवेनाथ वा पुनः ॥
ईशानेनाथ वा रुद्रैस्त्र्यम्बकेन समाहितः ।
पुष्पैः पत्रैरथाद्भिर्वा चन्दनाद्यैर्महेश्वरम् ॥
अथोनमः शिवायेति मन्त्रेणानेन वाचयेत् ।
नमस्कुर्यान्महादेवं ऋतं परमेश्वरम् ॥

निवेदयित्वा स्वात्मानं यो ब्रह्माणमतःपरम् ।
प्रदक्षिणास्ततः कुर्यात्ततो ब्रह्माणि वै जपेत् ॥
ध्यायेत देवमीशानं व्योममध्यगतं शुभम् ।
अथवा लोकयेदर्कं हंसः शुचिषदित्यृचा ॥
कुर्यात् पञ्चमहायज्ञान् गृहं गत्वा समाहितः ।
देवयज्ञं पितृयज्ञं भूतयज्ञन्तथैव च ॥
मनुष्यं ब्रह्मयज्ञञ्च पञ्चयज्ञान् प्रचक्षते ।
यदि स्यात्तर्पणादर्वाक् ब्रह्मयज्ञः कृतो न हि ।
कृत्वामनुष्य यज्ञं हि ततः स्वाध्याय मारभेत् ॥
अग्नेः पश्चिमतो देशे भूतयज्ञान्तरेऽथवा ।
कुशपूतैः समासीनं कुशपाणिः समाहितः ॥
श्रौताग्नौ लौकिकेचापि जले भूम्या मथापिवा ।
वैश्वदेवश्च कर्त्तव्यो देवयज्ञः स संस्मृतः ॥
यदि स्याल्लौकिके पक्षं तदन्नं तत्र हूयते ।
शालाग्नौ तत्पचेदग्नौ विधिरेषः सनातनः ॥
देवेभ्यश्च हुतादन्नाच्छेषाद्भूत बलिं हरेत् ।
श्वभ्यश्च श्वपचेभ्यश्च पतितादिभ्यएव च ॥
दद्याद्भूमौ भूत बलिं क्रिमिभ्योऽथ द्विजोत्तमः ।
सायन्त्वन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत् ॥
वैश्वदेवं विनार्थेन सायम्प्रातर्विधीयते ।
एकन्तु भोजयेद्विप्रं पितॄनुद्दिश्य यत्सदा ॥
नित्यश्राद्धं तदुद्दिष्टं पितृयज्ञो गतिप्रदः ।
उद्धृत्य वाथ यथाशक्तः किञ्चिदन्नं समाहितः ॥
वेदार्थं तत्त्व विदुषे द्विजायैवोप पादयेत् ।

पूजयेच्चासनं नित्यं नमस्येदर्चयेच्च तम् ॥
मनोवाक्कर्मभिः शान्तम् आगतं स्वगृहं गतम् ।
हन्तकारमथाग्रं वा भिक्षां वा शक्तितो द्विजः ॥
दद्यादतिथये नित्यं बुध्येत परमेश्वरम् ।
भिक्षामाहुर्ग्रासमात्रम् अग्रं तस्य चतुष्टयम् ॥
पुष्कलं हन्तकारस्स्यात्तच्चतुर्गुण मुत्तमम् ।
गोदोहकालमात्रं वै प्रतीक्ष्यं ह्यतिथिं स्वयम् ॥
अभ्यागतान्यथाशक्ति भोजयेदतिथीं सदा ।
अदत्वा देवताभूत भृत्यातिथि पितृष्वपि ॥
भुञ्जीत चेत्स मूढात्मा तिर्य्यग्योनिषु गच्छति ।
वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रिया क्षमा ॥
नाशयन्त्याशु पापानि वेदानामर्चनं तथा ।
यो मोहादथवा लोभादकृत्वा देवतार्चनम् ॥
भुङ्क्ते स याति नरकान् शूकरेष्वभिजायते ।
तस्मात्सर्वं प्रयत्नेन कृत्वा कर्माणि वै शनैः ॥
भुञ्जीत स्वजनैः सार्धं स याति परमाङ्गतिम् ।
प्राङ्मुखोऽन्नानि भुञ्जीत सूर्य्याभिमुख एव वा ।
आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः ॥
आसीनश्चासने शुद्धे भूम्यां पादौ निधाय च ।
उपवासेन तत्तुल्यं मनुराह प्रजापतिः ॥
पञ्चार्द्रभोजनं कुर्य्यात् भूम्यां पादौ निधाय च ।
उपलिप्ते शुचौ देशे पादौ प्रक्षाल्य वै करौ ॥
आर्द्रवागाननोभूत्वा पञ्चार्द्रभोजनञ्चरेत् ।

स्वाहाव्याहृतिभिस्त्वान्नं परिधायोदकेन तु ॥
अमृतोपस्तरणमसीत्यापोशनक्रियाञ्चरेत्।
स्वाहा प्रणवसंयुक्तं प्राणायान्नाहुतिं ततः॥
अपानाय ततोहुत्वा व्यानाय तदनन्तरम्।
उदानाय ततोहुत्वा समानायेति पञ्चमम्॥
विज्ञाय चार्थमेतेषां जुहुयादात्मवान् द्विजः।
शेषमन्नं यथाकामं भुञ्जीत व्यञ्जनैर्युतम्॥
ध्यात्वा तन्मनसा देवमात्मानं वै प्रजापतिम्।
अमृतापिधानमसीत्युपरिष्टाज्जलं पिबेत्॥
आचम्याङ्गुष्ठमात्रेण पादाङ्गुष्ठेतु दक्षिणे।
निःस्रापयेद्धस्तजलं मूर्द्ध्वहस्तः समाहितः॥
हुत्वानुमन्त्रणं कुर्य्याच्छ्रद्धायामिति मन्त्रतः।
अथाक्षरेण स्वात्मानं योजयेत् ब्रह्मणेति हि॥
सर्वेषामेव योगानामात्मयोग परं स्मृतः।
योगेन विधिना कुर्य्यात् स याति ब्रह्मणः पदम्॥
यज्ञोपवीती भुञ्जीत स्रुगन्धालङ्कृतोत्तरम्।
सायम्प्रातस्तु भुञ्जीत विशेषेण समाहितम्॥
नाद्यात्सूर्य्यग्रहात्पूर्वं नक्तिसायं शशिग्रहात्।
ग्रहकाले च नाश्नीयात् स्नात्वाश्नीयात्प्रमुक्तयोः॥
अमुक्तयोरस्तगयोर्दृष्ट्वा परेऽहनि।
नाश्नीयात्प्रेक्षमाणानां मप्रदायापि दुर्गतः॥
न यज्ञशिष्टादन्यत्वात्क्रुलोमान्यो ममातुरः।
आत्मार्थं भोजनं यस्य रत्यर्थं यस्य मैथुनम्॥
वृत्त्यर्थं यस्य चाधीतं निष्फलं तस्य जीवितम्।

यो भुङ्क्ते वेष्टित शिरा यस्तु भुङ्क्ते विदिङ्मुखः ॥
सोपानत्कश्च यो भुङ्क्ते सर्वं विद्यात्तदासुरम् ।
नार्धरात्रे न मध्याह्ने नाजीर्णे नार्द्रवस्त्रधृक् ॥
न च भिन्नासनगतो न शयान स्थितोऽपि वा ।
नोपानत्पादुकी चापि न च संविलपन्नपि ॥
भुङ्क्ते च सुखमास्थाय तदन्नं परिणामयेत् ।
इतिहास पुराणाभ्यां वेदार्थं सुपवृंहयेत् ॥
ततः सन्ध्या मुपासीत पूर्वोक्त विधिना द्विजः ।
आसीनस्तु जपेद्देवीं गायत्रीं पश्चिमाम्प्रति ॥
नानुतिष्ठति यः पूर्वामुपास्ते न च पश्चिमाम् ।
स शूद्रेण समोलोके सर्वकर्म विगर्हितः ॥
हुत्वाग्नौ विधिवन्मन्त्रैर्भुक्त्वा यज्ञावशिष्टकम् ।
विसृज्य बान्धवजनं शयीत शुष्कपदो निशि ।
नोत्तराभि मुखः सुप्यात् पश्चिमाभिमुखो न च ॥
नवाङ्मुखो न नग्नो वा न च भिन्नासने क्वचित् ।
न भग्नायान्तु खट्वायां शून्यागारे तथैव च ॥
इत्येव मखिलं प्रोक्तं अहन्यहनि वै मया ।
ब्राह्मणोक्तं कृत्यजातं अपवर्ग फलप्रदम् ॥
नास्तिक्यादथवालस्यात् ब्राह्मणो न करोति यः ।
स याति नरकान् घोरान् शूकरेष्वभि जायते ॥
नान्यो विमुक्तये पन्था मुक्त्वाश्रमविधिं स्वकम् ।
तस्मात्कर्माणि कुर्वीत तुष्टये परमेष्ठिनः ॥

इति लघुव्यासकृतौ द्वितीयोऽध्यायः ।

लघुव्याससंहिता समाप्ता ।

# व्याससंहितायाम् ।

## प्रथमोऽध्यायः ।

वाराणस्यां सुखासीनं वेदव्यासं तपोनिधिम् ।
पप्रच्छुर्मुनयोऽभ्येत्य धर्म्मान् वर्णव्यवस्थितान् ॥
स पृष्टः स्मृतिमान् स्मृत्वा स्मृतिं वेदार्थगर्भिताम् ।
उवाचाथ प्रसन्नात्मा मुनयः श्रूयता मिति ॥
यत्र यत्र स्वभावेन कृष्णसारोमृगः सदा ।
चरते तत्र वेदोक्तोधर्मोभवितुमर्हति ॥
श्रुतिस्मृतिपुराणानां विरोधोयत्र दृश्यते ।
तत्र श्रौतं प्रमाणन्तु तयोर्द्वैधे स्मृतिर्वरा ॥
ब्राह्मणक्षत्रिय विशस्त्रयोवर्णाद्विजातयः ।
श्रुतिस्मृतिपुराणोक्तधर्मयोग्यास्तु नेतरे ॥
शूद्रोवर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति ।
वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना ॥
विप्रवद्विप्रविन्नासु क्षत्रविन्नासु विप्रवत् ।
जातकर्म्माणि कुर्व्वीत ततः शूद्रासु शूद्रवत् ॥
वैश्यासु विप्रक्षत्राभ्यां ततः शूद्रासु शूद्रवत् ।
अधमादुत्तमायान्तु जातः शूद्राधमः स्मृतः ॥
ब्राह्मण्यां शूद्रजनितश्चण्डालोधर्मवर्जितः ।
कुमारीसम्भवस्त्वेकः सगोत्रायां द्वितीयकः ॥

ब्राह्मण्यां शूद्रजनितश्चाण्डालस्त्रिविधः स्मृतः ।
वर्द्धकीनापितोगोपश्चाशापः कुम्भकारकः ॥
वणिक्किरातकायस्थमालाकार कुटुम्बिनः ।
वरटोमेदचण्डालदासश्वपचकोलकाः ॥
एतेऽन्त्यजाः समाख्याता ये चान्ये च गवाशनाः ।
एषां सम्भाषणात् स्नानं दर्शनादर्कवीक्षणम् ॥
गर्भाधानं पुंसवनं सीमन्तोजातकर्म च ।
नामक्रियानिष्क्रमणेऽन्नाशनं वपनक्रिया ॥
कर्णवेधोव्रतादेशो वेदारम्भक्रियाविधिः ।
केशान्तः स्नानमुद्वाहोविवाहाग्निपरिग्रहः ॥
त्रेताग्निसंग्रहश्चेति संस्काराः षोडश स्मृताः ।
नवैताः कर्णवेधान्तामन्त्रवर्जं क्रियाः स्त्रियाः ॥
विवाहोमन्त्रतस्तस्याः शूद्रस्यामन्त्रतोदश ।
गर्भाधानं प्रथमतस्तृतीये मासि पुंसवः ॥
सीमन्तश्चाष्टमे मासि जाते जातक्रिया भवेत् ।
एकादशेऽह्नि नामार्कस्येक्षा मासि चतुर्थके ॥
षष्ठे मास्यन्नमश्नीयाच्चूडाकर्म कुलोचितम् ।
कृतचूडे च बाले च कर्णवेधोविधीयते ॥
विप्रोगर्भाष्टमे वर्षे क्षत्रएकादशे तथा ।
द्वादशे वैश्यजातिस्तु व्रतोपनयमर्हति ॥
तस्य प्राप्तव्रतस्यायं कालः स्याद्द्विगुणाधिकः ।
वेदव्रतच्युतोव्रात्यः स व्रात्यस्तोममर्हति ॥
द्वे जन्मनी द्विजातीनां मातुः स्यात् प्रथमं तयोः ।
द्वितीयं छन्दसां मातुर्ग्रहणाद्विधिवद्गुरोः ॥

एवं द्विजातिमापन्नो विमुक्तो वान्यदोषतः ।
श्रुतिस्मृतिपुराणानां भवेदध्ययनक्षमः ॥
उपनीतो गुरुकुले वसेन्नित्यं समाहितः ।
बिभृयाद्दण्डकौपीनोपवीताजिनमेखलाः ॥
पुण्येऽह्नि गुर्वनुज्ञातः कृतमन्त्राहुतिक्रियः ।
स्मृत्वोङ्कारञ्च गायत्रीमारभेद्वेदमादितः ॥
शौचाचारविचारार्थं धर्मशास्त्रमपि द्विजः ।
पठेत गुरुतः सम्यक् कर्म तद्दिष्टमाचरेत् ॥
ततोऽभिवाद्य स्थविरान् गुरुञ्चैव समाश्रयेत् ।
स्वाध्यायार्थं तदा यत्नः सर्वदा हितमाचरेत् ॥
नापच्छिन्नोऽपि भाषेत न व्रजेत्ताडितोऽपि वा ।
विद्वेषमथ पैशुन्यं हिंसनञ्चार्कवीक्षणम् ॥
तौर्यत्रिकानृतोन्मादपरिवादानलङ्क्रियाम् ।
अञ्जनोद्वर्त्तनादर्शस्रग्विलेपनयोषितः ॥
वृथाटनमसन्तोषं ब्रह्मचारी विवर्ज्जयेत् ।
ईषच्चलितमध्याह्ने ऽनुज्ञातो गुरुणा स्वयम् ॥
आलोलुपश्चरेद्भैक्षं व्रतिषूत्तमवृत्तिषु ।
सद्योभिक्षान्नमादाय वित्तवत्तदुपस्पृशेत् ॥
कृतमाध्याह्निकोऽश्नीयादनुज्ञातो यथाविधि ।
नाद्यादेकान्नमुच्छिष्टं भुक्त्वा चाचामितान्नियात् ॥
नान्यद्विच्छितमादद्यादापन्नो द्रविणादिकम् ।
अनिन्द्यामन्त्रितः श्राद्धे पैत्र्येऽद्याद्गुरुचोदितः ॥
एकान्नमप्यविरोधे व्रतानां प्रथमाश्रमी ।
भुक्त्वा गुरुमुपासीत कृत्वा सन्धुक्षणादिकम् ॥

समिधोऽग्नावादधीत ततः परिचरेद्गुरुम् ।
अधीत गुर्व्वनुज्ञातः प्रणम्य प्रथमं गुरोः ॥
एवमन्वहमभ्यासी ब्रह्मचारी व्रतञ्चरेत् ।
हितोपवादः प्रियवाक् सम्यग्गुर्व्वर्थसाधकः ॥
नित्यमाराधयेदेनमासमाप्तेः श्रुतिग्रहात् ।
अनेन विधिनाधीतोवेदमन्त्रो द्विजं नयेत् ॥
शापानुग्रहसामर्थ्यमृषीणाञ्च सलोकताम् ।
पयोऽमृताभ्यां मधुभिः साज्यैः प्रीणन्ति देवताः ॥
तस्मादहरहर्व्वेदमनध्यायमृते पठेत् ।
यदङ्गं तदनध्याये गुरोर्व्वचनमाचरन् ॥
व्यतिक्रमादसम्पूर्णमनहंकृतिराचरेत् ।
परत्रेह च तद्ब्रह्म अनधीतमपि द्विजम् ।
यस्तूपनयनादेतदामृत्योर्व्रतमाचरेत् ॥
स नैष्ठिकोब्रह्मचारी ब्रह्मसायुज्यमाप्नुयात् ।
उपकुर्व्वाणकोयस्तु द्विजः षड्विंशवार्षिकः ॥
केशान्तकर्म्मणा तत्र यथोक्तचरितव्रतः ।
समाप्य वेदान् वेदौ वा वेदं वा प्रसभं द्विजः ॥
स्नायीत गुर्व्वनुज्ञातः प्रवृत्तोदितदक्षिणः ।
इति श्रीवेदव्यासीये धर्म्मशास्त्रे प्रथमोऽध्यायः ।

# द्वितीयोऽध्यायः ।

एवं स्नातकतां प्राप्तो द्वितीयाश्रमकाङ्क्षया ।
प्रतीक्षेत विवाहार्थमनिन्द्यान्वयसम्भवाम् ॥
अरोगादुष्टवंशोत्थामशुल्कादानदूषिताम् ।
सवर्णामसमानार्षाममातृपितृगोत्रजाम् ॥
अनन्यपूर्विकां लघ्वीं शुभलक्षणसंयुताम् ।
धृताधोवसनां गौरीं विख्यातदशपूरुषाम् ॥
ख्यातनाम्नः पुत्त्रवतः सदाचारवतः सतः ।
दातुमिच्छोर्दुहितरं प्राप्य धर्मेण चोद्वहेत् ॥
ब्राह्मोद्वाहविधानेन तदभावे परोविधिः ।
दातव्यैषा सदृशाय वयोविद्यान्वयादिभिः ॥
पितृतत्पितृभ्रातृषु पितृव्यज्ञातिमातृषु ।
पूर्व्वाभावे परोदद्यात् सर्व्वाभावे स्वयं व्रजेत् ॥
यदि सा दातृवैकल्याद्रजः पश्येत् कुमारिका ।
भ्रूणहत्याश्च यावत्यः पतितः स्यात्तदप्रदः ॥
तुभ्यं दास्याम्यहमिति ग्रहीष्यामीति यस्तयोः ।
कृत्वा समयमन्योन्यं भजते न स दण्डभाक् ॥
त्यजन्नदुष्टां दण्ड्यः स्याद्दूषयंश्चाप्यदूषिताम् ।
ऊढायां हि सवर्णायामन्यां वा काममुद्वहेत् ॥
तस्यामुत्पादितः पुत्त्रो न सवर्णात् प्रहीयते ॥
उद्वहेत् क्षत्त्रियां विप्रो वैश्याञ्च क्षत्त्रियो विशाम् ।

नतु शूद्रां द्विजः कश्चिन्नाधमः पूर्व्ववर्णजाम् ॥
नानावर्णासु भार्य्यासु सवर्णा सहचारिणी ।
धर्म्या धर्मेषु धर्मिष्ठा ज्येष्ठा तस्य स्वजातिषु ॥
पाटितोऽयं द्विजाः पूर्व्वमेकदेहः स्वयम्भुवा ।
पतयोऽर्द्धेन चार्द्धेन पत्न्योऽभूवन्निति श्रुतिः ॥
यावन्न विन्दते जायां तावदर्द्धो भवेत् पुमान् ।
नार्द्धं प्रजायते सर्व्वं प्रजायेतेत्यपि श्रुतिः ॥
गुर्व्वी सा भूस्त्रिवर्गस्य वोढुं नान्येन शक्यते ।
यतस्ततोऽन्वहं भूत्वा स्ववर्णोविभृयाच्च ताम् ॥
कृतदारोऽग्निपत्नीभ्यां कृतवेश्मा गृहं वसेत् ।
स्ववृत्त्यं वित्तमासाद्य वैतानाग्निं न हापयेत् ॥
स्मार्त्तं वैवाहिके वह्नौ श्रौतं वैतानिकाग्निषु ।
कर्म कुर्य्यात् प्रतिदिनं विधिवत् प्रीतिपूर्व्वतः ॥
सव्यम्धमार्थकामेषु दम्पतिभ्यामहर्निशम् ।
एकचित्ततया भाव्यं समानव्रतवृत्तितः ॥
न पृथग्विद्यते स्त्रीणां त्रिवर्गविधिसाधनम् ।
भावतो ह्यतिदेशाद्वा इति शास्त्रविधिः परः ॥
पत्युः पूर्व्वं समुत्थाय देहशुद्धिं विधाय च ।
उत्थाप्य शयनाद्यानि कृत्वा वेश्मविशोधनम् ॥
मार्ज्जनैर्लेपनैः प्राप्य साग्निशालं स्वमङ्गनम् ।
शोधयेदग्निकार्य्याणि स्निग्धान्युष्णेन वारिणा ॥
प्रोक्षणैरिति तान्येव यथास्थानं प्रकल्पयेत् ।
द्वन्द्वपात्राणि सर्व्वाणि न कदाचिद्वियोजयेत् ॥
शोधयित्वा तु पात्राणि पूरयित्वा तु धारयेत् ।

महानसस्य पात्राणि बहिः प्रक्षाल्य सर्व्वथा ॥
मृद्भिश्च शोधयेच्चुल्लीं तत्राग्निं विन्यसेत्ततः ।
स्मृत्वा नियोगपात्राणि रसांश्च द्रविणानि च ॥
कृतपूर्व्वाह्णकार्य्या च स्वगुरूनभिवादयेत् ।
ताभ्यां भर्तृपितृभ्यां वा भ्रातृमातुलबान्धवैः ॥
वस्त्रालङ्काररत्नानि प्रदत्तान्येव धारयेत् ।
मनोवाक्कर्मभिः शुद्धा पतिदेशानुवर्त्तिनी ॥
छायेवानुगता स्वच्छा सखीव हितकर्मसु ।
दासीवादिष्टकार्य्येषु भार्य्या भर्तुः सदा भवेत् ॥
ततोऽन्नसाधनं कृत्वा पतये विनिवेद्य तत् ।
वैश्वदेवकृतैरन्नैर्भोजनीयांश्च भोजयेत् ॥
पतिञ्चैतदनुज्ञातः शिष्टमन्नाद्यमात्मना ।
भुक्त्वा नयेदहःशेषमायव्ययविचिन्तया ॥
पुनः सायं पुनः प्रातर्गृहशुद्धिं विधाय च ॥
कृतान्नसाधना साध्वी सुभृशं भोजयेत् पतिम् ।
नातितृप्ता स्वयं भुक्त्वा गृहनीतिं विधाय च ॥
आस्तीर्य्य साधुशयनं ततः परिचरेत् पतिम् ।
सुप्ते पतौ तदभ्याशे स्वपेत्तद्गतमानसा ।
अनग्ना चाप्रमत्ता च निष्कामा च जितेन्द्रिया ॥
नोच्चैर्वदेन्न परुषं न बहून् पत्युरप्रियम् ।
न केनचित् विवदेच्च अप्रलापविलापिनी ॥
नचातिव्ययशीला स्यान्न धर्मार्थविरोधिनी ।
प्रमादोन्मादरोषेर्ष्यावञ्चनञ्चातिमानिताम् ॥
पैशुन्यहिंसाविद्वेषमहाहङ्कारधूर्त्तताः ।

नास्तिक्यसाहसस्तेयदम्भान् साध्वी विवर्जयेत् ॥
एवं परिचरन्ती सा पतिं परमदैवतम् ।
यशः शमिह यात्येव परत्र च सलोकताम् ॥
योषितो नित्यकर्म्मोक्तं नैमित्तिकमथोच्यते ।
रजोदर्शनतो दोषात् सर्वमेव परित्यजेत् ॥
सर्व्वैरलक्षिता शीघ्रं लज्जितान्तर्गृहे वसेत् ।
एकाम्बरावृता दीना स्नानालङ्कारवर्जिता ॥
मौनिन्यधोमुखी चक्षुःपाणिपद्भिरचञ्चला ।
अश्नीयात् केवलं भक्तं नक्तं मृण्मयभाजने ॥
स्वपेद्भूमावप्रमत्ता क्षपेदेवमहस्त्रयम् ।
स्नायीत च त्रिरात्रान्ते सचैलमुदिते रवौ ॥
विलोक्य भर्त्तुर्वदनं शुद्धा भवति धर्मतः ।
कृतशौचा पुनः कर्म पूर्ववच्च समाचरेत् ॥
रजोदर्शनतो याः स्यूरात्रयः षोडशर्त्तवः ।
ततः पुंबीजमक्लिष्टं शुद्धे क्षेत्रे प्ररोहति ॥
चतस्रश्चादिमा रात्रीः पर्ववच्च विवर्जयेत् ।
गच्छेद्युग्मासु रात्रीषु पौष्णपित्र्यर्क्षराक्षसान् ॥
प्रच्छादितादित्यपथे पुमान् गच्छेत् स्वयोषितः ।
क्षामालङ्कृदवाप्नोति पुत्रं पूजितलक्षणम् ॥
ऋतुकालेऽभिगम्यैवं ब्रह्मचर्य्ये व्यवस्थितः ।
गच्छन्नपि यथाकामं न दुष्टः स्यादनन्यकृत् ॥
भ्रूणहत्यामवाप्नोति ऋतौ भार्य्यापराङ्मुखः ।
सा त्ववाप्याऽन्यतोगर्भं त्याज्या भवति पापिनी ॥
महापातकदुष्टा च पतिगर्भविनाशिनी ।

सहधर्मचारिणीं पत्नीं त्यक्त्वा पतति धर्मतः ॥
महापातकदुष्टोऽपि नाप्रतीक्ष्यस्तया पतिः ।
अशुद्धे त्वगमा दूरं स्थितायामनुचिन्तया ॥
व्यभिचारेण दुष्टानां पतीनां दर्शनाहृते ।
धिक्कृतायामवाच्यायामन्यत्र वासयेत् पतिः ॥
पुनस्तां मार्त्तवस्नातां पूर्ववद्व्यवहारयेत् ।
धूर्त्तां च धर्मकामघ्नीमपुत्रां दीर्घरोगिणीम् ॥
सुदुष्टां व्यसनासक्तामहितामधिवासयेत् ।
अधिविन्नामपि विभुः स्त्रीणां तु समतामियात् ॥
विवर्णा दीनवदना देहसंस्कारवर्जिता ।
पतिव्रता निराहारा शोष्यते प्रोषिते पतौ ॥
मृतं भर्त्तारमादाय ब्राह्मणी वह्निमाविशेत् ।
जीवन्ती चेत्त्यक्तकेशा तपसा शोधयेद्वपुः ॥
सर्व्वावस्थासु नारीणां न युक्तं स्यादरक्षणम् ।
तदेवानुक्रमात् कार्य्यं पितृभर्तृसुतादिभिः ॥
जाताः सुरक्षिता या ये पुत्रपौत्रप्रपौत्रकाः ।
ये यजन्ति पितॄन् यज्ञैर्मोक्षप्राप्तिमहोदयैः ॥
मृतानामग्निहोत्रेण दाहयेद्विधिपूर्वकम् ।
दाहयेदविलम्बेन भार्य्याञ्चात्र व्रजेत सा ॥
इति श्रीवेदव्यासीये धर्मशास्त्रे द्वितीयोऽध्यायः ।

## तृतीयोऽध्यायः ।

नित्यं नैमित्तिकं काम्यमिति कर्म त्रिधा मतम् ।
त्रिविधं तच्च वक्ष्यामि गृहस्थस्यावधार्य्यताम् ॥

यामिन्याः पश्चिमे यामे त्यक्तनिद्रो हरिं स्मरेत् ।
आलोक्य मङ्गलद्रव्यं कर्मावश्यकमाचरेत् ॥
कृतशौचो निषेव्याग्निं दन्तान् प्रक्षाल्य वारिणा ।
स्नात्वोपास्य द्विजः सन्ध्यां देवादींश्चैव तर्पयेत् ॥
वेदवेदाङ्गशास्त्राणि इतिहासानि चाभ्यसेत् ।
अध्यापयेच्च सच्छिष्यान् सद्विप्रांश्च द्विजोत्तमः ॥
अलब्धं प्रापयेल्लब्ध्वा क्षणमात्रं समापयेत् ॥
समर्थो हि समर्थेन नाविज्ञातः क्वचिद्वसेत् ॥
सरित्सरसि वापीषु गर्तप्रस्रवणादिषु ।
स्नायीत यावदुद्धृत्य पञ्च पिण्डानि वारिणा ॥
तीर्थाभावेऽप्यशक्त्या वा स्नायात्तोयैः समाहृतैः ।
गृहाङ्गनगतस्तत्र यावदम्बरपीडनम् ॥
स्नानमब्दैवतैः कुर्यात् पावनैश्चापि मार्ज्जनम् ।
मन्त्रैः प्राणांस्त्रिरायम्य सौरैश्चार्कं विलोकयेत् ॥
तिष्ठन् स्थित्वा तु गायत्रीं ततः स्वाध्यायमारभेत् ।
ऋचाञ्च यजुषां साम्नामथर्व्वाङ्गिरसामपि ॥
इतिहासपुराणानां वेदोपनिषदां द्विजः ।
शक्त्या सम्यक् पठेन्नित्यमल्पमप्यासमापनात् ॥
स यज्ञदानतपसामखिलं फलमाप्नुयात् ।
तस्मादहरहर्वेदं द्विजोऽधीयीत वाग्यतः ॥
धर्मशास्त्रेतिहासादि सर्वेषां शक्तितः पठेत् ।
कृतस्वाध्यायः प्रथमं तर्पयेच्चाथ देवताः ॥
जान्वा च दक्षिणं दर्भैः प्रागग्रैः सयवैस्तिलैः ।
एकैकाञ्जलिदानेन प्रकृतिस्थोपवीतकः ॥

सप्रजानुद्वयो ब्रह्मसूत्रहार उदङ्मुखः ।
तिर्य्यग्दर्भैश्च वामाग्रैर्यवैस्तिलविमिश्रितैः ॥
अम्भोभिरुत्तरक्षिप्तैः कनिष्ठामूलनिर्गतैः ।
द्वाभ्यां द्वाभ्यामञ्जलिभ्यां मनुष्यांस्तर्पयेत्ततः ॥
दक्षिणाभिमुखः सव्यं जान्वा च द्विगुणैः कुशैः ।
तिलैर्जलैश्च देशिन्या मूलदर्भाद्विनिःसृतैः । ॥
दक्षिणांसोपवीतः स्यात् क्रमेणाञ्जलिभिस्त्रिभिः ।
सन्तर्पयेद्दिव्यपितृंस्तत्परांश्च पितॄन् स्वकान् ॥
मातृमातामहांस्तद्वत्स्त्रीनेवं हि त्रिभिस्त्रिभिः ।
मातामहाश्च येऽप्यन्ये गोत्रिणो दारवर्जिताः ॥
तानेकाञ्जलिदानेन तर्पयेच्च पृथक् पृथक् ।
असंस्कृतप्रमीता ये प्रेतसंस्कारवर्जिताः ॥
वस्त्रनिष्पीडनाम्भोभिस्तेषामाप्यायनम्भवेत् ।
अतर्पितेषु पितृषु वस्त्रं निष्पीडयेच्च यः ॥
निराशाः पितरस्तस्य भवन्ति सुरमानुषैः ।
पयोदर्भस्वधाकारगोत्रनामतिलैर्भवेत् ॥
सुदत्तं तत्पुनस्तेषामेकेनापि वृथा विना ।
अन्यचित्तेन यद्दत्तं यद्दत्तं विधिवर्जितम् ॥
अनासनस्थितेनापि तज्जलं रुधिरायते ।
एवं सन्तर्पिताः कामैस्तर्पकांस्तर्पयन्ति च ॥
ब्रह्मविष्णुशिवादित्यमित्रावरुणनामभिः ।
पूजयेल्लक्षितैर्मन्त्रैर्जलमन्त्रोक्तदेवताः ॥
उपस्थाय रवेः काष्ठां पूजयित्वा च देवताः ।
ब्रह्माग्नीन्द्रौषधी जीवविष्णुनामरुताङ्कसाम् ॥

अपां यक्ष्मेति सत्कार्य नमस्कारैः स्वनामभिः।
कृत्वा मुखं समालभ्य स्नानमेवं समाचरेत्॥
ततः प्रविश्य भवनमावसथ्ये हुताशने।
पाकयज्ञांश्च चतुरो विदध्याद्विधिवद्द्विजः॥
अनाहितावसथ्याग्निरादायान्नं घृतप्लुतम्।
शाकलेन विधानेन जुहुयाल्लौकिकेऽनले॥
व्यस्ताभिर्व्याहृतीभिश्च समस्ताभिस्ततः परम्।
षड्भिर्देवकृतस्येति मन्त्रवद्भिर्यथाक्रमम्॥
प्राजापत्यं स्विष्टकृतं हुत्वैवं द्वादशाहुतीः।
ओङ्कारपूर्वः स्वाहान्तस्त्यागः स्विष्टविधानतः॥
भुवि दर्भान् समास्तीर्य बलिकर्म समाचरेत्।
विश्वेभ्यो देवेभ्य इति सर्वेभ्यो भूतेभ्य एव च॥
भूतानां पतये चेति नमस्कारेण शास्त्रवित्।
दद्याद्बलित्रयञ्चाग्रे पितृभ्यश्च स्वधा नमः॥
पात्रनिर्णेजनं वारि वायव्यां दिशि निःक्षिपेत्।
उद्धृत्य षोडशग्रासमात्रमन्नं घृतोक्षितम्।
इदमन्नं मनुष्येभ्यो हन्तेत्युक्त्वा समुत्सृजेत्।
गोत्रनामस्वधाकारैः पितृभ्यश्चापि शक्तितः॥
षड्भ्योऽन्नमन्वहं दद्यात् पितृयज्ञविधानतः।
वेदादीनां पठेत् किञ्चिदल्पं ब्रह्ममखाप्तये॥
ततोऽन्यदन्नमादाय निर्गत्य भवनाद्बहिः।
काकेभ्यः श्वपचेभ्यश्च प्रक्षिपेद्ग्रासमेव च॥
उपविश्य गृहद्वारि तिष्ठेद्यावन्मुहूर्तकम्।
अप्रमुक्तोऽतिथिं लिप्सुर्भावशुद्धः प्रतीक्षकः॥

आगतं दूरतः श्रान्तं भक्तुकाममकिञ्चनम्।
दृष्ट्वा संमुखमभ्येत्य सत्कृत्य प्रश्रयार्चनैः॥
पादधावनसम्मानाभ्यञ्जनादिभिरर्च्चितः।
त्रिदिवं प्रापयेत्सद्यो यज्ञस्याभ्यधिकोऽतिथिः॥
कालागतोऽतिथिर्दृष्टवेदपारो गृहागतः।
द्वावेतौ पूजितौ स्वर्गं नयतोऽधस्त्वपूजितौ।
विवाह्यस्नातकक्ष्माभृदाचार्यसुहृदृत्विजः॥
अर्घ्या भवन्ति धर्मेण प्रतिवर्षं गृहागताः।
गृहागताय सत्कृत्य श्रोत्रियाय यथाविधि॥
भक्त्योपकल्पयेदेकं महाभागं विसर्जयेत्।
विसर्जयेदनुव्रज्य सुतृप्तश्रोत्रियातिथीन्।
मित्रमातुलसम्बन्धिबान्धवान् समुपागतान्॥
भोजयेद्गृहिणीभिक्षां सत्कृतां भिक्षुकोऽर्हति।
स्वाद्वन्नमन्नस्वादु ददद्गच्छत्यधोगतिम्॥
गर्भिण्यातुरभृत्येषु बालवृद्धातुरादिषु।
बुभुक्षितेषु भुञ्जानो गृहस्थोऽश्नाति किल्बिषम्॥
नाद्यादृगृहेऽन्न पाकाद्यं कदाचिदनिमन्त्रितः।
निमन्त्रितोऽपि निन्द्येन प्रत्याख्यानं द्विजोऽर्हति॥
शूद्राभिशस्तवार्धुष्यवाग्दुष्टक्रूरतस्कराः।
क्रुद्धापविद्धषण्ढोग्र बधबन्धनजीविनः॥
शैलूषशौण्डिकोन्मत्तोन्मत्तव्रात्यव्रतच्युताः।
नग्ननास्तिकनिर्लज्ज पिशुनव्यसनान्विताः॥
कदर्यस्त्रीजितानार्य्यपरवादकृता नराः।
अनीशाः कीर्तिमन्तोऽपि राजदेवस्वहारकाः॥

शयनासनसंसर्गवृत्तकर्मादिदूषिताः ।
अश्रद्दधानाः पतिता भ्रष्टाचारादयश्च ये ॥
अभोज्यान्नाः स्युरन्नादो यस्य यः स्यात्स तत्समः ।
नापितान्वयमित्रार्द्धसीरिणो दासगोपकाः ॥
शूद्राणामप्यमीषान्तु भुक्त्वान्नं नैव दुष्यति ।
धर्मेणान्योन्यभोज्यान्ना द्विजास्तु विदितान्वयाः ॥
स्ववृत्त्योपार्जितं मेध्यमाकरस्थमनाविकम् ।
अवलीढमगोघ्रातमस्पृष्टं शूद्रवायसैः ॥
अनुच्छिष्टमसंदुष्टमपर्य्युषितमेव च ।
अम्लानवाह्यमन्नाद्यमाद्यं नित्यं सुसंस्कृतम् ॥
कृशरापूपसंयावपायसं शष्कुलीति च ।
नाश्नीयाद्ब्राह्मणो मांसमनियुक्तः कथञ्चन ॥
क्रतौ श्राद्धे नियुक्तो वा अनश्नन् पतति द्विजः ।
मृगयोपार्जितं मांसमभ्यर्च्य पितृदेवताः ॥
क्षत्रियो द्वादशोनं तत् क्रीत्वा वैश्योऽपि धर्मतः ।
द्विजो जग्ध्वा वृथामांसं हत्वाप्यविधिना पशून् ॥
निरयेष्वक्षयं वासमाप्नोत्याचन्द्रतारकम् ।
सर्वान् कामान् समासाद्य फलमश्वमखस्य च ॥
मुनिसाम्यमवाप्नोति गृहस्थोऽपि द्विजोत्तमः ।
द्विजभोज्यानि गव्यानि माहिष्याणि पयांसि च ॥
निर्दशाहसन्धिसवत्सवत्सवन्तीपयांसि च ।
पलाण्डुश्वेतवृन्ताकरक्तमूलकमेव च ॥
गृञ्जनारुणवृक्षासृग्जतुगर्भफलानि च ।

अकालकुसुमादीनि द्विजोऽजग्धेन्द्रवं चरेत्॥
वाग्दूषितमविज्ञातमन्यपीडितकार्य्यपि।
धूर्तेभ्योऽन्नमदत्त्वा च तदन्नं गृहिणोदहेत्॥
हैमराजतकांस्येषु पात्रेष्वद्यात् सदा गृही।
तदभावे साधुगन्धलोध्रद्रुमलतासु च॥
पलाशपद्मपत्रेषु गृहस्थोभोक्तुमर्हति।
ब्रह्मचारी यतिश्चैव श्रेयोयज्ञोक्तुमर्हति॥
अभ्युत्थानं नमस्कारैर्भुवि दद्याद्बलित्रयम्।
भूपतये भुवः पतये भूतानां पतये तथा॥
अपः प्राश्य ततः पश्चात् पञ्चप्राणाहुतिक्रमात्।
स्वाहाकारेण जुहुयाच्छेषमद्याद्यथासुखम्॥
अनन्यचित्तोभुञ्जीत वाग्यतोऽन्नमकुत्सयन्।
आतृप्तेरन्नमश्नीयादक्षुण्णं पात्रमुत्सृजेत्॥
उच्छिष्टमन्नमुद्धृत्य ग्रासमेकं भुवि क्षिपेत्।
आचान्तः साधुसङ्गेन सद्विद्यापठनेन च॥
वृत्तवृद्धकथाभिश्च शेषाहमतिवाहयेत्।
सायं सन्ध्यामुपासीत हुत्वाग्निं भृत्यसंयुतः॥
आपोशानक्रियापूर्वमश्नीयादन्वहं द्विजः।
सायमप्यतिथिः पूज्यो होमकालागतोऽनिशम्॥
श्रद्धया शक्तितोनित्यं श्रुतं हन्यादपूजितः।
नातितृप्तउपस्पृश्य प्रक्षाल्य चरणौ शुचिः॥
अप्रत्यगुत्तरशिराः शयीत शयने शुभे।
शक्तिमानुदिते काले स्नानं सन्ध्यां न हापयेत्॥

ब्राह्मे मुहूर्त्ते चोत्थाय चिन्तयेद्धितमात्मनः।
शक्तिमान् मतिमान् नित्यं वृत्तमेतत् समाचरेत्॥

इति वेदव्यासीये धर्मशास्त्रे तृतीयोऽध्यायः॥

---

## चतुर्थोऽध्यायः।

इति व्यासकृतं शास्त्रं धर्मसारसमुच्चयम्।
आश्रमे यानि पुण्यानि मोक्षधर्माश्रितानि च॥
गृहाश्रमात् परोधर्मोनास्ति नास्ति पुनः पुनः।
सर्वतीर्थफलं तस्य यथोक्तं यस्तु पालयेत्॥
गुरुभक्तोभृत्यपोषी दयावाननसूयकः।
नित्यजापी च होमी च सत्यवादी जितेन्द्रियः॥
स्वदारे यस्य सन्तोषः परदारनिवर्त्तनम्।
अपवादोऽपि नो यस्य तस्य तीर्थफलं गृहे॥
परदारान् परद्रव्यं हरते यो दिने दिने।
सर्व्वतीर्थाभिषेकेण पापं तस्य न नश्यति॥
गृहेषु सवनीयेषु सर्वतीर्थफलं ततः।
अन्नदस्य त्रयो भागाः कर्त्ता भागेन लिप्यते॥
प्रतिश्रयं पादशौचं ब्राह्मणानाञ्च तर्पणम्।
न पापं संस्पृशेत्तस्य वलिभिक्षां ददाति यः॥
पादोदकं पादघृतं दीपमन्नं प्रतिश्रयम्।
योददाति ब्राह्मणेभ्यो नोपसर्पति तं यमः॥
विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी।
तावत् पुष्करपात्रेषु पिबन्ति पितरोऽमृतम्॥

यत्फलं कपिलादाने कार्त्तिक्यां ज्येष्ठपुष्करे।
तत्फलं ऋषयः श्रेष्ठा विप्राणां पादशौचने॥
स्वागतेनाग्नयः प्रीता आसनेन शतक्रतुः।
पितरः पादशौचेन अन्नाद्येन प्रजापतिः॥
मातापित्रोः परं तीर्थं गङ्गा गावो विशेषतः।
ब्राह्मणात् परमं तीर्थं न भूतं न भविष्यति॥
इन्द्रियाणि वशीकृत्य यत्रएव वसेन्नरः।
तत्र तस्य कुरुक्षेत्रं नैमिषं पुष्कराणि च॥
गङ्गाद्वारञ्च केदारं सन्निहत्य तथैव च।
एतानि सर्वतीर्थानि कृत्वा पापैः प्रमुच्यते॥
वर्णानामाश्रमाणाञ्च चातुर्वर्ण्यस्य भो द्विजाः!।
दानधर्मं प्रवक्ष्यामि यथा व्यासेन भाषितम्॥
यद्ददाति विशिष्टेभ्यो यच्चाश्नाति दिने दिने।
तच्च वित्तमहं मन्ये शेषं कस्याभिरक्षति॥
यद्ददाति यदश्नाति तदेव धनिनो धनम्।
अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि॥
किं धनेन करिष्यन्ति देहिनोऽपि गतायुषः।
यद्वर्द्धयितुमिच्छन्तस्तच्छरीरमशाश्वतम्॥
अशाश्वतानि गात्राणि विभवो नैव शाश्वतः।
नित्यं सन्निहितो मृत्युः कर्त्तव्यो धर्मसंग्रहः॥
यदि नाम न धर्माय न कामाय न कीर्त्तये।
यत्परित्यज्य गन्तव्यं तद्धनं किं न दीयते॥
जीवन्ति जीविते यस्य विप्रा मित्राणि बान्धवाः।
जीवितं सफलं तस्य आत्मार्थे को न जीवति॥

पशवोऽपि हि जीवन्ति केवलात्मोदरम्भराः ।
किं कायेन सुगुप्तेन बलिना चिरजीविना ॥
ग्रासादर्द्धमपि ग्रासमर्थिभ्यः किं न दीयते ।
इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥
अदाता पुरुषस्त्यागी धनं संत्यज्य गच्छति ।
दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति ॥
प्राणनाशस्तु कर्त्तव्यो यः कृतार्थो न सोऽमृतः ।
अकृतार्थस्तु यो मृत्युं प्राप्तः खरसमोहि सः ॥
अनाहूतेषु यद्दत्तं यच्च दत्तमयाचितम् ।
भविष्यति युगस्यान्तस्तस्यान्तो न भविष्यति ॥
मृतवत्सा यथा गौश्च कृष्णा लोभेन दुह्यते ।
परस्परस्य दानानि लोकयात्रा न धर्मतः ॥
अदृष्टे चाशुभे दानं भोक्ता चैव न दृश्यते ।
पुनरागमनं नास्ति तत्र दानमनन्तकम् ॥
मातापितृषु यद्दद्याद्भ्रातृषु श्वशुरेषु च ।
जायापत्येषु यद्दद्यात् सोऽनन्तः स्वर्गसंक्रमः ॥
पितुः शतगुणं दानं सहस्रं मातुरुच्यते ।
भगिन्यां शतसाहस्रं सोदरे दत्तमक्षयम् ॥
अहन्यहनि दातव्यं ब्राह्मणेषु मुनीश्वराः ! ।
आगमिष्यति यत् पात्रं तत्पात्रं तारयिष्यति ॥
किञ्चिद्वेदमयं पात्रं किञ्चित् पात्रं तपोमयम् ।
पात्राणामुत्तमं पात्रं शूद्रान्नं यस्य नोदरे ॥
यस्य चैव गृहे मूर्खो दूरे चापि गुणान्वितः ।
गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः ॥

देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥
ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते ।
ज्वलन्तमग्निमुत्सृज्य नहि भस्मनि हूयते ॥
सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत् ।
भोजने चैव दाने च हन्यात्त्रिपुरुषं कुलम् ॥
यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ।
यश्च विप्रोऽनधीयानस्त्रयस्ते नामधारकाः ॥
ग्रामस्थानं यथा शून्यं यथा कूपश्च निर्जलः ।
यश्च विप्रोऽनधीयानस्त्रयस्ते नामधारकाः ।
ब्राह्मणेषु च यद्दत्तं यच्च वैश्वानरे हुतम् ।
तद्धनं धनमाख्यातं धनं शेषं निरर्थकम् ॥
सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
सहस्रगुणमाचार्य्ये ह्यनन्तं वेदपारगे ॥
ब्रह्मबीजसमुत्पन्नो मन्त्रसंस्कारवर्जितः ।
जातिमात्रोपजीवी च स भवेद्ब्राह्मणः समः ॥
गर्भाधानादिभिर्मन्त्रैर्वेदोपनयनेन च ।
नाध्यापयति नाधीते स भवेद्ब्राह्मणब्रुवः ॥
अग्निहोत्री तपस्वी च वेदमध्यापयेच्च यः ।
सकल्पं सरहस्यञ्च तमाचार्य्यं प्रचक्षते ॥
इष्टिभिः पशुबन्धैश्च चातुर्मास्यैस्तथैव च ।
अग्निष्टोमादिभिर्यज्ञैर्येन चेष्टं स इष्टवान् ॥
मीमांसते च यो वेदान् षड्भिरङ्गैः सविस्तरैः ।
इतिहासपुराणानि स भवेद्वेदपारगः ॥

ब्राह्मणा येन जीवन्ति नान्यो वर्णः कथञ्चन ।
ईदृक्पथमुपस्थाय कोऽन्यन्तं त्यक्तुमुत्सहेत् ॥
ब्राह्मणः स भवेच्चैव देवानामपि दैवतम् ।
प्रत्यक्षञ्चैव लोकस्य ब्रह्मतेजो हि कारणम् ॥
ब्राह्मणस्य मुखं क्षेत्रं निष्कर्षमकण्टकम् ।
वापयेत्तत्र बीजानि सा कृषिः सार्वकामिकी ॥
सुक्षेत्रे वापयेद्वीजं सुपात्रे दापयेद्धनम् ।
सुक्षेत्रे च सुपात्रे च क्षिप्तं नैव विदुष्यति ॥
विद्याविनयसम्पन्ने ब्राह्मणे गृहमागते ।
क्रीडन्त्योषधयः सर्व्वा यास्यामः परमां गतिम् ॥
नष्टशौचे व्रतभ्रष्टे विप्रे वेदविवर्जिते ।
दीयमानं रुदत्यन्नं भयाद्वै दुष्कृतं कृतम् ॥
वेदपूर्णमुखं विप्रं सुभुक्तमपि भोजयेत् ।
नच मूर्खं निराहारं षड्रात्रमुपवासिनम् ॥
यानि यस्य पवित्राणि कुक्षौ तिष्ठन्ति भो द्विजाः ! ।
तानि तस्य प्रयोज्यानि न शरीराणि देहिनाम् ॥
यस्य देहे सदाश्नन्ति हव्यानि त्रिदिवौकसः ।
कव्यानि चैव पितरः किम्भूतमधिकं ततः ॥
यद्भुङ्क्ते वेदविद्विप्रः स्वकर्मनिरतः शुचिः ।
दातुः फलमसङ्ख्यातं प्रतिजन्म तदक्षयम् ॥
हस्त्यश्वरथयानानि केचिदिच्छन्ति पण्डिताः ।
अहं नेच्छामि मुनयः कस्यैताः शस्यसम्पदः ॥
वेदलाङ्गलकृष्टेषु द्विजश्रेष्ठेषु सत्सु च ।

यत्पुरा पातितं बीजं तस्यैताः शस्यसम्पदः ॥
शतेषु जायते शूरः सहस्रेषु च पण्डितः ॥
वक्ता शतसहस्रेषु दाता भवति वा नवा।
न रणे विजयाच्छूरोऽध्ययनान्न च पण्डितः ॥
न वक्ता वाक्पटुत्वेन न दाता चार्थदानतः।
इन्द्रियाणां जये शूरो धर्मं चरति पण्डितः ॥
हितप्रियोक्तिभिर्वक्ता दाता सम्मानदानतः ॥
यद्येकपङ्क्त्यां विषमं ददाति
स्नेहाद्भयाद्वा यदि वार्थहेतोः।
वेदेषु दृष्टं ऋषिभिश्च गीतम्
तद्ब्रह्महत्यां मुनयोवदन्ति ॥
ऊषरे वापितं बीजं भिन्नभाण्डेषु गोदुहम्।
हुतं भस्मनि हव्यञ्च मूर्खे दानमशाश्वतम् ॥
अतस्तु तक्रपुष्टाङ्गो द्विजः शूद्रान्नभोजने।
अहमेवं न जानामि कां योनिं स गमिष्यति ॥
शूद्रान्नेनोदरस्थेन यदि कश्चिन्म्रियेत यः।
स भवेत् शूकरो नूनं तस्य वा जायते कुलम् ॥
गृध्रो द्वादश जन्मानि सप्त जन्मानि शूकरः।
श्वानश्च सप्त जन्मानि इत्येवं मनुरब्रवीत्।
अमृतं ब्राह्मणान्नेन दारिद्र्यं क्षत्रियस्य च॥
वैश्यान्नेन तु शूद्रान्नं शूद्रान्नान्नरकं व्रजेत्।
यश्च भुङ्क्तेऽथ शूद्रान्नं मासमेकं निरन्तरम् ॥
इह जन्मनि शूद्रत्वं मृतः श्वा चैव जायते।

यस्य शूद्रा पचेन्नित्यं शूद्रा वा गृहमेधिनी ॥
वर्जितः पितृदेवैस्तु रौरवं याति स द्विजः ।
भाण्डसङ्करसङ्कीर्णा नानासङ्करसङ्कराः ॥
योनिसङ्करसङ्कीर्णा निरयं यान्ति मानवाः ।
पङ्क्तिभेदी वृथापाकी नित्यं ब्राह्मणनिन्दकः ॥
आदेशी वेदविक्रेता पञ्चैते ब्रह्मघातकाः ॥
इदं व्यासमतं नित्यमध्येतव्यं प्रयत्नतः ।
एतदुक्ताचारवतः पतनं नैव विद्यते ॥

इति श्रीवेदव्यासीये धर्मशास्त्रे चतुर्थोऽध्यायः ।
समाप्ता चेयं व्याससंहिता ।

# शङ्खसंहितायाम् ।

---

## प्रथमोऽध्यायः ।

स्वयम्भुवे नमस्कृत्य सृष्टिसंहारकारिणे ।
चातुर्वर्ण्यहितार्थाय शङ्खः शास्त्रमथाकरोत् ॥
यजनं याजनं दानं तथैवाध्यापनक्रियाम् ।
प्रतिग्रहञ्चाध्ययनं विप्रः कर्म्माणि कारयेत् ॥
दानमध्ययनञ्चैव यजनञ्च यथाविधि ।
क्षत्रियस्य तु वैश्यस्य कर्म्मेदं परिकीर्त्तितम् ॥
क्षत्रियस्य विशेषेण प्रजानां परिपालनम् ।
कृषिगोरक्षवाणिज्यं वैश्यस्य परिकीर्त्तितम् ॥
शूद्रस्य द्विजशुश्रूषा सर्व्वशिल्पानि चाप्यथ ।
क्षमा सत्यं दमः शौचं सर्व्वेषामविशेषतः ॥
ब्राह्मणाः क्षत्रिया वैश्यास्त्रयोवर्णा द्विजातयः ।
तेषां जन्म द्वितीयन्तु विज्ञेयं मौञ्जिबन्धनम् ॥
आचार्य्यस्तु पिता प्रोक्तः सावित्री जननी तथा ।
ब्रह्मक्षत्रविशाञ्चैव मौञ्जिबन्धनजन्मनि ॥
विप्राः शूद्रसमास्तावद्विज्ञेयास्तु विचक्षणैः ।
यावद्वेदे न जायन्ते द्विजा ज्ञेयास्तु तत्परम् ॥

इति शाङ्खीये धर्म्मशास्त्रे प्रथमोऽध्यायः ।

---

## द्वितीयोऽध्यायः ।

गर्भस्य स्फुटताज्ञाने निषेकः परिकीर्त्तितः ।
ततस्तु स्पन्दनात् कार्य्यं सवनन्तु विचक्षणैः ॥
अशौचे तु व्यतिक्रान्ते नामकर्म विधीयते ।
नामधेयञ्च कर्त्तव्यं वर्णानाञ्च समाक्षरम् ।
माङ्गल्यं ब्राह्मणस्योक्तं क्षत्रियस्य बलान्वितम् ॥
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ।
शर्म्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु ॥
धनान्तं चैव वैश्यस्य दासान्तं चान्त्यजन्मनः ।
चतुर्थे मासि कर्त्तव्यमादित्यस्य प्रदर्शनम् ॥
षष्ठेऽन्नप्राशनं मासि चूड़ा कार्य्या यथाकुलम् ।
गर्भाष्टमेऽब्दे कर्त्तव्यं ब्राह्मणस्योपनायनम् ॥
गर्भादेकादशे राज्ञोगर्भात्तु द्वादशे विशः ।
षोड़शाब्दस्तु विप्रस्य द्वाविंशः क्षत्रियस्य तु ॥
विंशतिः सचतुष्का च वैश्यस्य परिकीर्त्तिता ।
नाभिभाषेत सावित्रीमतऊर्द्ध्वं निवर्त्तयेत् ॥
विज्ञातव्यास्त्रयोऽप्येते यथाकालमसंस्कृता ।
सावित्री पतिता व्रात्याः सर्वधर्मवहिष्कृता ॥
मौञ्जीबन्धोद्विजानान्तु क्रमान्मौञ्जी प्रकीर्त्तिता ।
मार्गवैयाघ्रवास्तानि चर्म्माणि ब्रह्मचारिणाम् ॥
पर्णपिप्पलविल्वानां क्रमाद्दण्डाः प्रकीर्त्तिताः ।
कर्णकेशललाटैस्तु तुल्याः प्रोक्ताः क्रमेण तु ॥
अवक्राः सत्वचः सर्वे नाग्निदग्धास्तथैव च ।

यज्ञोपवीतं कार्पासक्षौमोर्णानां यथाक्रमम्॥
आदिमध्यावसानेषु भवच्छब्दोपलक्षितम्।
भैक्षस्य चरणं प्रोक्तं वर्णानामनुपूर्वशः॥
इति शाङ्खीये धर्मशास्त्रे द्वितीयोऽध्यायः।

---

## तृतीयोऽध्यायः।

उपनीय गुरुः शिष्यं वेदमस्मै प्रयच्छति।
भृतकाध्यापको यस्तु उपाध्यायः स उच्यते॥
प्रयतः कल्यमुत्थाय स्नातो कृतकृताशनः।
कुर्व्वीत प्रयतोभूत्वा गुरूणामभिवादनम्॥
अनुज्ञातश्च गुरुणा ततोऽध्ययनमाचरेत्।
कृत्वा ब्रह्माञ्जलिं पश्यन् गुरोर्वदनमानतः॥
ब्रह्मावसाने प्रारम्भे प्रणवञ्च प्रकीर्तयेत्।
अनध्यायेष्वध्ययनं वर्जयेच्च प्रयत्नतः॥
चतुर्द्दशीं पञ्चदशीमष्टमीं राहुसूतकम्।
उल्कापातं महीकम्पमशौचं ग्रामविप्लवम्॥
इन्द्रप्रयाणं सुरतं घनसंघातनिस्वनम्।
वाद्यकोलाहलं युद्धमनध्यायं विवर्जयेत्॥
नाधीयीताभियुक्तोऽपि प्रयत्नान्न च वेगतः।
देवायतनवल्मीकश्मशानशवसन्निधौ।
भैक्षचर्य्यान्तथा कुर्य्याद्ब्राह्मणेषु यथाविधि।
गुरुणा चाप्यनुज्ञातः प्राश्नीयात् प्राङ्मुखः शुचिः।
हितं प्रियं गुरोः कुर्य्यादहङ्कारविवर्जितः॥

उभास्त्र पश्चिमां सन्ध्यां पूजयित्वा हुताशनम्।
अभिवाद्य गुरुं पश्चाद्गुरोर्वचनकृद्भवेत्॥
गुरोः पूर्वं समुत्तिष्ठेच्छयीत चरमं तथा।
मधुमांसाञ्जनं श्राद्धं गीतं नृत्यञ्च वर्जयेत्॥
हिंसापवादवादांश्च स्त्रीलीलाश्च विशेषतः।
मेखलामजिनं दण्डं धारयेच्च प्रयत्नतः।
अधःशायी भवेन्नित्यं ब्रह्मचारी समाहितः॥
एवंकृत्यन्तु कुर्व्वीत वेदस्वीकरणं बुधः।
गुरवे च धनं दत्त्वा स्नायाच्च तदनन्तरम्॥
इति शाङ्खीये धर्मशास्त्रे तृतीयोऽध्यायः।

---

## चतुर्थोऽध्यायः।

विन्देत विधिवद्भार्य्यामसमानार्षगोत्रजाम्।
मातृतः पञ्चमीञ्चापि पितृतस्त्वथ सप्तमीम्॥
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः।
गान्धर्व्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः॥
एते धर्मास्तु चत्वारः पूर्वं विप्रे प्रकीर्त्तिताः।
गान्धर्वो राक्षसश्चैव क्षत्रियस्य प्रशस्यते॥
अप्रार्थितः प्रयत्नेन ब्राह्मस्तु परिकीर्त्तितः।
यज्ञेषु ऋत्विजे दैव आदायार्षस्तु गोद्वयम्॥
प्रार्थिताप्रदानेन प्राजापत्यः प्रकीर्त्तितः।
आसुरो द्रविणादानाद्गान्धर्वः समयान्मिथः॥
राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात्।

तिस्रस्तु भार्य्या विप्रस्य द्वे भार्य्ये क्षत्रियस्य तु ॥
एकैव भार्य्या वैश्यस्य तथा शूद्रस्य कीर्त्तिता ।
ब्राह्मणी क्षत्रिया वैश्या ब्राह्मणस्य प्रकीर्त्तिताः ॥
क्षत्रिया चैव वैश्या च क्षत्रियस्य विधीयते ।
वैश्यैव भार्य्या वैश्यस्य शूद्रा शूद्रस्य कीर्त्तिता ॥
आपद्यपि न कर्त्तव्या शूद्रा भार्य्या द्विजन्मना ।
तस्यां तस्य प्रसूतस्य निष्कृतिर्न विधीयते ॥
तपस्वी यज्ञशीलश्च सर्वधर्मभृताम्बरः ।
ध्रुवं शूद्रत्वमाप्नोति शूद्रश्राद्धे त्रयोदशे ॥
नीयते तु सपिण्डत्वं येषां श्राद्धं कुलोद्भवम् ।
सर्वे शूद्रत्वमायान्ति यदि स्वर्गजितास्तु ते ॥
सपिण्डीकरणं कार्यं कुलजस्य तथा ध्रुवम् ।
श्राद्धं द्वादशकं कृत्वा श्राद्धे प्राप्ते त्रयोदशे ॥
सपिण्डीकरणं नार्हं न च शूद्रस्तथार्हति ।
तस्मात् सर्वप्रयत्नेन शूद्राभार्य्यां विवर्जयेत् ॥
पाणिग्राह्यः सवर्णासु गृह्णीयात् क्षत्रिया शरम् ।
वैश्या प्रतोदमादद्याद्वेदने तु द्विजन्मनः ॥
सा भार्य्या या वहेदग्निं सा भार्य्या या पतिव्रता ।
सा भार्य्या या पतिप्राणा सा भार्य्या या प्रजावती ॥
लालनीया सदा भार्य्या ताड़नीया तथैव च ।
लालिता ताड़िता चैव स्त्री श्रीर्भवति नान्यथा ॥

इति शाङ्खीये धर्मशास्त्रे चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः ।

पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः ।
कण्डनी चोदकुम्भश्च तस्य पापस्य शान्तये ॥
पञ्चयज्ञविधानञ्च गृही नित्यं न हापयेत् ।
पञ्चयज्ञविधानेन तत्पापं तस्य नश्यति ॥
देवयज्ञो भूतयज्ञः पितृयज्ञस्तथैव च ।
ब्रह्मयज्ञो नृयज्ञश्च पञ्च यज्ञाः प्रकीर्त्तिताः ॥
होमो दैवोवलिर्भौतः पित्र्यः पिण्डक्रियास्मृतः ।
स्वाध्यायो ब्रह्मयज्ञश्च नृयज्ञोऽतिथिपूजनम् ॥
वानप्रस्थोब्रह्मचारी यतिश्चैव तथा द्विजः ।
गृहस्थस्य प्रसादेन जीवन्त्येते यथाविधि ॥
गृहस्थएव यजते गृहस्थस्तप्यते तपः ।
दाता चैव गृहस्थः स्यात्तस्माच्छ्रेष्ठो गृहाश्रमी ॥
यथा भर्त्ता प्रभुः स्त्रीणां वर्णानां ब्राह्मणोयथा ।
अतिथिस्तद्देवास्य गृहस्थस्य प्रभुः स्मृतः ॥
न व्रतैर्नोपवासेन धर्मेण विविधेन च ।
नारी स्वर्गमवाप्नोति प्राप्नोति पतिपूजनात् ॥
न स्नानेन न होमेन नैवाग्निपरितर्पणात् ।
ब्रह्मचारी दिवं याति स याति गुरुपूजनात् ॥
नाग्निशुश्रूषया क्षान्त्या स्नानेन विविधेन च ।
वानप्रस्थोदिवं याति यथा भोजनवर्जनात् ॥
न भैक्षैर्नच मौनेन शून्यागाराश्रयेण च ।
योगी सिद्धिमवाप्नोति यथा मैथुनवर्जनात् ॥

न यज्ञैर्दक्षिणाभिश्च वह्निशुश्रूषया न च।
गृही स्वर्गमवाप्नोति तथा चातिथिपूजनात्॥
तस्मात् सर्वप्रयत्नेन गृहस्थोऽतिथिमागतम्।
आहारशयनाद्येन विधिवत् परिपूजयेत्॥
सायं प्रातश्च जुहुयादग्निहोत्रं यथाविधि।
दर्शञ्च पौर्णमासञ्च जुहुयाञ्च यथाविधि॥
यज्ञैर्वा पशुबन्धैश्च चातुर्मास्यैस्तथैव च।
त्रैवार्षिकाधिकान्नेन पिबेत् सोममतन्द्रितः॥
इष्टिं वैश्वानरीं कुर्य्यात्तथा चाल्पधनो द्विजः।
न भिक्षेत धनं शूद्रात् सर्व्वं दद्यादभीप्सितम्॥
वृत्तिन्तु न त्यजेद्विद्वानृत्विजं पूर्वमेव तु।
कर्मणा जन्मना शुद्धं विद्यात् पात्रं वणीततम्॥
एतैरेव गुणैर्युक्तं धर्मार्जितधनं तथा।
याजयेत्तु सदा विप्रो ग्राह्यस्तस्मात् प्रतिग्रहः॥
इति शाङ्खीये धर्मशास्त्रे पञ्चमोऽध्यायः।

---

## षष्ठोऽध्यायः।

गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः।
अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत्॥
पुत्रेषु दारान्निःक्षिप्य तया वानुगतो वने।
अग्नीनुपचरेन्नित्यं वन्यमाहारमाहरेत्॥
यदाहारो भवेत्तेन पूजयेत् पितृदेवताः।
तेनैव पूजयेन्नित्यमतिथिं समुपागतम्॥

ग्रामादाहृत्य चाश्नीयादष्टौ ग्रासान् समाहितः ।
स्वाध्यायञ्च सदा कुर्य्याज्जटाश्च विभृयात्तथा ॥
तपसा शोषयेन्नित्यं स्वकञ्चैव कलेवरम् ।
आर्द्रवासास्तु हेमन्ते ग्रीष्मे पञ्चतपास्तथा ॥
प्रावृष्याकाशशायी स्यान्नक्ताशी च सदा भवेत् ।
चतुर्थकालिकोवा स्यात् स्याच्च षष्ठक एवच ॥
कृच्छ्रैर्वापि नयेत् कालं ब्रह्मचर्य्यञ्च पालयेत् ।
एवं नीत्वा वने कालं द्विजो ब्रह्माश्रमी भवेत् ॥
इति शाङ्खीये धर्मशास्त्रे षष्ठोऽध्यायः ।

---

## सप्तमोऽध्यायः ।

कृत्वेष्टिं विधिवत् पश्चात् सर्ववेदसदक्षिणाम् ।
आत्मन्यग्नीन् समारोप्य द्विजो ब्रह्माश्रमी भवेत् ॥
विधूमे न्यस्तमुसले व्यङ्गारे भुक्तवर्ज्जने ।
अतीते पात्रसम्पाते नित्यं भिक्षां यतिश्चरेत् ॥
न व्यथेत तथालाभे यथालब्धेन वर्त्तयेत् ।
न पाचयेत्तथैवान्नं नाश्नीयात् कस्यचिद्‌गृहे ॥
मृण्मयालावुपात्राणि यतीनान्तु विनिर्द्दिशेत् ।
तेषां सम्मार्जनाच्छुद्धिरद्भिश्चैव प्रकीर्त्तिता ॥
कौपीनाच्छादनं वासो विभृयादसम्वरम् ।
शून्यागारनिकेतः स्याद्यत्र सायं गृहोमुनिः ॥
दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं जलं पिवेत् ।
सत्यपूतं वदेद्वाक्यं मनःपूतं समाचरेत् ॥

चन्दनैर्लिप्यतेऽङ्गं वा भस्मचूर्णैर्विगर्हितैः।
कल्याणमप्यकल्याणं तयोरेव न संश्रयेत्॥
सर्वभूतहितो मैत्रः समलोष्टाश्मकाञ्चनः।
ध्यानयोगरतो नित्यं भिक्षुर्यायात् परां गतिम्॥
जन्मना यस्तु निर्विण्णो मृत्युना च तथैव च।
आधिभिर्व्याधिभिश्चैव तं देवा ब्राह्मणं विदुः॥
अशुचित्वं शरीरस्य प्रियस्य च विपर्ययः।
गर्भवासे च वसतिस्तस्मान्मुच्येत नान्यथा॥
जगदेतन्निराक्रन्दं न तु सारमनर्थकम्।
भोक्तव्यमिति निर्विण्णो मुच्यते नात्र संशयः॥
प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषान्।
प्रत्याहारैरसत्सङ्गान् ध्यानेनानीश्वरान् गुणान्॥
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।
त्रिःपठेदायतप्राणः प्राणायामः स उच्यते॥
मनसः संयमस्तज्ज्ञैर्धारणेति निगद्यते।
संहारश्चेन्द्रियाणाञ्च प्रत्याहारः प्रकीर्तितः॥
हृदयस्थस्य योगेन देवदेवस्य दर्शनम्।
ध्यानं प्रोक्तं प्रवक्ष्यामि सर्वस्माद्योगतः शुभम्॥
हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः।
हृदि ज्योतींषि भूयश्च हृदि सर्वं प्रतिष्ठितम्॥
स्वदेहमरणिं कृत्वा प्रणवञ्चोत्तरारणिम्।
ध्याननिर्मथनाभ्यान्तु विष्णुं पश्येद्धृदि स्थितम्॥
हृद्यर्कश्चन्द्रमाः सूर्यः सोमो मध्ये हुताशनः।
तेजोमध्ये स्थितं तत्त्वं तत्त्वमध्ये स्थितोऽच्युतः॥

अणोरणीयान् महतो महीया-
नात्मास्य जन्तोर्निहितो गुहायाम्।
तेजोमयं पश्यति वीतशोको-
धातुः प्रसादान्महिमानमात्मनः॥
वासुदेवस्तमोऽन्धानां प्रत्यक्षो नैव जायते।
अज्ञानपटसंवीतैरिन्द्रियैर्विषयेप्सुभिः॥
एष वै पुरुषोविष्णुर्व्यक्ताव्यक्तः सनातनः।
एष धाता विधाता च पुराणोनिष्कलः शिवः॥
विदेहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
मन्वैर्विदित्वा न बिभेति मृत्योर्नान्यः पन्थाविद्यतेऽयनाय॥
पृथिव्यापस्तथा तेजोवायुराकाशमेव च।
पञ्चेमानि विजानीयान्महाभूतानि पण्डितः॥
चक्षुः श्रोत्रे स्पर्शनञ्च रसना घ्राणमेव च।
बुद्धीन्द्रियाणि जानीयात् पञ्चेमानि शरीरके॥
शब्दो रूपं तथा स्पर्शो रसो गन्धस्तथैवच।
इन्द्रियस्थान् विजानीयात् पञ्चैव विषयान् बुधः॥
हस्तौ पादावुपस्थञ्च जिह्वा पायुस्तथैव च।
कर्मेन्द्रियाणि पञ्चैव नित्यं सति शरीरके॥
मनोबुद्धिस्तथैवात्मा व्यक्ताव्यक्तं तथैवच।
इन्द्रियेभ्यः पराणीह चत्वारि प्रवराणि च॥
तथात्मानं तदव्यतीतं पुरुषं पञ्चविंशकम्।
तन्तु ज्ञात्वा विमुच्यन्ते ये जनाः साधुवृत्तयः॥
इदन्तु परमं शुद्धमेतदक्षरमुत्तमम्।
अशब्दमरसस्पर्शमरूपं गन्धवर्जितम्॥

निर्दुःखमसुखं शुद्धं तद्विष्णोः परमं पदम् ।
विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ॥
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ।
बालाग्रशतशो भागः कल्पितस्तु सहस्रधा ॥
तस्यापि शतशो भागाज्जीवः सूक्ष्म उदाहृतः ॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥
एष सर्वेषु भूतेषु तिष्ठत्यविरतः सदा ।
दृश्यते त्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥
इति शाङ्खीये धर्मशास्त्रे सप्तमोऽध्यायः ।

---

## अष्टमोऽध्यायः ।

क्रियास्नानं प्रवक्ष्यामि यथावद्विधिपूर्वकम् ।
मृद्भिरद्भिश्च कर्तव्यं शौचमादौ यथाविधि ॥
जले निमज्य उन्मज्य उपस्पृश्य यथाविधि ।
तीर्थस्यावाहनं कुर्य्यात् तत्प्रवक्ष्याम्यशेषतः ॥
प्रपद्ये वरुणं देवमम्भसां पतिमर्च्चितम् ।
याचेत देहि मे तीर्थं सर्वपापापनुत्तये ॥
तीर्थमावाहयिष्यामि सर्व्वाघविनिसूदनम् ।
सान्निध्यमस्मिन् तोये च क्रियतां मदनुग्रहात् ॥
रुद्रात् प्रपद्य वरदान् सर्व्वानप्सु सदस्तथा ।
सर्व्वानप्सु सदश्चैव प्रपद्ये प्रयतः स्थितः ॥
देवमप्सुसदं वह्निं प्रपद्याघनिसूदनम् ।

आपः पुण्याः पवित्राश्च प्रपद्ये शरणं तथा ॥
रुद्राश्चाग्निश्च सर्पश्च वरुणस्त्वाप एव च ।
शमयन्त्वाशु मे पापं माञ्च रक्षन्तु सर्वशः ॥
हिरण्यवर्णेति तिसृभिर्जगतीति चतसृभिः ।
शन्नोदेवीति तथा शन्नआप स्तथैव च ॥
इदमापः प्रवहते सूतश्च समुदीरयेत् ।
एवं सम्मार्जनं कृत्वा छन्दआर्षञ्च देवताः ॥
अघमर्षणसूक्तञ्च प्रपठेत् प्रयतः सदा ।
छन्दोऽनुष्टुप् च तस्यैव ऋषिश्चैवाघमर्षणः ॥
देवता भाववृत्तश्च पापक्षये प्रकीर्तितः ॥
ततोऽम्भसि निमग्नः स्यात्त्रिःपठेदघमर्षणम् ।
प्रपद्यान्मूर्द्धनि तथा महाव्याहृतिभिर्जलम् ॥
यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः ।
तथाघमर्षणं सूक्तं सर्वपापप्रणाशनम् ॥
अनेन विधिना स्नात्वा स्नातवान् धौतवाससा ।
परिवर्जितवासास्तु तीर्थनामानि संजपेत् ॥
उदकस्याप्रदानात्तु स्नानशाटीं न पीड़येत् ।
अनेन विधिना स्नातस्तीर्थस्य फलमश्नुते ॥
इति शाङ्खीये धर्मशास्त्रेऽष्टमोऽध्यायः ।

# नवमोऽध्यायः ।

अतः परं प्रवक्ष्यामि शुभामाचमनक्रियाम् ।
कायं कनिष्ठिकामूले तीर्थमुक्तं करस्य तु ॥
अङ्गुष्ठमूले च तथा प्राजापत्यं प्रकीर्तितम् ।
अङ्गुल्यग्रे स्मृतं दैवं पित्र्यं तर्जनिमूलकम् ॥
प्राजापत्येन तीर्थेन त्रिः प्राश्नीयाज्जलं द्विजः ।
द्विः प्रक्षाल्य मुखं पश्चादद्भिः खं समुपस्पृशेत् ॥
हृद्गाभिः पूयते विप्रः कण्ठगाभिश्च भूमिपः ।
तालुगाभिस्तथा वैश्यः शूद्रः स्पृष्टाभिरन्ततः ॥
अन्तर्जानुः शुचौ देशे प्राङ्मुखः सुसमाहितः ।
उदङ्मुखोऽपि प्रयतो दिशश्चानवलोकयन् ॥
अद्भिः समुद्धृताभिस्तु हीनाभिः फेनबुद्बुदैः ।
वह्निना चाप्यदग्धाभिरङ्गुलीभिरुपस्पृशेत् ॥
तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयं ततः ।
अङ्गुष्ठानामिकाभ्यान्तु श्रवणौ समुपस्पृशेत् ॥
कनिष्ठाङ्गुष्ठयोगेन स्पृशेत् स्कन्धद्वयं ततः ।
सर्व्वासामेव योगेन नाभिञ्च हृदयं ततः ॥
संस्पृशेत्तु तथा मूर्द्धा यथाचाचमने विधिः ॥
त्रिः प्राश्नीयाद्यदम्भस्तु प्रीतास्तेनास्य देवताः ।
ब्रह्मा विष्णुश्च रुद्रश्च भवन्तीत्यनुशुश्रुम ॥
गङ्गा च यमुना चैव प्रीयेते परिमार्ज्जनात् ।
नासत्यदस्रौ प्रीयेते स्पृष्टे नासापुटद्वये ॥
स्पृष्टे लोचनयुग्मे च प्रीयेते शशिभास्करौ ।

कर्णयुग्मे तथा स्पृष्टे प्रीयेते ऽश्विनावुभौ ॥
स्कन्धयोः स्पर्शनादस्य प्रीयन्ते सर्वदेवताः ।
मूर्द्धस्तु स्पर्शनादस्य प्रीतस्तु पुरुषो भवेत् ॥
विना यज्ञोपवीतेन तथा मुक्तशिखोऽपि वा ।
अप्रक्षालितपादस्तु आचान्तोऽप्यशुचिर्भवेत् ॥
वहिर्जानुरुपस्पृश्य एकहस्तार्पितैर्जलैः ।
सशब्दाभिस्तथाऽऽश्च नैव शुद्धिमवाप्नुयात् ॥
आदस्य च पुरा प्रोक्तं तीर्थसंमार्जनं ततः ।
उपस्पृश्य ततः पश्चान्मन्त्रेणानेन धर्मतः ॥
अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ।
त्वं यज्ञस्त्वं वषट्कार आपोज्योतीरसोऽमृतम् ॥
आचम्य च ततः पश्चादादित्याभिमुखो जलम् ।
उदुत्यं जातवेदसं मन्त्रेण प्रक्षिपेत्ततः ।
एष एव विधिः प्रोक्तः सन्ध्यायाञ्च द्विजातिषु ।
पूर्वां सन्ध्यां जपंस्तिष्ठेदासीनः पश्चिमां तथा ॥
ततोजपेत् पवित्राणि पवित्रान् वाथ शक्तितः ।
ऋषयो दीर्घसन्ध्यात्वाद्दीर्घमायुरवाप्नुयुः ॥

इति शाङ्खीये धर्मशास्त्रे नवमोऽध्यायः ।

---

## दशमोऽध्यायः ।

सर्व्ववेदपवित्राणि संप्रवक्ष्याम्यतः परम् ।
येषां जपैश्च होमैश्च पूयन्ते मानवाः सदा ॥
अघमर्षणं देवव्रतं शुद्धवत्यस्तु यत्सदा ।

कुष्माण्ड्यः पावमान्यश्च सर्व्वसावित्र्य एव च ॥
अभीष्टरूपदा चैव सोमानि व्याहृतिस्तथा ।
भारुण्डानि च सामानि गायत्र्या वै व्रतं तथा ॥
पुरुषव्रतश्च भाषश्च तथा सोमव्रतानि च ।
अविज्ञं वार्हस्पत्यञ्च वाक्सूक्तमृतं तथा ॥
शतरुद्रीमथर्व्वशिरास्त्रिसुपर्णं महाव्रतम् ।
गोसूक्तमश्वसूक्तञ्च इन्द्रसूक्तञ्च सामनी ॥
त्रीण्याज्यदोहानि रथन्तरञ्चाग्निव्रतं वामदेव्यञ्च।
एतानि गीतानि पुनन्ति जन्तून् जातिस्मरत्वं लभते यदीच्छेत् ॥
इति शाङ्खीये धर्मशास्त्रे दशमोऽध्यायः ।

---

## एकादशोऽध्यायः ।

इति वेदपवित्राण्यभिहितानि एभ्यः सावित्री विशिष्यते ।
नास्त्यघमर्षणात् परमं तज्जलेन व्याहृतिभिः परम् होमः॥
न सावित्र्याः परं जप्यं । कुशदृष्यामासीनः कुशोत्तरीयः कुशपाणिः प्राङ्मुखः सूर्य्याभिमुखो वाक्षमालामादाय देवताध्यायी तज्जपं कुर्य्यात् । सुवर्णमणिमुक्तास्फाटिकपद्मपद्मवीजाक्षाणामन्यतमेनाक्षमालां कुर्यात् । ध्यायन् वामहस्तोपरि व्यागणयेत् । आदौ देवतामार्षं छन्दश्च स्मरेत् । ततः सप्रणवव्याहृतिकामादावन्ते च शिरसा गायत्रीमावर्त्तयेत् । तथास्याः सविता ऋषिर्विश्वामित्रो गायत्रीछन्दः । प्रणवाद्या भूर्भुवः स्व र्मह र्जन स्तप: सत्यमिति व्याहृतयः । आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् ॥

सव्याहृतिकां सप्रणवां गायत्रीं शिरसा सह ।
ये जपन्ति सदा तेषां न भयं विद्यते क्वचित् ॥
शतं जप्ता तु सा देवी दिनपापप्रणाशिनी ।
शतं जप्ता तथा सा तु सर्वकल्मषनाशिनी ॥
सहस्रं जप्ता सा नृणां पातकेभ्यः समुद्धरेत् ।
स्वर्णस्तेयी कृतघ्नश्च ब्रह्महा गुरुतल्पगः ॥
सुरापश्च विशुद्ध्येत लक्षजप्येन सर्वदा ।
प्राणायामत्रयं कृत्वा स्नानकाले समाहितः ॥
अहोरात्रकृतात् पापात्तत्क्षणादेव शुध्यति ।
सव्याहृतिकाः सप्रणवाः प्राणायामास्तु षोडश ॥
अपि भ्रूणहणं मासात् पुनन्त्यहरहः कृताः ।
हुता देवी विशेषेण सर्वकामप्रदायिनी ।
सर्वपापक्षयकरी वरदा भक्तवत्सला ।
शान्तिकामस्तु जुहुयाद्गायत्रीमक्षतैः शुचिः ॥
हन्तुकामोऽपमृत्युञ्च घृतेन जुहुयात्तथा ।
श्रीकामस्तु तथा पद्मैर्बिल्वैः काञ्चनकामतः ॥
ब्रह्मवर्चसकामस्तु जुहुयात् पूर्ववत्तथा ।
घृतयुक्तैस्तिलैर्वह्नौ हुत्वा तु सुसमाहितः ॥
गायत्र्ययुतहोमात्तु सर्वपापैः प्रमुच्यते ।
पापात्मा लक्षहोमेन पातकेभ्यः प्रमुच्यते ॥
ब्रह्मलोकमवाप्नोति प्राप्नुयात् काममीप्सितम् ।
गायत्री चैव जननी गायत्री पापनाशिनी ॥
गायत्र्यास्तु परं नास्ति दिवि चेह च पावनम् ।
हस्तत्राणप्रदा देवी पततां नरकार्णवे ॥

तस्मात्तामभ्यसेन्नित्यं ब्राह्मणोनियतः शुचिः।
गायत्रीजप्यनियतो हव्यकव्येषु भोजयेत्॥
तस्मिन्न तिष्ठते पापमब्विन्दुरिव भास्करे॥
जपेनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः।
कुर्य्यादन्यन्नवा कुर्य्यान्मैत्रोब्राह्मण उच्यते॥
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः।
नोच्चैर्जप्यं बुधः कुर्य्यात् सावित्र्यास्तु विशेषतः॥
सावित्रीजप्यनिरतः स्वर्गमाप्नोति मानवः।
सावित्रीजप्यनिरतो मोक्षोपायञ्च विन्दति॥
तस्मात् सर्वप्रयत्नेन स्नातः प्रयतमानसः।
गायत्रीञ्च जपेद्भक्त्या सर्वपापप्रणाशिनीम्॥
इति शाङ्खीये धर्मशास्त्रे एकादशोऽध्यायः।

---

## द्वादशोऽध्यायः।

स्नातः कृतजपस्तदनु प्राङ्मुखो दिव्येन तीर्थेन देवानुदकेन तर्पयेत्। प्रत्यहं पुरुषसूक्तेनोदकाञ्जलीन् दद्यात् पुष्पाञ्जलीन् भक्त्या। अथ कृतापसव्यो दक्षिणामुखोऽन्तर्जानुः पित्र्येण पितॄणां श्राद्धप्रकारमुदकं दद्यात्। पित्रे पितामहाय पितामह्यै सप्तमात् पुरुषात् पितृपक्षे यावतां नाम जानीयात्। पितृपक्षीयाणां त्रयाणां दत्त्वा मातृपक्षीयाणां गुरूणां सम्बन्धिबान्धवानाञ्च कृत्वा सुहृदां कुर्य्यात्। भवन्ति चात्र श्लोकाः।

विना रौप्यसुवर्णेन विना ताम्रतिलेन च ।
विना दर्भैश्च मन्त्रैश्च पितॄणां नोपतिष्ठते ॥
सौवर्णराजताभ्याञ्च खड्गेनो डुम्बरेण वा ।
दत्तमक्षयतां याति पितॄणान्तु तिलोदकम् ॥
कुर्य्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्वापि पितॄणां प्रीतिमावहन् ॥
स्नातस्तु तर्पणं कृत्वा पितॄणान्तु तिलाम्भसा ।
पितृयज्ञमवाप्नोति प्रीयन्ति पितरस्तथा ॥

इति शाङ्खीये धर्मशास्त्रे द्वादशोऽध्यायः ।

---

## त्रयोदशोऽध्यायः ।

ब्राह्मणान्न परीक्षेत दैवे कर्मणि धर्मवित् ।
पित्र्ये कर्मणि संप्राप्ते सूक्ष्ममार्गैः परीक्षणम् ॥
ब्राह्मणा ये विकर्माणो वैड़ालव्रतिकाः शठाः ।
हीनाङ्गा अतिरिक्ताङ्गा ब्राह्मणाः पङ्क्तिदूषकाः ॥
गुरूणां प्रतिकूलाश्च तथाभ्युत्पातिनश्च ये ।
गुरूणां त्यागिनश्चैव ब्राह्मणाः पङ्क्तिदूषकाः ॥
अनध्यायेष्वधीयानाः शौचाचारविवर्जिताः ।
शूद्रान्नरससंपुष्टा ब्राह्मणाः पङ्क्तिदूषकाः ॥
षड़ङ्गवेदवेत्तारो बह्वृचश्चैव सामगाः ।
त्रिणाचिकेतः पञ्चाग्निर्ब्राह्मणाः पङ्क्तिपावनाः ॥
ब्रह्मदेयानुसन्ताना ब्रह्मदेयाप्रदायकाः ।
ब्रह्मदेया पतिर्यश्च ब्राह्मणाः पङ्क्तिपावनाः ॥

ऋग्यजुःपारगो यश्च साम्नां यश्चापि पारगः।
अथर्व्वाङ्गिरसोऽध्येता ब्राह्मणाः पङ्क्तिपावनाः॥
नित्यं योगरतो विद्वान् समलोष्ट्राश्मकाञ्चनः।
ध्यानशीलो यतिर्विद्वान् ब्राह्मणाः पङ्क्तिपावनाः॥
द्वौ दैवे प्राङ्मुखौ त्रींश्च पित्र्ये चोदङ्मुखांस्तथा।
भोजयेद्विविधान् विप्रानेकैकमुत यत्र वा॥
भोजयेदथवाप्येकं ब्राह्मणं पङ्क्तिपावनम्।
दैवे कृत्वा तु नैवेद्यं पश्चाद्वह्नौ तु तत्क्षिपेत्॥
उच्छिष्टसन्निधौ कार्य्यं पिण्डनिर्वपणं बुधैः।
अभावे च तथा कार्य्यमग्निकार्य्यं यथाविधि॥
श्राद्धं कृत्वा तु यत्नेन त्व..। क्रोधविवर्जितः।
उष्णमन्नं द्विजातिभ्यः श्रद्धया विनिवेदयेत्॥
भोजयेद्विविधान् विप्रान् गन्धमाल्यानुलेपनैः।
पङ्क्तिविद्वात्मनो गेहे भक्ष्यं वा भक्ष्यमेक वा।
अनिवेद्य न भोक्तव्यं पिण्डमूले कथञ्चन॥
उग्रगन्धान्यगन्धानि चैत्यवृक्षभवानि च।
पुष्पाणि वर्जनीयानि तथा पर्वतजानि च।
तोयोद्भूतानि देयानि रक्तान्यपि विशेषतः॥
ऊर्णासूत्रं प्रदातव्यं कार्पासमथवा नवम्।
दशां विवर्जयेत् प्राज्ञो यद्यनाहतवस्त्रजाः॥
घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः॥
धूपार्थं गुग्गुलं दद्याद् घृतयुक्तं मधूत्कटम्।
चन्दनञ्च तथा दद्यादिष्टं यत् कुङ्कुमं शुभम्॥
कलाकं शरशिम्बञ्च पलञ्च सुमकं तथा।

कूष्माण्डालावुवार्त्ताकूकोविदारांश्च वर्जयेत्॥
पिप्पलीं मरिचश्चैव तथा वै पिण्डमूलकम्।
कृतञ्च लवणञ्चैव वंशाग्रन्तु विवर्जयेत्॥
राजमासान् मसूरांश्च प्रवालकोरदूषकान्।
लोहितान् वृक्षनिर्य्यासान् श्राद्धकर्मणि वर्जयेत्॥
आम्रातलवलीमूलमूलकान् दधिदाड़िमान्।
स कोविदार्ध्यसत्कन्दराजेन मधुना सदा॥
शक्तून् शर्करया सार्द्धं दद्याच्छ्राद्धे प्रयत्नतः।
पायसादिभिरन्यैश्च भोजयित्वा तथा द्विजान्॥
भक्त्या प्रणम्य आचान्तान् तथा वै दत्तदक्षिणान्॥
अभिवाद्य प्रसन्नात्मा अनुव्रज्य विसर्जयेत्।
निमन्त्रितस्तु यः श्राद्धे मैथुनं सेवते द्विजः॥
श्राद्धं भुक्त्वा च दत्त्वा च युक्तः स्यान्महतैनसा।
कालशाकं महाशल्कं मांसं वा शकुनस्य च॥
खड्गमांसं तथानन्त्यं यमः प्रोवाच धर्मवित्।
इति शाङ्खीये धर्मशास्त्रे त्रयोदशोऽध्यायः।

---

## चतुर्दशोऽध्यायः।

यद्ददाति गयाक्षेत्रे प्रभासे पुष्करेऽपि च।
प्रयागे नैमिषारण्ये सर्वमानन्त्यमुच्यते॥
गङ्गायमुनयोस्तीरे तीर्थे वामरकण्टके।
नर्मदायां गयातीरे सर्वमानन्त्यमुच्यते॥
वाराणस्यां कुरुक्षेत्रे भृगुतुङ्गे महालये।

समारब्धेऽसिकृपि च यत्तदक्षयमुच्यते ॥
म्लेच्छदेशे तथा रात्रौ सन्ध्ययोश्च विशेषतः।
न श्राद्धमाचरेत् प्राज्ञो म्लेच्छदेशे नच व्रजेत् ॥
हस्तिच्छायासु दृष्टमितचन्द्रार्कं राहुदर्शने।
विषुवत्ययने चैव सर्वमानन्त्यमुच्यते ॥
पौष्ठपद्यामतीतायां मघायुक्ता त्रयोदशी।
प्राप्य श्राद्धन्तु कर्त्तव्यं मधुना पायसेन च ॥
प्रजां पुष्टिं तथा स्वर्गमारोग्यञ्च धनं तथा।
नृणां प्राप्य सदा प्रीतिं प्रयच्छन्ति पितामहाः ॥
इति शाङ्खीये धर्मशास्त्रे चतुर्दशोऽध्यायः।

---

## पञ्चदशोऽध्यायः।

जनने मरणे चैव सपिण्डानां द्विजोत्तमाः।
त्र्यहाच्छुद्धिमवाप्नोति योऽग्निवेदसमन्वितः ॥
सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।
जनने मरणे विप्रो दशाहेन विशुध्यति ॥
क्षत्रियो द्वादशाहेन वैश्यः पक्षेण शुध्यति।
मासेन तु तथा शूद्रः शुद्धिमाप्नोति नान्तरा ॥
रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति।
अजातदन्तबाले तु सद्यःशौचं विधीयते ॥
अहोरात्रात्तथा शुद्धिर्बाले त्वकृतचूड़के।
तथैवानुपनीते तु त्र्यहाच्छुध्यन्ति मानवाः ॥
व्रतानां कन्यकानान्तु तथैव शूद्रजन्मनः।

अनूढभार्य्यः शूद्रस्तु षोड़शाद्वत्सरात् परम्॥
मृत्युं समवगच्छेत्तु मासं तस्यापि बान्धवाः।
शुद्धिं समवगच्छन्ति नात्र कार्य्या विचारणा॥
पितृवेश्मनि कन्या या रजः पश्यत्यसंस्कृता।
तस्यां मृतायां नाशौचं कदाचिदपि शाम्यति॥
हीनवर्णादूयदा नारी प्रमादात् प्रसवं व्रजेत्।
प्रसवे मरणे तज्जमशौचं नोपशाम्यति॥
समानं खल्वशौचन्तु प्रथमे तु समापयेत्।
असमानं द्वितीयेन धर्मराजवचो यथा॥
देशान्तरगतः श्रुत्वा सूतानां मरणोद्भवौ।
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत्॥
अतीते दशरात्रे तु तावदेवाशुचिर्भवेत्।
तथा संवत्सरेऽतीते स्नातएव विशुध्यति॥
अनौरसेषु पुत्रेषु भार्य्यास्वन्यगतासु च।
परपूर्वासु च स्त्रीषु त्र्यहाच्छुद्धिरिहेष्यते॥
मातामहे व्यतीते तु आचार्य्ये च तथा मृते।
गृहे मृतासु दत्तासु कन्यासु च त्र्यहं तथा॥
विनष्टे राजनि तथा जाते दौहित्रके गृहे।
आचार्य्यपत्नीपुत्रेषु दिवसेन च मातुले॥
मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च।
सब्रह्मचारिणि तथा अनूचाने तथा मृते॥
एकरात्रं त्रिरात्रं वा षड्रात्रं मासमेव च।
शूद्राः सपिण्डवर्णानामशौचं क्रमतः स्मृतम्॥
सपिण्डे क्षत्रिये शुद्धिः षड्रात्रं ब्राह्मणस्य च।

वर्णानां परिशिष्टानां द्वादशेऽह्नि विनिर्दिशेत्॥
सपिण्डे ब्राह्मणा वर्णाः सर्वएवाविशेषतः।
दशरात्रेण शुध्येयुरित्याह भगवान् यमः॥
भृग्वग्निपतनाम्भोभिर्मृतानामात्मघातिनाम्।
पतितानामशौचञ्च शस्त्रविद्युद्धताश्च ये॥
यती व्रती ब्रह्मचारी सूपकारश्च दीक्षितः।
नाशौचभाजः कथिता राजाज्ञाकारिणश्च ये॥
यस्तु भुङ्क्ते पराशौचे वर्णी सोऽप्यशुचिर्भवेत्।
अशुच्य शुद्धौ शुद्धिश्च तस्याप्युक्ता मनीषिभिः॥
पराशौचे नरो भुक्त्वा कृमियोनौ प्रजायते।
भुक्त्वान्नं म्रियते यस्य तस्य जातौ प्रजायते॥
दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च।
प्रेतपिण्डक्रियावर्जमशौचं विनिवर्त्तते॥
इति शाङ्खीये धर्मशास्त्रे पञ्चदशोऽध्यायः।

---

## षोड़शोऽध्यायः।

मृण्मयं भाजनं सर्वं पुनः पाकेन शुद्ध्यति।
मद्यैर्मूत्रैः पुरीषैर्वा ष्ठीवनैः पूयशोणितैः॥
संस्पृष्टं नैव शुध्येत पुनः पाकेन मृण्मयम्।
एतैरेव यदि स्पृष्टं ताम्रसौवर्णराजतम्॥
शुद्ध्यत्यावर्त्तितं पश्चादन्यथा केवलाम्भसा।
अम्लोदकेन ताम्रस्य सीसस्य त्रपुणस्तथा॥
क्षारेण शुद्धिः कांस्यस्य लौहस्यापि विनिर्द्दिशेत्।

मुक्तामणिप्रवालानां शुद्धिः प्रक्षालनेन तु ॥
अब्जानां चैव भाण्डानां सर्वस्याश्ममयस्य च ।
शाकमूलफलानाञ्च विदलानां तथैव च ॥
मार्ज्जनाद्यज्ञपात्राणां पाणिना यज्ञकर्मणि ।
उष्णाम्भसा तथा शुद्धिः सस्नेहानां विनिर्दिशेत् ॥
शय्यासनापणानान्तु सूर्य्यस्य किरणैस्तथा ।
शुद्धिस्तु प्रोक्षणाद्यज्ञे करकेन्धनयोस्तथा ॥
मार्ज्जनाद्वेश्मनां शुद्धिः क्षितेः शोधस्तु तत्क्षणात् ।
संमार्ज्जनेन तोयेन वाससां शुद्धिरिष्यते ॥
बहूनां प्रोक्षणाच्छुद्धिर्धान्यादीनां विनिर्दिशेत् ।
प्रोक्षणात् संहतानाञ्च काष्ठानाञ्चैव तक्षणात् ॥
सिद्धार्थकाणां कल्केन शृङ्गदन्तमयस्य च ।
गोवालैः फलपत्राणामस्थ्नां शृङ्गवतां तथा ॥
निर्यासानां गुडानाञ्च लवणानां तथैव च ।
कुसुम्भकुसुमानाञ्च ऊर्णाकार्पासयोस्तथा ॥
प्रोक्षणात् कथिता शुद्धिरित्याह भगवान् यमः ।
भूमिष्ठमुदकं शुद्धं तथा शुचि शिलागतम् ॥
वर्णगन्धरसैर्दुष्टैर्वर्जितानां तथा भवेत् ।
शुद्धं नदीगतं तोयं सर्वदैव सुखाकरम् ॥
शुद्धं प्रसारितं पण्यं शुद्धावाश्वाजयो मुखे ।
मुखवर्ज्जन्तु गौः शुद्धा मार्जारश्चाश्रमे शुचिः ॥
शय्या भार्य्या शिशुर्वस्त्रमुपवीतं कमण्डलुः ।
आत्मनः कथितं शुद्धं न तच्छुद्धं परस्य च ॥
नारीणाञ्चैव वत्सानां शकुनीनां शुनां मुखम् ।

रात्रौ प्रसरणे वृत्ते चगयायां सदा शुचि ॥
शुद्धा भर्त्तुश्चतुर्थेऽह्नि स्नाता नारी रजस्वला ।
दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति ॥
रथ्याकर्दमतोयेन ष्ठीवनाद्येन वाप्यथ ।
नाभेरूर्द्धं नरः स्पृष्टः सद्यःस्नानेन शुद्ध्यति ॥
कृत्वा मलपुरीषस्य लेपगन्धापहं तथा ।
उष्टृनाम्भसा स्नानं सदा चैव समाचरेत् ॥
मेहने मृत्तिकाः सप्त लिङ्गे द्वे च प्रकीर्त्तिते ।
एकस्मिन् विंशतिर्हस्ते द्वयोर्देयाश्चतुर्दश ॥
तिस्रस्तु मृत्तिका देयाः कृत्वा तु नखशोधनम् ।
तिस्रस्तु पादयोर्देयाः शौचकामस्य सर्वदा ॥
शौचमेतद्गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
द्विगुणञ्च वनस्थानां यतीनां द्विगुणं तथा ॥
मृत्तिका च विनिर्दिष्टा त्रिपर्वं पूर्य्यते यया ॥
इति शाङ्खीये धर्मशास्त्रे षोड़शोऽध्यायः।

---

## सप्तदशोऽध्यायः।

नित्यं त्रिषवणस्नायी कृत्वा पर्णकुटीं वने ।
अधःशायी जटाधारी पर्णमूलफलाशनः ॥
ग्रामं विशेत भिक्षार्थं स्वकर्म परिकीर्त्तयन् ।
एकं कालं समश्नानो वर्षे च द्वादशे गते ॥
रुक्मस्तेयी सुरापायी ब्रह्महा गुरुतल्पगः ।
व्रतेनैतेन शुध्यन्ति महापातकिनश्च ये ॥

यागस्थं क्षत्रियं हत्वा वैश्यं हत्वा तु याजकम्।
एतदेव व्रतं कुर्य्यादाश्रमं विनिदूषकः॥
कूटसाक्ष्यं तथैवोक्त्वा निक्षेपञ्च प्रकृत्य च।
एतदेव व्रतं कुर्य्याच्छक्त्या च शरणागतम्॥
आहिताग्निः स्त्रियं हत्वा मित्रं हत्वा तथैव च।
हत्वा गर्भमविज्ञातमेतदेव व्रतञ्चरेत्॥
व्रतस्थञ्च द्विजं हत्वा पार्थिवञ्चाकृताश्रमम्।
एतदेव व्रतं कुर्य्याद्विगुणञ्च विशुद्धये॥
क्षत्रियस्य तु पादोनं तदर्द्धं वैश्यघातने।
अर्द्धमेव सदा कुर्य्यात् स्त्रीवधे पुरुषस्तथा॥
पादन्तु शूद्रहत्यायामुदक्यागमने तथा।
गोवधे च तथा कुर्य्यात् परदारगतस्तथा॥
पशून् हत्वा तथा ग्राम्यान् मासं कुर्य्याद्विचक्षणः।
आरण्यानां वधे चैव तदर्द्धन्तु विधीयते॥
हत्वा द्विजं तथा सर्पं जलेशयबिलेशयौ।
सप्तरात्रं तथा कुर्य्याद्व्रतन्तु ब्राह्मणस्तथा॥
अनस्थ्नान्तु शतं हत्वा सास्थ्नां दशशतं तथा।
ब्रह्महत्याव्रतं कुर्य्यात् पूर्णं सम्वत्सरं तथा॥
यस्य यस्य च वर्णस्य वृत्तिच्छेदं समाचरेत्।
तस्य तस्य वधप्रोक्तं प्रायश्चित्तं समाचरेत्॥
अपहृत्य तु वर्णानां भुवमेव प्रमादतः।
प्रायश्चित्तमथ प्रोक्तं ब्राह्मणानुमतञ्चरेत्॥
गोऽजाश्वस्यापहरणे सीसानां रजतस्य च।
जलापहरणे चैव कुर्य्यात् सम्वत्सरं व्रतम्॥

तिलानां धान्यवस्त्राणां शस्त्राणामामिषस्य च ।
सम्वत्सरार्द्धं कुर्व्वीत व्रतमेतत् समाहितः ॥
तृणकाष्ठे च तक्राणां रसानामपहारकः ।
मासमेकं व्रतं कुर्य्याद्दन्तानां सर्पिषान्तथा ॥
लवणानां गुड़ानाञ्च मूलानां कुसुमस्य च ।
मासार्द्धन्तु व्रतं कुर्य्यादेतदेव समाहितः ॥
लौहानां वैदलानाञ्च सूत्राणां चर्म्मणां तथा ।
एकरात्रं व्रतं कुर्य्यात्तदेव समाहितः ॥
भुक्त्वा पलाण्डुं लसुनं मद्यञ्च करकाणि च ।
नारं मलं तथा मांसं विड्वराहं खरं तथा ॥
गौधेरकुञ्जरोष्ट्रञ्च सर्वं पञ्चनखं तथा ।
क्रव्यादं कुक्कुटं ग्राम्यं कुर्य्यात् सम्वत्सरं व्रतम् ॥
भक्ष्याः पञ्चनखास्त्वेते गोधाकच्छपशल्लकाः ।
खड्गश्च शशकश्चैव तान् हत्वा तु चरेद्व्रतम् ॥
हंसं मद्गुरकं काकं काकोलं खञ्जरीटकम् ।
मत्स्यादांश्च तथा मत्स्यान् वलाकाशुकसारिकाः ॥
चक्रवाकं प्लवं कोकं मण्डूकं भुजगन्तथा ।
मासमेतद्व्रतं कुर्य्यान्नात्र कार्य्या विचारणा ॥
राजीवान् सिंहतुण्डांश्च शकुलांश्च तथैव च ।
पाठीनरोहितौ भक्ष्यौ मत्स्येषु परिकीर्त्तितौ ॥
जलेचरांश्च जलजान् मुखपादान् सुविष्किरान् ।
रक्तपादान् जालपादान् सप्ताहं व्रतमाचरेत् ॥
तित्तिरिञ्च मयूरञ्च लावकञ्च कपिञ्जलम् ।
वार्द्धीणसं वर्त्तकञ्च भक्ष्यानाह यमः सदा ॥

भुक्त्वा चैवोभयदतं तथैकशफदंष्ट्रिणः ।
तथा भुक्त्वा तु मासं वै मासार्द्धं व्रतमाचरेत् ॥
स्वयंमृतं वृथामांसं माहिषं वाजमेव च ।
गोश्च क्षीरं विवत्सायाः महिष्याश्च तथा पयः ॥
सन्धिन्यमेध्यं भक्षित्वा पक्षन्तु व्रतमाचरेत् ।
क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः ॥
सप्तरात्रं व्रतं कुर्य्यादृयदेतत् परिकीर्त्तितम् ।
लोहितान् वृक्षनिर्यासान् व्रणानां प्रभवांस्तथा ॥
केवलानि तथान्नानि तथा पर्य्युषितञ्च यत् ।
गुड़पक्कं तथा भुक्त्वा त्रिरात्रन्तु व्रती भवेत् ॥
दधिभक्तञ्च शुक्तेषु यच्चान्यद्वावसम्भवम् ।
गुड़युक्तं भक्षयित्वा तक्रं निन्द्यमिति श्रुतिः ॥
यवगोधूमजं सर्व्वं विकाराः पयसाञ्च ये ।
राजवाश्च कुल्यञ्च भैक्षं पर्य्युषितं भवेत् ॥
सजीवपक्वमांसञ्च सर्व्वं यत्नेन वर्जयेत् ।
सम्वत्सरं व्रतं कुर्य्यात् प्राश्यैतान् ज्ञानतस्तथा ॥
शूद्रान्नं ब्राह्मणोभक्त्वा तथा रङ्गावतारिणः ।
वङ्गस्य चैव चौरस्यावीरायाश्च तथा स्त्रियः ॥
कर्म्मकारस्य वेणस्य क्लीवस्य पतितस्य च ।
रुक्मकारस्य तक्ष्णश्च तथा वार्द्धुषिकस्य च ॥
कदर्य्यस्य नृशंसस्य वेश्यायाः कितवस्य च ।
गणान्नं भूमिपालान्नमन्नश्चैवाश्वजीविनः ॥
सौनपान्नं सूतिकान्नं भक्त्वा मासं व्रतञ्चरेत् ।
शूद्रस्य सततं भुक्त्वा षण्मासान् व्रतमाचरेत् ॥

वैश्यस्य च तथा स्त्रीणां मासमेकं व्रतञ्चरेत्।
क्षत्रियस्य तथा भुक्त्वा द्वौ मासौ च व्रतञ्चरेत्॥
ब्राह्मणस्य तथा भुक्त्वा मासमेकं समाचरेत्।
अपः सुराभाजनस्थाः पीत्वा पक्षं व्रती भवेत्॥
शूद्रोच्छिष्टाशने मासं पक्षमेकं तथा विशः।
क्षत्रियस्य तु सप्ताहं ब्राह्मणस्य तथा दिनम्॥
अथाश्राद्धाशने विद्वान् मासमेकं व्रती भवेत्।
परिवित्तिः परीवेत्ता यया च परिविद्यते॥
व्रतं सम्वत्सरं कुर्य्याद्दातृयाजकपञ्चमः।
शुनोच्छिष्टं तथा भुक्त्वा मासमेकं व्रतीभवेत्॥
दूषितं केशकीटैश्च मूषिकानकुलेन च।
मक्षिकामशकेनापि त्रिरात्रन्तु व्रती भवेत्॥
वृथाकृशरसंयावपायसापूपशष्कुलीः।
भुक्त्वा त्रिरात्रं कुर्व्वीत व्रतमेतत् समाहितः॥
नील्या चैव क्षतो विप्रः शुना दष्टस्तथैव च।
त्रिरात्रन्तु व्रतं कुर्य्यात् पुंश्चलीदशनक्षतः॥
पादप्रतापनं वह्नौ क्षिप्त्वा वह्नौ तथाप्यधः।
कुशैः प्रमृज्य पादौ च दिनमेकं व्रतञ्चरेत्॥
क्षत्रियस्तु रणे हत्वा पृष्ठं प्राणपरायणम्।
सम्वत्सरव्रतं कुर्य्याच्छित्वा पिप्पलपादपम्॥
दिवा च मैथुनं कृत्वा स्नात्वा दुष्टजले तथा।
नग्नां परस्त्रियं दृष्ट्वा दिनमेकं व्रती भवेत्॥
क्षिप्त्वाग्नावशुचि द्रव्यं तद्वदम्भसि मानवः।
मासमेकं व्रतं कुर्य्यादपक्रुश्य तथा गुरुम्॥

तथा विशेषणं पीत्वा पानीयं ब्राह्मणस्तथा ।
त्रिरात्रन्तु व्रतं कुर्य्याद्वामहस्तेन वा पुनः ॥
एकपङ्क्त्युपविष्टेषु विषमं यः प्रयच्छति ।
स च तावदसौ पक्षं प्रकुर्य्याद्ब्राह्मणो व्रतम् ॥
धारयित्वा तुलाञ्चैव विषमं वणिजस्तथा ।
सुरालवणपात्रेषु भुक्त्वा क्षीरं व्रतञ्चरेत् ॥
विक्रीय पाणिना मद्यं तिलानि च तथाचरेत् ।
त्वङ्कारं ब्राह्मणस्योक्त्वा त्वङ्कारञ्च गरीयसः ॥
दिनमेकं व्रतं कुर्य्यात् प्रयतः सुसमाहितः ॥
प्रेतस्य प्रेतकार्य्याणि कृत्वा वै धनहारकः ।
वर्णानां यद्व्रतं प्रोक्तं तद्व्रतं प्रयतश्चरेत् ॥
कृत्वा पापं न गूहेत गुह्यमानं हि वर्द्धते ।
कृत्वा पापं बुधः कुर्य्यात् पर्षदानुमतं व्रतम् ॥
स्थित्वा च श्वपदाकीर्णे बहु व्याधमृगे वने ।
न ब्राह्मणोव्रतं कुर्य्यात् प्राणबाधभयात् सदा ॥
सतोहि जीवतो जीवं सर्वपापमपोहति ।
व्रतैः कृच्छ्रैस्तथा दानैरित्याह भगवान् यमः ॥
शरीरं धर्मसर्वस्वं रक्षणीयं प्रयत्नतः ।
शरीरात्स्रवते धर्मः पर्वतात् सलिलं यथा ॥
आलोच्य सर्वशास्त्राणि समेत्य ब्राह्मणैः सह ।
प्रायश्चित्तं द्विजो दद्यात् स्वेच्छया न कदाचन ॥

इति शाङ्खीये धर्मशास्त्रे सप्तदशोऽध्यायः ॥

---

# अष्टादशोऽध्यायः॥

त्र्यहं त्रिषवणस्नाने प्रकुर्य्यादघमर्षणम्।
निमज्य मन्त्रं सरिति न भुञ्जीत दिनत्रयम्॥
वीरासनं सदा तिष्ठेद्गाञ्च दद्यात् पयस्विनीम्।
अघमर्षणमित्येतत् व्रतं सर्वाघनाशनम्॥
त्र्यहं सायं त्र्यहं प्रात स्त्र्यहमद्यादयाचितम्।
परं त्र्यहञ्च नाश्नीयात् प्राजापत्यं चरन् व्रतम्॥
त्र्यहमुष्णं पिवेदापस्त्र्यहमुष्णं घृतं पिवेत्।
त्र्यहमुष्णं पयः पीत्वा वायुभक्षो दिनत्रयम्॥
तप्तकृच्छ्रं विजानीयादेतदुक्तं सदा व्रतम्।
द्वादशेनोपवासेन पराकः परिकीर्त्तितः॥
विधिनोदकसिद्धानि समश्नीयात् प्रयत्नतः।
शक्तून् हि सोदकान् मासं कृच्छ्रं वारुणमुच्यते॥
विल्वैरामलकैर्वापि कपित्थैरथवा शुभैः।
मासेन लोकेऽतिकृच्छ्रः कथ्यते द्विजसत्तमैः॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
एकरात्रोपवासस्तु कृच्छ्रं सान्तपनं स्मृतम्॥
एतैस्तु त्र्यहमभ्यस्तैर्महासान्तपनं स्मृतम्।
पादद्वयं तथा त्यक्त्वा शक्तूनां परिवासनात्।
उपवासान्तराभ्यासात्तुलापुरुष उच्यते॥
गोपुरीषाशनो भूत्वा मासं नित्यं समाहितः।
व्रतन्तु वार्हिकं कुर्य्यात् सर्वपापापनुत्तये॥
ग्रासं चन्द्रकलावृद्ध्या प्राश्नीयाद्वर्द्धयन् सदा।

ह्रासयंस्तु कलाहानौ व्रतं चान्द्रायणं स्मृतम् ॥
मन्त्रं विद्वान् जपेद्भक्त्या जुहुयाच्चैव शक्तितः ।
अयं विधिस्तु विज्ञेयः सुधीभिर्विमलात्मभिः ।
पापात्मनस्तु पापिभ्यो नात्र कार्य्या विचारणा ॥
शङ्खप्रोक्तमिदं शास्त्रं योऽधीते प्रयतः सुधीः ।
सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते ॥
इति शाङ्खीये धर्मशास्त्रेऽष्टादशोऽध्यायः ।

इति श्रीमन्महर्षिशिरोरत्नायमानत्रयीनितराम्ज्ञेगीयमानमहाविद्यान्यकृताखण्डनोपदेशधीषणशङ्खविरचितं धर्मशास्त्रं समाप्तम् ॥

# लिखितसंहिता ।

इष्टापूर्त्तौ तु कर्त्तव्ये ब्राह्मणेन प्रयत्नतः ।
इष्टेन लभते स्वर्गं पूर्त्ते मोक्षमवाप्नुयात् ॥
एकाहमपि कर्त्तव्यं भूमिष्ठमुदकं शुभम् ।
कुलानि तारयेत् सप्त यत्र गौर्वितृषी भवेत् ॥
भूमिदानेन ये लोका गोदानेन च कीर्त्तिताः ।
तल्लोकान् प्राप्नुयान्मर्त्यः पादपानां प्ररोपणे ॥
वापीकूपतड़ागानि देवतायतनानि च ।
पतितान्युद्धरेद्यस्तु स पूर्त्तं फलमश्नुते ॥
अग्निहोत्रं तपः सत्यं वेदानाञ्चैव पालनम् ।
आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते ॥
इष्टापूर्त्तौ द्विजातीनां सामान्यो धर्म उच्यते ।
अधिकारी भवेच्छूद्रः पूर्त्ते धर्मे न वैदिके ॥
यावदस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठति ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥
देवतानां पितॄणाञ्च जले दद्याज्जलाञ्जलिम् ।
असंस्कृतमृतानाञ्च स्थले दद्याज्जलाञ्जलिम् ॥
एकादशाहे प्रेतस्य यस्य चोत्सृज्यते वृषः ।

मुच्यते प्रेतलोकात्तु, पितृलोकं स गच्छति॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्॥
वाराणस्यां प्रविष्टस्तु कदाचिन्निष्क्रमेद्यदि।
हसन्ति तस्य भूतानि अन्योन्यं करताड़नैः॥
गयाशिरे तु यत्किञ्चिन्नाम्ना पिण्डन्तु निर्वपेत्।
नरकस्थो दिवं याति स्वर्गस्थो मोक्षमाप्नुयात्॥
आत्मनो वा परस्यापि गयाकूपे यतस्ततः।
यन्नाम्ना पातयेत् पिण्डं तं नयेद्ब्रह्म शाश्वतम्॥
लोहितो यस्तु वर्णेन शङ्खवर्णखुरस्तथा।
लाङ्गूलशिरसोश्चैव स वै नीलवृषः स्मृतः॥
नवश्राद्धं त्रिपक्षे च द्वादशश्चैव मासिकम्।
षण्मासौ चाब्दिकश्चैव श्राद्धान्येतानि षोड़श॥
यस्यैतानि न कुर्वीत एकोद्दिष्टानि षोड़श।
पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि॥
सपिण्डीकरणादूर्द्ध्वं प्रतिसम्वत्सरं द्विजः।
मातापित्रोः पृथक्कुर्यादेकोद्दिष्टं मृतेऽहनि॥
वर्षे वर्षे तु कर्त्तव्यं मातापित्रोस्तु सन्ततम्।
अदैवं भोजयेच्छ्राद्धं पिण्डमेकन्तु निर्वपेत्॥
संक्रान्तावुपरागे च पर्व्वण्यपि महालये।
निर्वाप्यास्तु त्रयः पिण्डा एकतस्तु क्षयेऽहनि॥
एकोद्दिष्टं परित्यज्य पार्वणं कुरुते द्विजः।
अकृतं तद्विजानीयात् स नाम पितृघातकः।
अमावस्यां क्षयो यस्य प्रेतपक्षेऽथवा यदि।

सपिण्डीकरणादूर्द्धं तस्योक्तः पार्वणोविधिः ॥
निरग्नेस्त्वग्रहणादेव प्रेतत्वं नैव जायते।
अहन्येकादशे प्राप्ते पार्वणन्तु विधीयते ॥
यस्य सम्वत्सरादर्वाक् सपिण्डीकरणं स्मृतम्।
प्रत्यहं तत्सोदकुम्भं दद्यात् सम्वत्सरं द्विजः ॥
पत्यां चैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः।
पितामह्यापि तस्मिन् सत्येवन्तु क्षयेऽहनि ॥
तस्या सत्यां प्रकर्त्तव्यं तस्याः श्वश्रेति निश्चितम् ॥
विवाहे चैव निर्वृत्ते चतुर्थेऽहनि रात्रिषु।
एकत्वं सा गता भर्त्तुः पिण्डे गोत्रे च सूतके ॥
स्वगोत्राद्भ्रश्यते नारी उद्वाहात् सप्तमे पदे।
भर्त्तृगोत्रेण कर्त्तव्यं दानं पिण्डोदकक्रिया ॥
द्विमातुः पिण्डदानन्तु पिण्डे पिण्डे द्विनामतः।
षण्णां देयास्त्रयः पिण्डा एवं दाता न मुह्यति ॥
अथ चेन्मन्त्रवित्युक्तः शारीरैः पङ्क्तिदूषणैः।
अदोषन्तं यमः प्राह पङ्क्तिपावनएव सः ॥
अग्नौ करणशेषन्तु पितृपात्रे प्रदापयेत्।
प्रतिपाद्य पितृणाञ्च न दद्याद्वैश्वदेविके ॥
अनग्निको यदा विप्रः श्राद्धं करोति पार्वणम्।
तत्र मातामहानाञ्च कर्त्तव्यमभयं सदा ॥
अपुत्रा ये मृताः केचित् पुरुषावा स्त्रियोऽपिवा।
तेभ्यएव प्रदातव्यमेकोद्दिष्टं न पार्वणम् ॥
यस्मिन् राशिगते सूर्ये विपत्तिः स्याद्द्विजन्मन।
तस्मिन्नहनि कर्त्तव्यं दानं पिण्डोदकक्रिया ॥

वर्षेद्वद्धभिषेकादि कर्तव्य मधिकेन तु।
अधिमासे तु पूर्वं स्याच्छ्राद्धं सम्वत्सरादपि॥
सएव श्रेयोद्दिष्टस्य येन केन तु कर्मणा।
अभिघातान्तरं कार्य्यं तत्रैवाह्नःकृतं भवेत्॥
शालाग्नौ पचते अन्नं लौकिकेनापि नित्यशः।
यस्मिन्नेव पचेदन्नं तस्मिन् होमो विधीयते॥
वैदिके लौकिके वापि नित्यं कृत्वा हुतन्वितः।
वैदिके स्वर्गमाप्नोति लौकिके हन्ति किल्विषम्॥
अग्नौ व्याहृतिभिः पूर्वं कृत्वा मन्त्रैस्तु शाकलैः।
संविभागन्तु भूतेभ्यस्ततोऽश्नीयादनग्निमान्॥
उच्छेषणं तु नोत्तिष्ठेद्यावद्विप्रविसर्जनम्।
ततोग्टहवलिं कुर्य्यादिति धर्मोव्यवस्थितः॥
दर्भाः कृष्णाजिनं मन्त्राब्राह्मणा श्च विशेषतः।
नैते निर्म्माल्यतां यान्ति योक्तव्यास्ते पुनः पुनः॥
पानमाचमनं कुर्य्यात् कुशपाणिः सदा द्विजः।
भुक्त्वा नोच्छिष्टतां याति एष एव विधिः सदा॥
पान आचमने चैव तर्पणे दैविके सदा।
कुशहस्तो न दूष्येत यथा पाणिस्तथा कुशः॥
वामपाणौ कुशान् कृत्वा दक्षिणेन उपस्पृशेत्।
विनाचमन्ति ये मूढा रुधिरेणाचमन्ति ते॥
नीवीमध्येषु ये दर्भाब्रह्मसूत्रेषु ये कृताः।
पवित्रांस्तान् विजानीयाद्यथा कायस्तथा कुशाः॥
पिण्डे कृतास्तु ये दर्भा यैः कृतं पितृतर्पणम्।
मूत्रोच्छिष्टपुरीषञ्च तेषां त्यागोविधीयते॥

दैवपूर्वन्तु यच्छ्राद्धमदैवञ्चापि यद्भवेत्।
ब्रह्मचारी भवेत्तत्र कुर्य्याच्छ्राद्धन्तु पैतृकम्॥
मातुः श्राद्धन्तु पूर्वं स्यात् पितृणां तदनन्तरम्।
ततोमातामहानाञ्च वृद्धौ श्राद्धत्रयं स्मृतम्॥
क्रतुर्दक्षोवसुः सत्यः कालकामौ धुरिलोचनौ।
पुरूरवामाद्रवाश्च विश्वेदेवाः प्रकीर्तिताः॥
आगच्छन्तु महाभागाविश्वेदेवामहाबलाः।
ये यत्र विहिताः श्राद्धे सावधानाभवन्तु ते॥
इष्टिश्राद्धे क्रतुर्दक्षोवसुः सत्यश्च दैविके।
कालः कामो ऽग्निकार्य्येषु अम्बरे धुरिलोचनौ।
पुरूरवामाद्रवाश्च पार्वणेषु नियोजयेत्॥
यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता।
नोपयच्छेत तां प्राज्ञः पुत्रिकाकर्मशङ्कया॥
अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्।
अस्यां योजायते पुत्रः स मे पुत्रोभविष्यति॥
मातुः प्रथमतः पिण्डं निर्वपेत् पुत्रिकासुतः।
द्वितीयन्तु पितुस्तस्यास्तृतीयन्तत्पितुः पितुः॥
अश्मयेषु च पात्रेषु श्राद्धे यो भोजयेत् पितॄन्।
अन्नदाता पुरोधाश्च भोक्ता च नरकं व्रजेत्॥
अलाभे अश्मयं दद्यादनुज्ञातस्तु तैर्द्विजैः।
घृतेन प्रोक्षणं कार्य्यं मृदः पात्रं पवित्रकम्॥
श्राद्धं कृत्वा परश्राद्धे यस्तु भुञ्जीत विह्वलः।
पतन्ति पितरस्तस्य लुप्तपिण्डोदकक्रियाः॥
श्राद्धं दत्त्वा च भुक्त्वा च अध्वानं योऽधिगच्छति।

भवन्ति पितरस्तस्य तन्मासं पांशुभोजनाः ॥
पुनर्भोजनमध्वानं भाराध्ययनमैथुनम् ।
दानं प्रतिग्रहं होमं श्राद्धं कृत्वाष्ट वर्जयेत् ॥
अध्वगामी भवेदश्वः पुनर्भोक्ता च वायसः ।
कर्मकृज्जायते दासः स्त्रीगमने च शूकरः ॥
दशकृत्वः पिबेदापः सावित्र्या चाभिमन्त्रिताः ।
ततः सन्ध्यामुपासीत शुध्येत तदनन्तरम् ॥
आर्द्रवासास्तु यत् कुर्य्याद्बहिर्जानु च यत् कृतम् ।
सर्वं तन्निष्फलं कार्य्यं जपहोमप्रतिग्रहम् ॥
चान्द्रायणं नवश्राद्धे पराको मासिके तथा ।
पक्षत्रये तु कृच्छ्रं स्यात् षण्मासे कृच्छ्रमेवच ॥
ऊनाब्दिके त्रिरात्रं स्यादेकाहः पुनराब्दिके ।
शावे मासन्तु भुक्त्वा वा पादकृच्छ्रं विधीयते ॥
रूपविप्रहतानाञ्च शृङ्गिदंष्ट्रिसरीसृपैः ।
आत्मनस्त्यागिनाञ्चैव श्राद्धमेषां न कारयेत् ॥
गोभिर्हतं तथोद्बद्धं ब्राह्मणेन तु घातितम् ।
तं स्पृशन्ति च ये विप्रा गोजाश्वाश्च भवन्ति ते ॥
अग्निदाता तथा चान्ये पाशच्छेदकराश्च ये ।
तप्तकृच्छ्रेण शुध्यन्ति मनुराह प्रजापतिः ॥
त्र्यहमुष्णं पिबेदापस्त्र्यहमुष्णं पयः पिबेत् ।
त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो दिनत्रयम् ।
गोभूहिरण्यहरणे स्त्रीणां क्षेत्रगृहस्य च ।
यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम् ॥
उद्यताः सह धावन्ते यद्येकोधर्मघातकः ।

सर्वे ते शुद्धिमिच्छन्ति स एको ब्रह्मघातकः ॥
पतितान्नं यदा भुङ्क्ते भुङ्क्ते चाण्डालवेश्मनि ।
स मासार्द्धं चरेद्वारि मासं कामकृतेन तु ॥
यो येन पतितेनैव स्पृष्टः स्नानं विधीयते ।
तेनैवोच्छिष्टसंस्पृष्टः प्राजापत्यं समाचरेत् ॥
ब्रह्महा च सुरापायी स्तेयी च गुरुतल्पगः ।
महान्ति पातकान्याहुस्तत्संसर्गी च पञ्चमः ॥
स्नेहाद्वा यदि वा लोभाद्भयादज्ञानतोऽपि वा ।
कुर्वन्त्यनुग्रहं ये च तत्पापं तेषु गच्छति ॥
उच्छिष्टोच्छिष्टसंस्पृष्टो ब्राह्मणस्तु कदाचन ।
तत्क्षणात् कुरुते स्नानमाचमेन शुचिर्भवेत् ॥
कुब्जवामनषण्ढेषु गद्गदेषु जडेषु च ।
जात्यन्धे बधिरे मूके न दोषः परिवेदने ॥
क्लीबे देशान्तरस्थे च पतिते व्रजितेऽपि वा ।
योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥
पूरणे कूपवापीनां वृक्षच्छेदनपातने ।
विक्रीणीत गजस्याश्वं गोवधस्तस्य निर्दिशेत् ॥
पादेऽङ्गरोमवपनं द्विपादे श्मश्रु केवलम् ।
तृतीये तु शिखावर्जं चतुर्थे तु शिखावपः ॥
चाण्डालोदकसंस्पर्शे स्नानं येन विधीयते ।
तेनैवोच्छिष्टसंस्पृष्टः प्राजापत्यं समाचरेत् ॥
चण्डालघटभाण्डस्थं यत्तोयं पिबते द्विजः ।
तत्क्षणात् क्षिपते यस्तु प्राजापत्यं समाचरेत् ॥
यदि नोत्क्षिप्यते तोयं शरीरे तस्य जीर्यति ।

प्राजापत्यं न दातव्यं कृच्छ्रं सान्तपनं चरेत् ॥
चरेत् सान्तपनं विप्रः प्राजापत्यन्तु क्षत्रियः ।
तदर्द्धन्तु चरेद्वैश्यः पादं शूद्रे तु दापयेत् ॥
रजस्वला यदा स्पृष्टा शुना शूकरवायसैः ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥
अज्ञानतः स्नानमात्रमानाभेस्तु विशेषतः ।
अत ऊर्द्धं त्रिरात्रं स्यात्तु दीयस्पर्शने मतम् ॥
बालश्चैव दशाहे तु पञ्चत्वं यदि गच्छति ।
सद्य एव विशुद्धिः स्यान्नाशौचं नोदकक्रिया ॥
शावसूतक उत्पन्ने सूतकन्तु सदा भवेत् ।
शावेन शुद्ध्यते सूतिर्न सूतिः शावशोधिनी ॥
षष्ठेन शुद्ध्यतैकाहं पञ्चमे त्र्यहमेव तु ।
चतुर्थे सप्तरात्रं स्यात्त्रिपुरुषे दशमेऽहनि ॥
मरणारब्धमाशौचं संयोगो यस्य नाग्निभिः ।
आदाहात्तस्य विज्ञेयं यस्य वैतानिको विधिः ॥
आममांसं घृतं क्षौद्रं स्नेहाश्च फलसम्भवाः ।
अन्यभाण्डस्थितास्त्वेते निष्क्रान्ताः शुचयः स्मृताः ॥
मार्जनीरजसासक्ते स्नानवस्त्रघटोदके ।
नवाम्भसि तथा चैव हन्ति पुण्यं दिवाकृतम् ॥
दिवा कपित्थच्छायायां रात्रौ दधिषु शक्तुषु ।
धात्रीफलेषु सर्वत्र अलक्ष्मीर्वसते सदा ।
यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः ।
तत्र तत्र तिलैर्होमं गायत्र्यष्टशतं जपेत् ॥
इति श्रीमहर्षिलिखितप्रोक्तं धर्मशास्त्रं समाप्तम् ॥

# दक्षसंहितायाम्।

## प्रथमोऽध्यायः।

सर्वधर्मार्थतत्त्वज्ञ सर्ववेदविदां वरः।
पारगः सर्व्वविद्यानां दक्षो नाम प्रजापतिः॥
उत्पत्तिः प्रलयश्चैव स्थितिः संहारएव च।
आत्मा चात्मनि तिष्ठेत आत्मा ब्रह्मस्वरस्थितः॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थोयतिस्तथा।
एतेषान्तु हितार्थाय दक्षः शास्त्रमकल्पयत्॥
जातमात्रः शिशुस्तावद्यावदष्टौ समा वयः।
सहि गर्भसमोज्ञेयोव्यक्तिमात्रप्रदर्शितः॥
भक्ष्याभक्ष्ये तथा पेये वाच्यावाच्ये तथानृते।
तस्मिन् काले न दोषोऽस्ति स यावन्नोपनीयते॥
उपनीतस्य दोषोऽस्ति क्रियमाणैर्विगर्हितैः।
अप्राप्तव्यवहारोऽसौ यावत् षोड़शवार्षिकः॥
स्वीकरोति यदा वेदं चरेद्वेदव्रतानि च।
ब्रह्मचारी भवेत्तावदूर्द्धं स्नातो भवेद्गृही॥
द्विविधोब्रह्मचारी तु स्मृतः शास्त्रे मनीषिभिः।
उपकुर्वाणकस्त्वाद्योद्वितीयोनैष्ठिकः स्मृतः॥

योऽगृहाश्रममास्थाय ब्रह्मचारी भवेत् पुनः ।
न यतिर्न वनस्थश्च सर्व्वाश्रमविवर्ज्जितः ॥
अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः ।
आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते हि सः ॥
जपे होमे तथा दाने स्वाध्याये च रतस्तु यः ।
नासौ तत्फलमाप्नोति कुर्व्वाणोऽप्याश्रमाच्युतः ।
त्रयाणामानुलोम्यं हि प्रातिलोम्यं न विद्यते ॥
प्रातिलोम्येन यो याति न तस्मात् पापकृत्तमः ।
मेखलाजिनदण्डेन ब्रह्मचारी तु लक्ष्यते ॥
गृहस्थो देवयज्ञाद्यैर्नखलोम्ना वनाश्रितः ।
त्रिदण्डेन यतिश्चैव लक्षणानि पृथक् पृथक् ॥
यस्यैतल्लक्षणं नास्ति प्रायश्चित्ती नचाश्रमी ।
उक्तं कर्म्म क्रमोनोक्तो न कालो मुनिभिः स्मृतः ॥
द्विजानान्तु हितार्थाय दक्षस्तु स्वयमब्रवीत् ॥

इति दाक्षे धर्म्मशास्त्रे प्रथमोऽध्यायः ।

---

## द्वितीयोऽध्याय ।

प्रातरुत्थाय कर्त्तव्यं यद्द्विजेन दिने दिने ।
तत्सर्व्वं संप्रवक्ष्यामि द्विजानामुपकारकम् ॥
उदयास्तमयं यावन्न विप्रः क्षणिकोभवेत् ।
नित्यनैमित्तिकैर्युक्तः काम्यैश्चान्यैरगर्हितैः ॥
यः स्वकर्म्म परित्यज्य यदन्यत् कुरुते द्विजः ।
अज्ञानादथवा मोहात् स तेन पतितो भवेत् ।

दिवसस्याद्यभागे तु कृत्यं तस्योपदिश्यते ।
द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा ॥
षष्ठे च सप्तमे चैव अष्टमे च पृथक् पृथक् ।
विभागेष्वेषु यत्कर्म तत्प्रवक्ष्याम्यशेषतः ॥
उषःकाले तु संप्राप्ते शौचं कृत्वा यथार्थवत् ।
ततः स्नानं प्रकुर्व्वीत दन्तधावनपूर्वकम् ॥
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ।
स्रवत्येष दिवारात्रौ प्रातःस्नानं विशोधनम् ॥
क्लिद्यन्ति हि प्रसुप्तस्य इन्द्रियाणि स्रवन्ति च ।
अङ्गानि समतां यान्ति उत्तमान्यधमैः सह ॥
नानास्वेदसमाकीर्णः शयनादुत्थितः पुमान् ।
अस्नात्वा नाचरेत् कर्म जपहोमादि किञ्चन ॥
प्रातरुत्थाय यो विप्रः प्रातःस्नायी भवेत् सदा ।
समस्तजन्मजं पापं त्रिभिर्वर्षैर्व्यपोहति ॥
उषस्युषसि यत् स्नानं सन्ध्यायामुदिते रवौ ।
प्राजापत्येन तत्तुल्यं महापातकनाशनम् ॥
प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत् ।
सर्व्वमर्हति पूतात्मा प्रातःस्नायी जपादिकम् ॥
स्नानादनन्तरं तावदुपस्पर्शनमुच्यते ।
अनेन तु विधानेन स्वाचान्तः शुचितां व्रजेत् ॥
प्रक्षाल्य पादौ हस्तौ च त्रिः पिबेदम्बु वीक्षितम् ।
संवृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम् ॥
संहत्य तिसृभिः पूर्व्वमास्यमेवमुपस्पृशेत् ।
ततः पादौ समभ्युक्ष्य अङ्गानि समुपस्पृशेत् ॥

अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् ।
अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनः पुनः ॥
कनिष्ठाङ्गुष्ठया नाभिं हृदयञ्च तलेन वै ।
सर्व्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् ॥
सन्ध्यायाञ्च प्रभाते च मध्याह्ने च ततः पुनः ।
सन्ध्यां नोपासते यस्तु ब्राह्मणोहि विशेषतः ॥
स जीवन्नेव शूद्रः स्यान्मृतः श्वा चैव जायते ।
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ॥
यदन्यत् कुरुते कर्म न तस्य फलमश्नुते ॥
सन्ध्याकर्मावसाने तु स्वयं होमोविधीयते ।
स्वयंहोमे फलं यत्तु तदन्येन न जायते ॥
ऋत्विक् पुत्त्रोगुरुर्भ्राता भागिनेयोऽथ विट्पतिः ।
एभिरेव हुतं यत्तु तद्धुतं स्वयमेवहि ॥
देवकार्य्यं ततः कृत्वा गुरुमङ्गलवीक्षणम् ।
देवकार्य्याणि पूर्व्वाह्ने मनुष्याणाञ्च मध्यमे ॥
पितृणामपराह्ने च कार्य्याण्येतानि यत्नतः ।
पौर्व्वाह्णिकन्तु यत् कर्म यदि तत् सायमाचरेत् ॥
न तस्य फलमाप्नोति बन्ध्यास्त्रीमैथुनं यथा ।
दिवसस्याद्यभागे तु सर्वमेतद्विधीयते ॥
द्वितीये च तथाभागे वेदाभ्यासोविधीयते ।
वेदाभ्यासोहि विप्राणां परमं तपउच्यते ॥
ब्रह्मयज्ञः स विज्ञेयः षडङ्गसहितस्तु सः ।
वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ॥
ततोदानञ्च शिष्येभ्यो वेदाभ्यासोहि पञ्चधा ।

समित्पुष्पकुशादीनां स कालः समुदाहृतः ॥
तृतीये चैव भागे तु पोष्यवर्गार्थसाधनम्।
पिता माता गुरुर्भार्य्या प्रजादीनाः समाश्रिताः ॥
अभ्यागतोऽतिथिश्चान्यः पोष्यवर्ग उदाहृतः।
ज्ञातिर्बन्धुजनः क्षीणस्तथानाथः समाश्रितः ॥
अन्येऽप्यधनयुक्ताश्च पोष्यवर्ग उदाहृतः।
भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् ॥
नरकं पीड़ने चास्य तस्माद्यत्नेन तं भरेत्।
सार्वभौतिकमन्नाद्यं कर्त्तव्यन्तु विशेषतः।
ज्ञानविद्भ्यः प्रदातव्यमन्यथा नरकं व्रजेत् ॥
स जीवति य एवैको बहुभिश्चोपजीव्यते।
जीवन्तो मृतकाश्चान्ये य आत्मम्भरयो नराः।
बह्वर्थे जीव्यते कश्चित् कुटुम्बार्थे तथा परैः ॥
आत्मार्थेऽन्यो न शक्नोति स्वोदरेणापि दुःखितः।
दीनानाथविशिष्टेभ्यो दातव्यं भूतिमिच्छता ॥
अदत्तदाना जायन्ते परभाग्योपजीविनः।
यद्ददाति विशिष्टेभ्यो यज्जुहोति दिने दिने ॥
तत्तु वित्तमहं मन्ये शेषं कस्यापि रक्षति।
चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत् ॥
तिलपुष्पकुशादीनि स्नानञ्चाकृत्रिमे जले।
नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते ॥
तेषां मध्ये तु यन्नित्यं तत्पुनर्भिद्यते त्रिधा।
मलापहरणं पश्चान्मन्त्रवत्तु जले स्मृतम् ॥
सन्ध्यास्नानमुभाभ्याञ्च स्नानभेदाः प्रकीर्तिताः।

मार्जनं जलमध्ये तु प्राणायामोयतस्ततः॥
उपस्थानं ततः पश्चात् सावित्र्या जप उच्यते।
सविता देवता यस्या मुखमग्निस्त्रिधा स्थितः॥
विश्वामित्रऋषिश्छन्दोगायत्री सा विशिष्यते।
पञ्चमे च तथा भागे संविभागोयथार्हतः॥
पितृदेवमनुष्याणां कीटानाञ्चोपदिश्यते।
देवैश्चैव मनुष्यैश्च तिर्य्यग्भिश्चोपजीव्यते॥
गृहस्थः प्रत्यहं यस्मात्तस्माज्ज्येष्ठाश्रमी गृही।
त्रयाणामाश्रमाणान्तु गृहस्थो योनिरुच्यते॥
तेनैव सीदमानेन सीदन्तीहेतरे त्रयः।
मूलप्राणो भवेत् स्कन्धः स्कन्धाच्छाखाः सपल्लवाः॥
मूलेनैव विनष्टेन सर्व्वमेतद्विनश्यति।
तस्मात् सर्व्वप्रयत्नेन रक्षितव्यो गृहाश्रमी॥
राज्ञा चान्यैस्त्रिभिः पूज्यो माननीयश्च सर्व्वदा।
गृहस्थोऽपि क्रियायुक्तो न गृहेण गृहाश्रमी॥
नचैव पुत्रदारेण स्वकर्म्मपरिवर्ज्जितः।
अस्नात्वा चाप्यहुत्वा चाजप्त्वाऽदत्त्वा च मानवः॥
देवादीनामृणी भूत्वा नरकं प्रतिपद्यते।
एकएव हि भुङ्क्तेऽन्नमपरोऽन्नेन भुज्यते॥
न भुज्यते सएवैको योभुङ्क्तेऽन्नं समाहितः।
विभागशीलो यो नित्यं क्षमायुक्तो दयापरः॥
देवतातिथिभक्तश्च गृहस्थः स तु धार्म्मिकः।
दया लज्जा क्षमा श्रद्धा प्रज्ञा योगः कृतज्ञता॥
एते यस्य गुणाः सन्ति स गृही मुख्यउच्यते।

संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत् ॥
भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत् ।
इतिहासपुराणाद्यैः षष्ठञ्च सप्तमं नयेत् ॥
अष्टमे लोकयात्रा तु बहिःसन्ध्या ततः पुनः ।
होमो भोजनकञ्चैव यच्चान्यद्गृहकृत्यकम् ॥
कृत्वा चैवं ततः पश्चात् स्वाध्यायं किञ्चिदाहरेत् ।
प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् ॥
यामद्वयं शयानोऽहि ब्रह्मभूयाय कल्पते ।
नैमित्तिकानि काम्यानि निपतन्ति यथा यथा ॥
तथा तथैव कार्य्याणि न कालस्तु विधीयते ।
अस्मिन्नेव प्रयुञ्जानो ह्यस्मिन्नेव तु क्षीयते ॥
तस्मात् सर्वप्रयत्नेन कर्त्तव्यं सुखमिच्छता ।
सर्वत्र मध्यमौ यामौ हुतशेषं हविश्च यत् ॥
भुञ्जानश्च शयानश्च ब्राह्मणो नावसीदति ॥
इति दाक्षे धर्मशास्त्रे द्वितीयोऽध्यायः ।

---

## तृतीयोऽध्यायः ।

सुधा नवगृहस्थस्य सद्दयामि नवैव तु ।
तथैव नव कर्माणि विकर्माणि तथा नव ॥
प्रच्छन्नानि नवान्यानि प्रकाश्यानि तथा नव ।
सफलानि नवान्यानि निष्फलानि नवैव तु ॥
अदेयानि नवान्यानि वस्तुजातानि सर्वदा ।

नवका नव निर्दिष्टा गृहस्थोन्नतिकारकाः ॥
सुधावस्तूनि वक्ष्यामि विशिष्टे गृहमागते ।
मनश्चक्षुर्मुखं वाचं सौम्यं दद्याच्चतुष्टयम् ॥
अभ्युत्थानमिहागच्छ पृच्छालापप्रियान्वितः ।
उपासनमनुव्रज्या कार्याण्येतानि यत्नतः ॥
ईषद्दानानि चान्यानि भूमिरापस्तृणानि च ।
पादशौचं तथाभ्यङ्गमाश्रयः शयनं तथा ॥
किञ्चिच्चान्नं यथाशक्ति नास्यानश्नन् गृहे वसेत् ।
मृज्जलं चार्थिने देयमेतान्यपि सदा गृहे ॥
सन्ध्यास्नानं जपो होमः स्वाध्यायो देवतार्चनम् ।
वैश्वदेवं तथातिथ्यमुद्धृतञ्चापि शक्तितः ॥
पितृदेवमनुष्याणां दीनानाथतपस्विनाम् ।
मातापितृगुरूणाञ्च संविभागो यथार्हतः ॥
एतानि नव कर्माणि विकर्माणि तथा पुनः ।
अनृतं पारदार्यञ्च तथाभक्ष्यस्य भक्षणम् ॥
अगम्यागमनापेयपानं स्तेयञ्च हिंसनम् ।
अश्रौतकर्माचरणं मित्रधर्मवहिष्कृतम् ॥
नवैतानि विकर्माणि तानि सर्वाणि वर्जयेत् ।
आयुर्वित्तं गृहच्छिद्रं मन्त्रमैथुनभेषजम् ॥
तपोदानावमानौ च नव गोप्यानि यत्नतः ।
प्रायोग्यमृणशुद्धिश्च दानाध्ययनविक्रयाः ॥
कन्यादानं वृषोत्सर्गो रहःपापमकुत्सनम् ।
प्रकाश्यानि नवैतानि गृहस्थाश्रमिणस्तथा ॥
मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि ।

दीनानाथविशिष्टेभ्यो दत्तन्तु सफलं भवेत् ॥
धूर्त्ते वन्दिनि मल्ले च कुवैद्ये कितवे शठे ।
चाटुचारणचौरेभ्यो दत्तं भवति निष्फलम् ॥
सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम् ।
अन्वाहितञ्च निक्षेपः सर्वस्वञ्चान्वये सति ॥
आपत्स्वपि न देयानि नव वस्तूनि सर्वदा ।
यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः ॥
नवनवकवेत्तारमनुष्ठानपरं नरम् ।
इह लोके परे च श्रीः स्वर्गस्थश्च न मुञ्चति ॥
यथैवात्मा परस्तद्वद्द्रष्टव्यः सुखमिच्छता ।
सुखदुःखानि तुल्यानि यथात्मनि तथा परे ॥
सुखं वा यदि वा दुःखं यत्किञ्चित् क्रियते परे ।
ततस्तत्तु पुनः पश्चात् सर्वमात्मनि जायते ॥
न क्लेशेन विना द्रव्यं द्रव्यहीने कुतः क्रिया ।
क्रियाहीने न धर्मः स्याद्धर्महीने कुतः सुखम् ॥
सुखं काङ्क्षन्ति सर्वे हि तच्च धर्मसमुद्भवम् ।
तस्माद्धर्मः सदा कार्य्यः सर्ववर्णैः प्रयत्नतः ॥
न्यायागतेन द्रव्येण कर्त्तव्यं पारलौकिकम् ।
दानञ्च विधिना देयं काले पात्रे गुणान्विते ॥
समद्विगुणसाहस्रमानन्त्यञ्च यथाक्रमम् ।
दाने फलविशेषः स्याद्धिंसायां तावदेव तु ॥
सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
सहस्रगुणमाचार्य्ये त्वनन्तं वेदपारगे ॥
विधिहीने तथा पात्रे यो ददाति प्रतिग्रहम् ।

न केवलं तद्दिनश्येच्छ्रेयमप्यस्य नश्यति ॥
व्यसनप्रतिकाराय कुटुम्बार्थञ्च याचते ।
एवमन्विष्य दातव्यमन्यथा न फलं भवेत् ॥
मातापितृविहीनन्तु संस्कारोद्वहनादिभिः ।
यः स्थापयति तस्येह पुण्यसंख्या न विद्यते ॥
न तच्छ्रेयोऽग्निहोत्रेण नाग्निष्टोमेन लभ्यते ।
यच्छ्रेयः प्राप्यते पुंसा विप्रेण स्थापितेन तु ॥
यद्यदिष्टतमं लोके यच्चापि दयितं गृहे ।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥
इति दाक्षे धर्मशास्त्रे तृतीयोऽध्यायः ।

---

## चतुर्थोऽध्यायः ।

पत्नीमूलं गृहं पुंसां यदि च्छन्दोऽनुवर्त्तिनी ।
गृहाश्रमसमं नास्ति यदि भार्य्या वशानुगा ॥
तया धर्मार्थकामानां त्रिवर्गफलमश्नुते ।
प्राकाम्ये वर्त्तमाना तु स्नेहान्नतु निवारिता ॥
अवश्या सा भवेत् पश्चाद्यथा व्याधिरुपेक्षितः ।
अनुकूला नवाग्दुष्टा दक्षा साध्वी प्रियम्वदा ॥
आत्मगुप्ता स्वामिभक्ता देवता सा न मानुषी ॥
अनुकूलकलत्रोय स्तस्य स्वर्ग इहैव हि ।
प्रतिकूलकलत्रस्य नरको नात्र संशयः ॥
स्वर्गेऽपि दुर्लभं ह्येतदनुरागः परस्परम् ।

रक्तएको विरक्तोऽन्यस्तस्मात् कष्टतरं नु किम् ॥
गृहवासः सुखार्थाय पत्नीमूलं गृहे सुखम्।
सा पत्नी या विनीता स्याच्चित्तज्ञा वशवर्त्तिनी ॥
दुःखा च्छाया सदा खिन्ना चित्तभेदः परस्परम्।
प्रतिकूलकलत्रस्य द्विदारस्य विशेषतः ॥
योषित् सर्व्वा जलौकेव भूषणाच्छादनाशनैः।
सुभृत्यापि कृता नित्यं पुरुषं ह्यपकर्षति ॥
जलौका रक्तमादत्ते केवलं सा तपस्विनी।
इतरा तु धनं वित्तं मांसं वीर्य्यं बलं सुखम् ॥
सशङ्का बालभावे तु यौवने विमुखी भवेत्।
तृणवन्मन्यते पश्चाद्वृद्धभावे स्वकं पतिम् ॥
अनुकूला नवाग्दुष्टा दक्षा साध्वी पतिव्रता।
एभिरेव गुणैर्युक्ता श्रीरेव स्त्री न संशयः ॥
या हृष्टमनसा नित्यं स्थानमानविचक्षणा।
भर्त्तुः प्रीतिकरी नित्यं सा भार्य्या ह्यितरा जरा ॥
शिष्यो भार्य्या शिशुर्भ्राता पुत्रो दासः समाश्रितः।
यस्यैतानि विनीतानि तस्य लोके हि गौरवम् ॥
प्रथमा धर्मपत्नी च द्वितीया रतिवर्द्धिनी।
दृष्टमेव फलं तत्र नादृष्टमुपजायते ॥
धर्मपत्नी समाख्याता निर्दोषा यदि सा भवेत्।
दोषे सति न दोषः स्यादन्या भार्य्या गुणान्विता ॥
अदुष्टापतितां भार्य्यां यौवने यः परित्यजेत्।
स जीवनान्ते स्त्रीत्वञ्च वन्ध्यत्वञ्च समाप्नुयात् ॥
दरिद्रं व्याधितं चैव भर्त्तारं यावमन्यते।

शुनी गृध्री च मकरी जायते सा पुनः पुनः ॥
मृते भर्तरि या नारी समारोहेद्धुताशनम् ।
सा भवेत्तु शुभाचारा स्वर्गलोके महीयते ॥
व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् ।
तथा सा पतिमुद्धृत्य तेनैव सह मोदते ॥
चाण्डालप्रत्यवसितपरिव्राजकतापसाः ।
तेषां जातान्यपत्यानि चाण्डालैः सह वासयेत् ॥
इति दाक्षे धर्मशास्त्रे चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः ।

उक्तं शौचमशौचञ्च कार्य्यं त्याज्यं मनीषिभिः ।
विशेषार्थं तयोः किञ्चिद्वक्ष्यामि हितकाम्यया ॥
शौचे यत्नः सदाकार्य्यः शौचमूलो द्विजः स्मृतः ।
शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः ॥
शौचञ्च द्विविधं प्रोक्तं बाह्यमाभ्यन्तरन्तथा ।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम् ॥
अशौचाद्धि वरं बाह्यं तस्मादाभ्यन्तरं वरम् ।
उभाभ्याञ्च शुचिर्यस्तु स शुचिर्नेतरः शुचिः ॥
एका लिङ्गे गुदे तिस्रोदश वामकरे तथा ।
उभयोः सप्त दातव्या मृदस्तिस्रस्तु पादयोः ॥
गृहस्थशौचमाख्यातं त्रिष्वन्येषु यथाक्रमम् ।
द्विगुणं त्रिगुणञ्चैव चतुर्थस्य चतुर्गुणम् ॥

अर्द्धप्रसृतिमात्रन्तु प्रथमा मृत्तिका स्मृता।
द्वितीयाच तृतीया च तदर्द्धं परिकीर्त्तिता॥
लिङ्गेऽप्यत्र समाख्याता त्रिपर्वी पूर्य्यते यया।
एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम्॥
त्रिगुणन्तु वनस्थानां यतीनाञ्च चतुर्गुणम्।
दातव्यमुदकन्तावन्मृद्भावोयथा भवेत्॥
सदा जलेन शुद्धिः स्यान्नक्लेशो न धनव्ययः।
यस्य शौचेऽपि शैथिल्यं चित्तं तस्य परीक्षितम्॥
अन्यदेव दिवाशौचं रात्रावन्यद्विधीयते।
अन्यदापत्सु विप्राणामन्यदेव ह्यनापदि॥
दिवोदितस्य शौचस्य रात्रावर्द्धं विधीयते।
तदर्द्धमातुरस्याहुस्त्वरायामर्द्धमध्वनि॥
न्यूनाधिकं न कर्त्तव्यं शौचे शुद्धिमभीप्सता।
प्रायश्चित्तेन युज्येत विहितातिक्रमे कृते॥
इति दाक्षे धर्मशास्त्रे पञ्चमोऽध्यायः।

---

## षष्ठोऽध्यायः।

सूतकन्तु प्रवक्ष्यामि जन्ममृत्युसमुद्भवम्।
यावज्जीवं तृतीयन्तु यथावदनुपूर्वशः॥
सद्यः शौचं तथैकाहोद्वित्रिचतुरहस्तथा।
दशाहो द्वादशाहश्च पक्षोमासस्तथैव च॥
मरणान्तं तथा चान्यद्दशपक्षन्तु सूतके।

उदक्यस्तकमित्यैव वक्ष्याम्यहमशेषतः॥
ग्रन्थार्थतोविजानाति वेदमङ्गैः समन्वितम्।
सकल्पं सरहस्यञ्च क्रियावांश्चेन्न सूतकी॥
राजर्त्विग्दीक्षितानाञ्च बाले देशान्तरे तथा।
व्रतिनां सत्रिणाञ्चैव सद्यः शौचं विधीयते॥
एकाहस्तु समाख्यातो योऽग्निवेदसमन्वितः।
हीने हीनतरे चैव त्रिश्चतुरहस्तथा॥
जातिविप्रो दशाहेन द्वादशाहेन भूमिपः।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति॥
अस्नात्वा चाप्यहुत्वा च भुङ्क्तेऽदत्वा च यः पुनः।
एवंविधस्य सर्वस्य सूतकं समुदाहृतम्।
व्याधितस्य कदर्यस्य ऋणग्रस्तस्य सर्वदा।
क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः॥
व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः।
श्राद्धत्यागविहीनस्य भस्मान्तं सूतकं भवेत्॥
न सूतकं कदाचित् स्याद्यावज्जीवन्तु सूतकम्।
एवं गुणविशेषेण सूतकं समुदाहृतम्॥
सूतके मृतके चैव तथाच मृतसूतके।
एतत्संहतशौचानां मृतशौचेन शुध्यति॥
दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते।
दशाहात्तु परं शौचं विप्रोऽर्हति च धर्मवित॥
दानञ्च विधिना देयं अशुभात्तारकं हि तत्।
मृतकान्ते मृतो यस्तु सूतकान्ते च सूतकम्॥
एतत्संहतशौचानां पूर्वाशौचेन शुध्यति।

उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ॥
चतुर्थेऽहनि कर्तव्यमस्थि सञ्चयनं द्विजैः ।
ततः सञ्चयनादूर्ध्वमङ्गस्पर्शो विधीयते ॥
वर्णानामानुलोम्येन स्त्रीणामेको यदा पतिः ।
दशषट्त्र्यहमेकाहः प्रसवे सूतकं भवेत् ॥
यज्ञकाले विवाहे च देशभङ्गे तथैव च ।
हूयमाने तथाग्नौ च नाशौचं व्रतसूतके ॥
मुख्यकाले त्विदं सर्वमशौचं परिकीर्तितम् ।
आपद्गतस्य सर्वस्य सूतके नतु सूतकम् ॥
इति दाक्षे धर्मशास्त्रे षष्ठोऽध्यायः ।

---

## सप्तमोऽध्यायः ।

लोको वशीकृतो येन येन चात्मा वशीकृतः ।
इन्द्रियार्थो जितो येन तं योगं प्रब्रवीम्यहम् ॥
प्राणायामस्तथा ध्यानं प्रत्याहारस्तु धारणा ।
तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥
नारण्यसेवनाद्योगो नानेकग्रन्थचिन्तनात् ।
व्रतैर्यज्ञैस्तपोभिश्च न योगः कस्यचिद्भवेत् ॥
नच पद्मासनाद्योगो न नासाग्रनिरीक्षणात् ।
नच शास्त्रातिरिक्तेन शौचेन स भवेत् क्वचित् ॥
न मौनमन्त्रकुहकैरनेकैः सुकृतैस्तथा ।
लोकयात्रावियुक्तस्य योगो भवति कस्यचित् ॥

अभियोगात्तथाभ्यासात्तस्मिन्नेव तु निश्चयात्।
पुनः पुनश्च निर्वेदाद्योगः सिध्यति नान्यथा॥
आत्मचिन्ताविनोदेन शौचक्रीडनकेन च।
सर्व्वभूतसमत्वेन योगः सिध्यति नान्यथा॥
यश्चात्मनि रतो नित्यमात्मक्रीडस्तथैव च।
आत्मनिष्ठश्च सततमात्मन्येव स्वभावतः॥
रतश्चैव स्वयं तुष्टः सन्तुष्टो नान्यमानसः।
आत्मन्येव सुतृप्तोऽसौ योगस्तस्य प्रसिध्यति॥
सुप्तोऽपि योगयुक्तः स्याज्जाग्रच्चापि विशेषतः।
ईदृक्चेष्टः स्मृतः श्रेष्ठो गरिष्ठो ब्रह्मवादिनाम्॥
य आत्मव्यतिरेकेण द्वितीयं नैव पश्यति।
ब्रह्मीभूय स एवं हि दक्षपक्ष उदाहृतः॥
विषयासक्तचित्तोहि यतिर्मोक्षं न विन्दति।
यत्नेन विषयासक्तिं तस्माद्योगी विवर्जयेत्॥
विषयेन्द्रियसंयोगः केचिद्योगं वदन्ति हि।
अधर्मो धर्मरूपेण गृहीतस्तैरपण्डितैः॥
मनसश्चात्मनश्चैव संयोगश्च तथापरे।
उक्तानामधिका ह्येते केवलं योगवञ्चिताः॥
वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि।
एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते॥
कषायमोहविक्षेपलज्जाशङ्कादिचेतसः।
व्यापारास्तु समाख्यातास्तान् जित्वा वशमानयेत्॥
कुटुम्बैः पञ्चभिर्ग्राम्यैः षष्ठस्तत्र महत्तरः।

देवासुरमनुष्यैस्तु स जेतुं नैव शक्यते॥
बलेन परराष्ट्राणि गृह्णन् शूरस्तु नोच्यते।
जितो येनेन्द्रियग्रामः स शूरः कथ्यते बुधैः॥
बहिर्मुखानि सर्व्वाणि कृत्वा चाभिमुखानि वै।
सर्व्वञ्चैवेन्द्रियग्रामं मनश्चात्मनि योजयेत्॥
सर्व्वभावविनिर्मुक्तः क्षेत्रज्ञं ब्रह्मणि न्यसेत्।
एतद्ध्यानञ्च योगश्च शेषाः स्युर्ग्रन्थविस्तराः॥
त्यक्त्वा विषयभोगांश्च मनोनिश्चलतां गतम्।
आत्मशक्तिस्वरूपेण समाधिः परिकीर्त्तितः॥
चक्षुर्णां सन्निकर्षेण परं यत्तदशाश्वतम्।
द्वयोस्तु सन्निकर्षेण शाश्वतं ध्रुवमव्ययम्॥
यस्मास्ति सर्व्वलोकस्य तदस्तीति विबुध्यते।
कथ्यमानं तथान्यस्य हृदये नावतिष्ठते॥
स्वसंवेद्यं हि तद्ब्रह्म कुमारीमैथुनं यथा।
अयोगी नैव जानाति जातान्धो हि यथा घटम्॥
नित्याभ्यसनशीलस्य सुसंवेद्यं हि तद्भवेत्।
तत्सूक्ष्मत्वादनिर्देश्यं परं ब्रह्म सनातनम्॥
बुधस्त्वाभरणं भावं मनसालोचनं यथा।
मन्यते स्त्री च मत्वञ्च तदेव बहु मन्यते॥
सत्त्वोत्कटाः सुराश्चापि विषयेण वशीकृताः।
प्रमादिभिः क्षुद्रसत्त्वैर्मानुषैरत्र का कथा॥
तस्मात्त्यक्तकषायेण कर्त्तव्यं दण्डधारणम्।
इतरस्तु न शक्नोति विषयैरभिभूयते॥

न स्थिरं क्षणमप्येकमुदकं हि यथोर्म्मिभिः ।
वाताहतं तथा चित्तं तस्मात्तस्य न विश्वसेत् ॥
त्रिदण्डव्यपदेशेन जीवन्ति बहवो नराः ।
योहि ब्रह्म न जानाति न त्रिदण्डार्हएव सः ॥
ब्रह्मचर्य्यं सदा रक्षेदष्टधा मैथुनं पृथक् ।
स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम् ॥
सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च ।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥
न ध्यातव्यं न वक्तव्यं न कर्त्तव्यं कदाचन ।
एतैः सर्व्वैः सुसम्पन्नो यतिर्भवति नेतरः ॥
पारिव्रज्यं गृहीत्वा च योधर्मे नावतिष्ठते ।
श्वपदेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत् ॥
एकोभिक्षुर्यथोक्तस्तु द्वौ चैव मिथुनं स्मृतम् ।
त्रयो ग्रामस्तथा ख्यातऊर्द्ध्वन्तु नगरायते ॥
नगरं हि न कर्त्तव्यं ग्रामोवा मिथुनं तथः ।
एतत्त्रयं प्रकुर्व्वाणः स्वधर्माच्च्यवते यतिः ॥
राजवार्त्तादि तेषान्तु भिक्षावार्त्ता परस्परम् ।
स्नेहपैशून्यमात्सर्य्यं सन्निकर्षादसंशयम् ॥
लाभपूजानिमित्तं हि व्याख्यानं शिष्यसंग्रहः ।
एते चान्ये च बहवः प्रपञ्चाः कुतपस्विनाम् ॥
ध्यानं शौचं तथा भिक्षा नित्यमेकान्तशीलता ।
भिक्षोश्चत्वारि कर्माणि पञ्चमो नोपपद्यते ॥

तपोजपैः कृशीभूतो व्याधितोऽवसथावहः।
वृद्धो ग्रहस्थश्चैतत् यश्चान्यो विकलेन्द्रियः॥
नीरुजश्च युवा चैव भिक्षुर्नावसथावहः।
स दूषयति तत्स्थानं बुधान् पीडयतीति च॥
नीरुजश्च युवा चैव ब्रह्मचर्य्याद्विनश्यति।
ब्रह्मचर्य्याद्विनष्टश्च कुलञ्चैव तु नाशयेत्॥
वसन्नावसथे भिक्षुर्मैथुनं यदि सेवते।
तस्यावसथनाथस्य मूलान्यपि निकृन्तति॥
आश्रमे तु यतिर्यस्य मुहूर्त्तमपि विश्रमेत्।
किन्तस्यान्येन धर्मेण कृतकृत्योऽभिजायते॥
सञ्चितं यद्गृहस्थेन पापमामरणान्तिकम्।
स निर्दहति तत् सर्व्वमेकरात्रोषितो यतिः॥
योगाश्रमपरिश्रान्तं यस्तु भोजयते यतिम्।
निखिलं भोजितं तेन त्रैलोक्यं सचराचरम्॥
यस्मिन् देशे वसेद्योगी ध्यानयोगविचक्षणः।
सोऽपि देशो भवेत् पूतः किंपुनस्तस्य बान्धवाः॥
द्वैतञ्चैव तथाद्वैतं द्वैताद्वैतं तथैव च।
न द्वैतं नापि चाद्वैतमित्येतत् परमार्थिकम्॥
नाहं नैवान्यसम्बन्धो ब्रह्मभावेन भावितः।
ईदृश्यायामवस्थायामवाप्यं परमं पदम्॥
द्वैतपक्षाः समाख्याता येऽद्वैते तु व्यवस्थिताः।
अद्वैतिनां प्रवक्ष्यामि यथा धर्मः सुनिश्चितः॥

तत्राभ्यतिरेकेण द्वितीयं यदि पश्यति।
ततः शास्त्राण्यधीयन्ते श्रूयन्ते ग्रन्थसञ्चयाः॥
दक्षशास्त्रं यथा प्रोक्तमशेषाश्रमसुत्तमम्।
अधीयन्ते तु ये विप्रास्ते यान्त्यमरलोकताम्॥
इदन्तु यः पठेद्भक्त्या शृणुयादधमोऽपि वा।
स पुत्रपौत्रपशुमान् कीर्त्तिञ्च समवाप्नुयात्॥
श्रावयित्वा त्विदं शास्त्रं श्राद्धकालेऽपि वा द्विजः।
अक्षयं भवति श्राद्धं पितृभ्यश्चोपजायते॥

इति दाक्षे धर्मशास्त्रे सप्तमोऽध्यायः।
समाप्ता चेयं दक्षसंहिता।

# गौतमसंहितायाम्

## प्रथमोऽध्यायः।

वेदो धर्ममूलं तद्विदाञ्च स्मृतिशीले दृष्टो धर्मव्यतिक्रमः साहसञ्च महतां न तु दृष्टेऽर्थोऽवरदौर्बल्यात्तुल्यबलविरोधे वि-
कल्पः। उपनयनं ब्राह्मणस्याष्टमे नवमे पञ्चमे वा काम्यं गर्भादिः सङ्ख्यावर्षाणां तद्द्वितीयं जन्म। तद्यस्मात् स आ-
चार्य्यो वेदानुवचनाच्च। एकादशद्वादशयोः क्षत्रियवैश्ययोः। आषोड़शाद्ब्राह्मणस्यापतिता सावित्री द्वाविंशतेराजन्यस्य द्व्यधिकाया वैश्यस्य। मौञ्जीज्यामौर्व्वीसौत्र्यो मेखलाः क्रमेण कृष्णरुरुवस्ताजिनानि वासांसि शाणक्षौमचीरकुतपाः सर्वेषां कार्पासञ्चाविकृतम्। काषायमप्येके। वार्क्षं ब्राह्मणस्य माञ्जिष्ठहारिद्रे इतरयोः बैल्वपालाशौ ब्राह्मणस्य दण्डाव-
श्वत्थपैलवौ शेषे यज्ञियावा सर्वेषामपीडिता यूपवक्राः सवल्क-
ला मूर्द्धललाटनासाग्रप्रमाणाः। मुण्डजटिलशिखाजटाश्च। द्रव्यहस्त उच्छिष्टोऽनिधायाचामेद्द्रव्यशुद्धिः परिमार्जन प्रदाह-
तक्षणनिर्णेजनानि तैजसमार्त्तिकदारवतान्तवानां तैजसवदु-
पलमणिशङ्खशुक्तीनां दारुवदस्थिभूम्योरावपनञ्च भूमेश्चैल-
वद्रज्जुविदलचर्म्मणामुत्सर्गोवात्यन्तोपहतानाम्। प्राङ्मुख उ-
दङ्मुखो वा शौचमारभेत्। शुचौ देशआसीनो दक्षिणं बाहुं जान्वन्तरा कृत्वा यज्ञोपवीत्यामणिबन्धनात् पाणी प्रक्षाल्य

वाग्यतो हृदयस्पृशस्त्रिश्चतुर्वापश्चाचामेद्भिः प्रमृज्यात् पादौ चाभ्युक्षेत् खानि चोपस्पृशेच्छीर्षण्यानि मूर्द्धनि च दद्यात् । सुप्त्वा भुक्त्वा क्षुत्वा च पुनः । दन्तश्लिष्टेषु दन्तवदन्यत्र जिह्वाभिमर्षणात् । प्राक्च्युतेरित्येके । च्युतेरास्रावविद्यान्निगिरन्नेव तच्छुचिः । न मुख्याविप्रुष उच्छिष्टं कुर्वन्ति ताश्चेदङ्गे निपतन्ति । लेपगन्धापकर्षणे शौचममेध्यस्य । तदद्भिः पूर्वं मृदा च मूत्रपुरीषरेतोविस्रंसनाभ्यवहारसंयोगेषु च यत्र चाम्नायोविदध्यात् । पाणिना सव्यमुपसंगृह्याङ्गुष्ठमधीहि भोइत्यामन्त्रयेत गुरुः । तत्र चक्षुर्मनःप्राणोपस्पर्शनं दर्भैः प्राणायामास्त्रयः पञ्चदशमात्राः प्राक्कूलेष्वासनञ्च ॐपूर्व्वा व्याहृतयः पञ्चसप्तान्ताः । गुरोः पादोपसंग्रहणं प्रातर्ब्रह्मानुवचनेचाद्यन्तयोरनुज्ञातउपविशेत् । प्राङ्मुखोदक्षिणतः शिष्य उदङ्मुखोवा सावित्रीञ्चानुवचनमादितो ब्रह्मणआदाने ॐकारस्याऽन्यत्रापि । अन्तरागमने पुनरुपसदनं श्वनकुलसर्पमण्डूकमार्ज्जाराणां त्र्यहमुपवासोविप्रवासश्च प्राणायामा घृतप्राशनञ्चेतरेषाम् । श्मशानाध्ययने चैवम् ।

इति गौतमीये धर्मशास्त्रे प्रथमोऽध्यायः ।

---

## द्वितीयोऽध्यायः ।

प्रागुपनयनात् कामचारवादभक्षोऽहुतोऽब्रह्मचारी यथोपपादमूत्रपुरीषोभवति नास्याचमनकल्पो विद्यतेऽन्यत्रापमार्जनप्रधावनावोक्षणेभ्यो न तदुपस्पर्शनादशौचं नत्वेवैनमग्निहव-

नवश्चिहरणयोर्नियुञ्ज्यान्न ब्रह्माभिव्याहारयेदन्यत्र स्वधानि-
नयनात्। उपनयनादिर्नियमः। उक्तं ब्रह्मचर्य्यमग्नीन्धनभैक्ष-
चरणे सत्यवचनमपामुपस्पर्शनम्। एके गोदानादि। बहिः
सन्ध्यात्वञ्चातिष्ठेत् पूर्व्वामासीतोत्तरां सज्योतिष्या ज्योतिषोदर्श-
नाद्वाग्यतो नादित्यमीक्षेत। वर्जयेन्मधुमांसगन्धमाल्यदिवा-
स्वप्नाञ्जनाभ्यञ्जनयानोपानच्छत्रकामक्रोधलोभमोहवादवादन-
स्नानदन्तधावनहर्षनृत्यगीतपरिवादभयानि गुरुदर्शने कण्ठ-
प्रावृतावसक्थिकापाश्रयणपादप्रसारणानि निष्ठीवितहसित-
विजृम्भितास्फोटनानि स्त्रीप्रेक्षणालम्भने मैथुनशङ्कायां द्यूतं
हीनवर्णसेवामदत्तादानं हिंसां आचार्य्यतत्पुत्रस्त्रीदीक्षित-
नामानि शुक्तां वाचं मद्यं नित्यं ब्राह्मणः। अधः शय्याशायी
पूर्व्वोत्थायी जघन्यसंवेशी वाग्बाहूदरसंयतः। नामगोत्रे
गुरोः समानतोनिर्द्दिशेत्। अर्च्चिते श्रेयसि चैवम्। शय्या-
सनस्थानानि विहाय प्रतिश्रवणमभिक्रमणं वचनाद्दृष्टेनाधः-
स्थानासनस्तिर्य्यग्वा तत्सेवायाम्। गुरुदर्शने चोत्तिष्ठेत्
गच्छन्त मनुव्रजेत् कर्म्म विज्ञाप्याख्यायाहूताध्यायी युक्तः प्रिय-
हितयोस्तद्भार्य्यापुत्रेषु चैवम्। नोच्छिष्टाशनस्नापनप्रसाधन-
पादप्रक्षालनोन्मर्द्दनोपसंग्रहणानि। विप्रोष्योपसंग्रहणं गुरु-
भार्य्याणां तत्पुत्रस्य च। नैके युवतीनां। व्यवहारप्राप्तेन
सार्व्ववर्णिकं भैक्षचरणमभिशस्तपतितवर्ज्जं। आदिमध्यान्तेषु
भवच्छब्दः प्रयोज्यो वर्णानुपूर्व्वेण। आचार्य्यज्ञातिगुरुस्वेष्व-
लाभेऽन्यत्र। तेषां पूर्व्वं परिहरन्निवेद्य गुरवेऽनुज्ञातो भुञ्जीत।
असन्निधौ तद्भार्य्यापुत्रसब्रह्मचारिसद्भ्यः। वाग्यतस्तृप्यन्नलो-
लुप्यमानः सन्निधायोदकं स्पृशेत्। शिष्यशिष्टिरवधेनाशक्तौ-

रज्जुवेणुविदलाभ्यां तनुभ्यामन्येन घ्नन् राज्ञा शास्यः । द्वादशवर्षाण्येकवेदे ब्रह्मचर्य्यं चरेत् प्रतिद्वादशवर्षेषु ग्रहणान्तं वा । विद्यान्ते गुरुरर्थेन निमन्त्र्यः । ततः कृतानुज्ञातस्य स्नानम् । आचार्य्यः श्रेष्ठोगुरूणां मातेत्येके ।

इति गौतमीये धर्मशास्त्रे द्वितीयोऽध्यायः ।

---

## तृतीयोऽध्यायः ।

तस्याश्रमविकल्पमेके ब्रुवते ब्रह्मचारी गृहस्थोभिक्षुर्वैखानस इति तेषां गृहस्थो योनिरप्रजनत्वादितरेषाम् । तत्रोक्तं ब्रह्मचारिणआचार्य्याधीनत्वमान्तं गुरोः कर्मशेषेण जपेत् गुर्वभावे तदपत्यवृत्तिस्तदभावे वृद्धे सब्रह्मचारिण्यग्नौ वा । एवं वृत्तोब्रह्मलोकमवाप्नोति जितेन्द्रियः । उत्तरेषाञ्चैतदविरोधी अनिचयो भिक्षुरूर्द्ध्वरेता ध्रुवशीलो वर्षासु भिक्षार्थी ग्राममियात् । जघन्यमनिवृत्तञ्चरेत् । निवृत्ताशीर्वाक्चक्षुः कर्मसंयतः । कौपीनाच्छादनार्थं वासोविभृयात् । प्रहीणमेके निर्णिज्याविप्रयुक्तं । ओषधिवनस्पतीनामङ्गमुपाददीत । न द्वितीयामपर्त्तुं रात्रिं ग्रामे वसेत् । मुण्डः शिखी वा वर्ज्जयेज्जीववधम् । समोभूतेषु हिंसानुग्रहयोरनारम्भी । वैखानसो वने मूलफलाशी तपःशीलः श्रावणकेनाग्निमाधायाग्राम्यभोजी देवपितृमनुष्यभूतर्षिपूजकः सर्व्वातिथिः प्रतिषिद्धवर्ज्जं भैक्षमप्युपयुञ्जीत न फालकृष्टमधितिष्ठेत् ग्रामञ्च न प्रविशेज्जटिलश्चीराजिनवासा नातिसाम्वत्सरं भुञ्जीत । एकाश्रम्यं त्वाचार्य्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्य ।

इति गौतमीये धर्मशास्त्रे तृतीयोऽध्यायः ।

# चतुर्थोऽध्यायः ।

गृहस्थः सदृशीं भार्य्यां विन्देतानन्यपूर्व्वां यवीयसीम् । असमानप्रवरैर्व्विवाहऊर्द्ध्वं सप्तमात् पितृबन्धुभ्यो वीजिनश्च मातृबन्धुभ्यः पञ्चमात् । ब्राह्मो विद्याचारित्रबन्धुशीलसम्पन्नाय दद्यादाच्छाद्यालङ्कृतां संयोगमन्त्रः प्राजापत्ये सहधर्म्मञ्चरतामिति आर्षे गोमिथुनं कन्यावते दद्यादन्तर्व्वेद्यृत्विजे दानं दैवोऽलङ्कृत्येच्छन्त्या स्वयं संयोगो गान्धर्व्वो वित्तेनानतिस्त्रीमतामासुरः प्रसह्यादानाद्राक्षसोऽसंविज्ञातोपसङ्गमनात् पैशाचः । चत्वारो धर्म्म्याः प्रथमाः षडित्येके । अनुलोमानन्तरैकान्तरद्व्यन्तरासु जाताः सवर्णाम्बष्ठोग्रनिषाददौष्मन्तपारशवाः । प्रतिलोमास्तु सूतमागधायोगवक्षत्तृवैदेहकचाण्डालाः । ब्राह्मण्यजीजनत् पुत्रान् वर्णेभ्य आनुपूर्व्व्यात् ब्राह्मणसूतमागधचाण्डालान् तेभ्य एव क्षत्त्रिया मूर्द्धावषिक्तक्षत्त्रियधीवरपुल्कशान् तेभ्य एव वैश्या भृज्जकण्ठमाहिष्यवैश्यवैदेहान् तेभ्य एव पारशवयवनकरणशूद्रान् शूद्रेत्येके । वर्णान्तरगमनमुत्कर्षापकर्षाभ्यां सप्तमेन पञ्चमेन चाचार्य्याः । सृष्ट्यन्तरजातानाञ्च प्रतिलोमास्तु धर्म्महीनाः शूद्रायाञ्च असमानायाञ्च शूद्रात् पतितवृत्तिरन्त्यः पापिष्ठः । पुनन्ति साधवः पुत्रास्त्रिपौरुषानार्षाद्दश दैवाद्दशैव प्राजापत्याद्दशपूर्व्वान् दशावरानात्मानञ्च ब्राह्मीपुत्राः ।

इति गौतमीये धर्म्मशास्त्रे चतुर्थोऽध्यायः ।

## पञ्चमोऽध्यायः।

ऋतावुपेयात् सर्वत्र वा प्रतिषिद्धवर्जम्। देवपितृमनुष्यभूतर्षिपूजको नित्यस्वाध्यायः। पितृभ्यश्चोदकदानं यथोत्साहमन्यद्भार्यादिरग्निर्दायादिर्वा। तस्मिन् गृह्याणि देवपितृमनुष्ययज्ञाः स्वाध्यायश्च। बलिकर्माग्नावग्निर्धन्वन्तरिर्विश्वे देवाः प्रजापतिः स्विष्टकृदिति होमः। दिग्देवताभ्यश्च यथा स्वद्वारेषु मरुद्भ्यो गृहदेवताभ्यः प्रविश्य ब्रह्मणे मध्ये अद्भ्य उदकुम्भे आकाशायेत्यन्तरीक्षे नक्तञ्चरेभ्यश्च सायम्। स्वस्तिवाच्य-भिक्षादानमप्पूर्वन्तु ददातिषु चैवंधर्मेषु। समद्विगुणसाहस्रानन्त्यानि फलान्यब्राह्मणब्राह्मणश्रोत्रियवेदपारगेभ्यः। गुर्वर्थनिवेशौषधार्थं वृत्तिक्षीणयक्ष्यमाणाध्ययनाध्वसंयोगवैश्वजितेषु द्रव्यसंविभागोबहिर्वेदि भिक्षमाणेषु कृतान्नमितरेषु। प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात्। क्रुद्धहृष्टभीतार्त्तलुब्धबालस्थविरमूढमत्तोन्मत्तवाक्यान्यनृतान्यपातकानि। भोजयेत् पूर्वमतिथिकुमारव्याधितगर्भिणीसुवासिनीस्थविरान् जघन्यांश्च। आचार्यपितृसखीनान्तु निवेद्य वचनक्रियाऋत्विगाचार्यश्वशुरपितृव्यमातुलानामुपस्थाने मधुपर्कः सम्वत्सरे पुनः पूजितायज्ञविवाहयोरर्वाक् राज्ञश्च श्रोत्रियस्य। अश्रोत्रियस्यासनोदके श्रोत्रियस्य तु पाद्यमर्घ्यमन्नविशेषांश्च प्रकारयेन्नित्यं वा संस्कारविशिष्टं मध्यतोऽन्नदान मवैद्य साधुवृत्ते विपरीते तु तृणोदकभूमिः स्वागतमन्ततः पूज्यानत्याशश्च शय्यासनावसथानुव्रज्योपासनानि सदृक्श्रेयसोः समानान्यल्पशोऽपि हीनेअसमानग्रामोऽतिथिरैकरात्रिको ऽधिवृक्षसूर्योप-

स्थायी कुशलानामयारोग्याणामनुप्रश्नोऽत्यं शूद्रस्याब्राह्मणस्यानतिथिरब्राह्मणोयज्ञे संवृतश्चेत् भोजनन्तु क्षत्रियस्योर्द्धं ब्राह्मणेभ्योऽन्यान् भृत्यैः सहानृशंसार्थमानृशंसार्थं ॥

इतिगौतमीये धर्मशास्त्रे पञ्चमोऽध्यायः ॥

---

## षष्ठोऽध्यायः।

पादोपसंग्रहणं गुरुसमवायेऽन्वहम्। अभिगम्य तु विप्रोष्य मातृपितृतद्बन्धूनां पूर्वजानां विद्यागुरूणां तत्तद्गुरूणाञ्च सन्निपाते परस्य। नाम प्रोच्याहमयमित्यभिवादोऽज्ञसमवाये स्त्रीपुंयोगेऽभिवादतोऽनियममेके नाविप्रोष्य स्त्रीणाममातृपितृव्यभार्य्याभगिनीनां नोपसंग्रहणं भ्रातृभार्य्याणां स्वश्रूाश्च। ऋत्विक्श्वशुरपितृव्यमातुलानान्तु यवीयसां प्रत्युत्थानमनभिवाद्यास्तथान्यः पूर्वः पौरोऽशीतिकावरः शूद्रोऽप्यपत्यसमेनावरोऽप्यार्य्यः शूद्रेण नाम चास्य वर्जयेद्राज्ञश्चाजपः प्रेष्यो भो भवन्निति वयस्यः समानेऽहनि जातो दशवर्षवृद्धः पौरः पञ्चभिः कलाभरः श्रोत्रियश्चारणस्त्रिभिः राजन्यो वैश्यकर्म विद्याहीनोदीक्षितस्य प्राक्क्रयात्। वित्तबन्धुकर्मजातिविद्यावयांसि मान्यानि परबलीयांसि श्रुतन्तु सर्वेभ्योगरीयस्तन्मूलत्वाद्धर्मस्य श्रुतेश्च। चक्रिदशमीस्थाणुग्राह्यवधूस्नातकराजभ्यः पथोदानं राज्ञा तु श्रोत्रियाय श्रोत्रियाय ॥

इतिगौतमीये धर्मशास्त्रे षष्ठोऽध्यायः ॥

---

## सप्तमोऽध्यायः।

आपत्कल्पो ब्राह्मणस्याब्राह्मणाद्विद्योपयोगोऽनुगमनं शुश्रूषा समाप्तेर्ब्राह्मणो गुरुर्याजनाध्यापनप्रतिग्रहाः सर्वेषां पूर्वः पूर्वो गुरुस्तदलाभे क्षत्रवृत्तिस्तदलाभे वैश्यवृत्तिः। तस्यापण्यं गन्धरसकृतान्नतिलशाणक्षौमाजिनानि रक्तनिर्णिक्ते वाससी क्षीरञ्च सविकारं मूलफलपुष्पौषधमधुमांसतृणोदकापथ्यानि पशवश्च हिंसासंयोगे पुरुषवशाकुमारीहेतवश्च नित्यं भूमिव्रीहियवाजाव्यश्व ऋषभधेन्वनडुहश्चैके। विनिमयस्तु रसानां रसैः पशूनाञ्च न लवणाकृतान्नयोस्तिलानाञ्च समेनामेन तु पक्वस्य संप्रत्यर्थे सर्वधातुवृत्तिरशक्तावशूद्रेण तदप्येके प्राणसंशये तद्वर्णसङ्करोऽभक्ष्यनियमस्तु प्राणसंशये ब्राह्मणोऽपि शस्त्रमाददीत राजन्योवैश्यकर्म वैश्यकर्म॥

इतिगौतमीये धर्मशास्त्रे सप्तमोऽध्यायः॥

---

## अष्टमोऽध्यायः।

द्वौ लोके धृतव्रतौ राजा ब्राह्मणश्च बहुश्रुतस्तयोश्चतुर्विधस्य मनुष्यजातस्यान्तः संज्ञानाश्चलनपतनसर्पणानामायत्तं जीवनं प्रसूतिरक्षणमसङ्करोधर्मः। सएष बहुश्रुतो भवति लोकवेदवेदाङ्गविद्वाकोवाक्येतिहासपुराणकुशलस्तदपेक्षस्तद्वृत्तिश्चत्वारिंशता संस्कारैः संस्कृतस्त्रिषु कर्मस्वभिरतः षट्सु वासामयचारिकेष्वभिविनीतः षड्भिः परिहार्य्यो राज्ञा बध्यश्चाबध्यश्चादण्ड्यश्चावहिष्कार्य्यश्चापरिवाद्यश्चापरिहार्य्यश्चेति। गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौड़ोपनयनं चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः

पञ्चानां यज्ञानामनुष्ठानं देवपितृमनुष्यभूतब्रह्मणामेतेषाञ्चा-ष्टकापार्वणश्राद्धश्रावण्याग्रहायणीचैत्राश्वयुजीति सप्त पाक-यज्ञसंस्था अग्न्याधेयमग्निहोत्रं दर्शपौर्णमासावाग्रयणं चातुर्मास्य निरूढपशुबन्धसौत्रामणीति सप्त हविर्यज्ञसंस्था अग्निष्टोमोऽ-त्यग्निष्टोम उक्थ्यः षोड़शि वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्था इत्येते चत्वारिंशत् संस्काराः। अथाष्टावात्मगुणा-दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्य मस्पृहेति यस्यैते न चत्वारिंशत् संस्कारा नवाष्टावात्मगुणा न स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति। यस्य तु खलु संस्का-राणामेकदेशोऽप्यष्टावात्मगुणा अथ स ब्रह्मणः सायुज्यं सालो-क्यञ्च गच्छति गच्छति॥

इतिगौतमीये धर्मशास्त्रेऽष्टमोऽध्यायः॥

---

## नवमोऽध्यायः।

स विधिपूर्वं स्नात्वा भार्य्यामभिगम्य यथोक्तान् गृहस्थ-धर्मान् प्रयुञ्जान इमानि व्रतान्यनुकर्षेत् स्नातकोनित्यं शुचिः सुगन्धः स्नानशीलः सति विभवे न जीर्णमलवद्वासाः स्यान्न रक्तमलवदन्यधृतं वा वासोबिभृयान्न स्रगुपानहौ निर्णिक्त-मशक्तौ न रूढश्मश्रुरकस्मान्नाग्निमपश्च युगपद्धारयेन्नाञ्ज-लिना पिबेन्न तिष्ठन्नुद्धृतोदकेनाचामेन्न शूद्राशुच्येकपाण्या-वर्जितेन न वाय्वग्निविप्रादित्यापोदेवतागाश्च प्रतिपश्यन् वा मूत्रपुरीषामेध्यान्युदस्येन्नैव देवताः प्रति पादौ प्रसारयेन्न

पर्णलोष्टाश्मभिर्मूत्रपुरीषापकर्षणं कुर्य्यान्न भस्मकेशतुषकपालान्यधितिष्ठेन्न म्लेच्छाशुच्यधार्म्मिकैः सह सम्भाषेत सम्भाष्य पुण्यकृतोमनसा ध्यायेद्ब्राह्मणेन वा सह सम्भाषेत। अधेनुं धेनुभव्येति ब्रूयादभद्रं भद्रमिति कपालं भगालमिति मणिधनुरितीन्द्रधनुः। गां धयन्तीं परस्मै नाचक्षीत नचैनां वारयेन्न मिथुनीभूत्वा शौचं प्रति विलम्बेत नच तस्मिन् शयने स्वाध्यायमधीयीत नचापररात्रमधीत्य पुनः प्रतिसंविशेन्नाकल्यां नारीमभिरमयेन्न रजस्वलां नचैनां श्लिष्येन्न कन्यामग्निमुखोपधमनविगृह्यवादबहिर्गन्धमाल्यधारणपापीयसावलेखनभार्य्यासहभोजनाञ्जन्त्यवेक्षणकुद्वारप्रवेशनपादधावनासन्दिग्धभोजननदीबाहुतरणवृक्षविषमारोहणावरोहणप्राणव्यवस्थानानि च वर्ज्जयेन्न सन्दिग्धां नावमधिरोहेत् सर्व्वतएवात्मानं गोपायेन्न प्रावृत्य शिरोऽहनि पर्य्यटेत् प्रावृत्य तु रात्रौ मूत्रोच्चारे च न भूमावनन्तर्धाय नाराच्चावसथान्न भस्मकरीषकृष्टच्छायापथिकाम्येषु उभे मूत्रपुरीषे दिवा कुर्य्यादुदङ्मुखः सन्ध्ययोश्च रात्रौ तु दक्षिणामुखः पालाशमासनं पादुके दन्तधावनमिति वर्ज्जयेत्। सोपानत्कस्याशनासनशयनाभिवादननमस्कारान् वर्ज्जयेत्। न पूर्व्वाह्णमध्यन्दिनापराह्णानफलान् कुर्य्याद्यथाशक्ति धर्म्मार्थकामेभ्यस्तेषु च धर्म्मोत्तरः स्यान्न नग्नां परयोषितमीक्षेत न पदासनमाकर्षेन्न शिश्नोदरपाणिपादवाक्चक्षुश्चापलानि कुर्य्याच्छेदनभेदनविलिखनविमर्दनावस्फोटनानि नाकस्मात् कुर्य्यान्नोपरिवत्सतन्त्रीं गच्छेन्न कुलङ्कुलः स्यान्न यज्ञमवृतोगच्छेद्दर्शनाय तु कामं न भक्ष्यानुत्सङ्गे भक्षयेन्न रात्रौ प्रेष्या-

हृतमुद्धृतस्नेहविलपनपिण्याकमथितप्रभृतीनि चात्तवीर्य्याणि नाश्नीयात् सायं प्रातस्त्वन्नमभिपूजितमनिन्दन् भुञ्जीत न कदाचिद्रात्रौ नग्नः स्वपेत् स्नायाद्वा यच्चात्मवन्तो वृद्धाः सम्यग्विनीता दम्भलोभमोहवियुक्ता वेदविद आचक्षते तत् समाचरेत् योगक्षेमार्थमीश्वरमधिगच्छेन्नान्यमन्यत्र देवगुरुधार्मिकेभ्यः प्रभूतैधोदकयवसकुशमाल्योपनिष्क्रमणमार्य्यजनभूयिष्ठमनलसस्मृद्धं धार्मिकाधिष्ठितं निकेतनमावसितुं यतेत प्रशस्तमङ्गल्यदेवतायतनचतुष्पथादीन् प्रदक्षिणमावर्त्तेत। मनसा वा तत्समग्रमाचारमनुपालयेदापत्कल्पः। सत्यधर्मा आर्य्यवृत्तः शिष्टाध्यापकशौचशिष्टः श्रुतिनिरतः स्यान्नित्यमहिंस्रो मृदु दृढकारी दमदानशीलएवमाचारो मातापितरौ पूर्वापरान् सम्बन्धान् दुरितेभ्यो मोक्षयिष्यन् स्नातकः शश्वद्ब्रह्मलोकान्न च्यवते न च्यवते॥

इति गौतमीये धर्मशास्त्रे नवमोऽध्यायः।

---

## दशमोऽध्यायः।

द्विजातीनामध्ययनमिज्या दानं ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः पूर्वेषु नियमस्त्वाचार्य्यज्ञातिप्रियगुरुधनविद्याविनिमयेषु ब्राह्मणः सम्प्रदानमन्यत्र यथोक्तात् कृषिवाणिज्ये चास्वयं कृते कुसीदञ्च। राज्ञोऽधिकं रक्षणं सर्वभूतानां न्याय्यदण्डत्वं बिभृयात् ब्राह्मणान् श्रोत्रियान् निरुत्साहांश्चाब्राह्मणानकरांश्चोपकुर्वाणांश्च योगश्च विजये भये विशेषेण चर्य्या च रथधनुर्भ्यां संग्रामे संस्थानमनिवृत्तिश्च न

दोषो हिंसायामाहवेऽन्यत्र व्यश्वसारथ्यायुधकृताञ्जलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थलवृक्षारूढदूतगोब्राह्मणवादिभ्यः क्षत्रियश्चेदन्यस्तमुपजीवेत्तद्वृत्तिः स्यात् जेता लभेत सांग्रामिकं वित्तं वाहनन्तु राज्ञउद्धारश्चापृथग्जयेऽन्यत्तु यथार्हं भाजयेद्राजा राज्ञे बलिदानं कर्षकैर्दशममष्टमं षष्ठं वा पशुहिरण्ययोरप्येके पञ्चाशद्भागं विंशतिभागः शुल्कः पण्ये मूलफलपुष्पौषधमधुमांसतृणेन्धनानां षष्ठं तद्रक्षणधर्मित्वात्तेषु तु नित्ययुक्तः स्यादधिकेन वृत्तिः शिल्पिनोमासि मास्येकैकं कर्म कुर्य्युरेतेनात्मोपजीविनो व्याख्याता नौचक्रीवन्तश्च भक्तं तेभ्यो दद्यात् पण्यं वणिग्भिरर्घापचये न देयं प्रणष्टस्वामिकमधिगम्य राज्ञे प्रब्रूयुर्विख्याप्य सम्वत्सरं राज्ञा रक्ष्यमूर्द्ध्वमधिगन्तुश्चतुर्थं राज्ञः शेषः स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोर्निध्यधिगमो राजधनं न ब्राह्मणस्याभिरूपस्याब्राह्मणो व्याख्यातः षष्ठं लभेतेत्येके चौरहृतमुपजित्य यथास्थानं गमयेत् कोशाद्वा दद्याद्रक्ष्यं बालधनमाव्यवहारप्रापणात् समावृत्तेर्वा। वैश्यस्याधिकं कृषिवणिक्पाशुपाल्यकुसीदम्। शूद्रश्चतुर्थो वर्ण एकजातिस्तस्यापि सत्यमक्रोधः शौचमाचमनार्थे पाणिपादप्रक्षालनमेवैके श्राद्धकर्म भृत्यभरणं स्वदारवृत्तिः परिचर्य्या चोत्तरेषां तेभ्योवृत्तिं लिप्सेत जीर्णान्युपानच्छत्रवासःकूर्च्चान्युच्छिष्टाशनं शिल्पवृत्तिश्च यञ्चार्यमाश्रितोभर्त्तव्यस्तेन क्षीणोऽपि तेन चोत्तरस्तदर्थोऽस्य निचयः स्यादनुज्ञातोऽस्य नमस्कारो मन्त्रः पाकयज्ञैः स्वयं यजेतेत्येके।

सर्वे चोत्तरोत्तरं परिचरेयुरार्य्यानार्य्ययोर्व्यतिक्षेपे कर्मणः साम्यं साम्यम् ॥

इति गौतमीये धर्मशास्त्रे दशमोऽध्यायः।

---

## एकादशोऽध्यायः।

राजा सर्वस्येष्टे ब्राह्मणवर्जं साधुकारी स्यात् साधुवादी त्रय्यामान्वीक्षिक्याञ्चाभिविनीतः शुचिर्जितेन्द्रियो गुणवत्सहायोऽपायसम्पन्नः समः प्रजासु स्याद्धितञ्चासां कुर्वीत तमुपर्य्यासीनमधस्था उपासीरन्नन्ये ब्राह्मणेभ्यस्तेऽप्येनं मन्येरन् वर्णानाश्रमांश्च न्यायतोऽभिरक्षेच्चलतश्चैनान् स्वधर्मे स्थापयेद्धर्मस्योह्यंशभाग्भवतीति विज्ञायते ब्राह्मणञ्च पुरोदधीत विद्याभिजनवाग्रूपवयःशीलसम्पन्नं न्यायवृत्तं तपस्विनं तत्प्रसूतः कर्माणि कुर्वीत ब्रह्मप्रसूतं हि क्षत्रमृध्यते न व्यथत इति च विज्ञायते यानि च दैवोत्पातचिन्तकाः प्रब्रूयुस्तान्याद्रियेत तदधीनमपि ह्येके योगक्षेमं प्रतिजानते शान्तिपुण्याहस्वस्त्ययनायुष्यमङ्गलसंयुक्तान्याभ्युदयिकानि विद्वेषिणां सम्वननमभिचारद्विषद्व्याधिसंयुक्तानि च शालाग्नौ कुर्य्याद्यथोक्तमृत्विजोऽन्यानि तस्य व्यवहारो वेदोधर्मशास्त्राण्यङ्गान्युपवेदाः पुराणं देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणं कृषिवणिक्पाशुपाल्यकुसीदकारवः स्वे स्वे वर्गे तेभ्योयथाधिकारमर्थान् प्रत्यवहृत्य धर्मव्यवस्था न्यायाधिगमे तर्कोऽभ्युपायस्तेनाभ्यूह्य यथास्थानं गमयेद्विप्रतिपत्तौ त्रयीविद्यावृद्धेभ्यः प्रत्यवहृत्य निष्ठां गमयेत्तथाह्यस्य निःश्रेयसं भवति ब्रह्मक्षत्रेण

सम्यग्वृत्तं देवपितृमनुष्यान् धारयतीति विज्ञायते दण्डोद्-मनादित्याहुस्तेनादान्तान् दमयेद्वर्णाश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते विष्वञ्चो विपरीता नश्यन्ति तानाचार्य्योपदेशोदण्डश्च पालयते तस्माद्राजाचार्य्यावनिन्द्यावनिन्द्यौ॥

इति गौतमीये धर्मशास्त्रे एकादशोऽध्यायः।

---

## द्वादशोऽध्यायः।

शूद्रोद्विजातीनभिसन्धायाभिहत्य च वाग्दण्डपारुष्याभ्यामङ्गं मोच्यो येनोपहन्यादार्य्यस्त्र्यभिगमने लिङ्गोद्धारः स्वहरणञ्च गोप्ता चेद्वधोऽधिकोऽथाहास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेद आसनशयनवाक्पथिषु समप्रेप्सुर्दण्ड्यः शतम्। क्षत्रियो-ब्राह्मणाक्रोशे दण्डपारुष्ये द्विगुणमध्यर्द्धं वैश्योब्राह्मणात्तु क्षत्रिये पञ्चाशत्तदर्द्धं वैश्ये न शूद्रे किञ्चित् ब्राह्मणराजन्यवत् क्षत्रियवैश्यावष्टापाद्यं स्तेयकिल्बिषं शूद्रस्य द्विगुणोत्तराणीतरेषां प्रतिवर्णं विदुषोऽतिक्रमे दण्डभूयस्त्वं फलहरितधान्यशाकादाने पञ्चकृष्णलमल्पे पशुपीडिते स्वामिदोषः पालसंयुक्ते तु तस्मिन् पथि क्षेत्रेऽनावृते पालक्षेत्रिकयोः पञ्च माषा गवि षडुष्ट्रे खरेऽश्वमहिष्योर्दशाजाविषु द्वौ द्वौ सर्व्वविनाशे शतं शिष्टाकरणे प्रतिषिद्धसेवायाञ्च नित्यं चेलपिण्डादूर्द्ध्वं स्वहरणञ्च गोऽग्न्यर्थे तृणमेधान् वीरुद्वनस्पतीनाञ्च पुष्पाणि स्ववदाददीत

फलानि चापरिहृतानाम् कुसीदवृद्धिर्धर्म्या विंशतिः पञ्च-माषकी मासं नातिसांवत्सरीमेके चिरस्थाने द्वैगुण्यं प्रयोगस्य भुक्ताधिर्न वर्द्धते दित्सतोऽवरुद्धस्य च चक्रकालवृद्धिः कारिता-कायिकाशिखाधिभोगाश्च कुसीदं पशूपजलोमक्षेत्रशतवाह्येषु नातिपञ्चगुणमजड़ापोगण्डधनं दशवर्षभुक्तं परैः सन्निधौ भोक्तुःश्रोत्रियप्रव्रजितराजन्यधर्मपुरुषैः पशुभूमिस्त्रीणामन-तिभोगऋक्थभाजि ऋणं प्रतिकुर्य्युः प्रातिभाव्यवणिक्शुल्क मद्य द्यूतदण्डान् पुत्रानध्याभवेयुर्निध्यं वाधियाचितावक्रीताध-योनष्टाः सर्व्वा न निन्दिता न पुरुषापराधेन स्तेनः प्रकीर्ण-केशो मुषली राजानमियात् कर्माचक्षाणः पूतोवधमोक्षाभ्या-मघ्नन्नेनस्वी राजा न शारीरो ब्राह्मणदण्डः कर्मवियोगविख्या-पनविवासनाङ्ककरणान्यप्रवृत्तौ प्रायश्चित्ती स चौरसमः स च-वोमतिपूर्वं प्रतिगृहीताप्यधर्मसंयुक्ते पुरुषशक्त्यपराधानुबन्ध-विज्ञानाद्दण्डनियोगोऽनुज्ञानं वा वेदवित्समवायवचनात् वेदवित्समवायवचनात्।

इति गौतमीये धर्मशास्त्रे द्वादशोऽध्यायः।

---

## त्रयोदशोऽध्यायः।

विप्रतिपत्तौ साक्षिनि मिथ्यासत्यव्यवस्था बहवः स्युरनि-न्दिताः स्वकर्मसु प्रात्ययिका राज्ञाञ्च निष्प्रीत्यनभितापाश्चान्य-तरस्मिन्नपि शूद्राब्राह्मणवचनादनुरोध्योऽनिबन्धश्चेन्नासमवेता पृष्टाः प्रब्रूयुरवचने च दोषिणः स्युः स्वर्गः सत्यवचने विपर्य्यये नरकः। अनिबन्धैरपि वक्तव्यं पीड़ाकृते निबन्धः प्रमत्तोक्ते

च साक्षिसभ्यराजकर्तृषु दोषोधर्मतन्त्रपीड़ायां शपथैनैके सत्यकर्मणा तेद्दवराजब्राह्मणसंसदि स्यादब्राह्मणानां क्षुद्रपश्व-नृते साक्षी दश हन्ति गोऽश्वपुरुषभूमिषु दशगुणोत्तरान् सर्वं वा भूमौ हरणे नरकोभूमिवदप्सु मैथुनसंयोगे च पशुवन्मधुसर्पिषोर्गोवद्वस्त्रहिरण्यधान्यब्रह्मसु यानेष्वश्ववन्मि-थ्यावचने याप्यो दण्ड्यश्च साक्षी नानृतवचने दोषोजीवनञ्चेत्त-दधीनं नतु पापीयसोजीवनं राजा प्राड्विवाकोब्राह्मणोवा शास्त्रवित् प्राड्विवाको मध्योभवेत् संवत्सरं प्रतीक्षेत प्रतिभायां धेन्वनडुहस्त्रीप्रजननसंयुक्तेषु शीघ्रमात्ययिके च सर्वधर्मेभ्योगरीयः प्राड्विवाके सत्यवचनं सत्यवचनम् ।

इति गौतमीये धर्मशास्त्रे त्रयोदशोऽध्यायः ।

---

## चतुर्द्दशोऽध्यायः ।

शावमाशौचं दशरात्रमनृत्विग्दीक्षितब्रह्मचारिणां सपि-ण्डानामेकादशरात्रं क्षत्रियस्य द्वादशरात्रं वैश्यस्यार्द्धमास-मेकं मासं शूद्रस्य तच्चेदन्तःपुनरापतेत्तच्छेषेण शुद्धेरन् रात्रिशेषे द्वाभ्यां प्रभाते तिसृभिर्गोब्राह्मणहतानामन्वक्षं राजक्रोधाच्च युद्धे प्रायोनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनै-श्चेच्छतां पिण्डनिवृत्तिः सप्तमे पञ्चमे वा जननेऽप्येवं मातापि-त्रोस्तन्मातुर्वा गर्भमाससमा रात्रिः स्रंसने गर्भस्य त्र्यहं वा श्रुत्वा चोर्द्धं दशम्याः पक्षिण्यसपिण्डयोनिसम्बन्धे सहाध्या-यिनि च सब्रह्मचारिण्येकाहं श्रोत्रिये चोपसम्पन्ने प्रेतोपस्पर्शने दशरात्रमाशौचमभिमन्धाय चेदुक्तं वैश्यशूद्रयोरार्त्तवीर्व्वा

पूर्वयोश्च त्र्यहं वाचार्य्यतत्पुत्त्रस्त्रीयाज्यशिष्येषु चैवमवरश्चेद्वर्णः पूर्वं वर्णमुपस्पृशेत् पूर्व्वोवावरं तत्र शावोक्तमाशौचं पतित चण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्ट्युपस्पर्शने सचेलोदकोपस्पर्शनाच्छुद्ध्येच्छवानुगमे च शुनश्च यदुपहन्यादित्येके उदकदानं सपिण्डैः कृतचूड़स्य तत्स्त्रीणाञ्चानतिभोगएकेऽप्रदत्तानामधः शय्यासनिनो ब्रह्मचारिणः सर्वे न मार्जयेरन्न मांसं भक्षयेयुराप्रदानात् प्रथमतृतीयपञ्चमसप्तमनवमेषूदकक्रिया वाससाञ्च त्यागः अन्त्ये त्वन्त्यानां दन्तजन्मादि मातापितृभ्यां तूष्णीं माता बालदेशान्तरितप्रव्रजितासपिण्डानां सद्यःशौचं राज्ञाञ्च कार्य्यविरोधाद्ब्राह्मणस्य च स्वाध्यायानिवृत्त्यर्थं स्वाध्यायानिवृत्त्यर्थम् ।

इति गौतमीये धर्म्मशास्त्रे चतुर्द्दशोऽध्यायः ।

---

## पञ्चदशोऽध्यायः ।

अथ श्राद्धममावस्यायां पितृभ्योदद्यात् पञ्चमीप्रभृति वापरपक्षस्य यथाश्राद्धं सर्वस्मिन् वा द्रव्यदेशब्राह्मणसन्निधाने वा कालनियमः शक्तितः प्रकर्षे गुणसंस्कारविधिरन्नस्य नवावरान् भोजयेदयुजो यथोत्साहं वा ब्राह्मणान् श्रोत्रियान् वाग्रूपवयःशीलसम्पन्नान् युवभ्योदानं प्रथममेके पितृवच्च तेन मित्रकर्म कुर्य्यात् पुत्त्राभावे सपिण्डा मातृसपिण्डाः शिष्याश्च दद्युस्तदभावे ऋत्विगाचार्य्यौ तिलमाषव्रीहियवोदकदानैर्मासं पितरः प्रीणन्ति मत्स्यहरिणरुरुशशकूर्मवराहमेषमांसैः संवत्सराणि गव्यपयःपायसैर्द्वादश वर्षाणि वार्ध्रीणसेन मांसेन

कालशाकच्छागलोहखड्गमांसैर्मधुमिश्रैश्चानन्त्यम्। न भोजयेत्
स्तेनक्लीवपतितनास्तिकतद्वृत्तिवीरहाग्रेदिधिषुदिधिषुपतिस्त्री-
ग्रामयाजकाजपालोत्सृष्टाग्निमद्यपकुचरकूटसाक्षिप्रातिहारि
कानुपपत्तिर्यस्य च कुण्डाशी सोमविक्रय्यगारदाही गरदाव-
कीर्णिगणप्रेष्यागम्यागामिहिंस परिवित्तपरिवेत्तृपर्य्याहितपर्य्या
धातृत्यक्तात्मदुर्बलाः कुनखिश्यावदन्तः श्वित्रिपौनर्भवकितवाज
प्रेष्य प्रातिरूपकशूद्रापतिनिराकृतिकिलासी कुसीदी वणिक्-
शिल्पोपजीविज्यावादित्रतालनृत्यगीतशीलान् पित्रा चाकामेन
विभक्तान् शिष्यांश्चैके सगोत्रांश्च। भोजयेदूर्द्ध्वं त्रिभ्योगुणव-
न्तम्। सद्यश्श्राद्धी शूद्रातल्पगस्तत्पुरीषे मासं नयति पितॄं-
स्तस्मात्तदहर्ब्रह्मचारी स्यात् श्वचण्डालपतितावेक्षणे दुष्टं
तस्मात् परिस्रुते दद्यात्तिलैर्व्वा किरेत् पङ्क्तिपावनोवा शमयेत्
पङ्क्तिपावनाः षड़ङ्गविज्ज्येष्ठसामिकस्त्रृणाचिकेतस्त्रिमधुस्त्रि-
सुपर्णः पञ्चाग्निः स्नातकोमन्त्रब्राह्मणविद्धर्मज्ञोब्रह्मदेयानुसं-
तानइति हविःषु चैवं दुर्बलादीन् श्राद्धएवैके श्राद्धएवैके।

इति गौतमीये धर्म्मशास्त्रे पञ्चदशोऽध्यायः।

---

## षोडशोऽध्यायः।

श्रवणादि वार्षिकं प्रोष्ठपदीं वोपाकृत्याधीयीत छन्दां-
स्यर्द्धपञ्चममासान् पञ्चदक्षिणायनं वा ब्रह्मचार्य्युत्सृष्टलोमा
न मांसं भुञ्जीत द्वैमास्योवा नियमो नाधीयीत वायौ दिवा
पांशुहरे कर्णश्राविणि नक्तं वाणभेरीमृदङ्गगर्त्तार्त्तशब्दे
च श्वसृगालगर्द्दभसंह्रादे लोहितेन्द्रधनुर्नीहारेष्वभ्रदर्शने चा-

पत्तौ मूत्रित उच्चारिते निशासन्ध्योदकेषु वर्षति चैके वल्मीकसन्तानमाचार्य्यपरिवेषणे ज्योतिषोश्च भीतो यानस्थः शयानः प्रौढपादः श्मशानग्रामान्तमहापथाशौचेषु पूतिगन्धान्तःशवदिवाकीर्त्तिशूद्रसन्निधाने सूतके चोद्गारे ऋग्यजुषञ्च सामशब्दो यावदाकालिका निर्घातभूमिकम्पराहुदर्शनोल्कास्तनयित्नुवर्षविद्युतः प्रादुष्कृताग्निष्वृतौ विद्युति नक्तञ्चापररात्रात्रिभागादिप्रवृत्तौ सर्वमुल्का विद्युत्समत्येकेषां। स्तनयित्नुरपराह्णेऽपि प्रदोषे सर्वं नक्तमर्द्धरात्रादहश्चेत् सज्योतिर्विषयस्थे च राज्ञि प्रेते विप्रोष्य चान्योन्येन सह सङ्कुलोपाहितवेदसमाप्तिच्छर्दिश्राद्धमनुष्ययज्ञभोजनेष्वहोरातममावास्यायाञ्च द्व्यहं वा कार्त्तिकी फाल्गुन्याषाढी पौर्णमासी तिस्रोऽष्टकास्त्रिरात्रमन्त्यामेके अभितोवार्षिकं सर्वे वर्षविद्युत्स्तनयित्नुसन्निपाते प्रस्यन्दिन्यूर्द्ध्वं भोजनादुत्सवे प्राधीतस्य च निशायां चतुर्मुहूर्त्तं नित्यमेके नगरे मानसमप्यशुचि श्राद्धिनामाकालिकमकृतान्नश्राद्धिकसंयोगे च प्रतिविद्यञ्च यावत् स्मरन्ति प्रतिविद्यञ्च यावत् स्मरन्ति ॥

इति गौतमीये धर्मशास्त्रे षोडशोऽध्यायः।

---

## सप्तदशोऽध्यायः।

प्रशस्तानां स्वकर्मसु द्विजातीनां ब्राह्मणो भुञ्जीत प्रतिगृह्णीयाच्चैधोदकयवसमूलफलमध्वभयाभ्युद्यतशय्यासनयानपयोदधिधानाशफरिप्रियङ्गुस्रङ्मार्गशाकान्यप्रणोद्यानि सर्व्वेषां पितृदेवगुरुभृत्यभरणे चान्यवृत्तिश्चेन्नान्तरेण शूद्रात् पशु-

पालितक्षेत्रकर्षककुलसङ्गतकारयितृपरिचारका भोज्यान्ना व-
णिक् चाशिल्पी नित्यमभोज्यं केशकीटावपन्नं रजस्वला-
कृष्णशकुनिपदोपहतं भ्रूणघ्नप्रेक्षितं गवोपघ्रातं भावदुष्टं शुक्तं
केवलमदधि पुनःसिद्धं पर्य्युषितमशाकभक्ष्यस्नेहमांसमधून्युत्-
सृष्टपुंश्चल्यभिशस्तानपदेश्यदण्डिकतक्षकदर्य्यबन्धनिकचिकि-
त्सकमृगय्वनिषुचार्य्युच्छिष्टभोजिगणविद्विषाणामपाङ्क्तानां प्राग्-
दुर्बलाद्वृथान्नाचमनोत्थानव्यपेतानि समासमाभ्यां विषमसमे
पूजातोऽनर्चितस्य गोश्च क्षीरमनिर्दशायाः सूतके चाजाम-
हिष्योश्च नित्यमाविकमपेयमौष्ट्रमैकशफञ्च स्यन्दिनीयमसूस-
न्धिनीनाञ्च याश्च व्यपेतवत्साः पञ्चनखाश्चाशल्यकशशश्वाविड्गो-
धाखड्गकच्छपा उभयतोदत्केशलोमैकशफकलविङ्कप्लवचक्रवाक-
हंसाः काककङ्कगृध्रश्येनाजलजारक्तपादतुण्डा ग्राम्यकुक्कुटसू-
करौ धेन्वनडुहौ चापन्नदावसन्नवृथामांसानि किसलयक्या-
कुलशुननिर्य्यासलोहितावश्चनाश्चनिचिदारुबकबलाकटिट्टिभ-
मान्धालनक्तचरा अभक्ष्याः। भक्ष्याः प्रतुदाविष्किराजालपादा
मत्स्याश्चाविकृतावध्याश्च धर्मार्थे व्यालहता दृष्टदोषवाक्प्रश-
स्तानभ्युक्ष्योपयुञ्जीतोपयुञ्जीत ॥

इति गौतमीये धर्मशास्त्रे सप्तदशोऽध्यायः।

---

## अष्टादशोऽध्यायः।

अस्वतन्त्रा धर्मे स्त्री नातिचरेद्भर्त्तारं वाक्चक्षुःकर्मसंयता
पतिरपत्यलिप्सुर्देवराद्गुरुप्रसूता नर्त्तुमतीयात् पिण्डगोत्र-
ऋषिसम्बन्धिभ्यो योनिमात्राद्वा नादेवरादित्येके नातिद्वितीयं

जनयितुरपत्यं समयादन्यत्र जीवतश्च क्षेत्रे परस्मात्तस्य द्वयोर्वा रक्षणाद्भर्त्तुरेव नष्टे भर्त्तरि षाड्वार्षिकं क्षपणं श्रूयमाणेऽभिगमनं प्रव्रजिते तु निवृत्तिः प्रसङ्गात्तस्य द्वादशवर्षाणि ब्राह्मणस्य विद्यासम्बन्धे भ्रातरि चैवं ज्यायसि यवीयान् कन्याग्न्युपयमेषु षड़ित्येके त्रीन् कुमार्य्यृतूनतीत्य स्वयं युज्येतानिन्दितेनोत्सृज्य पित्र्यानलङ्कारान् प्रदानं प्राग्टतोरप्रयच्छन् दोषी प्राग्वाससः प्रतिपत्तेरित्येके द्रव्यादानं विवाहसिद्ध्यर्थं धर्मतन्त्रसंयोगे च शूद्रादन्यत्रापि शूद्राद्बहुपशोर्हीनकर्मणः शतगोरनाहिताग्नेः सहस्रगोश्च सोमपात् सप्तमीञ्चाभुक्त्वा निचयायाप्यहीनकर्मभ्य आचक्षीत राज्ञा पृष्टस्तेन हि भर्तव्यः श्रुतशीलसम्पन्नश्चेद्धर्मतन्त्रपीडायां तस्याकरणे दोषादोषः॥

इति गौतमीये धर्मशास्त्रे अष्टादशोऽध्यायः।

---

# एकोनविंशोऽध्यायः।

उक्तो वर्णधर्मश्चाश्रमधर्मश्चाथ खल्वयं पुरुषो येन कर्मणा लिप्यतेऽथैतदयाज्ययाजनमभक्ष्यभक्षणमवद्यवदनं शिष्टस्याक्रिया प्रतिषिद्धसेवनमिति च तत्र प्रायश्चित्तं कुर्य्यान्न कुर्य्यादिति मीमांसन्ते न कुर्य्यादित्याहुर्नहि कर्म क्षीयत इति कुर्य्यादित्यपरे पुनस्तोमेनेष्ट्वा पुनः सवनमायातीति विज्ञायते व्रात्यस्तोमेनेष्ट्वा तरति सर्वं पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजतेऽग्निष्टुताभिशस्यमानं याजयेदिति च। तस्य निष्क्रयणानि जपस्तपोहोमउपवासोदानमुपनिषदो वेदान्ताः सर्वच्छन्दःसु संहिता मधून्यघमर्षणमथर्वशिरो-

रुद्राः पुरुषसूक्तं राजनरौहिणे सामनी बृहद्रथन्तरे पुरुषगतिर्महानाम्न्यो महावैराजं महादिवाकीर्त्त्यं ज्येष्ठसाम्नामन्यतमद्बहिष्पवमानं कुष्माण्डानि पावमान्यः सावित्री चेति पावनानि। पयोव्रतता शाकभक्षता फलभक्षता प्रसृतयावको हिरण्यप्राशनं घृतप्राशनं सोमपानमिति च मेध्यानि। सर्वे शिलोच्चयाः सर्वाः स्रवन्त्यः पुण्या ह्रदास्तीर्थानि ऋषिनिवासगोष्ठपरिस्कन्दा इति देशाः। ब्रह्मचर्य्यं सत्यवचनं सवनेषूदकोपस्पर्शनमार्द्रवस्त्रताधःशायितानाशक इति तपांसि। हिरण्यं गौर्व्वासोऽश्वो भूमिस्तिलाघृतमन्नमिति देयानि। सम्वत्सरः षण्मासाश्चत्वारस्त्रयो द्वावेकश्चतुर्व्विंशत्यहोद्वादशाहः षडहस्त्र्यहोऽहोरात्र इति कालाः। एतान्येवानादेशे विकल्पेन क्रियेरन्। एनःसु गुरुषु गुरूणि लघुषु लघूनि कृच्छ्रातिकृच्छ्रं चान्द्रायणमिति सर्वप्रायश्चित्तं सर्वप्रायश्चित्तम्॥

इति गौतमीये धर्मशास्त्रे एकोनविंशोऽध्यायः।

---

## विंशतितमोऽध्यायः।

अथ चतुःषष्टिषु यातनास्थानेषु दुःखान्यनुभूय तत्रेमानि लक्षणानि भवन्ति ब्रह्महार्द्रकुष्ठी सुरापः श्यावदन्तो गुरुतल्पगः पङ्गुः स्वर्णहारी कुनखी श्वित्री वस्त्रापहारी हिरण्यहारी दर्दूरी तेजोऽपहारी मण्डली स्नेहापहारी क्षयी तथा जीर्णतानन्नापहारी ज्ञानापहारी मूकः प्रतिहन्ता गुरोरपस्मारी गोघ्नो जात्यन्धः पिशुनः पूतिनासः पूतिवक्त्रस्तु सूचकः शूद्रोपाध्यायः श्वपाकस्त्रपुसीसचामरविक्रयी मद्यप एकशफ-

विक्रयी मृगव्याधः कुण्डाशी भृतकश्चैलिकोवा नक्षत्री चार्बुदी नास्तिकोरङ्गोपजीव्यभक्ष्यभक्षी गण्डरी ब्रह्मपुरुषतस्कराणां देशिकः पिशुनः षण्डोमहापथिकोगण्डिकश्चण्डाली पुक्कसी गोष्कवकीर्णो मद्यासेवी धर्मपत्नीषु स्याम्मैथुनप्रवर्तकः खल्वा-टसगोत्रसमयस्त्र्यभिगामी पितृमातृभगिनीस्त्र्यभिगाम्यावीजि-तस्तेषां कुब्जकुण्ठमण्डव्याधितव्यङ्गदरिद्राल्पायुषोऽल्पबुद्धयश्च-ण्डपण्डशैलूषतस्करपरपुरुषगेष्यपरकर्मकराः खल्वाटषङ्गाङ्ग-सङ्कीर्णाः क्रूरकर्माणः क्रमशश्चान्त्याश्चोपपद्यन्ते तस्मात् कर्तव्यमेवेह प्रायश्चित्तं विशुद्धैर्लक्षणैर्जायन्ते धर्मस्य धार-णादिति धर्मस्य धारणादिति॥

इति गौतमीये धर्मशास्त्रे विंशतितमोऽध्यायः।

---

## एकविंशतितमोऽध्यायः।

त्यजेत् पितरं राजघातकं शूद्रयाजकं वेदविप्लावकं भ्रूण-हनं यश्चान्त्यावसायिभिः सह सम्वसेदन्त्यावसायिन्या वा तस्य विद्यागुरून् योनिसम्बन्धांश्च सन्निपात्य सर्वाण्युदकादीनि प्रेतकर्माणि कुर्य्युः पात्रञ्चास्य विपर्य्यस्येयुः। दासः कर्मक-रोवावकरादमेध्यपात्रमानीय दासी घटान् पूरयित्वा दक्षिणा-मुखः पदा विपर्य्यस्येदमुमनुदकं करोमीति नामग्राहस्तं सर्वेऽन्वालभेरन् प्राचीनावीतिनो मुक्तशिखा विद्यागुरवो योनि-सम्बन्धाश्च वीक्षेरन्नपउपस्पृश्य ग्रामं प्रविशन्ति। अतऊर्द्ध्वं तेन सम्भाष्य तिष्ठेदेकरात्रं जपन् सावित्रीमज्ञानपूर्वं ज्ञान-पूर्वं चेत्त्रिरात्रम्। यस्तु प्रायश्चित्तेन शुद्ध्येत्तस्मिन् शुद्धे

शातकुम्भमयं पात्रं पुण्यतमाद्ध्रदात् पूरयित्वा स्रवन्तीभ्योवा त एनमपउपस्पर्शयेयुः । अथास्मै तत्पात्रं दद्युस्तत् सम्प्रतिगृह्य जपेच्छान्ता द्यौः शान्ता पृथिवी शान्तं शिवमन्तरीक्षं योरोचनस्तमिह गृह्णामीत्येतैर्यजुर्भिः पावमानीभिस्तरत्सम- न्दीभिः कुश्माण्डैश्चाज्यं जुहुयाद्धिरण्यं ब्राह्मणाय वा दद्याद्गामाचार्य्याय । यस्य तु प्राणान्तिकं प्रायश्चित्तं स मृतः शुद्ध्येत्तस्य सर्वाण्युदकादीनि प्रेतकर्माणि कुर्य्युरेतदेव शान्त्युदकं सर्वेषूपपातकेषु सर्वेषूपपातकेषु ॥

इति गौतमीये धर्मशास्त्रे एकविंशतितमोऽध्यायः ।

---

## द्वाविंशतितमोऽध्यायः ।

ब्रह्महासुरापगुरुतल्पगमातृपितृयोनिसम्बन्धगस्तेननास्तिकनिन्दितकर्माभ्यासिपतितत्याग्यपतितत्यागिनः पतिताः पातकसंयोजकाश्च तैश्चाब्दं समाचरन् । द्विजातिकर्मभ्योहानिः पतनं परत्र चासिद्धिस्तामेके नरकं त्रीणि प्रथमान्यनिर्देश्यानि मनुर्न स्त्रीष्वगुरुतल्पगः पततीत्येके भ्रूणहनि । हीनवर्णसेवायाञ्च स्त्री पतति कौटसाक्ष्यं राजगामिपैशुनं गुरोरनृताभिशंसनं महापातकसमानि अपांक्त्यानां प्राग्दुर्बलाद्गोहन्तृब्रह्मोज्झ्यतन्मन्त्रकृदवकीर्णिपतितसावित्रीकेषूपपातकं याजनाध्यापनादृत्विगाचार्य्यौ पतनीयसेवायाञ्च हेयावन्यत्र हानात् पतति तस्य च प्रतिगृह्णीतेत्येके न कर्हिचिन्मातापित्रोरवृत्तिर्दायन्तु न भजेरन् ब्राह्मणाभिशंसने दोषस्तावान् द्विरनेनसि दुर्बलहिंसायामपि मोचने शक्तश्चेत् । अभिक्रुद्धाव-

गोरथां ब्राह्मणस्य वर्षशतमस्वर्ग्यं निर्घाते सहस्रगोश्चितद्-
र्शने यावतस्तत्प्रस्कन्द्य पांशून् संगृह्णीयात् संगृह्णीयात्॥

इति गौतमीये धर्मशास्त्रे द्वाविंशतितमोऽध्यायः।

---

## त्रयोविंशतितमोऽध्यायः।

प्रायश्चित्तमग्नौ सक्तिर्ब्रह्मघ्नस्त्रिरवच्छादितस्य लक्ष्यं वा
स्याज्जन्ये शस्त्रभृताम्। खट्वाङ्गकपालपाणिर्वा द्वादशसंवत्स-
रान् ब्रह्मचारी भैक्षाय ग्रामं प्रविशेत् स्वकर्माचक्षाणः
पथोपक्रामेत् संदर्शनादार्य्यस्य स्थानासनाभ्यां विहरन् सव-
नेषूदकोपस्पर्शी शुध्येत् प्राणलाभे वा तन्निमित्ते ब्राह्मणस्य
द्रव्यापचये वा त्र्यवरं प्रति राज्ञोऽश्वमेधावभृथे वान्ययज्ञेऽ
प्यग्निष्टदन्तश्चेत् सृष्टश्चेद्ब्राह्मणवधे। हत्वापि आत्रेय्याश्चैवं
गर्भे चाविज्ञाते वा। ब्राह्मणस्य राजन्यवधे षड्वार्षिकं प्राकृतं
ब्रह्मचर्य्यं ऋषभैकसहस्राश्च गा दद्यात्। वैश्ये त्रैवार्षिकं ऋष-
भैकशताश्च गा दद्यात्। शूद्रे संवत्सरं ऋषभैकदशाश्च गा
दद्यादनात्रेय्याश्चैवं गाश्च। वैश्यवन्मण्डूकनकुलकाकविवर
ड्रमूषिकाश्च। हिंसासु चास्थिमतां सहस्रं हत्वानस्थिमता
मनडुह्भारे च। अपि वास्थिमतामेकैकस्मिन् किञ्चित् किञ्चि-
द्दद्यात्। षण्ढे च पलालभारः सीसमाषश्च वराहे घृतघटः
सर्पे लौहदण्डो ब्रह्मबन्ध्वाश्चललनायां जीवो वैशिके न किञ्चित्त-
ल्पान्नधनलाभवधेषु पृथग्वर्षाणि द्वे परदारे त्रीणि श्रोत्रियस्य
द्रव्यलाभे चोत्सर्गो यथास्थानं वा गमयेत् प्रतिसिद्धमन्त्रसंयोगे
सहस्रवाक्चेदग्न्युत्सादिनिराकृत्युपपातकेषु चैवं स्त्री चाति-

चारिणी गुप्ता पिण्डं तु लभेत अमानुषीषु गोवर्जं स्त्रीकृते कुष्माण्डैर्घृतहोमो घृतहोमः।

इति गौतमीये धर्मशास्त्रे त्रयोविंशतितमोऽध्यायः।

---

## चतुर्विंशतितमोऽध्यायः।

सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयुः सुरामास्ये मृतः शुध्येदमत्या पाने पयो घृतमुदकं वायुं प्रति त्र्यहं तप्तानि सकृच्छ्रस्ततोऽस्य संस्कारः। मूत्रपुरीषरेतसाञ्च प्राशने श्वापदोष्ट्रखराणाञ्चाङ्गस्य ग्राम्यकुक्कुटशूकरयोश्च गन्धाघ्राणे सुरापस्य प्राणायामो घृतप्राशनञ्च पूर्वैश्च दष्टस्य। तप्ते लोहशयने गुरुतल्पगः शयीत सूर्मीं वा ज्वलन्तीं श्लिष्येल्लिङ्गं वा सवृषणमुत्कृत्याञ्जलावाधाय दक्षिणाप्रतीचीं व्रजेदजिह्ममाशरीरनिपातान्मृतः शुध्येत। सखीसयोनिसगोत्राशिष्यभार्यासु स्नुषायां गवि च तल्पसमोऽवकर इत्येके श्वभिरादयेद्राजा निहीनवर्णगमने स्त्रियं प्रकाशं पुमांसं घातयेद्यथोक्तं वा गर्दभेनावकीर्णी निर्ऋतिं चतुष्पथे यजते तस्याजिनमूर्द्ध्वबालं परिधाय लोहितपात्रः सप्त गृहान् भैक्षञ्चरेत् कर्माचक्षाणः सम्वत्सरेण शुध्येत्। रेतस्कन्दने भये रोगे स्वप्नेऽग्नीन्धनभैक्षचरणानि सप्तरात्रं कृत्वाज्यहोमः साभिसन्धेर्वा रेतस्याभ्यां सूर्य्याभ्युदिते ब्रह्मचारी तिष्ठेदहरभुञ्जानोऽभ्यस्तमिते च रात्रिं जपन् सावित्रीमशुचिं दृष्ट्वादित्यमीक्षेत प्राणायामं कृत्वाऽभोज्यभोजनेऽमेध्यप्राशने वा निष्पुरीषीभावस्त्रिरात्रावरमभोजनं सप्तरात्रं वा स्वयं शीर्णान्युपयुञ्जानः फलान्य-

नतिक्रामन् प्राक्पञ्चनखेभ्यश्छर्दिनं घृतप्राशनञ्चाक्रोशानृतहिंसासु त्रिरात्रं परमन्तपः सत्यवाक्ये चेद्वारुणीदावमानीभिर्होमो विवाहमैथुननिर्मान्तसंयोगेष्वदोषमेकेऽनृतं नतु खलु गुर्वर्थेषु यतः सप्त पुरुषानितश्च परतश्च हन्ति मनसापि गुरोरनृतं वदन्नल्पेष्वप्यर्थेष्वन्त्यावसायिनीगमने कृच्छ्राब्दोऽमत्या द्वादशरात्रमुदक्यागमने त्रिरात्रं त्रिरात्रम्।

इति गौतमीये धर्मशास्त्रे चतुर्विंशतितमोऽध्यायः।

## पञ्चविंशतितमोऽध्यायः।

रहस्यं प्रायश्चित्तमविख्यातदोषस्य चतुर्ऋचं तरत्समन्दीत्यप्सु जपेदप्रतिग्राह्यं प्रतिजिघृक्षन् प्रतिगृह्य वाऽभोज्यं बुभुक्षमाणः पृथिवीमावपेदृत्वन्तरारमण उदकोपस्पर्शनाच्छुद्धिमेके स्त्रीषु पयोव्रतो वा दशरात्रं घृतेन द्वितीयमद्भिस्तृतीयं दिवादिष्वेकभक्तको जलक्लिन्नवासा लोमानि नखानि त्वचं मांसं शोणितं स्नाय्वस्थिमज्जानमिति होम आत्मनो मुखे मृत्योरास्ये जुहोमीत्यन्ततः। सर्वेषामेतत् प्रायश्चित्तं भ्रूणहत्यायाः। अथान्य उक्तो नियमोऽग्ने त्वं पारयेति महाव्याहृतिभिर्जुहुयात् कूश्माण्डैश्चाज्यं तद्व्रत एव वा ब्रह्महत्यासुरापानस्तेयगुरुतल्पेषु प्राणायामैः स्नातोऽघमर्षणं जपेत् सममश्वमेधावभृथेन सावित्रीं वा सहस्रकृत्व आवर्त्तयन् पुनीते हैवात्मानमन्तर्जले वाघमर्षणं त्रिरावर्त्तयन् पापेभ्यो मुच्यते मुच्यते।

इति गौतमीये धर्मशास्त्रे पञ्चविंशतितमोऽध्यायः।

## षड्विंशतितमोऽध्यायः ।

तदाहुः कतिधावकीर्णी प्रविशतीति मरुतः प्राणेनेन्द्रं बलेन बृहस्पतिं ब्रह्मवर्च्चसेनाग्निमेवेतरेण सर्व्वेणेति सोऽमावास्यायां निश्यग्निमुपसमाधाय प्रायश्चित्ताज्याहुतीर्जुहोति कामावकीर्णोऽस्म्यवकीर्णोऽस्मि काम कामाय स्वाहा कामाभिद्रुग्धोस्म्यभिद्रुग्धोऽस्मि कामकामाय स्वाहेति समिधमाधायानुपर्युक्ष्य यज्ञवास्तु कृत्वोपस्थाय सम्मासिञ्चत्वित्येतया त्रिरुपतिष्ठेत त्रय इमे लोका एषां लोकानामभिजित्या अभिक्रान्त्या इत्येतदेवैकेषां कर्माधिकृत्ययोः पूतइव स्यात् सइत्थं जुहुयादित्यमनुमन्त्रयेद्वरोदक्षिणेति । प्रायश्चित्तमविशेषादनार्जवपैशुनप्रतिषिद्धाचारानाद्यप्राशनेष । शूद्रायाञ्च रेतः सिक्त्वा योनौ च दोषवति कर्मण्यभिसन्धिपूर्व्वेष्वलिङ्गाभिरप उपस्पृशेद्वारुणीभि रन्यैर्व्वा पवित्रैः प्रतिषिद्धवाङ्मनसयोरपचारे व्याहृतयः संख्याताः पञ्च सर्व्वास्वपोवाचा मे दहश्च मादित्यश्च पुनातु स्वाहेति प्रातः रात्रिश्च मा वरुणश्च पुनात्विति सायमष्टौ वा समिधमादध्याद्देवकृतस्येति हुत्वैवं सर्व्वस्मादेनसोमुच्यते मुच्यते ।

इति गौतमीये धर्मशास्त्रे षड्विंशतितमोऽध्यायः ।

---

## सप्तविंशतितमोऽध्यायः ।

अथातः कृच्छ्रान् व्याख्यास्यामि हविष्यान् प्रातराशान् भुक्त्वा तिस्रो रात्रीर्नाश्नीयादथापरं त्र्यहं नक्तं भुञ्जीत अथापरं त्र्यहं न कञ्चन याचेदथापरं त्र्यहमुपवसेत्तिष्ठेदहनि रात्रावा-

सीत जितकाम: सत्यं वदेद्दनार्य्यैर्न सम्भाषेत रौरवयौधाजिते नित्यं प्रयुञ्जीतानुसवनमुदकोपस्पर्शनमापोहिष्ठेति तिसृभि: पवित्रवतीभिर्मार्जयेत् हिरण्यवर्णा: शुचय: पावकाइत्यष्टाभि:। अथोदकतर्पणं ॐनमोहमाय मोहमाय संहमाय धुन्वते तापसाय पुनर्वसवे नमोनमोमौञ्ज्यायोर्म्याय वसुविन्दाय सर्वविन्दाय नमोनम: पाराय सुपाराय महापाराय पारयिष्णवे नमोनमो रुद्राय पशुपतये महते देवाय त्र्यम्बकायैकचराधिपतये हराय शर्वायेशानायोग्राय वज्रिणे घृणिने कपर्द्दिने नमोनम: सूर्य्यायादित्याय नमोनमोनीलग्रीवाय शितिकण्ठाय नमोनम: कृष्णाय पिङ्गलाय नमोनमोज्येष्ठाय श्रेष्ठाय वृद्धायेन्द्राय हरिकेशायोर्द्ध्वरेतसे नमोनम: सत्याय पावकाय पावकवर्णाय कामाय कामरूपिणे नमो नमो दीप्ताय दीप्तरूपिणे नमोनमस्तीक्ष्णरूपिणे नमोनम: सौम्याय सुपुरुषाय महापुरुषाय मध्यमपुरुषायोत्तमपुरुषाय ब्रह्मचारिणे नमो नमश्चन्द्रललाटाय कृत्तिवाससे पिनाकहस्ताय नमोनम इति। एतदेवादित्योपस्थानमेता एवाज्याहुतयो द्वादशरात्रस्यान्ते चरुं श्रपयित्वैताभ्यो देवताभ्यो जुहुयादग्नये स्वाहा सोमाय स्वाहाग्नीषोमाभ्यामिन्द्राग्निभ्यामिन्द्राय विश्वेभ्योदेवेभ्योब्रह्मणे प्रजापतये अग्नये स्विष्टिकृतइति। ततोब्राह्मणतर्पणम्। एतेनैवातिकृच्छ्रोव्याख्यातो-यावत् सकृदाददीत तावदश्नीयादब्भक्षस्तृतीय: स कृच्छ्रातिकृच्छ्र:। प्रथमं चरित्वा शुचि: पूत: कर्मण्योभवति द्वितीयं चरित्वा यत्किञ्चिदन्यन्महापातकेभ्य: पापं कुरुते तस्मात् प्रमुच्यते तृतीयं चरित्वा सर्वस्मादेनसोमुच्यते अथैतांस्त्रीन्

कृच्छ्रान् चरित्वा सर्वेषु वेदेषु स्नातो भवति सर्वैर्देवैर्ज्ञातो भवति यश्चैवं वेद यश्चैवं वेद॥

इति गौतमीये धर्मशास्त्रे सप्तविंशतितमोऽध्यायः॥

---

## अष्टाविंशतितमोऽध्यायः।

अथातश्चान्द्रायणं तस्योक्तो विधिः कृच्छ्रे वपनं व्रतञ्चरेत् श्वोभूतां पौर्णमासीमुपवसेदाप्यायस्व सन्ते पयांसि नवो-नव इति चैताभिस्तर्पणमाज्यहोमोहविषश्चानुमन्त्रणमुपस्थानं चन्द्रमसोयद्देवा देवहेलनमिति चतसृभिराज्यं जुहुयाद्देव-कृतस्येति चान्ते समिद्भिरों भूर्भुवः स्वस्तपः सत्यं यशः श्रीरूर्जं गिरौजस्तेजः पुरुषोधर्मः शिवः शिवइत्येतैर्ग्रासानुमन्त्रणं प्रतिमन्त्रं मनसा नमः स्वाहेति वा सर्वग्रासप्रमाणमास्याविकारेण चरुभैक्षशक्तुकणयावकशाकपयोदधिघृतमूलफलोदकानि हवींष्युत्तरोत्तरं प्रशस्तानि पौर्णमास्यां पञ्चदश ग्रासान् भुक्त्वैकापचयेन परपक्षमश्नीयादमावास्यायामुपोष्यैकोपचयेन पूर्वपक्षं विपरीतमेकेषाम्। एष चान्द्रायणोमासोमासमेतमाप्त्वा विपापोविपाप्मा सर्वमेनोहन्ति द्वितीयमाप्त्वा दशपूर्वान् दशावरानात्मानञ्चैकविंशं पङ्क्तीश्च पुनाति सम्वत्सरं चाप्त्वा चन्द्रमसः सलोकतामाप्नोति॥

इतिगौतमीये धर्मशास्त्रेऽष्टाविंशतितमोऽध्यायः॥

---

# एकोनत्रिंशत्तमोऽध्यायः ।

ऊर्द्ध्वं पितुः पुत्रा ऋक्थं भजेरन्निवृत्ते रजसि मातुर्जीवति
चेच्छति सर्वं वा पूर्वजस्येतरान् बिभृयात् । पूर्ववद्विभागे तु
धर्मवृद्धिर्विंशतिभागो ज्येष्ठस्य मिथुनमुभयतोदद्युक्तो रथोगो-
वृषः काणखोरकूटवण्डा मध्यमस्यानेकाश्चेदविधान्यायसी गृह-
मनोयुक्तं चतुष्पदाञ्चैकैकं यवीयसः समश्चेतरत् सर्वं द्व्यंशी वा
पूर्वजः स्यादेकैकमितरेषामेकैकं वा धनरूपं काम्यं पूर्वः पूर्वो
लभेत दशतः पशूनां नैकशफः नैकशफानां वृषभोऽधिकोज्ये-
ष्ठस्य वृषभषोड़शा ज्यैष्ठिनेयस्य समं वा ज्यैष्ठिनेयेन यवी-
यसां प्रतिमातृ वा स्ववर्गे भागविशेषः । पितोत्सृजेत्
पुत्रिकामनपत्योऽग्निं प्रजापतिञ्चेष्ट्वास्मदर्थमपत्यमिति संवा-
द्याभिसन्धिमात्रात् पुत्रिकेत्येकेषां तत्संशयान्नोपयच्छे-
दभ्रातृकाम् । पिण्डगोत्रर्षिसम्बन्धा ऋक्थं भजेरन् स्त्री
चानपत्यस्य वीजं वा लिप्सेत देवरवत्यन्यतोजातमभागम् ।
स्त्रीधनं दुहितृणामप्रत्तानामप्रतिष्ठितानाञ्च भगिनीशुल्कं
सोदर्य्याणामूर्द्ध्वं मातुः पूर्वञ्चैके । संसृष्टविभागः प्रेतानां ज्ये-
ष्ठस्य संसृष्टिनि प्रेते असंसृष्टी ऋक्थभाक् विभक्तजः पित्र्यमेव ।
स्वयमर्जितं वैद्योऽवैद्येभ्यः कामं भजेरन् । पुत्रा औरसक्षेत्र-
जदत्तकृत्रिमगूढोत्पन्नापविद्धा ऋक्थभाजः कानीनसहोढ-
पौनर्भवपुत्रिकापुत्रस्वयन्दत्तक्रीता गोत्रभाजश्चतुर्थांशभागिनश्चौ-
रसाद्यभावे ब्राह्मणस्य राजन्यापुत्रो ज्येष्ठोगुणसम्पन्नस्तुल्यांश-
भाक् ज्येष्ठांशहीनमन्यत् राजन्यावैश्यापुत्रसमवाये स यथा
ब्राह्मणीपुत्रेण क्षत्रियाच्चेत् शूद्रापुत्रोऽप्यनपत्यस्य शुश्रूषुश्चे-

लभेत वृत्तिमूलमन्तेवासिविधिना सवर्णापुत्रोऽप्यन्यायवृत्तो न लभेतैकेषां श्रोत्रिया ब्राह्मणास्तानपत्यस्य रिक्थं भजेरन् राजेतरेषां जड़क्लीवौ भर्त्तव्यावपत्यं जड़स्य भागार्हं शूद्रापुत्रवत् प्रतिलोमास्तूदकयोगक्षेमकृतान्नेष्वविभागः स्त्रीषु च संयुक्तास्वनाज्ञाते दशावरैः शिष्टैरूहवद्भिरलुब्धैः प्रशस्तं कार्य्यम् । चत्वारश्चतुर्णां पारगा वेदानां प्रागुत्तमा त्रय आश्रमिणः पृथग्धर्म्मविदस्त्रयएतान् दशावरान् परिषदित्याचक्षते असम्भवे त्वेतेषामश्रोत्रियो वेदविच्छिष्टोविप्रतिपत्तौ यदाह यतोऽयमप्रभवो भूतानां हिंसानुग्रहयोगेषु धर्म्मिणां विशेषेण स्वर्गं लोकं धर्म्मविदाप्नोति ज्ञानाभिनिवेशाभ्यामिति धर्म्मो धर्म्मः ।

इतिगौतमीये धर्म्मशास्त्रे एकोनत्रिंशत्तमोऽध्यायः ॥

समाप्ता चेयं गौतमसंहिता ।

# शातातपसंहितायाम् ।

प्रथमोऽध्यायः ।

प्रायश्चित्तविहीनानां महापातकिनां नृणाम् ।
नरकान्ते भवेज्जन्म चिह्नाङ्कितशरीरिणाम् ॥
प्रतिजन्म भवेत्तेषां चिह्नं तत्पापसूचितम् ।
प्रायश्चित्ते कृते याति पश्चात्तापवतां पुनः ॥
महापातकजं चिह्नं सप्तजन्मनि जायते ।
उपपापोद्भवं पञ्च त्रीणि पापसमुद्भवम् ॥
दुष्कर्मजा नृणां रोगा यान्ति चोपक्रमैः शमम् ।
जपैः सुरार्चनैर्होमैर्दानैस्तेषां शमोभवेत् ॥
पूर्वजन्मकृतं पापं नरकस्य परिक्षये ।
बाधते व्याधिरूपेण तस्य जप्यादिभिः शमः ॥
कुष्ठञ्च राजयक्ष्मा च प्रमेहो ग्रहणी तथा ।
मूत्रकृच्छ्राश्मरीकासा अतीसारभगन्दरौ ॥
दुष्टव्रणं गण्डमाला पक्षाघातोऽक्षिनाशनम् ।
इत्येवमादयो रोगा महापापोद्भवाः स्मृताः ॥
जलोदरं यकृत् प्लीहा शूलरोगव्रणानि च ।
श्वासाजीर्णज्वरच्छर्दिभ्रममोहगलग्रहाः ।
रक्तार्बुद विसर्पाद्या उपपापोद्भवा गदाः ॥
दण्डापतानकश्चित्रवपुः कम्पविचर्चिकाः ।
वल्मीकपुण्डरीकाद्या रोगाः पापसमुद्भवाः ॥

अधर्मात्मा नृणां रोगा अतिपापाद्भवन्ति हि ।
अन्ये च बहवो रोगा जायन्ते वर्णसङ्कराः ॥
उच्यन्ते च निदानानि प्रायश्चित्तानि वै क्रमात् ।
महापापेषु सर्व्वं स्यात्तदर्द्धमुपपातके ॥
दद्यात् पापेषु षष्ठांशं कल्प्यं व्याधिबलाबलम् ।
अथ साधारणान्येषु गोदानादिषु कथ्यते ॥
गोदाने वत्ससंयुक्ता गौः सुशीला च पयस्विनी ॥
वृषदाने शुभोऽनड्वान् शुक्लाम्बरसकाञ्चनः ।
निवर्तनानि भूदाने दश दद्याद्द्विजातये ॥
दशहस्तेन दण्डेन त्रिंशद्दण्डं निवर्तनम् ।
दश तान्येव गोचर्म दत्त्वा स्वर्गे महीयते ॥
सुवर्णशतनिष्कन्तु तदर्द्धार्द्धप्रमाणतः ।
अश्वदाने मृदु श्लक्ष्णमश्वं सोपस्करं दिशेत् ॥
महिषीं माहिषे दाने दद्यात् स्वर्णशुभान्विताम् ।
दद्याद्गजं महादाने सुवर्णफलसंयुतम् ॥
लक्षसंख्याकसं शुद्धं प्रदद्याद्देवतार्च्चने ।
दद्याद्द्विजसहस्राय मिष्टान्नं द्विजभोजने ॥
रुद्रं जपेत्सुगन्धपुष्पैः पूजयित्वा च त्र्यम्बकम् ।
एकादश जपेद्रुद्रान् दशांशं जुहुयात्तिलैः ॥
हुत्वाभिषेचनं कुर्य्यान्मन्त्रैर्वरुणदैवतैः ।
शान्तिके मयाशान्तिश्च यथाशान्तिकपूर्वकम् ॥
धान्यदाने शुभं धान्यं खारी षष्टिमितं स्मृतम् ।
वस्त्रदाने पट्टवस्त्रद्वयं कर्पूरसंयुतम् ॥
दद्यपश्चाच्चतुरः चपदेश्य द्विजान् शुभान् ।

विधाय वैष्णवीं पूजां सङ्कल्प्य निजकाम्यया ॥
धेनुं दद्याद्द्विजातिभ्यो दक्षिणाञ्चापि शक्तितः ।
अलङ्कृत्य यथाशक्ति वस्त्रालङ्करणैर्द्विजान् ॥
याचेद्दण्डप्रमाणेन प्रायश्चित्तं यथोदितम् ।
तेषामनुज्ञया कृत्वा प्रायश्चित्तं यथाविधि ॥
पुनस्तान् परिपूर्णार्थानर्चयेद्विधिवद्द्विजान् ।
सन्तुष्टा ब्राह्मणा दद्युरनुज्ञां व्रतकारिणे ॥
जपच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि ।
सर्व्वं भवति निश्छिद्रं यस्य चेच्छन्ति ब्राह्मणाः ॥
ब्राह्मणा यानि भाषन्ते मन्यन्ते तानि देवताः ।
सर्वदेवमया विप्रा न तद्वचनमन्यथा ॥
उपवासो व्रतञ्चैव स्नानं तीर्थफलं तपः ।
विप्रैः सम्पादितं सर्व्वं सम्पन्नं तस्य तत्फलम् ॥
सम्पन्नमिति यद्वाक्यं वदन्ति क्षितिदेवताः ।
प्रणम्य शिरसा धार्य्यमग्निष्टोमफलं लभेत् ॥
ब्राह्मणा जङ्गमं तीर्थं निर्जलं सार्वकामिकम् ।
तेषां वाक्योदकेनैव शुध्यन्ति मलिना जनाः ॥
तेभ्योऽनुज्ञामभिप्राप्य प्रगृह्य च तथाशिषः ।
भोजयित्वा द्विजान् शक्त्या भुञ्जीत सह बन्धुभिः ॥

इति शातातपीये कर्मविपाके साधारणविधिः प्रथमोऽध्यायः ।

---

## द्वितीयोऽध्यायः ।

ब्रह्महा नरकस्यान्ते पाण्डुकुष्ठी प्रजायते ।
प्रायश्चित्तं प्रकुर्वीत स तत्पातकशान्तये ॥

चत्वारः कलशाः कार्याः पञ्चरत्नसमन्विताः ।
पञ्चपल्लवसंयुक्ताः सितवस्त्रेण संयुताः ॥
अश्वस्थानादिमृद्युक्तास्तीर्थोदकसुपूरिताः ।
कषायपञ्चकोपेता नानाविधफलान्विताः ॥
सर्वौषधिसमायुक्ताः स्थाप्याः प्रतिदिशं द्विजैः ।
रौप्यमष्टदलं पद्मं मध्यकुम्भोपरि न्यसेत् ॥
तस्योपरि न्यसेद्देवं ब्रह्माणञ्च चतुर्मुखम् ।
पलार्द्धार्द्धप्रमाणेन सुवर्णेन विनिर्मितम् ॥
अर्चेत् पुरुषसूक्तेन त्रिकालं प्रतिवासरम् ।
यजमानः शुभैर्गन्धैः पुष्पैर्धूपैर्यथाविधि ॥
पूर्वादिकुम्भेषु ततो ब्राह्मणा ब्रह्मचारिणः ।
पठेयुः स्वस्ववेदांस्ते ऋग्वेदप्रभृतीन् शनैः ॥
दशांशेन ततो होमो ग्रहशान्तिपुरःसरम् ।
मध्यकुम्भे विधातव्यो घृताक्तैस्तिलकैरभिः ॥
द्वादशाहमिदं कर्म समाप्य द्विजपुङ्गवः ।
तत्र पीठे यजमानमभिषिञ्चेद्यथाविधि ॥
ततोदद्याद्यथाशक्ति गोभूहेमतिलादिकम् ।
ब्राह्मणेभ्यस्तथा देवमाचार्याय निवेदयेत् ।
आदित्या वसवो रुद्रा विश्वे देवा मरुद्गणाः ।
प्रीताः सर्वे व्यपोहन्तु मम पापं सुदारुणम् ॥
इत्युदीर्य्य मुहुर्भक्त्या तमाचार्य्यं क्षमापयेत् ।
एवं विधाने विहिते श्वेतकुष्ठी विशुध्यति ॥
कुष्ठी गोवधकारी स्यात्तस्य वक्ष्येऽस्य निष्कृतिः ।
स्थापयेद्घटमेकन्तु पूर्वोक्तद्रव्यसंयुतम् ॥

रक्तचन्दनलिप्ताङ्गं रक्तपुष्पाम्बरान्वितम्।
रक्तकुम्भे तु तं कृत्वा स्थापयेद्दक्षिणां दिशम्॥
ताम्रपात्रं न्यसेत्तत्र तिलचूर्णेन पूरितम्।
तस्योपरि न्यसेद्देवं हेमनिष्कमयं यमम्॥
यजेत् पुरुषसूक्तेन पापं मे शाम्यतामिति।
सामपारायणं कुर्य्यात् कलसे तत्र सामवित्॥
दशांशं सर्षपैर्हुत्वा पावमान्यभिषेचने।
विहिते धर्म्मराजानमाचार्य्याय निवेदयेत्॥
यमोऽपि महिषारूढो दण्डपाणिर्भयावहः।
दक्षिणाशापतिर्देवो मम पापं व्यपोहतु॥
इत्युच्चार्य्य विसृज्यैनं मासं भक्तिमाचरेत्।
ब्रह्मगोवधयोरेषा प्रायश्चित्तेन निष्कृतिः॥
पितृहा चेतनाहीनो मातृहान्धः प्रजायते।
नरकान्ते प्रकुर्वीत प्रायश्चित्तं यथाविधि॥
प्राजापत्यानि कुर्य्यात त्रिंशच्चैव विधानतः।
व्रतान्ते कारयेन्नावं सौवर्णपलसम्मिताम्॥
कुम्भं रौप्यमयञ्चैव ताम्रपात्राणि पूर्ववत्।
निष्कहेम्ना तु कर्त्तव्यो देवः श्रीवत्सलाञ्छनः॥
पट्टवस्त्रेण संवेष्ट्य पूजयेत्तं विधानतः।
नावं द्विजाय तां दद्यात् सर्व्वोपस्करसंयुताम्॥
वासुदेव! जगन्नाथ! सर्वभूताशयस्थित!।
पातकार्णवमग्नं मां तारय प्रणतार्त्तिहृत्!॥
इत्युदीर्य्य प्रणम्याथ ब्राह्मणाय विसर्जयेत्।
अन्येभ्योऽपि यथाशक्ति विप्रेभ्यो दक्षिणां ददेत्॥

स्त्रघ्नघाती तु बधिरो नरकान्ते प्रजायते ।
मूको भ्रातृवधे चैव तस्येयं निष्कृतिः स्मृता ॥
सोऽपि पापविशुद्ध्यर्थं चरेच्चान्द्रायणव्रतम् ।
व्रतान्ते पुस्तकं दद्यात् सुवर्णफलसंयुतम् ॥
इमं मन्त्रं समुच्चार्य्य ब्राह्मणीं तां विसर्जयेत् ।
सरस्वति ! जगन्मातः ! शब्दब्रह्माधिदेवते ! ॥
दुष्कर्मकरणात् पापात् पाहि मां परमेश्वरि ! ।
बालघाती च पुरुषो मृतवत्सः प्रजायते ॥
ब्राह्मणोद्वाहनञ्चैव कर्त्तव्यं तेन शुद्धये ।
श्रवणं हरिवंशस्य कर्त्तव्यञ्च यथाविधि ॥
महारुद्रजपञ्चैव कारयेच्च यथाविधि ।
षडङ्गैकादशैरुद्रै रुद्रः समभिधीयते ॥
रुद्रैस्तथैकादशभिर्महारुद्रः प्रकीर्त्तितः ।
एकादशभिरेतैस्तु अतिरुद्रश्च कथ्यते ॥
जुहुयाच्च दशांशेन दूर्वयायुतसंख्यया ।
एकादश स्वर्णनिष्काः प्रदातव्याः सदक्षिणाः ॥
पलान्येकादश तथा दद्याद्द्विजानुसारतः ।
अन्येभ्योऽपि यथाशक्ति द्विजेभ्यो दक्षिणान्दिशेत् ॥
स्नापयेद्दम्पती: पश्चान्मन्त्रैर्वरुणदैवतैः ।
आचार्य्याय प्रदेयानि वस्त्रालङ्करणानि च ॥
गोवधाः पुरुषः कुष्ठी निर्वंशश्चोपजायते ।
स च पापविशुद्ध्यर्थं प्राजापत्यशतञ्चरेत् ॥
व्रतान्ते मेदिनीं दत्त्वा शृणुयादथ भारतम् ।
स्त्रीहन्ता चातिसारी स्यादश्वत्थान् रोपयेद्दश ॥

दद्याच्च शर्कराधेनुं भोजयेच्च शतं द्विजान् ।
राजहा क्षयरोगी स्यादेषा तस्य च निष्कृतिः ॥
गोभूहिरण्यमिष्टान्नजलवस्त्रप्रदानतः ।
घृतधेनुप्रदानेन तिलधेनुप्रदानतः ॥
इत्यादिना क्रमेणैव क्षयरोगः प्रशाम्यति ।
रक्तार्बुदी वैश्यहन्ता जायते स च मानवः ॥
प्राजापत्यानि चत्वारि सप्त धान्यानि चोत्सृजेत् ।
दण्डापतानकयुतः शूद्रहन्ता भवेन्नरः ॥
प्राजापत्यं सकृच्चैवं दद्याद्धेनुं सदक्षिणाम् ।
कारुकाणां वधे चैव रूक्षभावः प्रजायते ॥
तेन तत्पापशुद्ध्यर्थं दातव्यो वृषभः सितः ।
सर्वकार्येष्वसिद्धार्थो गजघाती भवेन्नरः ॥
प्रासादं कारयित्वा तु गणेशप्रतिमां न्यसेत् ।
गणनाथस्य मन्त्रं तु मन्त्री लक्षमितं जपेत् ॥
कुलत्थशाकैः पूपैश्च गणशान्तिपुरःसरम् ।
उष्ट्रे विनिहते चैव जायते विकृतस्वरः ॥
स तत्पापविशुद्ध्यर्थं दद्यात् कर्पूरकं फलम् ॥
अश्वे विनिहते चैव वक्रतुण्डः प्रजायते ।
शतं पलानि दद्याच्च चन्दनान्यघनुत्तये ॥
महिषीघातने चैव कृष्णगुल्मः प्रजायते ।
खरे विनिहते चैव खररोमा प्रजायते ॥
निष्कत्रयस्य प्रकृतिं सम्यग्दद्याद्धिरण्मयीम् ।
तरक्षौ निहते चैव जायते केकरेक्षणः ।
दद्याद्रत्नमयीं धेनुं स तत्पातकशान्तये ॥

शूकरे निहते चैव दन्तुरो जायते नरः ।
स दद्यात्तु विशुद्ध्यर्थं घृतकुम्भं सदक्षिणाम् ॥
हरिणे निहते खञ्जः शृगाले तु विपादकः ।
अश्वस्तेन प्रदातव्यः सौवर्णपलनिर्मितः ॥
अजाभिघातने चैव अधिकाङ्गः प्रजायते ।
अजा तेन प्रदातव्या विचित्रवस्त्रसंयुता ॥
उरभ्रे निहते चैव पाण्डुरोगः प्रजायते ।
कस्तूरिकापलं दद्याद्ब्राह्मणाय विशुद्धये ॥
मार्जारे निहते चैव पीतपाणिः प्रजायते ।
पारावतं स सौवर्णं प्रदद्यान्निष्कमात्रकम् ॥
शुकशारिकयोर्घाते नरः स्खलितवाग्भवेत् ।
सच्छास्त्रपुस्तकं दद्यात् स विप्राय सदक्षिणम् ॥
बकघाती दीर्घनसो दद्याद्गां धवलप्रभाम् ।
काकघाती कर्णहीनो दद्याद्गामसितप्रभाम् ॥
हिंसायां निष्कृतिरियं ब्राह्मणे समुदाहृता ।
तदर्द्धार्द्धप्रमाणेन क्षत्रियादिष्वनुक्रमात् ॥

इति शातातपीये कर्मविपाके हिंसाप्रायश्चित्तविधिर्नाम द्वितीयोऽध्यायः ।

---

## तृतीयोऽध्यायः ।

सुरापः श्यावदन्तः स्यात् प्राजापत्यन्तरन्तथा ।
शर्करायास्तुलाः सप्त दद्यात् पापविशुद्धये ॥
जपित्वा तु महारुद्रं दशांशं जुहुयात्तिलैः ।

ततोऽभिषेकः कर्त्तव्यो मन्त्रैर्वरुणदैवतैः॥
मद्यपो रक्तपित्ती स्यात्स दद्यात् सर्पिषो घटम्।
मधुनोऽर्द्धघटञ्चैव सहिरण्यं विशुद्धये॥
अभक्ष्यभक्षणे चैव जायते क्रिमिकोदरः।
यथावत्तेन शुद्ध्यर्थमुपोष्यं भीष्मपञ्चकम्॥
उदक्यावीक्षितं भुक्त्वा जायते क्रमिलोदरः।
गोमूत्रयावकाहारस्त्रिरात्रेणैव शुद्ध्यति॥
भुक्त्वा चास्पृश्यसंस्पृष्टं जायते क्रमिलोदरः।
त्रिरात्रं समुपोष्याथ स तत्पापात् प्रमुच्यते॥
परान्नविघ्नकरणादजीर्णमभिजायते।
लक्षहोमं स कुर्वीत प्रायश्चित्तं यथाविधि॥
मन्दोदराग्निर्भवति सति द्रव्ये कदन्नदः।
प्राजापत्यत्रयं कुर्य्याद्भोजयेच्च शतं द्विजान्॥
विषदः स्याच्छर्द्दिरोगी दद्याद्दश पयस्विनीः।
मार्गहा पादरोगी स्यात् सोऽश्वदानं समाचरेत्॥
पिशुनो नरकस्यान्ते जायते श्वासकासवान्।
घृतं तेन प्रदातव्यं सहस्रपलसम्मितम्॥
धूर्त्तोऽपस्माररोगी स्यात् स तत्पापविशुद्धये।
ब्रह्मकूर्चमयीं धेनुं दद्याच्चापि सदक्षिणाम्॥
शूली परोपतापेन जायते तत्प्रमोचने।
सोऽन्नदानं प्रकुर्वीत तथा रुद्रं जपेन्नरः॥
दावाग्निदायकश्चैव रक्तातिसारवान् भवेत्।
तेनोदपानं कर्त्तव्यं रोपणीयस्तथा वटः॥
सुरालये जले वापि शकृन्मूत्रं करोति यः।

गुदरोगी भवेत्तस्य पापरूप: सुदारुण: ॥
मासं सुराम्बुनैनैव गोदानद्वितयेन तु ।
प्राजापत्येन चैकेन शाम्यन्ति गुदजा रुज: ॥
गर्भपातनजा रोगा यकृत्प्लीहजलोदरा: ।
तेषां प्रशमनार्थाय प्रायश्चित्तमिदं स्मृतम् ॥
एतेषु दद्याद्विप्राय जलधेनुं विधानत: ।
सुवर्णरूप्यताम्राणां पलत्रयसमन्विताम् ॥
प्रतिमाभङ्गकारी च अप्रतिष्ठ: प्रजायते ।
सम्वत्सरत्रयं सिञ्चेद्दश्वत्थं प्रतिवासरम् ॥
उद्वाहयेत्तमश्वत्थं स्वगृह्योक्तविधानत: ।
तत्र संस्थापयेद्देवं विघ्नराजं सुपूजितम् ॥
दुष्टवादी खण्डित: स्यात् स वै दद्याद्विजातये ।
रूप्यं पलद्वयं दुग्धं घटद्वयसमन्वितम् ॥
खल्वाट: परनिन्दावान् धेनुं दद्यात् सकाञ्चनाम् ।
परोपहासकृत् काण: स गां दद्यात् समौक्तिकाम् ॥
सभायां पक्षपाती च जायते पक्षघातवान् ।
निष्कत्रयमितं हेम स दद्यात् सत्यवर्त्तिनाम् ॥

इति शातातपीये कर्मविपाके प्रकीर्णप्रायश्चित्तं नाम तृतीयोऽध्याय: ।

---

## चतुर्थोऽध्याय: ।

कुलघ्नो नरकस्यान्ते जायते विप्रहेमहृत् ।
स तु स्वर्णशतं दद्यात् कृत्वा चान्द्रायणत्रयम् ॥

औडुम्बरी ताम्रचौरो नरकान्ते प्रजायते।
प्राजापत्यं स कृत्वाव ताम्रं पलशतं दिशेत्॥
कांस्यहारी च भवति पुण्डरीकसमन्वितः।
कांस्यं पलशतं दद्यादलङ्कृत्य द्विजातये॥
रीतिहृत् पिङ्गलाक्षः स्यादुपोष्य हरिवासरम्।
रीतिं पलशतं दद्यादलङ्कृत्य द्विजं शुभम्॥
मुक्ताहारी च पुरुषो जायते पिङ्गमूर्द्धजः।
मुक्ताफलशतं दद्यादुपोष्य स विधानतः॥
त्रपुहारी च पुरुषो जायते नेत्ररोगवान्।
उपोष्य दिवसं सोऽपि दद्यात् पलशतन्त्रपु॥
सीसहारी च पुरुषो जायते शीर्षरोगवान्।
उपोष्य दिवसं दद्याद्घृतधेनुं विधानतः॥
दुग्धहारी च पुरुषो जायते बहुमूत्रकः।
स दद्याद्दुग्धधेनुञ्च ब्राह्मणाय यथाविधि॥
दधिचौर्य्येण पुरुषो जायते मदवान् यतः।
दधिधेनुः प्रदातव्या तेन विप्राय शुद्धये॥
मधुचौरस्तु पुरुषो जायते नेत्ररोगवान्।
स दद्यान्मधुधेनुञ्च समुपोष्य द्विजातये॥
इक्षोर्विकारहारी च भवेदुदरगुल्मवान्।
गुडधेनुः प्रदातव्या तेन तद्दोषशान्तये॥
लोहहारी च पुरुषः कर्वुराङ्गः प्रजायते।
लोहं पलशतं दद्यादुपोष्य स तु वासरम्॥
तैलचौरस्तु पुरुषो भवेत् कण्ड्वादिपीडितः।
उपोष्य स तु विप्राय दद्यात्तैलघटद्वयम्॥

आमान्नहरणाच्चैव दन्तहीनः प्रजायते।
स दद्यादश्विनौ हेमनिष्कद्वयविनिर्मितौ॥
पक्वान्नहरणाच्चैव जिह्वारोगः प्रजायते।
गायत्र्याः स जपेल्लक्षं दशांशं जुहुयात्तिलैः॥
फलहारी च पुरुषो जायते व्रणिताङ्गुलिः।
नानाफलानामयुतं स दद्याच्च द्विजन्मने॥
ताम्बूलहरणाच्चैव श्वेतौष्ठः सम्प्रजायते।
सदक्षिणं प्रदद्याच्च विद्रुमस्य द्वयं वरम्॥
शाकहारी च पुरुषोजायते नीललोचनः।
ब्राह्मणाय प्रदद्याद्वै महानीलमणिद्वयम्॥
कन्दमूलस्य हरणाद्ध्रस्वपाणिः प्रजायते।
देवतायतनं कार्य्यमुद्यानं तेन शक्तितः॥
सौगन्धिकस्य हरणाद्दुर्गन्धाङ्गः प्रजायते।
स लक्षमेकं पद्मानां जुहुयाज्जातवेदसि॥
दारुहारी च पुरुषः स्विन्नपाणिः प्रजायते।
स दद्याद्विदुषे शुद्धौ काश्मीरजपलद्वयम्॥
विद्यापुस्तकहारी च किल मूकः प्रजायते।
न्यायेतिहासं दद्यात् स ब्राह्मणाय सदक्षिणम्॥
वस्त्रहारी भवेत् कुष्ठी सम्प्रदद्यात्प्रजापतिम्।
हेमनिष्कमितश्चैव वस्त्रयुग्मं द्विजातये॥
ऊर्णाहारी लोमशः स्यात् स दद्यात् कम्बलान्वितम्।
स्वर्णनिष्कमितं हेमवह्निं दद्याद्द्विजातये॥
पट्टसूत्रस्य हरणान्निर्लोमा जायते नरः।
तेन धेनुः प्रदातव्या विशुद्ध्यै द्विजन्मने॥

औषधस्यापहरणे सूर्य्यावर्तः प्रजायते ।
सूर्य्यायार्घः प्रदातव्यो मासं देयञ्च काञ्चनम् ॥
रक्तवस्त्रप्रवालादिहारी स्याद्रक्तवातवान् ।
सवस्त्रां महिषीं दद्यान्मणिरागसमन्विताम् ॥
विप्ररत्नापहारी चाप्यनपत्यः प्रजायते ।
तेन कार्य्यं विमुक्त्यर्थं महारुद्रजपादिकम् ॥
मृतवत्सोदितः सर्वो विधिरत्र विधीयते ।
दशांशहोमः कर्तव्यः पलाशेन यथाविधि ॥
देवस्य हरणाच्चैव जायते विविधो ज्वरः ।
ज्वरोमहाज्वरश्चैव रौद्रो वैष्णवएव च ॥
ज्वरे रौद्रं जपेत् कर्णो महारुद्रं महाज्वरे ।
अतिरौद्रं जपेद्रौद्रे वैष्णवे तद्दयं जपेत् ॥
नानाविधद्रव्यचौरो जायते ग्रहणीयुतः ।
तेनान्नोदकवस्त्राणि हेम देयञ्च शक्तितः ॥
इति शातातपीये कर्मविपाके स्तेयप्रायश्चित्तं नाम
चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः ।

मातृगामी भवेद्यस्तु लिङ्गं तस्य विनश्यति ।
चाण्डालीगमने चैव हीनकोषः प्रजायते ॥
तस्य प्रतिक्रियां कर्त्तुं कुम्भमुत्तरतोन्यसेत् ।
कृष्णवस्त्रसमाच्छन्नं कृष्णमाल्यविभूषितम् ॥
तस्योपरि न्यसेद्देवं कांस्यपात्रे धनेश्वरम् ।

सुवर्णनिष्कषट्केन निर्मितं नरवाहनम् ॥
यजेत् पुरुषसूक्तेन धनदं विश्वरूपिणम् ।
अथर्ववेदविद्विप्रो ह्याथर्वणं समाचरेत् ॥
सुवर्णपुत्तिकां कृत्वा निष्कविंशतिसङ्ख्यया ।
दद्याद्विप्राय सम्पूज्य निष्पापोऽहमिति ब्रुवन् ॥
निधीनामधिपो देवः शङ्करस्य प्रियः सखा ।
सौम्याशाधिपतिः श्रीमान् मम पापं व्यपोहतु ॥
इमं मन्त्रं समुच्चार्य्य आचार्य्याय यथाविधि ।
दद्याद्देवं हीनकोषे लिङ्गनाशे विशुद्धये ॥
गुरुजायाभिगमनान्मूत्रकृच्छ्रः प्रजायते ।
तेनापि निष्कृतिः कार्य्या शास्त्रदृष्टेन कर्मणा ॥
स्थापयेत् कुम्भमेकन्तु पश्चिमायां शुभे दिने ।
नीलवस्त्रसमाच्छन्नं नीलमाल्यविभूषितम् ॥
तस्योपरि न्यसेद्देवं ताम्रपात्रे प्रचेतसम् ।
सुवर्णनिष्कषट्केन निर्मितं यादसाम्पतिम् ॥
यजेत् पुरुषसूक्तेन वरुणं विश्वरूपिणम् ।
सामविद्ब्राह्मणस्तत्र सामवेदं समाचरेत् ॥
सुवर्णपुत्तिकां कृत्वा निष्कविंशतिरङ्ख्यया ।
दद्याद्विप्राय सम्पूज्य निष्पापोऽहमिति ब्रुवन् ॥
यादसामधिपो देवो विश्वेषामपि पावनः ।
संसाराब्धौ कर्णधारो वरुणः पावनोऽस्तु मे ॥
इमं मन्त्रं समुच्चार्य्य आचार्य्याय यथाविधि ।
दद्याद्देवमलङ्कृत्य मूत्रकृच्छ्रप्रशान्तये ॥
स्वसुतागमने चैव रक्तकुष्ठं प्रजायते ।

भगिनीगमने चैव पीतकुष्ठं प्रजायते॥
तस्य प्रतिक्रियां कर्त्तुं पूर्वतः कलसं न्यसेत्।
पीतवस्त्रसमाच्छन्नं पीतमाल्यविभूषितम्॥
तस्योपरि न्यसेत् स्वर्णपात्रे देवं सुरेश्वरम्।
सुवर्णनिष्कषट्केन निर्मितं वज्रधारिणम्॥
यजेत् पुरुषसूक्तेन वासवं विश्वरूपिणम्।
यजुर्वेदं तत्र साम ऋग्वेदञ्च समाचरेत्॥
सुवर्णपुत्तलिकां कृत्वा सुवर्णदशकेन तु।
दद्याद्विप्राय सम्पूज्य निष्पापोऽहमिति ब्रुवन्॥
देवानामधिपो देवो वज्री विष्णुनिकेतनः।
शतयज्ञः सहस्राक्षः पापं मम निकृन्ततु॥
इमं मन्त्रं समुच्चार्य्य आचार्य्याय यथाविधि।
दद्याद्देवं सहस्राक्षं स पापस्यापनुत्तये॥
भातृभार्य्याभिगमनान्नलत्कुष्ठं प्रजायते।
स्ववधूगमने चैव कृष्णकुष्ठं प्रजायते॥
तेन कार्य्यं विशुद्ध्यर्थं प्रागुक्तस्यार्द्धमेव हि।
दशांशहोमः सर्वत्र घृताक्तैः क्रियते तिलैः॥
यदगम्याभिगमनाज्जायते भ्रुवमण्डलम्।
कृत्वा लोहमयीं धेनुं तिलषष्टिसमायुतः॥
कार्पासभारसंयुक्तां कांस्यदोहां सवत्सिकाम्।
दद्याद्विप्राय विधिवदिमं मन्त्रमुदीरयेत्॥
सुरभी वैष्णवी माता मम पापं व्यपोहतु।
तपस्विनीसङ्गमने जायते चाश्मरीगदः॥

स तु पापविशुद्ध्यर्थं प्रायश्चित्तं समाचरेत्॥
दद्याद्विप्राय विदुषे मधुधेनुं यथोदितम्।
तिलद्रोणशतञ्चैव हिरण्येन समन्वितम्॥
पितृव्यस्त्र्यभिगमनाद्वृषणाश्मवणी भवेत्।
तेनापि निष्कृतिः कार्य्या गजादानेन शक्तितः॥
मातुलान्यान्तु गमने पृष्ठकुब्जः प्रजायते।
कृष्णाजिनप्रदानेन प्रायश्चित्तं समाचरेत्॥
मातृष्वस्त्रभिगमने वामाङ्गे व्रणवान् भवेत्।
तेनापि निष्कृतिः कार्य्या सम्यग्दासप्रदानतः॥
मृतभार्य्याभिगमने मृतभार्य्यः प्रजायते।
तत्पातकविशुद्ध्यर्थं द्विजमेकं विवाहयेत्॥
सगोत्रस्त्रीप्रसङ्गेन जायते च भगन्दरः।
तेनापि निष्कृतिः कार्य्या महिषीदानयत्नतः॥
तपस्विनीप्रसङ्गेन प्रमेही जायते नरः।
मासं रुद्रजपः कार्य्यो दद्याच्छक्त्या च काञ्चनम्॥
दीक्षितस्त्रीप्रसङ्गेन जायते दुष्टरक्तदृक्।
स पातकविशुद्ध्यर्थं प्राजापत्यद्वयञ्चरेत्॥
स्वजातिजायागमने जायते हृदयव्रणी।
तत्पापस्य विशुद्ध्यर्थं प्रजापत्यद्वयञ्चरेत्॥
पशुयोनौ च गमने मूत्राघातः प्रजायते।
तिलपात्रद्वयञ्चैव दद्यादात्मविशुद्धये॥
अश्वयोनौ च गमनाद्गुदस्तम्भः प्रजायते।
सहस्रकमलस्नानं मासं कुर्य्यात् शिवस्य च॥

एते दोषा नराणां स्युर्नरकान्ते न संशयः ।
स्त्रीणामपि भवन्त्येते तत्तत्पुरुषसङ्गसात् ॥

इति शातातपीये कर्मविपाके अगम्यागमन प्रायश्चित्तं नाम पञ्चमोऽध्यायः ।

---

## षष्ठोऽध्यायः ।

अश्वशूकरश्वश्रृद्रिद्रुमादिशकटेन च ।
भग्नाग्निदाहशस्त्राश्मविषोद्बन्धनजैर्हताः ॥
व्याघ्राहिगजभूपालचौरवैरिवृकाहताः ।
काष्ठशल्यहता ये च शौचसंस्कारवर्जिताः ॥
विसूचिकान्नकवलद्वातीसारतोहताः ।
शाकिन्यादिग्रहैर्ग्रस्ता विद्युत्पातहताश्च ये ॥
अस्पृश्या अपवित्राश्च पतिताः पुत्रवर्जिताः ।
पञ्चविंशत्प्रकारैश्च नाप्नुवन्ति गतिं हताः ॥
पित्राद्याः पिण्डभाजः स्युस्त्रयो लेपभुजस्तथा ।
ततोनान्दीमुखाः प्रोक्ता स्त्रयोऽप्यश्रुमुखास्त्रयः ॥
द्वादशैते पितृगणास्तर्पिताः सन्ततिप्रदाः ।
गतिहीनाः सुतादीनां सन्ततिं नाशयन्ति ते ॥
दश व्याघादिनिहता गर्भं निघ्नन्त्यमी क्रमात् ।
द्वादशास्त्रादिनिहता आकर्षन्ति च बालकम् ॥
विषादिनिहतास्नन्ति दशसु द्वादशस्वपि ।
वर्षैकबालकं कुर्य्यादनपत्योऽनपत्यताम् ॥
व्याघ्रेण हन्यते जन्तुः कुमारीगमनेन च ।

विषदश्चैव सर्पेण गजेन नृपदुष्टकृत् ॥
राज्ञा राजकुमारघ्नश्चौरेण पशुहिंसकः ।
वैरिणा मित्रभेदी च वज्रहस्तिवृकेण तु ॥
गुरुघाती च शय्यायां मत्सरी शौचवर्जितः ।
द्रोही संस्काररहितः शुना निक्षेपहारकः ॥
नरोविहन्यतेऽरण्ये शूकरेण च पाशिकः ।
कृमिभिः कृतनाशाश्च कृमिणा च निकृन्तनः ॥
शृङ्गिणा शङ्करद्रोही शकटेन च सूचकः ।
भृगुणा मेदिनीचौरो वह्निना यज्ञहानिकृत् ॥
दवेन दक्षिणाचौरः शस्त्रेण श्रुतिनिन्दकः ॥
अश्मना द्विजनिन्दाकृद्विषेण कुमतिप्रदः ।
उद्बन्धनेन हिंस्रः स्यात् सेतुभेदो जलेन तु ॥
द्रुमेण राजदन्तिघ्नदतीसारेण लौहहृत् ।
साकिन्याद्यैश्च म्रियते सदर्पकार्य्यकारकः ॥
अनध्यायेऽप्यधीयानो म्रियते विद्युता तथा ।
अस्पृश्यस्पर्शसङ्गी च वान्तमाश्रित्य शास्त्रहृत् ।
पतितोमद्यविक्रेतानपत्योद्विजवस्त्रहृत् ॥
अथ तेषां क्रमेणैव प्रायश्चित्तं विधीयते ।
कारयेन्निष्कमात्रन्तु पुरुषं प्रेतरूपिणम् ॥
चतुर्भुजं दण्डहस्तं महिषासनसंस्थितम् ।
पिष्टैः कृष्णतिलैः कुर्य्यात् पिण्डं प्रस्थप्रमाणतः ॥
मध्वाज्यशर्करायुक्तं स्वर्णकुण्डलसंयुतम् ।
अकालमूलं कलसं पञ्चपल्लवसंयुतम् ॥
कृष्णवस्त्रसमाच्छन्नं सर्वौषधिसमन्वितम् ।

तस्योपरि न्यसेद्देवं पात्रं धान्यफलैर्युतम् ॥
सप्तधान्यन्तु सफलं तत्र तत् सफलं न्यसेत् ।
कुम्भोपरि च विन्यस्य पूजयेत् प्रेतरूपिणम् ॥
कुर्य्यात् पुरुषसूक्तेन प्रत्यहं दुग्धतर्पणम् ।
षड़ङ्गञ्च जपेद्रुद्रं कलसे तत्र वेदवित् ॥
यमसूक्तेन कुर्वीत यमपूजादिकं तथा ।
गायत्र्याश्चैव कर्त्तव्योजपः स्वात्मविशुद्धये ॥
अश्वशान्तिकपूर्वञ्च दशांशं जुहुयात्तिलैः ।
अज्ञातनामगोत्राय प्रेताय सतिलोदकम् ॥
प्रदद्यात् पितृतीर्थेन पिण्डं मन्त्रमुदीरयेत् ।
इमं तिलमयं पिण्डं मधुसर्पिःसमन्वितम् ॥
ददामि तस्मै प्रेताय यः पीड़ां कुरुते मम ।
सजलान् कृष्णकलसांस्तिलपात्रसमन्वितान् ।
द्वादश प्रेतमुद्दिश्य दद्यादेकञ्च विष्णवे ॥
ततोऽभिषिञ्चेदाचार्य्यो दम्पती कलसोदकैः ।
शुचिर्वरायुधधरो मन्त्रैर्वरुणदैवतैः ।
यजमानस्ततोदद्यादाचार्य्याय सदक्षिणाम् ॥
ततोनारायणवलिः कर्त्तव्यः शास्त्रनिश्चयात् ।
एष साधारणविधिरगतीनामुदाहृतः ॥
विशेषस्तु पुनर्ज्ञेयो व्याघ्रादिनिहतेष्वपि ।
व्याघ्रेण निहते प्रेते परकन्यां विवाहयेत् ॥
सर्पदंशे नागवलिर्देयः सर्वेषु काञ्चनम् ।
चतुर्निष्कमितं हेम गजं दद्याद्गजैर्हते ॥
राज्ञा विनिहते दद्यात् पुरुषन्तु हिरण्मयम् ।

चौरेण निहते धेनुं वैरिणा निहते वृषम् ॥
वृकेण निहते दद्याद्यथाशक्ति च काञ्चनम् ।
शय्यामृते प्रदातव्या शय्या तुलीसमन्विता ॥
निष्कमात्रसुवर्णस्य विष्णुना समधिष्ठिता ।
शौचहीने मृते चैव द्विनिष्कस्वर्णजं हरिम् ॥
संस्कारहीने च मृते कुमारस्य विवाहयेत् ।
शुना हते च निक्षेपं स्थापयेद्विजशक्तितः ॥
शूकरेण हते दद्यान्महिषं दक्षिणान्वितम् ।
कृमिभिश्च मृते दद्याद्गोधूमान्नं द्विजातये ॥
शृङ्गिणा च हते दद्यादृषभं वस्त्रसंयुतम् ।
शकटेन मृते दद्यादश्वं सोपस्करान्वितम् ॥
भृगुपाते मृते चैव प्रदद्याद्धान्यपर्वतम् ।
अग्निना निहते दद्यादुपानहं स्वशक्तितः ॥
दवेन निहते चैव कर्तव्या सदने सभा ।
शस्त्रेणाच निहते दद्यान्महिषीं दक्षिणान्विताम् ॥
अश्मना निहते दद्यात् सवत्सां गां पयस्विनीम् ।
विषेण मृते दद्यान्मेदिनीं क्षेत्रसंयुताम् ॥
उद्बन्धनमृते चापि प्रदद्याद्गां पयस्विनीम् ।
मृते जलेन वरुणं हैमं दद्यात्त्रिनिष्ककम् ॥
वृक्षं वृक्षहते दद्यात् सौवर्णं स्वर्णसंयुतम् ।
अतीसारमृते लक्षं सावित्र्याः संयतो जपेत् ॥
साकिन्यादिमृते चैवं जपेद्रुद्रं यथोचितम् ।
विद्युत्पातेन निहते विद्यादानं समाचरेत् ॥
अस्पर्शे च मृते कार्यं वेदपारायणं तथा ।

सच्छास्त्रपुस्तकं दद्याद्दान्तमाश्रित्य संस्थिते ॥
पातित्येन मृते कुर्य्यात् प्राजापत्यानि षोडश ।
मृते चापत्यरहिते कृच्छ्राणां नवतिञ्चरेत् ॥
निष्कत्रयमितस्वर्णं दद्यादश्वं हयायते ।
कपिना निहते दद्यात् कपिं कनकनिर्म्मितम् ॥
विसूचिकामृते स्वादु भोजयेच्च शतं द्विजान् ।
तिलधेनुः प्रदातव्या कण्ठेऽन्नकवले मृते ॥
केशरोगमृते चापि अष्टौ कृच्छ्रान् समाचरेत् ॥
एवं कृते विधानेन विदध्यादौर्द्ध्वदैहिकम् ।
ततः प्रेतत्वनिर्मुक्ताः पितरस्तर्पितास्तथा ॥
दद्युः पुत्रांश्च पौत्रांश्च आयुरारोग्यसम्पदः ।
इतिशातातपप्रोक्तोविपाकः कर्म्मणामयम् ।
शिष्याय शरभङ्गाय विनयात् परिपृच्छते ॥

इतिशातातपीये कर्म्मविपाके अगतिप्रायश्चित्तं नाम षष्ठोऽध्यायः ॥

समाप्ता चेयं शातातपसंहिता ।

# वशिष्ठसंहितायाम् ।

प्रथमोऽध्यायः ।

अथातः पुरुषनिःश्रेयसार्थं धर्मजिज्ञासा । ज्ञात्वा चानुतिष्ठन् धार्मिकः प्रशस्यतमो भवति । लोके प्रेत्य वा विहितोधर्मः । तदलाभे शिष्टाचारः प्रमाणम् । दक्षिणेन हिमवत उत्तरेण विन्ध्यस्य ये धर्मा ये चाचारास्ते सर्वे प्रत्येतव्या नत्वन्ये प्रतिलोमकल्पधर्माः । एतदार्य्यावर्त्तमित्याचक्षते । गङ्गायमुनयोरन्तराप्येके । यावद्वा कृष्णमृगोविचरति तावद्ब्रह्मवर्च्चसमिति । अथापि भाल्लविनोनिदाने गाथामुदाहरन्ति ।

पश्चात् सिन्धुर्विहरिणी सूर्य्यस्योदयनं पुरा ।
यावत् कृष्णोऽभिधावति तावद्वै ब्रह्मवर्च्चसम् ।
त्रैविद्यवृद्धा यंब्रूयुर्धर्मं धर्मविदोजनाः ।
पवने पावने चैव स धर्मोनात्र संशयइति ।

देशधर्मजातिधर्मकुलधर्मान् श्रुत्यभावादब्रवीन्मनुः ॥ सूर्य्याभ्युदितः सूर्य्याभिनिर्मुक्तः कुनखी श्यावदन्तः परिवित्तिः परिवेत्ता अग्रेदिधिषूर्दिधिषूपतिर्वीरहा ब्रह्मघ्नइत्येतएनस्विनः । पञ्च महापातकान्याचक्षते गुरुतल्पं सुरापानं भ्रूणहत्यां ब्राह्मणसुवर्णहरणं पतितसंप्रयोगञ्च ब्राह्मेण वा यौनेन वा ।

अथाप्युदाहरन्ति ।

संवत्सरेण पतति पतितेन सहाचरन्।
याजनाध्यापनाद्यौनान्नपानासनादपि।

अथाप्युदाहरन्ति।

विद्याविनाशे पुनरभ्युपैति
जातिप्रणाशे त्विह सर्वनाशः।
कुलापदेशेन हयोऽपि पूज्य-
स्तस्मात् कुलीनां स्त्रिय मुद्वहन्तीति॥

त्रयोवर्णा ब्राह्मणस्य वशे वर्त्तेरन् तेषां ब्राह्मणो धर्मं यद्ब्रूयात्तद्राजा चानुतिष्ठेत्।

राजा तु धर्मेणानुशासन् षष्ठं षष्ठं धनस्य हरेदन्यत्र ब्राह्मणात्। इष्टापूर्त्तस्य तु षष्ठमंशं भजति। इतिह ब्राह्मणोवेदमाढ्यं करोति ब्राह्मणआपदउद्धरति तस्माद्ब्राह्मणोऽनाद्यः सोमोऽस्य राजा भवतीतीह प्रेत्य चाभ्युदयिकमिति ह विज्ञायते॥

इति वाशिष्ठे धर्मशास्त्रे प्रथमोऽध्यायः॥

---

## द्वितीयोऽध्यायः।

चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः। त्रयोवर्णा द्विजातयोब्राह्मणक्षत्रियवैश्याः। तेषां,

मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने।
तत्रास्य माता सावित्री पिता त्वाचार्य्य उच्यते।
वेदप्रदानात् पितेत्याचार्य्यमाचक्षते।

अथाप्युदाहरन्ति।

इयमिह वै पुरुषस्य रेतोब्राह्मणस्योर्द्ध्वं नाभेरर्वाचीनं मन्येत। तद्यदूर्द्ध्वं नाभेस्तेनास्यानौरसी प्रजा जायते यदुपनयति यत् साधुकरोति। अथ यदर्वाचीनं नाभेस्तेनास्यौरसी प्रजा जायते जनन्यां जनयति तस्माच्छ्रोत्रियमनूचानमपूज्योऽसीति न वदन्तीति हारीताः।

अथाप्युदाहरन्ति।

नत्वस्य विद्यते कर्म किञ्चिदामौञ्जिबन्धनात्।

वृत्त्या शूद्रसमो ज्ञेयो यावद्वेदे न जायतइति॥

अन्यत्रोदककर्मस्वधापितृसंयुक्तेभ्यः॥ विद्या ह वै ब्राह्मणमाजगाम गोपाय मां सेवधिस्तेऽहमस्मि।

असूयकायानृजवेऽव्रताय न मां ब्रूया वीर्य्यवती तथा स्याम्।

यमाद्वृणोत्यवितथेन कर्मणा बहुदुःखं कुर्वन्नमृतंवसंप्रयच्छन्

तन्मन्येत पितरं मातरञ्च तस्मै न द्रुह्येत् कतमच्च नाहम्।

अध्यापिताये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा।

यथैव तेन गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत्।

यमेव विद्याच्छुचिमप्रमत्तं मेधाविनं ब्रह्मचर्य्योपपन्नम्।

यस्ते तद्द्रुह्येत् कतमच्च नाह तस्मै मां ब्रूयान्निधिपाय ब्रह्मन्निति।

दहत्यग्निर्यथा कक्षं ब्रह्म त्वब्दमनादृतम्।

न ब्रह्म तस्मै प्रब्रूयाच्छक्यमानमकृन्ततइति॥

षट्कर्माणि ब्राह्मणस्याध्यायनमध्यापनं यजनं दानं प्रतिग्रहश्चेति। त्रीणि राजन्यस्याध्ययनं यजनं दानं शस्त्रेण च प्रजापालनं स्वधर्मस्तेन जीवेत्। एतान्येव त्रीणि वैश्यस्य कृषिवाणिज्यपाशुपाल्यकुसीदञ्च। एतेषां परिचर्य्या शूद्रस्य। अनियता वृत्तिरनियतकेशवेशाः सर्वेषां मुक्तशिखावर्जम्।

भजीवतः स्वधर्मेणान्यतरामपापीयसीं वृत्तिमातिष्ठेरन्न तु कदाचित् पापीयसीम्। वैश्यजीविकामास्थाय पण्येन जीवतोऽश्म लवणमपण्यं पाषाणकौ पशौ माजिनानि च तान्तवञ्च रक्तं सर्वञ्च कृतान्नं पुष्पमूलफलानि च गन्धरसा उदकञ्चौषधीनां रसः सोमञ्च शस्त्रं विषं मांसञ्च क्षीरं सविकारं अपस्त्रपु जतु सीसञ्च।

अथाप्युदाहरन्ति।

सद्यः पतति मांसेन लाक्षया लवणेन च।
त्र्यहेण शूद्रीभवति ब्राह्मणः क्षीरविक्रयात्॥

ग्राम्यपशूनामेकशफाः केशिनश्च सर्वे चारण्याः पशवो वयांसि दंष्ट्रिणश्च॥ धान्यानां तिलानाहुः। अथाप्युदाहरन्ति।

भोजनाभ्यञ्जनाद्दानाद्यदन्यत् कुरुते तिलैः।
कृमिभूतः स विष्ठायां पितृभिः सह मज्जति।
कामं वा स्वयं कृष्योत्पाद्य तिलान् विक्रीणीरन्॥

अन्यत्र धान्यविक्रयात्। रसारसैः समतोऽहीनतो वा निमातव्यः नत्वेव लवणं रसैस्तिलतण्डुलपक्वान्नं विद्यावन्तश्चाच विहिताः। परिवर्त्तकेन ब्राह्मणराजन्यौ वार्द्धुषान्नं नाद्यातां। अथाप्युदाहरन्ति।

समर्घं धान्यमुद्धृत्य महार्घं यः प्रयच्छति।
स वै वार्द्धुषिकोनाम ब्रह्मवादिषु गर्हितः॥
वृद्धिञ्च भ्रूणहत्याञ्च तुलया समतोलयन्।
अतिष्ठद्भ्रूणहा कोट्यां वार्द्धुषिर्न्यकम्पतेति॥

कामं वा परिलुप्तकृत्याय पापीयसे दद्यात् द्विगुणं हिरण्यं

निगुणं धान्यं धान्येनैव रसाव्याख्याताः पुष्पमूलफलानि च। तुलाधृतमष्टगुणम्। अथाप्युदाहरन्ति।

राजानुमतभावेन द्रव्यवृद्धिं विनाशयेत्।
पुनाराजाभिषेकेण द्रव्यवृद्धिञ्च वर्जयेत्॥
द्विकं त्रिकं चतुष्कञ्च पञ्चकञ्च शतं स्मृतम्।
मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्वशः॥
वशिष्ठवचनप्रोक्तां वृद्धिं वार्द्धुषिके शृणु॥
पञ्चमाषांस्तु विंशत्या एवं धर्मो न हीयत इति॥

इति वाशिष्ठे धर्मशास्त्रे द्वितीयोऽध्यायः।

---

## तृतीयोऽध्यायः।

अश्रोत्रियाननुवाक्या अनग्नयः शूद्रधर्माणो भवन्ति। नाऋग्ब्राह्मणो भवति। मानवञ्चात्र श्लोकमुदाहरन्ति।

योऽनधीत्य द्विजोवेदमन्यत्र कुरुते श्रमम्॥
स जीवन्नेवशूद्रत्वमाशु गच्छति सान्वयः।

न वणिक् न कुसीदजीवी। ये च शूद्रप्रेषणं कुर्वन्ति। न स्तेनो न चिकित्सकः।

अव्रता ह्यनधीयाना यत्र भैक्षचरा द्विजाः।
तं ग्रामं दण्डयेद्राजा चौरभक्तप्रदो हि सः॥
चत्वारोऽपि त्रयोवापि यं ब्रूयुर्वेदपारगाः।
स धर्मइतिविज्ञेयो नेतरेषां सहस्रशः॥
अव्रतानाममन्त्राणां जातिमात्रोपजीविनां।
सहस्रशः समेतानां पर्षत्त्वं नैव विद्यते॥

यद्वदन्त्यन्यथा भूत्वा मूर्खा धर्ममतद्विदः।
तत्पापं शतधा भूत्वा तद्वक्तृष्वनु गच्छति॥
श्रोत्रियायैव देयानि हव्यकव्यानि नित्यशः।
अश्रोत्रियाय दत्तानि तृप्तिं नायान्ति देवताः॥
यस्य चैव गृहे मूर्खो दूरे चैव बहुश्रुतः।
बहुश्रुताय दातव्यं नास्ति मूर्खे व्यतिक्रमः॥
ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते।
ज्वलन्तमग्निमुत्सृज्य नहि भस्मनि हूयते॥
यश्च काष्ठमयो हस्ती यश्च चर्ममयो मृगः।
यश्च विप्रोऽनधीयानस्त्रयस्ते नामधारकाः॥
विद्वद्भोज्यानि चान्नानि मूर्खा राष्ट्रेषु भुञ्जते।
तदन्नं नाशमायाति महद्वा जायते भयम्॥

अप्रणाशमात्मद्रव्यं योऽधिगच्छेद्राजा तद्धरेत् अधिगन्त्रे षष्ठमंशं प्रदाय। ब्राह्मणश्चेदधिगच्छेत् षट्कर्मसु वर्त्तमानो न राजा हरेत्। आततायिनं हत्वा नात्र त्राणमिच्छोः किञ्चित् किल्बिषमाहुः। षड्विधास्त्वाततायिनः। अथाप्युदाहरन्ति।

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः।
क्षेत्रदारहरश्चैव षडेते आततायिनः॥
आततायिनमायान्तमपि वेदान्तपारगम्।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्॥
स्वाध्यायिनं कुले जातं यो हन्यादाततायिनम्।
न तेन भ्रूणहा स स्यान्मन्युस्तन्मन्युमृच्छति॥

त्रिणाचिकेतस्त्रिपञ्चाग्निः सुपर्णवान् चतुर्मेधा वाजसनेयी

षडङ्गविद्ब्राह्मदेयानुसन्तानश्छन्दोगो ज्येष्ठसामगो मन्त्रब्राह्मणवित् यश्च धर्मानधीते यस्य च पुरुषमातृपितृवंशः श्रोत्रियो विज्ञायते विद्वांसः स्नातकाश्चेति पङ्क्तिपावनाः ।

चातुर्विद्योविकल्पी च अङ्गविद्धर्मपाठकः ।
आश्रमस्थास्त्रयोमुख्या परिषत् स्याद्दशावरा ॥

उपनीय तु यः कृत्स्नं वेदमध्यापयेत् स आचार्यो य स्त्वेकदेशं स उपाध्यायोयश्च वेदाङ्गानि । आत्मत्राणे वर्णसंवादे वा ब्राह्मणवैश्यौ शस्त्रमाददीयाताम् । क्षत्रियस्य तु तन्नित्यमेव रक्षणाधिकारात् । प्राग्वोदग्वासीनः प्रक्षाल्य पादौ पाणी चामणिबन्धनात् । अङ्गुष्ठमूलस्योत्तरतो रेखाब्राह्मं तीर्थं तेन त्रिराचामेदशब्दवत् । द्विःपरिमृज्यात् खान्यद्भिः संस्पृशेत् मूर्द्धन्यपो निनयेत् । सव्ये च पाणौ व्रजं स्तिष्ठन् शयानः प्रणतो वा नाचामेत् । हृदयङ्गमाभिरद्भिरबुद्बुदाभिरफेनाभिर्ब्राह्मणः कण्ठगाभिः क्षत्रियः शुध्येत् । वैश्योऽद्भिः प्राशिताभिस्तु स्त्रीशूद्रौ स्पृष्टाभिरेव च । पुत्रदारादि यामास्तर्पणानि स्युः । न वर्णगन्धरसदुष्टाभिः । याश्च स्युरशुभागमाः । न मुख्या विप्रुषउच्छिष्टं कुर्वन्त्यनङ्गश्लिष्टाः । सुप्त्वा भुक्त्वा पीत्वा स्नात्वा वाचान्तः पुनराचामेत् ॥

वासश्च परिधाय चोष्ठौ संस्पृश्य यात्रालोमकौ । न श्मश्रुगतालेपः दन्तवदन्तसक्तेषु यच्चान्त र्मुखे भवेदाचान्तस्यावशिष्टं स्यान्निगिरन्नेव तच्छुचिः ।

परानथाचामयतः पादौ या विप्रुषोगताः ।
भूम्या तास्तु समाः प्रोक्तास्ताभिर्नोच्छिष्टभाग्भवेत् ॥
प्रचरन्नभ्यवहार्येषु उच्छिष्टं यदि संस्पृशेत् ।

भूमौ निःक्षिप्य तद्द्रव्यमाचान्तः प्रचरेत् पुनः ॥
यद्द्रव्यन्मीमांस्यं स्यात्तत्तदद्भिस्तु संस्पृशेत्।
स्वहताश्च मृगा वन्या पातितश्च खगैः पलम् ॥
बालैरनुपविद्धान्तः स्त्रीभिराचरितश्च यत्।
परिसंख्याय तान् सर्व्वान् शुचीनाह प्रजापतिः ॥
प्रसारितश्च यत्पण्यं ये दोषाः स्त्रीमुखेषु च।
मशकैर्मक्षिकाभिश्च निलीनो नोपहन्यते ॥
क्षितिस्थाश्चैव या आपो गवां प्रीतिकराश्च याः।
परिसंख्याय तान् सर्व्वान् शुचीनाह प्रजापतिरिति ॥

लेपगन्धापकर्षणं शौचममेध्यलिप्तस्याद्भिर्मृदा च। तैजसमणिमयदारवतान्तकानां भस्मपरिमार्जनप्रदाहतक्षणनिर्णेजनानि। तैजसवदुपलमणीनां मणिवच्छङ्खशुक्तीनां दारुवदस्थ्नां रज्जुविदलचर्म्मणां चैलवच्छौचं। गोवालैः फलचमसानां गौरसर्षपकल्केन क्षौमजानां। भूम्यास्तु संमार्जनप्रोक्षणोपलेपनोल्लेखनैर्यथास्थानं दोषविशेषात् प्राजापत्यमुपैति। अथाप्युदाहरन्ति ॥

खननाद्दहनाद्धर्षाद्गोभिराक्रमणादपि।
चतुर्भिः शुध्यते भूमिः पञ्चमाच्चोपलेपनात् ॥
रजसा शुध्यते नारी नदी वेगेन शुध्यति।
भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति ॥
मद्यैर्मूत्रैः पुरीषैर्व्वा श्लेष्मपूयाश्रुशोणितैः।
संस्पृष्टं नैव शुध्येत पुनः पाकेन मृण्मयम् ॥
अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति।
विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यति ॥

अद्भिरेव काञ्चनं पूयेत्तथा रजतम्। अङ्गुलिकनिष्ठिका-मूले दैवं तीर्थम्। अङ्गुल्यग्रे मानुषं। पाणिमध्यमाग्नेयम्। प्रदेशिन्यङ्गुष्ठयोरन्तरा पित्र्यं॥ रोचन्त इति सायं प्रातरश-नान्यभिपूजयेत्। स्वदितमितिपित्र्येषु। सम्पन्नमित्याभ्युद-यिकेषु॥

इति वाशिष्ठे धर्मशास्त्रे तृतीयोऽध्यायः।

---

## चतुर्थोऽध्यायः।

प्रकृतिविशिष्टं चातुर्वर्ण्यं संस्कारविशेषाच्च। ब्राह्मणोऽस्य मुखमासीद्बाहूराजन्यः कृतः ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायतेति। गायत्र्या छन्दसा ब्राह्मणमसृजत् त्रिष्टुभा रा-जन्यं जगत्या वैश्यं न केनचिच्छन्दसा शूद्रमित्यसंस्कार्यो विज्ञायते। त्रिष्वेव निवासः स्यात् सर्वेषां सत्यमक्रोधोदान-महिंसा प्रजननञ्च. पितृदेवतातिथिपूजायां पशुं हिंस्यात्।

मधुपर्के च यज्ञे च पितृदैवतकर्मणि।
अत्रैव च पशुं हिंस्यान्नान्यथेत्यब्रवीन्मनुः॥
नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित्।
नच प्राणिवधः स्वर्ग्यस्तस्माद्यागे वधोऽवधः॥

अथापि ब्राह्मणाय राजन्याय वा अभ्यागताय वा महोक्षं वा महाजं वा पचेदेवमस्यातिथ्यं कुर्वन्तीति। उदकक्रिया-मशौचञ्च द्विवर्षात् प्रभृति मातृउभयं कुर्य्यात्। दन्तजनना-दित्येके। शरीरमग्निना संयोज्यानवेक्षमाणा अपोऽभ्यवयन्ति।

ततस्तस्था एव सव्योत्तराभ्यां पाणिभ्यामुदकक्रियां कुर्वन्ति। अयुग्मा दक्षिणामुखा:। पितृणां वा एषा दिग्या दक्षिणा। गृहान् व्रजित्वा स्रस्तरे त्र्यहमनश्नन्त आसीरन्। अशक्तौ क्रीतोत्पन्नेन वर्त्तेरन्।

दशाहं मरणाशौचं सपिण्डेषु विधीयते।

मरणात् प्रभृति दिवसगणना। सपिण्डता सप्तपुरुषं विज्ञायते। अप्रत्तानां स्त्रीणां त्रिपुरुषं त्रिदिनं विज्ञायते। प्रत्तानामितरे कुर्व्वीरन्। तांश्च तेषां जननेऽप्येवमेव निपुणां शुद्धिमिच्छतां मातापित्रोर्बीजनिमित्तत्वात्। अथाप्युदाहरन्ति।

नाशौचं सूतके पुंस: संसर्गञ्चेन्नगच्छति।
रजस्तत्राशुचि ज्ञेयं यच्च पुंसि न विद्यते॥
ब्राह्मणो दशरात्रेण पञ्चदश रात्रेण भूमिप:।
विंशतिरात्रेण वैश्य: शूद्रोमासेन शुद्ध्यति॥
अशौचे यस्तु शूद्रस्य सूतके वापि भुक्तवान्।
स गच्छेन्नरकं घोरं तिर्य्यग्योनिषु जायते॥
अनिर्दशाहे पक्वान्नं नियोगाद्यस्तु भुक्तवान्।
कृमिर्भूत्वा स देहान्ते तद्विष्टामुपजीवति॥

द्वादशमासान् द्वादशार्द्धमासान् वा अनश्नन् संहिताध्यायन: पूतीभवतीति विज्ञायते। ऊनद्विवर्षे प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रमाशौचं सद्य:शौचमिति गौतम:। देशान्तरस्थे प्रेते ऊर्द्ध्वं दशाहाच्चैकरात्रमाशौचम्। आहिताग्निश्चेत् प्रवसन् म्रियते पुन:संस्कारं कृत्वा शववच्छौच

मिति गौतमः। उपपतिघ्न्यानरजस्वलाह्वतिकाशुचीनुपस्पृश्य सशिरा अभ्युपेयादपः।

इति वासिष्ठे धर्मशास्त्रे चतुर्थोऽध्यायः।

---

## पञ्चमोऽध्यायः।

अस्वतन्त्रा स्त्री पुरुषप्रधाना अनग्निरनुदक्या च अनृतमिति विज्ञायते। अथाप्युदाहरन्ति।

पिता रक्षति कौमारे भर्त्ता रक्षति यौवने।
पुत्राश्च स्थविरे भावे न स्त्री स्वातन्त्र्य मर्हति॥
तस्या भर्त्तुरभिचार उक्तः प्रायश्चित्तरहस्येषु।
मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति॥

त्रिरात्रं रजस्वलाऽशुचिर्भवति सा नाञ्ज्यात् नाभ्यञ्ज्यात् नाप्सुस्नायात् अधःशयीत दिवा न स्वप्यात् नाग्निं स्पृशेत् न रज्जुं प्रसृजेत् न दन्तान् धावयेत् न मांसमश्नीयात् न ग्रहान् निरीक्षेत न हसेत् न किञ्चिदाचरेत् नाञ्जलिना जलं पिवेत् न खर्व्वेण न लोहितायसेन वा। विज्ञायते हीन्द्रस्त्रिशीर्षाणं त्वाष्ट्रं हत्वा पाप्मना गृहीतो मन्यत इति। तं सर्व्वाणि भूतान्यभ्याक्रोशन् भ्रूणहन् भ्रूणहन् भ्रूणहन्निति। स स्त्रिय उपाधावत्। अस्यै मे ब्रह्महत्यायै तृतीयं भागं गृह्णीतेति गत्वैवमुवाच। ता अब्रुवन् किं नोऽभूदिति। सोऽब्रवीद्वरं वृणीध्वमिति। ता अब्रुवन्नृतौ प्रजां विन्दामह इति कामं मा विजानीमोऽलन्सम्भवाम इति यथेच्छया आप्रसवकालात् पुरुषेण सह मैथुनभावेन सम्भवाम इति चैषोऽस्माकं वरस्तथे-

न्द्रेयोक्तास्ताः प्रतीजग्मुरुक्तस्तृतीयं भ्रूणहत्यायाः। सैषा भ्रूणहत्या मासि मास्याविर्भवति। तस्माद्रजस्वलान्नं नाश्नीयात्। अतश्च भ्रूणहत्याया एवैतद्रूपं प्रतिमास्यान्ते कञ्चुकमिव। तदाहुर्ब्रह्मवादिनः। अञ्जनाभ्यञ्जनमेवास्या न प्रतिग्राह्यं तद्धि स्त्रियोऽन्नमिति तस्मात्तस्यास्तत्र मन्य मन्यन्ते आचारा याश्च योषित इति। सेयमुपयाति।

उदक्यास्त्वासते तेषां येच केचिदनग्नयः।
कुलञ्चाश्रोत्रियाः पापाः सर्व्वे ते शूद्रधर्मिणः॥

इति वाशिष्ठे धर्मशास्त्रे पञ्चमोऽध्यायः।

---

## षष्ठोऽध्यायः।

आचारः परमोधर्मः सर्व्वेषामितिनिश्चयः।
हीनाचारपरीतात्मा प्रेत्य चेह विनश्यति॥
नैनं तपांसि न ब्रह्म नाग्निहोत्रं न दक्षिणा।
हीनाचाराश्रितं भ्रष्टं तारयन्ति कथञ्चन॥

आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः।
छन्दांस्येनं मृत्युकाले त्यजन्ति नीड़ं शकुन्ता इव जातपक्षाः॥
आचारहीनस्य तु ब्राह्मणस्य वेदाः षड़ङ्गा अखिलाः सपक्षाः।
कां प्रीतिमुत्पादयितुं समर्थाअन्धस्य दारा इव दर्शनीयाः॥
नैनं छन्दांसि वृजिनात्तारयन्ति मायाविनं मायया वर्त्तमानम्
तत्राक्षरे सम्यगधीयमाने पुनाति तद्ब्रह्म यथावदिष्टम्॥

दुराचारो हि पुरुषो लोके भवति निन्दितः।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च॥

आचारात् फलते धर्ममाचारात् फलते धनम् ।
आचारात् श्रियमाप्नोति आचारो हन्त्यलक्षणम् ॥
सर्व्वलक्षणहीनोऽपि यः सदाचारवान्नरः ।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥
आहारनिर्हारविहारयोगाः सुसंवृता धर्मविदा तु कार्य्याः ।
वाग्बुद्धिवीर्य्याणि तपस्तथैव धनायुषी गुप्ततमे च कार्य्ये ॥
उभे मूत्रपुरीषे तु दिवा कुर्य्यादुदङ्मुखः ।
रात्रौ कुर्य्याद्दक्षिणास्य एवं ह्यायु र्न रिष्यते ॥
प्रत्यग्निं प्रतिसूर्य्यञ्च प्रतिगां प्रति च द्विजम् ।
प्रतिसोमोदकं सन्ध्यां प्रज्ञा नश्यति मेहतः ॥
न नद्यां मेहनं कार्य्यं न पथि न च भस्मनि ।
न गोमये नवा कृष्टे नोप्ते चेत्रे न शाद्वले ॥
छायायामन्धकारे वा रात्रावहनि वा द्विजः ।
यथा सुखमुखः कुर्य्यात् प्राणबाधभयेषु च ॥
उद्धृताभिरद्भिः कार्य्यं कुर्य्यात्स्नानमनुद्धृताभिरपि ।
आहरेन्मृत्तिकां विप्रः कूलात् ससिकतां तथा ॥
अन्तर्जले देवगृहे वल्मीके मूषिकस्थले ।
कृतशौचावशिष्टे च न ग्राह्याः पञ्च मृत्तिकाः ॥
एका लिङ्गे करे तिस्र उभाभ्यां द्वे तु मृत्तिके ।
पञ्चापाने दशैकस्मिन्नुभयोः सप्त मृत्तिकाः ॥
एतच्छौचं गृहस्थस्य द्विगुणं ब्रह्मचारिणः ।
वानप्रस्थस्य त्रिगुणं यतीनान्तु चतुर्गुणम् ॥
अष्टौ ग्रासा मुनेर्भक्तं वानप्रस्थस्य षोड़श ।
द्वात्रिंशत्तु गृहस्थस्य अमितं ब्रह्मचारिणः ॥

अनड्वान् ब्रह्मचारी च आहिताग्निश्च ते त्रयः।
भुञ्जाना एव सिध्यन्ति नैषां सिद्धिरनश्नताम्॥

तपोदानोपहारेषु व्रतेषु नियमेषु च।
इज्याध्ययनधर्मेषु यो नासक्तः स निष्क्रियः॥

योगस्तपोदमोदानं सत्यं शौचं दया श्रुतम्।
विद्या विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम्॥

सर्वत्र दान्ताः श्रुतपूर्णकर्णा जितेन्द्रियाः प्राणिवधे निवृत्ताः।
प्रतिग्रहे सङ्कुचिताग्रहस्तास्ते ब्राह्मणास्तारयितुं समर्थाः॥

असूयकः पिशुनश्चैव कृतघ्नो दीर्घरोषकः।
चत्वारः कर्मचाण्डाला जन्मतश्चापि पञ्चमः॥

दीर्घवैरमसूयाश्च असत्यं ब्रह्मदूषणम्।
पैशुन्यं निर्दयत्वञ्च जानीयाच्छूद्रलक्षणम्॥

किञ्चिद्वेदमयं पात्रं किञ्चित् पात्रं तपोमयम्।
पात्राणामपि तत्पात्रं शूद्रान्नं यस्य नोदरे॥

शूद्रान्नरसपुष्टाङ्गो ह्यधीयानोऽपि नित्यशः।
जुह्वत्वापि यजित्वापि गतिमूर्द्ध्वां न विन्दति॥

शूद्रान्नेनोदरस्थेन यः कश्चिन्म्रियते द्विजः।
स भवेच्छूकरो ग्राम्यस्तस्य वा जायते कुले॥

शूद्रान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति।
यस्यान्नं तस्य ते पुत्रा नच स्वर्गार्हको भवेत्॥

स्वाध्यायाढ्यं योनिमित्रं प्रशान्तं चैतन्यस्थं पापभीरुं बहुज्ञम्।
स्त्रीयुक्तान्नं धार्मिकं गोशरण्यं व्रतैः क्षान्तं तादृशं पात्रमाहुः॥

आमपात्रे यथा न्यस्तं क्षीरं दधि घृतं मधु।
विनश्येत् पात्रदौर्बल्यात्तच्च पात्रं रसाश्च ते॥

एवं गाश्च हिरण्यञ्च वस्त्रमश्वं महीं तिलान् ।
अविद्वान् प्रतिगृह्णानो भस्मीभवति दारुवत् ॥

नाङ्गं नखञ्च वादित्रं कुर्य्यात् । नचापोऽञ्जलिना पिबेत् । न पादेन पाणिना वा राजानमपि हन्यात् न जलेन जलम् । नेष्टकाभिः फलानि पातयेत् न फलेन फलम् । न कल्कपुटकोभवेत् । न म्लेच्छभाषां शिक्षेत । अथाप्युदाहरन्ति ।

न पाणिपादचपलो न नेत्रचपलो भवेत् ।
नचाङ्गचपलोविप्र इति शिष्टस्य गोचरः ॥
पारम्पर्य्यागतो येषां वेदः सपरिबृंहणः ।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥
यन्न सन्तं नचासन्तं नाश्रुतं न बहुश्रुतम् ।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित् स ब्राह्मण इति ॥

इति वाशिष्ठे धर्मशास्त्रे षष्ठोऽध्यायः ।

---

## सप्तमोऽध्यायः ।

चत्वार आश्रमा ब्रह्मचारिगृहस्थवानप्रस्थपरिव्राजकाः । तेषां वेदमधीत्य वेदौ वा वेदान् वा अविशीर्णब्रह्मचर्य्योऽपनिच्छेत्तमावशेत् । ब्रह्मचार्य्याचार्य्यं परिचरेदाशरीरविमोक्षात् । आचार्य्ये प्रमीतेऽग्निं परिचरेत् । विज्ञायते हि चाहवाग्निराचार्य्य इति । संयतवाक् चतुर्थषष्ठाष्टमकालभोजी भैक्षमाचरेत् । गुर्वधीनो जटिलः शिखाजटो वा गुरुं गच्छन्तमनुगच्छेदासीनश्चानुतिष्ठेत् शयानश्चासीन उपवसेदाहूता-

ध्यायी सर्वभैक्ष्यं निवेद्य तदनुज्ञया भुञ्जीत। खट्वाशयनदन्तप्रक्षालनाभ्यञ्जनवर्जो तिष्ठेदहनि रात्रावासीत। त्रिः कृत्वोऽभ्युपेयादपोऽभ्युपेयादपः।

इति वाशिष्ठे धर्मशास्त्रे सप्तमोऽध्यायः।

---

## अष्टमोऽध्यायः॥

गृहस्थो विनीतक्रोधहर्षो गुरुणानुज्ञातः स्नात्वा असमानार्षामस्पृष्टमैथुनां यवीयसीं सदृशीं भार्य्यां विन्देत्। पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्यः। वैवाह्यमग्निमिन्धीत्। सायमागतमतिथिं नावरुन्ध्यात्। नास्यानश्नन् गृहे वसेत्।

यस्य नाश्नाति वासार्थी ब्राह्मणो गृहमागतः।
सुकृतं तस्य यत् किञ्चित् सर्वमादाय गच्छति॥
एकरात्रन्तु निवसन्नतिथिर्ब्राह्मणः स्मृतः।
अनित्यं हि स्थितिर्यस्मात्तस्मादतिथिरुच्यते॥
नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथा।
काले प्राप्ते अकाले वा नास्यानश्नन् गृहे वसेत्॥

अश्रद्धीलोऽस्पृहयालुः। फलमन्याधेयाय नानाहिताग्निः स्यादलञ्च सोमपानाय नासोमयाजी स्यात्। युक्तः स्वाध्याये प्रजनने यज्ञे च गृहेष्वभ्यागतं प्रत्युत्थानासनशयनवाक्सूनृताभिर्मानयेत्। यथाशक्ति चान्नेन सर्वभूतानि।

गृहस्थएव यजते गृहस्थस्तप्यते तपः।

चतुर्णामाश्रमाणान्तु गृहस्थस्तु विशिष्यते ॥
यथा नदीनदाः सर्वे समुद्रे यान्ति संस्थितिम्।
एवमाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥
यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः।
एवं गृहस्थमाश्रित्य सर्वे जीवन्ति भिक्षुकाः ॥
नित्योदकी नित्ययज्ञो पवीती
नित्यस्वाध्यायी पतितान्नवर्ज्जी।
ऋतौ गच्छन् विधिवच्चजुह्वन् ब्राह्मण-
श्च्यवते ब्रह्मलोकात् ब्रह्मलोकादिति ॥

इतिवाशिष्ठे धर्मशास्त्रे ऽष्टमोऽध्यायः ॥

---

## नवमोऽध्यायः।

वानप्रस्थोजटिलश्चीराजिनवासा ग्रामञ्च न प्रविशेत्। न फालकृष्टमधितिष्ठेत्। अकृष्टं मूलफलं सञ्चिन्वीत। ऊर्द्ध्वरेताः क्षमाशयः। मूलफलभैक्षेणाश्रमागतमतिथि मर्च्चयेत्। दद्यादेव न प्रति गृह्णीयात्। त्रिषवणमुदकमुपस्पृशेत्। श्रावणकेनाग्निमाधायाहिताग्निः स्याद्वृक्षमूलिकऊर्द्ध्वं षड्भ्योमासेभ्योऽनग्निरनिकेतः। दद्याद्देवपितृमनुष्येभ्यः। स गच्छेत् स्वर्गमानन्त्यमानन्त्यम् ॥

इति वाशिष्ठे धर्मशास्त्रे नवमोऽध्यायः ॥

---

## दशमोऽध्यायः।

परिव्राजकः सर्वभूताभयदक्षिणां दत्त्वा प्रतिष्ठेत्। अथाप्युदाहरन्ति।

अभयं सर्वभूतेभ्योदत्त्वा चरति योद्विजः।
तस्यापि सर्वभूतेभ्यो न भयं जातु विद्यते॥
अभयं सर्वभूतेभ्यो दत्त्वा यस्तु वि वर्त्तते।
हन्ति जातानजातांश्च प्रतिग्टह्णाति यस्य च॥
संन्यसेत् सर्वकर्माणि वेदमेकं न संन्यसेत्।
वेदसन्न्यासतः शूद्रस्तस्माद्वेदं न संन्यसेत्॥
एकाक्षरं परं ब्रह्म प्राणायमः परन्तपः।
उपवासात् परं भैक्षं दया दानाद्विशिष्यते॥

मुण्डोऽममत्वपरिग्रहः सप्तागाराण्यसङ्कल्पितानि चरेद्भैक्षं विधूमे सन्नमुषले एकशाटीपरिहृतोऽजिनेन वा गोप्रलूनैस्तृणैर्वेष्टितशरीरः स्थण्डिलशाय्यनित्यां वसतिं वसेत् ग्रामान्ते देवगृहे शून्यागारे वृक्षमूले वा मनसा ज्ञानमधीयानः। अरण्यनित्यो न ग्राम्य पशूनां सन्दर्शने विहरेत्। अथाप्युदारन्ति॥

अरण्यनित्यस्य जितेन्द्रियस्य सर्वेन्द्रियप्रीतिनिवर्त्तकस्य।
अध्यात्मचिन्तागतमानसस्य भुवा ह्यनावृत्तिरुपेक्षकस्य॥
अव्यक्तलिङ्गोऽव्यक्ताचारो ऽनुन्मत्तउन्मत्तवेशः।
अथाप्युदाहरन्ति॥
न शब्दशास्त्राभिरतस्य मोक्षो नचापि लोके ग्रहणे रतस्य।
न भोजनाच्छादनतत्परस्य नचापि रम्यावसथप्रियस्य॥
नचोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया।
अनुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित्॥
अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत्।
प्राणयात्रिकमात्रः स्यान्मात्रासङ्गाद्विनिर्गतः॥

न कुर्य्यां नोदके सङ्गे न चैले न त्रिपुष्करे ।
नागारे नासने नान्ते यस्य वै मोक्षवित्तमः ॥

ब्राह्मणकुले वा यल्लभेत्तद्भुञ्जीत सायं मधुमांससर्पिर्वर्ज्जम् । यतीन् साधुन् वा गृहस्थान् सायं प्रातश्च तर्पयेत् । ग्रामे वा वसेदजिह्मोऽशरणोऽसङ्कुसुकः । नचेन्द्रियसंयोगं कुर्वीत केनचित् । उपेक्षकः सर्व्वभूतानां हिंसानुग्रहपरिहारेण । पैशुन्यमत्सराभिमानाहङ्काराश्रद्धानार्ज्जवात्मस्तवपरगर्हादम्भलोभमोहक्रोधासूयाविवर्ज्जनं सर्वाश्रमिणां धर्म्मिष्ठो यज्ञोपवीत्युदकमण्डलुहस्तः शुचिर्ब्राह्मणोवृषलान्नपानवर्ज्जी न हीयते ब्रह्मलोकात् ॥

इति वाशिष्ठे धर्म्मशास्त्रे दशमोऽध्यायः ॥

---

## एकादशोऽध्यायः ।

षट् कर्म्मा गृहदेवताभ्योवलिं हरेत् । श्रोत्रियायाग्रं दत्त्वा ब्रह्मचारिणे वानन्तरं पितृभ्योदद्यात्ततोऽतिथिं भोजयेत् स्वेष्टायासमानुपूर्व्व्येण स्वगृह्याणां कुमारवालवृद्धतरुण प्रभृतीं स्ततोऽपरान् गृह्यान् श्वचाण्डाल पतितवायसेभ्योभूमौ निर्वपेत शूद्रेभ्यउच्छिष्टं वा दद्याच्छेषं यती भुञ्जीत सर्वोपयोगेन पुनःपाको यदि निवृत्ते वैश्वदेवेऽतिथिरागच्छेद्विशेषेणास्मान्नं कारयेद्विजायते ऽह्नि वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणोगृहम् । तस्मादपयानमन्यत्र वर्षाभ्यस्तां हि शान्तिजनाविद्धिरिति तं भोजयित्वोपसीतासीमान्तादनुव्रजेदनुज्ञाताद्वा । परपक्षाजर्द्धं चतुर्थ्यां पितृभ्योदद्यात् पूर्वेद्युर्ब्राह्मणान्

संनिपात्य यतीन् गृहस्थान् साधून्वा परिणतवयसोऽविकर्मस्थान् श्रोत्रियान् शिष्यानन्तेवासिनः शिष्यानपि गुणवतो भोजयेद्विलग्नशुक्लविम्टश्यावदन्तकुष्ठिकुनखिवर्जम् । अथाप्युदाहरन्ति ॥

अथ चेन्मन्त्रविद्युक्तः शारीरैः पङ्क्तिदूषणैः ।
अदूष्यन्तं यमः प्राह पङ्क्तिपावन एव सः ॥
श्राद्धेनोद्वासनीयानि उच्छिष्टान्यादिनक्षयात् ।
खे पतन्ति हि या धारास्ता पिबन्त्यकृतोदकाः ॥
उच्छिष्टेन प्रपुष्टास्ते यावन्नास्तमितो रविः ।
क्षीरधारास्ततोयान्त्यक्षयाः सञ्चरभागिनः ॥
प्राक्संस्कारप्रमीतानां प्रवेशनमिति श्रुतिः ।
भागधेयं मनुः प्राह उच्छिष्टोच्छेषणे उभे ॥
उच्छेषणं भूमिगतं विकिरेल्लेपसोदकम् ।
अनुप्रेतेषु विसृजेदप्रजानामनायुषाम् ॥
उभयोः शाखयोर्मुक्तं पितृभ्योऽन्नं निवेदितम् ।
तदन्तरं प्रतीक्षन्ते ह्यसुरा दुष्टचेतसः ॥
तस्मादशून्यहस्तेन कुर्यादन्नमुपागतम् ।
भोजनं वा समालभ्य तिष्ठतोच्छेषणे उभे ॥
द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा ।
भोजयेत् सुसमृद्धोऽपि न प्रसज्येत विस्तरे ॥
सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदः ।
पञ्चैतान् विस्तरो हन्ति तस्मात्तं परिवर्जयेत् ॥
अपिवा भोजयेदेकं ब्राह्मणं वेदपारगम् ।
शुभशीलोपसंपन्नं सर्वलक्षणवर्जितम् ॥

यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् ।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु ॥
देवतायतने कृत्वा ततः श्राद्धं प्रवर्त्तते ।
प्रास्येदग्नौ तदन्नन्तु दद्याद्वा ब्रह्मचारिणे ॥
यावदुष्णं भवत्यन्नं यावदश्नन्ति वाग्यताः ।
तावद्धि पितरोऽश्नन्ति यावन्नोक्ता हविर्गुणाः ॥
हविर्गुणा न वक्तव्याः पितरोभावतर्पिताः ।
पितृभिस्तर्पितैः पश्चाद्वक्तव्यं शोभनं हविः ॥
नियुक्तस्तु यदा श्राद्धे दैवे तन्तु समुत्सृजेत् ।
यावन्ति पशुरोमाणि तावन्नरकमृच्छति ॥
त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ।
त्रीणि चात्र प्रशंसन्ति शौचक्रोधमत्वराम् ॥
दिवसस्याष्टमे भागे मन्दीभवति भास्करः ।
स कालः कुतपोनाम पितृणां दत्तमक्षयम् ॥
श्राद्धं दत्त्वा च भुक्त्वा च मैथुनं योऽधिगच्छति ।
भवन्ति पितरस्तस्य तन्मासं रेतसोभुजः ॥
यतस्ततोजायते च दत्त्वा भुक्त्वा च पैतृकम् ।
न स विद्यामवाप्नोति क्षीणायुश्चैव जायते ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
उपासते सुतं जातं शकुन्ता इव पिप्पलम् ॥
मधुमांसैश्च शाकैश्च पयसा पायसेन वा ।
अधनो दास्यति श्राद्धं वर्षासु च मघासु च ॥
सन्तानवर्द्धनं पुत्त्रं तृप्यन्तं पितृकर्मणि ।
देवब्राह्मणसम्पन्नमभिनन्दन्ति पूर्व्वजाः ॥

नन्दन्ति पितरस्तस्य सुवृष्टैरिव कर्षकाः।
यन्मयास्यो ददात्यन्नं पितरस्तेन पुष्पिणः॥

आवश्याग्रहायण्योश्चान्वष्टकायाश्च पितृभ्योदद्याद्द्रव्यदेशब्राह्मणसन्निधाने वा कालनियमोऽवश्यं। योब्राह्मणोऽग्निमादधीत दर्शपूर्णमासाग्रयणेष्टिचातुर्मास्यपशुसोमैश्च यजते। नैयमिकंह्येतदृणं संस्तुतश्च विज्ञायते हि त्रिभिर्ऋणैर्ऋणवान् ब्राह्मणोजायते यज्ञेन देवेभ्यः प्रजया पितृभ्योब्रह्मचर्य्येण ऋषिभ्यः। इत्येष वा अनृणो यज्वा यः पुत्री ब्रह्मचर्य्यवानिति गर्भाष्टमेषु ब्राह्मणमुपनयीत गर्भैकादशेषु राजन्यं गर्भद्वादशेषु वैश्यम्। पालाशोदण्डो बैल्वोवा ब्राह्मणस्य नैयग्रोधः चत्रियस्य वा औडुम्बरोवा वैश्यस्य। कृष्णाजिनमुत्तरीयं ब्राह्मणस्य रौरवं चत्रियस्य गव्यं वस्ताजिनं वैश्यस्य। शुक्लमाहतं वासोब्राह्मणस्य माञ्जिष्ठं चत्रियस्य हारिद्रं कौशेयं वैश्यस्य सर्वेषां वा तान्तवमरक्तम्। भवत्पूर्वां ब्राह्मणोभिक्षां याचेत भवन्मध्यां राजन्योभवदन्त्यां वैश्यस्य। आषोडशा ब्राह्मणस्यानतीतः कालआद्वाविंशात् चत्रियस्याचतुर्विंशाद्वैश्यस्यातऊर्द्ध्वं पतितसावित्रीका भवन्ति।

नैनामुपनयेन्नाध्यापयेन्न याजयेन्नैभिर्विवाहयेयुः।
पतितसावित्रीकउद्दालकव्रतञ्चरेत्॥

द्वौ मासौ यावकेन वर्त्तयेन्मासं माक्षिकेणाष्टरात्रं घृतेन षड्रात्रमयाचितं त्रिरात्रमभक्षोऽहोरात्रमेवोपवसेत्। अश्वमेधावभृथंगच्छेद्ब्रात्यस्तोमेन वा यजेत्।

इति वाशिष्ठे धर्मशास्त्रे एकादशोऽध्यायः।

---

## द्वादशोऽध्यायः ।

अथातः स्नातकव्रतानि । स न कञ्चिद्याचेतान्यत्र राजान्तेवासिभ्यः क्षुधापरीतस्तु किञ्चिदेव याचेत कृतमकृतं वा क्षेत्रं गामजाविकं सन्ततं हिरण्यं धान्यमन्नं वा नतु स्नातकः क्षुधावसीदेदित्युपदेशो न नद्यां स सहसा संविशेन्न रजस्वलायामयोग्यायाम् । न कुलं कुलं स्याद्वत्सन्तीं विततां नातिक्रमेन्नोद्यन्तमादित्यं पश्येन्नादित्यं तपन्तं नाप्सु मूत्रपुरीषे कुर्यान्न निष्ठीवेत् परिवेष्टितशिरा भूमिमयज्ञियैस्तृणैरन्तर्धाय मूत्रपुरीषे कुर्य्यादुदङ्मुखश्चाह्नि नक्तं दक्षिणामुखः सन्ध्यामासीतोत्तरामुदाहरन्ति ।

स्नातकानान्तु नित्यं स्यादन्तर्व्वासस्तथोत्तरम् ।
यज्ञोपवीते द्वे यष्टिः सोदकश्च कमण्डलुः ॥
अप्सु पाणौ च काष्ठे च कथितं पावकं शुचि ।
तस्मादुदकपाणिभ्यां परिमृज्यात् कमण्डलुम् ॥
पर्य्यग्निकरणं ह्येतन्मनुराह प्रजापतिः ।
कृत्वाचावश्यकार्य्याणि आचामेच्छौचवित्ततइति ॥

प्राङ्मुखोऽन्नानि भुञ्जीत तूष्णीं साङ्गुष्ठं कृत्स्नग्रासं ग्रसेत न च मुखशब्दं कुर्य्यादृतुकालाभिगामी स्यात् पर्ववर्जं स्वदारे वा तीर्थमुपेयदथाप्युदाहरन्ति ।

यस्तु पाणिगृहीताया आस्ये कुर्वीत मैथुनम् ।
भवन्ति पितरस्तस्य तन्मासं रेतसोभुजः ।
या स्यादनतिचारेण रतिसाधर्म्यसंश्रिता ॥

अपिच पावकोऽपि ज्ञायते । अद्य श्वोवा विजनिष्यमाणाः

पतिभिः सह शयन्त इति स्त्रीणामिन्द्रदत्तो वरः। उभ वृक्ष-मारोहेत्र कूपमवरोहेन्नाग्निं मुखेनोपधमेन्नाग्निं ब्राह्मणं चान्तरेण व्यपेयान्नाग्न्योर्ब्राह्मणयोरनुज्ञाप्य वा। भार्य्यया सह नाश्नीयादवीर्य्यवदपत्यं भवतीति वाजसनेयके विज्ञायते। नैन्द्रधनुर्नाम्ना निर्द्दिशेन्मणिधनुरितिब्रूयात्। पालाशमास-नपादुके दन्तधावनमिति वर्जयेत्। नोत्सङ्गे भक्षयेदंसो न भुञ्जीत वैणवं दण्डं धारयेद्रुक्मकुण्डले च। न बहिर्मालां धारयेदन्यत्र रुक्ममय्याः सभासमवायांश्च वर्जयेत्। अथाप्यु-दाहरन्ति।

अप्रामाण्यञ्च वेदानामार्षाणाञ्चैव दर्शनम्।
अव्यवस्था च सर्वत्र एतन्नाशनमात्मन इति॥

दानाहृतो यत्रं गच्छेद्यदि व्रजेदभिन्नचक्रूर्ध्वमध्वानं न प्रतिपद्यते नावञ्च सांशयिकीं बाहुभ्यां न नदीन्तरेदुत्थायाप-ररात्रमधीत्य न पुनः प्रतिसंविशेत्। प्राजापत्ये मुहूर्त्ते ब्राह्मणः स्वनियमाननुतिष्ठेदिति।

इति वाशिष्ठे धर्मशास्त्रे द्वादशोऽध्यायः।

---

## त्रयोदशोऽध्यायः।

अथातः स्वाध्यायस्योपाकर्म श्रावण्यां पौर्णमास्यां प्रौष्ठ-पद्यां वाग्निमुपसमाधाय कृता धानो जुहोति देवेभ्यश्छन्दोभ्य-श्चेति। ब्राह्मणान् स्वस्तिवाच्य दधि प्राश्य तत उपांशु कुर्व्वीत अर्द्धपञ्चममासानर्द्धषष्ठानत ऊर्द्ध्वं शुक्लपक्षेष्वधीयीत। कामन्तु वेदाङ्गानि। तस्यानध्यायाः सन्ध्यास्तमिते स्युस्तत्र

शवे दिवाकीर्त्ये नगरेषु कामं गोमयपर्य्युषिते परिलिखिते वा श्मशानान्ते शयानस्य आह्निकस्य। मानवञ्चात्र श्लोकमुदाहरन्ति।

फलान्यापस्तिलान् भक्ष्यमथान्यच्छ्राद्धिकं भवेत्।
प्रतिगृह्याप्यनध्यायः पाण्यास्या ब्राह्मणाः स्मृता इति॥

धावतः पूतिगन्धिप्रभृतेरिरिणस्थमारूढस्य नावि सेनायाञ्च भुक्त्वा चार्द्रपाणौ वाणशब्दे चतुर्दश्याममावास्यायामष्टम्यामष्टकासु प्रसारितपादोपस्थस्योपाश्रितस्य गुरुसमीपे मिथुनव्यपेतायां वाससा मिथुनव्यपेते नानिर्मुक्ते। न ग्रामान्तेच्छर्दितस्य मूत्रितस्योच्चरितस्य यजुषाञ्च सायंशब्दे वाजीर्णे निर्घातभूमौ च। न चन्द्रसूर्य्योपरागेषु दिङ्नादपर्व्वतनादकम्पप्रपातेषूपलरुधिरपांशुवर्षेष्वाकालिकम्। उल्काविद्युत्सज्योतिषमपर्त्तावाकालिकं वा। आचार्य्ये च प्रेते त्रिरात्रमाचार्य्यपुत्त्रशिष्यभार्य्यास्वहोरात्रम्। ऋत्विग्योनिसम्बन्धेषु च। गुरोः पादोपसंग्रहणं कार्य्यं ऋत्विक्श्वशुरपितृव्यमातुलानवरवयसः प्रत्युत्थायाभिवदेद्ध ये चैव पादग्राह्यास्तेषां भार्य्या गुरोश्च माता पितरौ यो विद्यादभिवन्दितुमहमयम्भोरितिब्रूयाद्यश्च न विद्यात् प्रत्यभिवादं नाभिवदेत्। पतितः पिता परित्याज्यो माता तु पुत्त्रे न पतति। अथाप्युदाहरन्ति।

उपाध्यायाद्दशाचार्य्य आचार्य्याणां शतं पिता।
पितुर्दशशतं माता गौरवेणातिरिच्यते॥
भार्य्याः पुत्त्राश्च शिष्याश्च संसृष्टाः पापकर्मभिः।
परिभाष्य परित्याज्याः पतितो योऽन्यथा भवेत्॥

ऋत्विगाचार्य्यावयाजकानध्यापकौ हेयावन्यत्र हानात्

पतितो नान्यत्र पतितो भवतीत्याङ्करन्यत्र स्त्रियाः सा हि परगमिता तद्भिन्नामनुशामुपेयात्।

गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिरिष्यते।
गुरुवद्गुरुपुत्रस्य वर्त्तितव्यमिति श्रुतिः॥

शास्त्रं वस्त्रं तथान्नानि प्रतिग्राह्याणि ब्राह्मणस्य। विद्याविजयजः सम्बन्धः कर्म च मान्यं पूर्वः पूर्वो गरीयान्। स्थविरबालातुरभारिकचक्रवतां पन्थाः समागमे परस्मै देयो राजस्नातकयोः समागमे राज्ञा स्नातकाय देयः सर्वैरेव वा उत्तमाय। तृणभूम्यग्न्युदकवाक्सूनृतानसूयाः सप्त गृहे नोच्छिद्यन्ते कदाचन कदाचनेति।

इति वाशिष्ठे धर्मशास्त्रे त्रयोदशोऽध्यायः।

---

## चतुर्द्दशोऽध्यायः।

अथातो भोज्याभोज्यञ्च वर्णयिष्यामः। चिकित्सकमृगयुपुंश्चलीदण्डिकस्तेनाभिशस्तषण्डपतितानामभोज्यं कदर्य्यदीक्षितबद्धातुरसोमविक्रयितक्षकरजकशौण्डिकसूचकवार्द्धुषिकचर्मावकृन्तानां शूद्रस्य चायस्यस्योपयच्छे यश्चोपपतिं मन्यते यश्च गृहीततद्धेतुर्यस्य वधार्हं नोपहन्यात् को बन्धमोचो इति चाभिक्रुश्येत् गणान्नं गणिकान्नमथाप्युदाहरन्ति।

नाश्नन्ति श्वपतेर्देवा नाश्नन्ति वृषलीपतेः।
भार्य्याजितस्य नाश्नन्ति यस्य चोपपतिर्गृहे इति॥

एधोदकयवसमूलकुशलाज्युद्यतपानावसथसफरिप्रियङ्गुस्रग्मधुमांसानि नैतेषां प्रतिगृह्णीयादथाप्युदाहरन्ति।

गुर्वर्थं दारमुज्जिहीर्षन्नर्चिष्यन् देवतातिथीन् ।
सर्वतः प्रतिगृह्णीयान्न तु तृप्येत् स्वयं तत इति ॥

न मृगयोरिषुचारिणः परिवर्जमन्नं विज्ञायते ह्यगस्त्यो वर्षसाहस्रिके सत्रे मृगयाञ्चकार तस्यासंस्तु रसमयाः पुरोडाशा मृगपक्षिणां प्रशस्तानामपि ह्यत्रं प्राजापत्यानुश्लोकानुदाहरन्ति ।

उद्यतामाहृतां भिक्षां पुरस्तादप्रचोदिताम् ।
भोज्यां प्रजापतिर्मेने अपि दुष्कृतकारिणः ॥
श्रद्दधानैर्न भोक्तव्यं चौरस्यापि विशेषतः ।
नत्वेव बहुधा तस्य यावानपहृता भवेत् ॥
न तस्य पितरोऽश्नन्ति दशवर्षाणि पञ्च च ।
न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यते ॥
चिकित्सकस्य मृगयोः शल्यहस्तस्य पाशिनः ।
षण्डस्य कुलटायाश्च उद्यतापि न गृह्यत इति ॥

उच्छिष्टमगुरोरभोज्यं स्वमुच्छिष्टमुच्छिष्टोपहतञ्च । यदन्नं केशकीटोपहतञ्च । कामन्तु केशकीटानुद्धृत्याद्भिः प्रोक्ष्य भस्मनावकीर्य्य वाचा च प्रशस्तमुपभुञ्जीतापि ह्यन्नम् । प्राजापत्यानुश्लोकानुदाहरन्ति ।

त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥
देवद्रोण्यां विवाहेषु यज्ञेषु प्रकृतेषु च ।
काकैः श्वभिश्च संस्पृष्टमन्नं तन्न विसर्जयेत् ॥
तस्मात्तदन्नमुद्धृत्य शेषं संस्कारमर्हति ।

द्रवाणां प्लावनेनैव घनानां प्रक्षणेन तु ॥
पाकेन मुखसंस्पृष्टं शुचिरेव हि तद्भवेत् ।

अन्नं पर्य्युषितं भावदुष्टं हृल्लेखं पुनः सिद्धमामभ्रष्टजीर्णपक्वञ्च का-मन्तु दध्याद्दृष्टेन चाभिघारितमुपभुञ्जीतापि च्युतम् । प्रा-जापत्यानुश्लोकानुदाहरन्ति ।

हस्तदत्तास्तु ये स्नेहा लवणं व्यञ्जनानि च ।
दातारं नोपतिष्ठन्ते भोक्ता भुङ्क्ते च किल्विषमिति ॥

लशुनपलाण्डुकेमुकगृञ्जनश्लेष्मातकवृक्षनिर्यासलोहितान्नश्व-नाखखकाकावलीढशूद्रोच्छिष्टभोजनेषु कृच्छ्रातिकृच्छ्र इतरे-ऽप्यन्यत्र मधुमांसफलविकर्षेष्वग्राम्यपशुविषयः सन्धिनीक्षीर-मवत्साक्षीरं गोमहिष्यजातरोमानिर्दशाहानामनामन्त्र्यं ना-प्युदकमपूपधानाकरम्भशक्तुघरकतैलपायसशाकानिलशुक्तानि वर्जयेदन्यांश्च क्षीरयवपिष्टवीरान् । श्वाविच्छल्लकशशकच्छप-गोधाः पञ्चनखा नाभक्ष्याः अनुष्ट्राः पशूनामन्यतोदतश्च मत्स्या-नां वा वेहगवयशिशुमारनक्रकुलीरा विकृतरूपाः सर्पशीर्षाश्च गौरगवयशलभाश्चानुद्दिष्टास्तथा धेन्वनडुहौ मेध्यौ वाजसने-यके । खड्गे तु विवदन्त्यग्राम्यशूकरे च । शकुनानाश्च वि-शुविविष्किरजालपादाः कलविङ्कप्लवहंसचक्रवाकभासमद्गुटि-ट्टिभाटबान्धनक्तञ्चरा दार्व्वाघाटाश्चटकवैलातकहारितखञ्जरीट-ग्राम्यकुक्कुटशुकसारिकाकोकिलक्रव्यादा ग्रामचारिणश्च ग्रामा-चारिण्यश्चेति ।

इति वाशिष्ठे धर्मशास्त्रे चतुर्दशोऽध्यायः ।

# पञ्चदशोऽध्यायः ।

शोणितशुक्रसम्भवः पुरुषो मातापितृनिमित्तकः । तस्य प्रदानविक्रयत्यागेषु मातापितरौ प्रभवतः नत्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा सहि सन्तानाय पूर्वेषाम् । न स्त्री दद्यात् प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्त्तुः । पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि चावेद्य निवेशनस्य मध्ये व्याहृतिर्हुत्वा दूरेबान्धवमसन्निकृष्टमेव । सन्देहे चोत्पन्ने दूरे बान्धवं शूद्रमिव स्थापयेत् । विज्ञायते ह्येकेन बहून् जायत इति । तस्मिंश्चेत् प्रतिगृहीते औरसः पुत्र उत्पद्यते चतुर्थभागभागी स्यात् । यदि नाभ्युदयिके युक्तः स्याद्वेदविप्लविनः सव्येन पादेन प्रहृत्याग्रान् दर्भान् लोहितान् वोपस्तीर्य्य पूर्णं पात्रमस्मै निनयेन्निनेतारश्चास्य प्रकीर्य्य केशान् ज्ञातयोऽन्वारभेरन्नपसव्यं कृत्वा गृहेषु स्वैरमापाद्येरन्नत ऊर्द्धं तेन सहधर्ममीयुस्तद्धर्माणस्तद्धर्मोपन्नाः । पतितानान्तु चरितव्रतानां प्रत्युद्धारोऽप्युदाहरन्ति ।

अग्न्यभ्युद्धरतां गच्छेत् क्रीड़न्निव हसन्निव ।

यश्चोत्पातयतां गच्छेच्छोचन्निवाचार्य्यमातृपितृहन्तारस्तत्प्रसादाद्भायाद्वा एषां प्रत्यापत्तिः पूर्णाब्दात् प्रहृत्याद्वा काञ्चनं पात्रं माहेयं वा पूरयित्वापोहिष्ठाभिरेव षड्भिर्ऋग्भिः सर्वत्र वाभिरिक्तस्य प्रत्युद्धारपुत्रजन्मना व्याख्यातः ।

इति वाशिष्ठे धर्मशास्त्रे पञ्चदशोऽध्यायः ।

---

# षोड़शोऽध्याय: ।

अथ व्यवहारा:। राजमन्त्री सह:कार्य्याणि कुर्य्याद्द्वयो-र्विवदमानयोरत्र पक्षान्तरं गच्छेद् यथासनमपराधोऽत्यन्ते नापराध:। सम: सर्वेषु भूतेषु यथासनमपराधोऽस्याद्यवर्णयो र्विधानत: सम्पन्नतामाचरेत्। राजा बालानामप्राप्तव्यवहाराणां प्राप्तकाले तु तद्वत्।

लिखितं साक्षिणोभुक्ति: प्रमाणं त्रिविधं स्मृतम्।
धनस्वीकरणं पूर्वं धनी धनमवाप्नुयादिति॥

मार्गक्षेत्रयोर्विसर्गे तथा परिवर्त्तनेन ऋणग्रहेष्वर्थान्तरेषु त्रिपादमात्रम्। गृहक्षेत्रविरोधे सामन्तप्रत्यय: सामन्तविरोधेऽपि लेख्यप्रत्यय: प्रत्यभिलेख्यविरोधे ग्रामनगरवृद्धश्रेणिप्रत्ययोऽस्याप्युदाहरन्ति।

य एकं क्रीतमाधेयमन्वाधेयं प्रतिग्रहम्।
यस्मादुपगमोवोणौ तथा धूमशिखा स्वामी इति॥

तत्र भुक्ते दशवर्षमेवोदाहरन्ति।

आधि: सीमाधिकश्चैव निक्षेपोपनिधि: स्त्रिय:।
राजस्वं श्रोत्रियद्रव्यं न राजा दातुमर्हतीति॥

तत्र सम्भोगेन गृहीतव्यम्। स्त्रीणां द्रव्याणि राजगामीनि भवन्ति। तथा राजा मन्त्रिभि: सह नागरैश्च कार्य्याणि कुर्य्यादसौ वा राजा श्रेयान् वसुपरिवार: स्याद्गृहभ्रं परिवारं वा राजा श्रेयानभ्रपरिवार: स्यान्न भ्रंशोऽभ्रपरिवार: स्यान्न परिवाराद्दोषा: प्रादुर्भवन्ति : स्वेयहारविनाशनं तस्मात् पूर्वमेव परिवारं इच्छेत्। अथ साक्षिण:। श्रोत्रियो

रूपवान् शीलवान् पुण्यवान् सत्यवान् साक्षिणः सर्वे एव वा स्त्रीणान्तु साक्षिणः स्त्रियः कुर्य्यात् द्विजानां सदृशा द्विजाः शूद्राणां सन्तः शूद्राश्च अन्त्यानामन्त्याः। अथाप्युदाहरन्ति।

प्रातिभाव्यं वृथादानमाक्षिकं सौरिकञ्च यत्।
दण्डशुल्कावशिष्टञ्च न पुत्रो दातुमर्हतीति॥
ब्रूहि साक्षिन्! यथातत्त्वं लम्बन्ते पितरस्तव।
तव वाक्यमुदीक्षन्तमुत्पतन्ति पतन्ति च॥
नग्नोमुण्डः कपाली च भिक्षार्थं क्षुत्पिपासितः।
अन्धः शत्रुकुले गच्छेद् यस्तु साक्ष्यनृतं वदेत्॥
पञ्च कन्यानृते हन्ति दश हन्ति गवानृते।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते॥
व्यवहारे मृते दारे प्रायश्चित्ते कुलस्त्रियः।
तेषां पूर्वपरिच्छेदाच्छेद्यन्ते वा यवादिभिः॥

उद्वाहकाले रतिसंप्रयोगे प्राणात्यये सर्वधनापहारे।
विप्रस्य चार्थे ह्यनृतं वदेयुः पञ्चानृतान्याहुरपातकानि॥
स्वजनस्य ह्यर्थे यदिवार्थहेतोः पक्षाश्रयेणैव वदन्ति कार्यम्।
ते शब्दवादं स्वकुलानपूर्व्वान् स्वर्गस्थितान् तानपि पातयन्त्यपि॥

इति वाशिष्ठे धर्मशास्त्रे षोड़शोऽध्यायः।

---

## सप्तदशोऽध्यायः।

ऋणमस्मिन् सन्नयति अमृतत्वञ्च गच्छति।
पिता पुत्त्रस्य जातस्य पश्येच्च जीवतोमुखम्।
अनन्ताः पुत्रिणां लोका नापुत्रस्य लोकोऽस्तीति श्रूयते॥

प्रजाः सन्त्वपुत्रिण इत्यपि शापः । प्रजाभि रग्नेऽमृत-त्वमश्यामित्यपि नियमोभवति ॥

पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते ।

अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति पिष्टपमिति ॥

क्षेत्रिणः पुत्रो जनयितुः पुत्रइति विवदन्ते । तत्रोभयथा-प्युदाहरन्ति ॥

यद्यन्यो गोषु वृषभो वत्सान् जनयते सुतान् ।

गोमिनामेव ते वत्सा मोघं स्यन्दनमोक्षणमिति ॥

अप्रमत्ता रक्षत तु वैनं मा च क्षेत्रे परे बीजानि वासौ जन-यितुः पुत्रो भवति । सम्परायेमोघं रेतोऽकुरुत तन्तुमेतमिति ।

बह्वनामेकजातानामेकश्चेत् पुत्रवान्नरः ।

सर्वे ते तेन पुत्रेण पुत्रवन्तइति श्रुतिः ॥

बह्वीनां द्वादश त्वेव पुत्राः पुराणदृष्टाः स्वयमुत्पादितः स्वक्षेत्रे संस्कृतायां प्रथमः तदलाभे नियुक्तायां क्षेत्रजो द्वितीयः तृतीयः पुत्रिका विज्ञायते अभ्रातृका पुंसः पितृनभ्येति प्रती-चीनं गच्छति पुत्रत्वम् । श्लोकः ॥

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् ।

अस्यां यो जायते पुत्रः स मे पुत्रोभवेदिति ॥

पौनर्भवश्चतुर्थः पुनर्भूः कौमारं भर्त्तारमुत्सृज्यान्यैः सह चरित्वा तस्यैव कुटुम्बमाश्रयति सा पुनर्भूर्भवति । या च क्लीवं पतितमुन्मत्तं वा भर्त्तारमुत्सृज्यान्यं पतिं विन्दते मृते वा सा पुनर्भूर्भवति । कानीनः पञ्चमो या पितुर्गृहेऽसंस्कृता कामादुत्पादयेन्मातामहस्य पुत्रोभवतीत्याहुः । अथाप्यु-दाहरन्ति ॥

अप्रत्ता दुहिता यस्य पुत्रं विन्दति तुल्यतः ।
पुत्री मातामहस्तेन दद्यात् पिण्डं हरेद्धनमिति ॥

गूढे च गूढोत्पन्नः षष्ठ इत्येते दायादा बान्धवास्त्रातारो-महतोभयादित्याहुः । अथादायादास्तत्र सहोढ एव प्रथमो या गर्भिणी संस्क्रियते तस्यां जातः सहोढः पुत्रोभवति । दत्तकोद्वितीयो यं मातापितरौ दद्याताम् । क्रीतस्तृतीयस्त-च्छुनःशेफेन व्याख्यातं हरिश्चन्द्रोहवै राजा सोजीगर्त्तस्य सोपवत्सैः पुत्रं विक्राय्य स्वयं क्रीतवान् । स्वयमुपागतश्चतुर्थः तच्छुनः शेफेन व्याख्यातं शुनः शेफो हवै यूपे नियुक्तो देवता-स्तुष्टाव तस्येह देवताः पाशं विमुमुचुस्तम्ह त्विजऊचुर्ममैवायं पुत्रो ऽस्त्विति तानाह न सम्पेदे ते सम्पादयामासुरेष एव यं कामयेत तस्य पुत्रोऽस्त्विति तस्येह विश्वामित्रो होतासीत्तस्य पुत्रत्वमि-याय । अपविद्धः पञ्चमो यं मातापितृभ्यामपास्तं प्रति गृह्णी-यात् । शूद्रापुत्रएव षष्ठोभवतीत्याहुरित्येतेऽदायादा बान्धवाः । अथाप्युदाहरन्ति । यस्य पूर्वेषां वर्णानां न कश्चिद्दायादः स्यादेते तस्यापहरन्ति । अथ भ्रातृणां दायविभागो द्व्यंशं ज्येष्ठोहरेद्गवाश्वस्य चानुसदृशमजावयोर्गृहञ्च कनिष्ठस्य कार्ष्णंगां यवसं गृहोपकरणानि च मध्यमस्य मातुः पारिणेयं स्त्रियो विभजेरन् । यदि ब्राह्मणस्य ब्राह्मणीक्षत्रियावैश्यासु पुत्राः स्युस्त्र्यंशं ब्राह्मण्याः पुत्रोहरेत् द्व्यंशं राजन्यायाः पुत्रः सममितरे विभजेरन्नन्येन चैषां स्वयमुत्पादितस्यात् द्व्यंशमेव हरेदन्येषान्वाश्रमान्तरगताः क्लीवोन्मत्तपतिताश्च भरणम् । क्लीवोन्मत्तानां प्रेतपत्नी षण्मासं व्रतचारिण्यक्षारलवणं भुञ्जा-नाः शयीतोर्द्ध्वं षड्भ्योमासेभ्यः स्नात्वा श्राद्धञ्च पत्ये दत्त्वा

विद्याकर्मगुरुयोनिसम्बन्धान् सन्निपात्य पिता भ्राता वा नियोगं कारयेत्तपसे योन्मत्तामवशां व्याधितां वा नियुञ्ज्यात् ज्यायसीमपि षोड़शवर्षां नचेदामयाविनी स्यात् प्राजापत्ये मुहूर्त्ते पाणिग्रहणवदुपचारोऽन्यत्र संस्थाप्य वाक्पारुष्याद्दण्ड-पारुष्याच्च ग्रासाच्छादनस्नानलेपनेषु प्रागग्रामिनी स्यादनियुक्तायामुत्पन्नउत्पादयितुः पुत्त्रो भवतीत्याहुः स्याच्चेन्नियोगिनो दृष्टा लोभान्नास्ति नियोगः । प्रायश्चित्तं वाप्युपनियुञ्ज्यादित्येके । कुमार्य्यृतुमती त्रिवर्षाण्युपासीतोर्द्धं त्रिभ्यः वर्षेभ्यः पतिं विन्देत्तुल्यम् । अथाप्युदाहरन्ति ॥

पितुः प्रदानात्तु यदाहि पूर्वं कन्या वयो यः समतीत्य दीयते ।
सा हन्ति दातारमपीक्षमाणा कालातिरिक्ता गुरुदक्षिणेव च ॥

प्रयच्छेन्नग्निकां कन्यां ऋतुकालभयात् पिता ।
ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति ॥

यावच्च कन्यामृतवः स्पृशन्ति
तुल्यैः सकामामभियाच्यमानाम् ।
भ्रूणानि तावन्ति हतानि ताभ्यां
मातापितृभ्यामिति धर्मवादः ॥

अद्भिर्वाचा च दत्तायां म्रियेताथो वरोयदि ।
नच मन्त्रोपनीता स्यात् कुमारी पितुरेव सा ॥

यावच्चेदाहृता कन्या मन्त्रैर्यदि न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥

पाणिग्रहे मृते बाला केवलं मन्त्रसंस्कृता ।
साच त्वक्षतयोनिः स्यात् पुनः संस्कारमर्हतीति ।

प्रोषितपत्नी पञ्चवर्षा प्रवसेदूयदाकामा यथा प्रेतस्य एवञ्च

वर्णितव्यं स्यात्। एवं पञ्च ब्राह्मणीप्रजाता चत्वारि राजन्या प्रजाता त्रीणि वैश्याप्रजाता द्वे शूद्राप्रजाता अतऊर्द्धं समानोदकपिण्डजन्मर्षिगोत्राणां पूर्वः पूर्वोगरीयान् न खलु कुलीने विद्यमाने परगामि स्यात्। यस्य पूर्वेषां षसां न कश्चिद्दायादः स्यात् सपिण्डाः पुत्रस्थानीया वा तस्य धनं विभजेरंस्तेषामलाभे आचार्य्यान्तेवासिनौ हरेयातां तयोरलाभे राजा हरेत् न तु ब्राह्मणस्य राजा हरेद्ब्रह्मस्वन्तु विषं घोरम्॥

न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्त्रपौत्रकमिति॥

त्रै विद्यसाधुभ्यः संप्रयच्छेदिति॥

इति वाशिष्ठे धर्मशास्त्रे सप्तदशोऽध्यायः॥

---

## अष्टादशोऽध्यायः।

शूद्रेण ब्राह्मण्यामुत्पन्नश्चाण्डालो भवतीत्याहुः राजन्यायां वैश्यायां मन्त्यावसायी। वैश्येन ब्राह्मण्यामुत्पन्नोरामको भवति इत्याहुः राजन्यायां पुक्कशः राजन्येन ब्राह्मण्यामुत्पन्नः सूतो-भवतीत्याहुः। अथाप्युदाहरन्ति।

च्छिन्नोत्पन्नास्तु ये केचित् प्रातिलोम्यगुणाश्रिताः।
गुणाचारपरिभ्रंशात् कर्मभिस्तान् विजानीयुरिति॥

एकान्तरद्व्यन्तरत्यन्तरानुजाता ब्राह्मणक्षत्रियवैश्यैरवच्छिन्ना निषादा भवन्ति। शूद्रायां पारशवः पारयन्नेव जीवन्नेव शवोभवतीत्याहुः शवइति मृताख्या। एतच्छावं यच्छूद्र-

तस्माच्छूद्रसमीपे तु नाध्येतव्यं। अथापि यमगीतान् श्लोकानुदाहरन्ति।

श्मशानमेतत् प्रत्यक्षं ये शूद्राः पापचारिणः।
तस्माच्छूद्रसमीपे च नाध्येतव्यं कदाचन॥
न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम्।
नचास्योपदिशेद्धर्मं नचास्य व्रतमादिशेत्॥
यश्चास्योपदिशेद्धर्मं यश्चास्य व्रतमादिशेत्।
सोऽसंवृतं तमोघोरं सह तेन प्रपद्यतइति॥
व्रणद्वारे कृमिर्यस्य सम्भवेत कदाचन।
प्राजापत्येन शुद्ध्येत हिरण्यं गौर्वासोदक्षिणेति।

नाग्निचित् परामुपेयात् कृष्णवर्णायाः रामायाइव न धर्माय न धर्मायेति।

इति वाशिष्ठे धर्मशास्त्रेऽष्टादशोऽध्यायः।

---

## एकोनविंशोऽध्यायः।

धर्मोराज्ञः पालनं भूतानां तस्यानुष्ठानात् सिद्धिः। भयकारणं ह्यपालनं वै एतत् सूत्र माहुर्विद्वांसस्तस्माद्गार्हस्थ्यनैयमिकेषु। पुरोहिते दद्यादिद्विज्ञायते ब्राह्मणः पुरोहितोराष्ट्रं दधातीति। तस्य भयमपालनादसामर्थ्याच्च। देशधर्मं जातिधर्मं कुलधर्मान् सर्वान् वैतानतुप्रविश्य राजा चतुरोवर्णान् स्वधर्मे स्थापयेत्तेष्वधर्मपरेषु दण्डन्तु देशकालधर्माधर्मवयोविद्यास्थानविशेषैर्हिंशेत्। आगमाद्दृष्टाभावात् पुष्पफलोगान्यदेयानि हिंस्यात्। कर्षणकरणार्थञ्चोपहत्यागार्हस्थ्यं गाश्च मानोन्माने

र्दाक्षते स्यातां अधिष्ठानान्नीनीहारसार्थानामस्माच्च मूल्य-मात्रं नैहारिकं स्यान्महामहस्यः स्यात् संमानयेद्‌वाहवा-हनीयद्विगुणाकारिणी स्यात् प्रत्येकं प्रयास्तः पुमान्। शतं वा राज्ञां वा तदेतदप्यर्थाः स्त्रियः स्युः कराष्टौ मानाधारमध्यमाः पादः कार्षापणास्त निरस्तोऽन्तरोमागाकरः श्रोत्रियोराज-पुमानथ प्रव्रजितबालवृद्धतरुणप्रदाता प्रागामिकाः कुमा-र्योऽहतापत्याश्च वाङ्भ्यामुत्तरं शतगुणं दद्यान्नदीकक्षवनशै-लोपमाङ्गा निष्कराः स्युस्तदुपजीविनो वा दद्युः प्रतिमासमु-द्वाहकरैस्त्वागमयेद्राजनि च प्रेते दद्यात्। प्रासङ्गिकं तेन मातृभुक्तिर्व्याख्याता राजमहिष्याः पितृव्यमातुलांश्चापितृ-व्यान् राजा विभृयात्तद्वामित्वादंशस्य स्युः तद्बन्धूंश्चान्यांश्च राजपत्न्योग्रासाच्छादनं लभेरन्। अनिच्छन्तो वा प्रव्रजेरन् क्लीबोन्मत्तांश्च वापि। मानवं श्लोकमुदाहरन्ति।

न रिक्तकार्षापणमस्ति शुल्कं
न शिल्पवृत्तौ न शिशौ न धर्मे।
न भैक्षवृत्तौ न हृतावशेषे
न श्रोत्रिये प्रव्रजिते न यज्ञे इति।

स्तेनाभिशस्तदुष्टशस्त्रधारिसहोढव्रणासम्पन्नव्यपविष्टेष्वेकेषां दण्डोत्सर्गे राजैकरात्रमुपवसेत् त्रिरात्रं पुरोहितः कृच्छ्र-मदण्ड्यदण्डने पुरोहितस्त्रिरात्रं वा अथाप्युदाहरन्ति।

अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्य्यापचारिणि।
गुरौ शिष्यस्तु याज्यश्च स्तेनो राजनि किल्बिषम्॥
राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनोयथा॥

एनोराजानमृच्छत्युत्सृजन्तं सकिल्बिषम्।
तद्येन्न घातयेद्राजा राजधर्मेण दुष्यतीति॥

राज्ञामन्येषु कार्य्येषु सद्यः शौचं विधीयते।
तथा तान्यपि नित्यानि काल एवात्र कारणमिति॥

यमगीतश्चात्र श्लोकमुदाहरन्ति।

नात्र दोषोऽस्ति राज्ञां वै व्रतिनां नच मन्त्रिणाम्।
ऐन्द्रस्थानमुपासीना ब्रह्मभूता हि ते सदेति।

इति वाशिष्ठे धर्मशास्त्रे एकोनविंशोऽध्यायः।

---

## विंशतितमोऽध्यायः।

अनभिसन्धिकृते प्रायश्चित्तमपराधे सविज्ञतेऽप्येके।

गुरु रात्मवतां शास्ता राजा शास्ता दुरात्मनाम्।
इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमइति॥

ततच सूर्य्याभ्युदयितः सन्नहस्तिष्ठेत् सावित्रीञ्च जपेदेवं सूर्य्याभिनिर्मुक्तोरात्रावासीत। कुनखी श्यावदन्तस्तु कृच्छ्रं अदशरात्रञ्चरित्वा पुनर्निर्विशेत्। अथदिधिषूपतिः कृच्छ्रं द्वादशरात्रञ्चरित्वा निर्विशेत्। तान्चैवोपयच्छेद्दिधिषूपतिः कृच्छ्रातिकृच्छ्रौ चरित्वा निर्विशेत्। परमन्हरहस्तहत्यामो-ब्रह्मघ्नः कृच्छ्रं द्वादशरात्रञ्चरित्वा पुनरुपनीतो वेदमाचा-र्य्यात्। गुरुतल्पगः सवृषणं शिश्नमुत्कृत्याञ्जलावाधाय दक्षिणामुखोगच्छेत् यत्रैव प्रतिहन्यात्तत्र तिष्ठेदाप्रलया-न्निष्कालकोवा घृताक्तस्तप्तां सूर्मिं परिष्वजेन्मरणात्मुक्तो भवतीति विज्ञायते। आचार्य्यपुत्रशिष्यभार्य्यासु चैवं योनिषु

च गुर्वीं सखीं गुरुसखीञ्च पतितांश्च गत्वा कृच्छ्राब्दं चरेत्। एतदेव चाण्डालपतितान्नभोजनेषु ततः पुनरुपनयनं वपना-दीनान्तु निवृत्तिः। मानवञ्चात्र श्लोकमुदाहरन्ति।

वपनं मेखला दण्डोभैक्षचर्य्या व्रतानि च।

निवर्त्तन्ते द्विजातीनां पुनः संस्कारकर्मणीति॥

मद्यपाने क्लीवव्यवहारेषु चैवं। मद्यभाण्डे स्थिता आपो-यदि कश्चिद्द्विजोऽर्थवित्। पद्मोडुम्बरविल्वपलाशानामुदकं पीत्वा त्रिरात्रेणैव शुद्ध्यति। अभ्यासे सुरायाग्निवर्णान्तां द्विजः पिवेत्। भ्रूणहनञ्च वक्ष्यामोब्राह्मणं हत्वा भ्रूणहा भवत्यविज्ञातञ्च गर्भं अविज्ञाता हि गर्भाः पुमांसोभवन्ति तस्मात् पुंस्कृत्य जुहुयात् लोमानि मृत्यो र्जुहोमि लोमभिर्मृत्युं वासय इति प्रथमां त्वचं मृत्यो र्जुहोमि त्वचा मृत्युं वासयइति द्वितीयं लोहितं मृत्यो र्जुहोमि लोहितेन मृत्युं वासयइति। तृतीयां त्वचं मृत्योर्जुहोमि तावति मृत्युं वासयइति। चतुर्थीं मां-सानि मृत्योर्जुहोमि मांसैर्मृत्युं वासयइति। पञ्चमीं मेदेन मृत्योर्जुहोमि मेदसा मृत्युं वासयइति। षष्ठीमस्थीनि मृत्यो-र्जुहोमि अस्थिभिर्मृत्युं वासयइति। सप्तमीं मज्जानं मृत्यो-र्जुहोमि मज्जाभिर्मृत्युं वासयइति। अष्टमीं राजार्थे ब्राह्म-णार्थे वा ग्रामेऽभिमुखमात्मानं घातयेत्त्रिरभ्रितोवापराद्धः पूतोभवतीति विज्ञायते। द्विगुणं कृतः कनीयोभवतीति। तदप्युदाहरन्ति।

पतितं पतितं त्यक्त्वा चौरं चौरेति वा पुनः।

वचसा तुल्यदोषः स्यान्मिथ्याद्विदोषतां व्रजेदिति॥

एवं राजन्यं हत्वाष्टौ वर्षाणि चरेत् षड्वैश्यं त्रीणि

शूद्रं ब्राह्मणीश्चात्रेयीं हत्वा सवनगतौ च राजन्यवैश्यौ चात्रेयीं वध्यामोरजस्वलाच्चतुस्नातामात्रेयीमाहुः। अत्र त्येषामपत्यं भवतीति चात्रेयी। राजन्यहिंसायां वैश्यहिंसायां शूद्रं हत्वा सम्वत्सरम्। ब्राह्मणसुवर्णहरणात् प्रकीर्य केशान् राजानमभिधावेत् स्तेनोऽस्मि भोः शास्तु भवानिति तस्मै राजौदुम्बरं शस्त्रं दद्यात्तेनात्मानं प्रमापयेन्मरणात् पूतो भवतीति विज्ञायते। निष्कालकोवा घृताक्तोगोमयाग्निना पादप्रभृत्यात्मानमभिदाहयेन्मरणात् पूतोभवतीति विज्ञायते। अथाप्युदाहरन्ति।

पुराकालात् प्रमीतानामानाकाविधिकर्मणाम्।
पुनरापन्नदेहानामङ्गं भवति तच्छृणु॥
स्तेनः कुनखी भवति श्वित्री भवति ब्रह्महा।
सुरापः श्यावदन्तस्तु दुश्चर्मा गुरुतल्पग इति॥

पतितैः सम्प्रयोगे च ब्राह्मेण वा यौनेन वा तेभ्यः सकाशा न्मात्रा उपलब्धास्तासां परित्यागस्तैश्च न सम्वसेदुदीचीं दिशं गत्वाऽनश्नन् संहिताध्ययनमधीयानः पूतोभवतीति विज्ञायते। अथाप्युदाहरन्ति।

शरीरपातनाच्चैव तपसाध्ययनेन च।
मुच्यते पापकृत् पापाद्दानाच्चापि प्रमुच्यते॥

इति विज्ञायते।

इति वाशिष्ठे धर्मशास्त्रे विंशतितमोऽध्यायः।

## एकविंशतितमोऽध्यायः।

शूद्रश्चेद्ब्राह्मणीमभिगच्छेद्वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येद्ब्राह्मण्याः शिरसि वापनं कारयित्वा सर्पिषाभ्यज्य नग्नां खरमारोप्य महापथमनुव्राजयेत् पूता भवतीति विज्ञायते। वैश्यश्चेद्ब्राह्मणीमभिगच्छेल्लोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येद्ब्राह्मण्याः शिरसि वापनं कारयित्वा सर्पिषाभ्यज्य नग्नां गौरथमारोप्य महापथमनुसंव्राजयेत् पूता भवतीति विज्ञायते। राजन्यश्चेद्ब्राह्मणीमभिगच्छेच्छरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येद्ब्राह्मण्याः शिरोवापनं कारयित्वा सर्पिषाभ्यज्य नग्नां रक्तखरमारोप्य महापथमनुव्राजयेत्। एवं वैश्योराजन्यायां शूद्रश्च राजन्यावैश्ययोर्मनसा भर्तुरतिचारे त्रिरात्रं यावकं क्षीरं भुञ्जानाधः शयाना त्रिरात्रमप्सु निमग्नायाः सावित्र्यष्टशतेन शिरोभिर्जुहुयात् पूता भवतीति विज्ञायते।

इति वाशिष्ठे धर्मशास्त्रे एकविंशतितमोऽध्यायः।

समाप्ता चेयं वशिष्ठसंहिता।

# वृद्धगौतमसंहितायाम्।

## प्रथमोऽध्यायः।

अश्वमेधे पुरावृत्ते केशवं केशिसूदनम्।
धर्मसंशयकं दृश्य किमपृच्छत गौतमः॥
गौतमः। पश्वमेनापि मेधेन यदा स्नातो युधिष्ठिरः।
तदा राजा नमस्कृत्य केशवं वाक्यमब्रवीत्॥
युधिष्ठिरः। भगवन्! वैष्णवा धर्माः किं फलं किं परायणाः।
किं धर्ममधिकृत्यासीत् भवतोत्पादिता पुरा।
यदि ते न मनोग्राह्यः प्रियोवा मधुसूदन!॥
श्रोतव्यः स तु वा कृष्ण! तन्मे कथय सुव्रत!।
पवित्राः किल ते धर्माः सर्वपापप्रणाशनाः॥
सर्वधर्मोत्तराः पुण्या भगवन्ननघोत्थिताः।
यच्छ्रुत्वा ब्रह्मणागोघ्नो मन्त्रिणा गुरुतल्पगः॥
पाकभेदी कृतघ्नश्च सुरापो ब्रह्मविक्रयी।
मित्रविश्वासघाती च ब्रह्मणा विष्णुणा तथा॥
मांसविक्रयिणो ये च जीवेयुश्च कुकर्मभिः।
पापाः शठा नैकृतिका व्यभिचारपरास्तथा॥
रसभेदकरा ये च ये च नीरप्रदूषकाः॥
श्रीर्विप्रेण कराश्चौरा विप्रा ये च पुरोहिताः।
कूटपणावणाः क्लिग्धा स्तथा ये परदारकाः॥
ये तेचान्ये च बहवः पश्च ते तेऽपि किल्बिषात्।

तानाचक्ष्व सुरश्रेष्ठ! त्वद्भक्तोऽस्म्यहमच्युत!॥
वैशम्पायनः। इत्येवङ्कथितो देवो धर्मपुत्त्रेण संसदि।
वशिष्ठाद्यास्तपोयुक्ता मुनय स्तत्वदर्शिनः॥
श्रोतुकामाः परं गुह्यं भक्तिमन्तो हरेः कथाः।
तथा भागवताश्चैव ततस्तं पर्यवारयन्॥
युधिष्ठिरः। यदि जानासि मां भक्तं स्निग्धश्चा भक्तवत्सल!।
सर्वधर्माणि गुह्यानि श्रोतुमिच्छामि तत्त्वतः॥
धर्मान् कथय देवेश! यद्यनुग्रहभागहम्।
श्रुता मे मानवा धर्मा वाशिष्ठाः काश्यपास्तथा॥
गार्गेया गौतमीयाश्च तथागोपालितस्य च।
पराशरकृताः पूर्वमात्रेयस्य च धर्मतः॥
उमामहेश्वराश्चैव नन्दिधर्माश्च पावनाः।
ब्रह्मणा कथिता ये च कौमाराश्च श्रुतामया॥
धूम्रवर्णाः कृताधर्माः क्रौञ्चवैश्वानरा अपि।
भार्गव्या याज्ञवल्क्याश्च माण्डव्या कौशिकास्तथा॥
भारद्वाजकृता ये च ब्रह्मस्वकुकृताश्च ये।
कणिने च कणीवाहो! विश्वामित्रकृताश्च ये॥
सुमन्तुजैमिनिकृताः शाकनेयास्तथैव च।
पुलस्त्यपुलहोद्गीताः पाराशर्यास्तथैव च॥
अगस्त्यगीता मौद्गल्याः शाण्डिल्यास्तुलहायनाः।
बालखिल्यकृता ये च सप्तर्षिरचिताश्च ये॥
आपस्तम्बकृता धर्माः शङ्खस्य लिखितस्य च।
प्राजापत्यास्तथा याम्या माहेन्द्राश्च श्रुता मया॥
वैश्वानराख्या गीताश्च विभाण्डककृताश्च ये।

नारदीयकृता धर्माः कापोताश्च श्रुता मया ॥
तथापि पुरवाक्यानि भृगोरङ्गिरसस्तथा।
क्रौञ्चमातङ्गगीताश्च सौधहारीतकास्तथा ॥
पिङ्गवर्मकृताकान्ता ये च वा वसुपालिताः।
उद्दालककृताधर्मा औशनसा स्तथैव हि ॥
वैश्यपा धनगीताश्च ये चान्येऽप्येव मागधाः।
एतेभ्यः सर्वधर्मेभ्यो देवत्वाद्याश्रनिश्रिताः ॥
पावनत्वात्पवित्रत्वाद्विशिष्टा इतिमे मतिः।
तस्माच्छ्रुत्वा प्रपन्नस्य त्वद्भक्तस्य च माधव ! ॥
युष्मदीयान् परान् धर्मान् पुण्यान् कथय मेऽच्युत !।
वैशम्पायनः। एवमुक्तस्तु धर्मज्ञो धर्मपुत्रेण माधवः ॥
उवाच धर्मान् सूक्ष्माख्यान् धर्मपुत्रस्य धीमतः।
श्रीभगवानुवाच। यावन्तोयस्य कौन्तेय ! एतद्धर्मेषु सुव्रत !।
त्वत्समो मत्समो लोके न कश्चिदिह विद्यते ॥
धर्मः श्रुतो वा दृष्टो वा कृतो वा कथितोऽपि वा।
आमोदितो वा राजेन्द्र ! पुनाति ह नरं सदा ॥
धर्मः पिता च माता च धर्मश्च सुहृदस्तथा।
धर्मो भ्राता सखा चैव धर्मः स्वामी परन्तपः ॥
धर्मादर्थश्च कामश्च धर्माद्भोगाः सुखानि च।
धर्मादैश्वर्यमेवश्च धर्मः स्वर्गगतिः प्रभो !॥
धर्मो वंशे विपन्नस्य त्रायते महतो भयात्।
द्विजत्वं देवतात्वञ्च धर्मः प्रापयते नरम् ॥
यदा च क्षियते पापः कालेन पुरुषस्य च।
तदा सञ्जायते बुद्धिर्धर्मं कर्तुं युधिष्ठिर ! ॥

जन्मान्तरसहस्रेषु मानुषत्वं सुखी भव ।
तत्त्वापीह यो धर्मान् न करोति स वञ्चितः ॥
कीटाश्च पूरिषस्थैव विरूपा व्याधितास्तथा ।
परद्वेष्याश्च मूर्खाश्च न तैः धर्माः कृताः पुरा ॥
एकदीर्घायुषः शूराः पण्डिता भोगिनस्तथा ।
अरोगा रूपसम्पन्ना स्तैर्धर्माः खुः कृताः पुरा ॥
एवं धर्मः कृतः सद्यो नयते गतिमुत्तमाम् ।
अधर्मः सेव्यमानस्तु तिर्यग्योनिं नयत्यसौ ॥
इदं रहस्यं कौन्तेय ! श्रूयतामिदमुत्तमम् ।
कथयिष्येपरं गुह्यं मम भक्तास्य पाण्डव ! ॥
इष्टश्चमसि मे त्यक्तु प्रपन्नाश्चापि मां सदा ।
परमात्ममपि ब्रूयां किं पुनर्धर्मसंहिताम् ॥
इदं मे मानुषं जन्म कृतमात्मनि मायया ।
धर्मसंस्थापनार्थैव दुष्टानां शासनाय च ॥
मानुष्यं भावमापन्नं ये मां म्लक्षं तवाश्रया ।
संसरन्ति च ते मूर्खा स्तिर्यग्योनिष्वनेकशः ॥
ये च मां सर्वरूपत्वे पश्यन्ति ज्ञानचक्षुषा ।
मद्भक्तांस्तान् सदा युक्तान् मत्समीपं नयाम्यहम् ॥
मद्भक्तानान्तु मानुष्ये सर्वजन्म च पाण्डव ! ।
अपि वा ये अभिरता मद्भक्ताः पाण्डुनन्दन ! ॥
मुच्यते पातकैः सर्वैः पद्मपत्रमिवाम्भसा ।
जन्मान्तरसहस्रेषु तपसा भावितात्मनाम् ॥
मद्भक्तिः क्रियते तात ! मनुष्याणां न संशयः ।
यच्च कृष्णपरं पुण्यं तैस्तद्बलवत् ध्रुवम् ॥

न हृष्यते तथा देवैर्मन्त्रैः क्रुध्यते यथा ।
अपरं यच्च मे रूपं प्राणभावेषु जायते ॥
तद्दृश्यते न सर्वार्थैः सर्वभूतैश्च पाण्डव ! ।
कल्पकोटिसहस्रेषु व्यतीतेष्वागतेषु च ॥
दर्शयामीति यद्रूपं तत्प्रपश्यन्ति मे सुराः ।
स्थित्युत्पत्तिलयकर्त्तारं यो मां ज्ञात्वा प्रपद्यते ॥
अनुगृह्णाम्यहं तस्य संसारान्मोचयामि च ।
अहमादीति भूतानां स्रष्टा ब्रह्मादयो मया ॥
प्रकृतिं स्वामवष्टभ्य जगत्सर्वं सृजाम्यहम् ।
ततो मूलोऽहमव्यक्तो रजोमध्ये प्रतिष्ठितम् ॥
ऊर्द्ध्वं सत्त्वविशालोऽहं ब्रह्मादि स्तम्बसंस्थितम् ।
मूर्धानं मे दिवं विद्धि चन्द्रादित्यौ च लोचने ॥
देवादिब्राह्मणा वक्त्रं मरुतः श्वसनश्च मे ।
दिशो मे बाहवश्चाष्टौ नक्षत्राणि विभूषणम् ॥
अन्तरिक्षकरं विद्धि सर्वभूतावकाशकम् ।
मार्गो मेघानिलाभ्यान्तु यम सोदरमव्ययम् ॥
पृथिवीञ्च बलं यद्वै द्वीपार्णां च नगैर्युतम् ।
सर्वसत्त्वारणोपेतं पादौ मम युधिष्ठिर ! ॥
स्थितोऽह्येकगुणाख्ये च द्विगुणश्चास्मि मारुते ।
त्रिगुणस्तैः स्थितोऽहं वै सलिले तु चतुर्गुणः ॥
महान्तो मे गुणाः पञ्च महाभूतेषु पञ्चसु ।
तन्मात्रे संस्थितः सोऽहं पृथिव्यां पञ्चधा स्मृतः ॥
अहं सहस्रशीर्षस्तु सहस्रचरणेक्षणः ।
सहस्रबाहूदराङ्क् सहस्राक्षः सहस्रनात् ॥

स्थितोऽस्मि सर्वतः कृष्णो ह्यथ तिष्ठद्द्याकुलम्।
सर्वभूतात्मभूतः सन् सर्वव्यापी ततो ह्यहम्॥
अचिन्त्योऽहमनन्तोऽहमचलोऽह मजो ह्यहम्।
अनाद्योहमप्रमेयोऽहमव्ययोवेद्योऽहमयम्॥
निर्गुणोऽहन्निर्गन्धात्मा नित्योऽहं निर्ममोऽपि च।
निर्द्वन्द्वो निर्विकारोऽहं निधानञ्चामृतस्य च॥
मृतस्य तस्य चाहञ्च स्वाहाकारो नराधिप!।
तेजसा तपसा चाहं भूतग्रामेष्वनव्ययः॥
स्नेहपाशगणैर्बध्वा धारयाम्यात्ममायया।
चतुराश्रमवर्णोऽहं चातुर्होत्रफलाशनः।
चतुर्मूर्तिश्चतुर्व्यूह यतुराश्रमभाजनम्॥
संहृत्याहं जगत्सर्वं कृत्वाहं गर्भमात्मनः।
शयामि दिव्ययोगेन प्रलयेषु युधिष्ठिर!॥
सहस्रयुगपर्यन्ता ब्राह्मी रात्रिं महार्णवे।
स्थित्वा सृजामि भूतानि जङ्गमानि स्थिराणि च॥
कल्पे कल्पे च भूतानि संहरामि सृजामि च।
न च मां तानि जानन्ति मायया मोहितानि हि॥
मम चैवान्धकारस्य माश्रितव्यस्य नित्यशः।
प्रशान्तस्येव दीपस्य गतिर्नैवोपलभ्यते॥
न तदस्ति क्वचिद्राजन् यत्र नाहं प्रतिष्ठितः।
न च तद्विद्यते भूतं मयि यन्न प्रतिष्ठितम्॥
यावन्मात्रं शरीरं हि स्थूलसूक्ष्ममिदं क्वचित्।
जीवभूतो ह्यहं तस्मिन् हिताय मां प्रतिष्ठितः॥
किञ्चात्र बहुनोक्तेन सत्यमेतत् ब्रवीमि ते।

यद्भूतं यत् भविष्यच्च तत्सर्वं मद्भमेव तु ॥
मया अद्द्धनानि यानि भूतानि कानि पाण्डव ! ।
ममैव न च जानन्ति मायया मोहितानि मे ॥
एवं सर्वं जगदिदं सदेवासुरमानुषम् ।
मत्तः प्रभवते राजन् मम विप्र ! विनाशिनः ॥
इति गौतमीये श्रीवैष्णवधर्मशास्त्रे प्रथमोऽध्यायः ।

---

## द्वितीयोऽध्यायः ।

वैशम्पायनः ।

एवमात्मोद्भवद्भ्य जगद्द्दहस्यकेशवम् ।
धर्मात्मर्मात्मजस्यैव पुण्यानकथयद्बहून् ॥

श्रीभगवानुवाच ।

शृणु पाण्डव ! यत्नेन पवित्रं पावनं परम् ।
कथ्यमानं मया पुण्यं धर्मशास्त्रं महाफलम् ॥
यच्छृणोति शुचिर्भूत्वा एकचित्तस्तपोधनः ।
धर्मं यशस्य मायुष्यं धर्मात्मानं युधिष्ठिर ! ॥
श्रद्दधानस्य तस्येह यत्पापा पूर्वसञ्चितः ।
विनश्यत्याशु तत्सर्वमभक्तस्य विशेषतः ॥
एवं श्रुत्वा वचः पुण्यं वाक्यं केशवभाषितम् ।
प्रणाष्टमनसो भूत्वा चिन्तयन्त्युत्तमं परम् ॥
देवा ब्रह्मर्षयः सर्वे गन्धर्वाप्सरसस्तथा ।
भूताश्चयक्षग्रहा गुह्यका भुजगास्तथा ॥
वालखिल्या महात्मानो योगिनस्तत्वदर्शिनः ।

तथा भागवताश्चापि पञ्चकालमुपासकाः ॥
कौतुहलसमाविष्टाः प्रणष्टाः परमर्षयः ।
श्रोतुकामः परं गुह्यं वैष्णवं धर्मशासनम् ॥
हृदि कर्तुञ्च तद्वाक्यं प्रणम्यं शिष्युना तदा ।
ततस्ते वासुदेवेन हृष्टाः सौम्येन चक्षुषा ॥
विमुक्तपापानालोक्य प्रणम्य शिरसा हरिम् ।
पप्रच्छ केशवं धर्मं धर्मपुत्रः प्रतापवान् ॥
युधिष्ठिरः । ततस्ते वासुदेवेन हृष्टाः सौम्येन मानुषाः ।
कीदृशी ब्राह्मणस्याथ कीदृशी क्षत्रियस्य वै ॥
वैश्यस्य कीदृशी देव ! गतिः शूद्रस्य कीदृशी ।
कथं गच्छेत पापेन ब्राह्मणस्तु यमालये ॥
क्षत्रियोवाथ शूद्रोवा वैश्योवो गच्छते कथम् ।
एतत्कथय देवेश ! लोकनाथ ! नमोऽस्तु ते ॥
वैशम्पायनः । स पृष्टः केशवश्चैव धर्मपुत्रेण धीमता ।
उवाच संसारगतिं चतुर्वर्णस्य कर्मजाम् ॥

श्रीभगवानुवाच ।

शृणु वर्णक्रमेणैव धर्माधर्मभास्कर ! ।
नास्ति किञ्चिन्नरश्रेष्ठ ! ब्राह्मणस्य तु विक्रयः ॥
येतु तास्तु सदा ध्यात्वा सन्ध्यां ये च उपासते ।
येश्च पूर्णाहुतिः प्राप्ता विधिवज्जुह्वते च ये ॥
वैश्वदेवाश्च ये कुर्युः पूजन्त्यतिथींश्च ये ।
नित्यस्वाध्यायशीलाश्च पञ्चयज्ञपरायणाः ॥
सायं प्रात र्हुताशाश्च गुर्वभोजनवर्जिताः ।
दम्भाचारविमुक्ताश्च स्वदारनिरताः सदा ॥

पञ्चयज्ञरताश्चैव अग्निहोत्रमुपासते।
ते नमस्कृतकर्माणो ब्रह्मलोकं व्रजन्ति ते॥
ब्रह्मलोके ततः कामं गन्धर्वैं ब्रह्मगायकैः।
उपगीयमानाः प्रिय! तैः पूज्यमानाः स्वयम्भुवा॥
ब्रह्मलोके प्रमोदन्ते यावद्भूतस्य विप्लवम्।
क्षत्रियोऽपि स्थितो राज्ये स्वधर्मं परिपालयन्॥
सम्यक् प्रजाः पालयिता स्वधर्मनिरतः सदा।
यज्ञदानरतो धीरः स्वधर्मनिरतः शुचिः॥
शास्त्रानुकारी तत्त्वज्ञः प्रजाकार्यपरायणः।
विप्रेभ्यः कामदो नित्यं भृत्यानां भरणे रतः॥
सत्यसन्धः शुचिर्नित्यलोभदम्भविवर्जितः।
क्षत्रिय उत्तमां याति गतिं देवनिषेविताम्॥
तत्र दिव्याप्सरोभिस्तु गन्धर्वैश्च प्रयत्नतः।
सेव्यमानो महातेजाः क्रियते शक्रपूजितः॥
चतुर्युगानि वै त्रिंशत् मोदित्वा तत्र देववत्।
इहैव मानुषे लोके चतुर्वेदी द्विजो भवेत्॥
कृषिगोपालनिरतः स्वधर्मे वैश्यो रतः॥
वणिक् स्वकर्मवाप्नोति पूज्यमानोऽप्सरोगणैः।
चतुर्युगानि वै त्रिंशत् ऋद्धि द्वादश पञ्च च॥
इह मानुष्यके राजन्! राजा भवति वीर्यवान्।
त्रयाणामपि वर्णानां शुश्रूषानिरतः सदा॥
विशेषेण तु विप्राणां दासवद्यस्तु तिष्ठति।
अयाचितप्रदाता च सत्यशौचसमन्वितः॥
गुरुदेवेषु निरतः परदारविवर्जितः।

परपीड़ामकृत्वैव भृत्यवर्गं बिभर्त्ति यः ।
मृतोऽपि स्वर्गमाप्नोति जीवानामभयप्रदम् ॥
स स्वर्गलोके ऽधित्वा वर्षकोटीर्महातपाः ।
इह मानुष्यलोके वै वैश्यो धनपतिर्भवेत् ॥
एवं धर्मात्परं नास्ति महत् संगर्गसाक्षिणः ।
स स्वधर्मात्परं किञ्चित् पापकर्मव्यपोहनम् ॥
तस्माद्धर्मः सदा कार्यो मानुष्यं प्राप्य दुर्लभम् ।
युधिष्ठिरः । भगवन् ! देव देवेश वदस्व मधुसूदन ! ॥
शुभस्याप्यशुभस्यापि चयवृद्धीर्यथाक्रमम् ।
श्रीभगवानुवाच । शृणु पाण्डव ! तत्त्वं धर्मं सूक्ष्मं सनातनम् ॥
दुर्विज्ञेयं प्रमोदन्ते यं ज्ञात्वा ते महाजनाः ।
यथैव शीतमुदकमुष्णेन बहुधा व्रतम् ॥
भवेत्तु तत्क्षणादुष्णं शीतत्वञ्च विनश्यति ।
यथोष्णं वा भवेद्दग्धं शीतेनापि यथाव्रतम् ॥
शीतत्वञ्च भवेत्सर्वं मुष्णत्वञ्च विनश्यति ।
एवन्तु यद्भवेत् भूमन् ! सुकृतं वाथ दुष्कृतम् ॥
तदल्पं क्षपयेद्विप्रं नात्र कार्या विचारणा ।
समत्वे सति राजेन्द्र ! तयोः सुकृतपापयोः ॥
गृहीतस्य भवेद्वृद्धिः कीर्तिर्यस्य भवेत् स्वयम् ।
ख्यापनेनानुतापेन प्रायः पापं प्रणश्यति ॥
तथा कृतस्तु राजेन्द्र ! धर्मो नश्यति भारत ! ।
गृहीतौ ता वुभौ सम्यक् वृद्धियातौ न संशयः ॥
तस्मात्सर्वप्रयत्नेन न पापं ग्राहयेद्बुधः ।
तस्मादेतत्प्रयत्नेन कीर्तितमक्षयं महत् ॥

तस्मात् सङ्कीर्तयेत्पापं नित्यधर्मञ्च ग्राहयेत्।
इति गौतमीये श्रीवैष्णवधर्मशास्त्रे द्वितीयोऽध्यायः।

---

## तृतीयोऽध्यायः।

वैशम्पायनः। एवं श्रुत्वा वचस्तस्य धर्मपुत्रोऽच्युतस्य तु॥
पप्रच्छ पुनरप्यन्यान् धर्मांश्चामितौजसं हरिम्।
युधिष्ठिरः। वृथा चरति जन्मानि वृथा दानानि वा कृतिः॥
वृथा च जीवितं येषां नराणां पुरुषोत्तम!।
कीदृशासु व्यवस्थासु दानं देयं जनार्दन!॥
इह लोके च भवति पुरुषः पुरुषोत्तम!।
गर्भस्थे कर्म चायाति किं बाल्ये चापि केशव!।
यौवनस्थेऽपि किं कृष्ण! वृद्धत्वे चापि किं भवेत्॥
सात्त्विकं कीदृशं दानं राजसं कीदृशं भवेत्।
तामसं कीदृशं देव! तमधीष्यति किं प्रभो!॥
उत्तमं कीदृशं दानं मध्यमं कीदृशं भवेत्।
अधमं कीदृशं दानं तेषां यादव! किं फलम्॥
किं दानं नयतेर्बुद्धिर्गतिं किं मध्यमां नयेत्।
गतिं जघन्यां मथवा देवदेव! प्रयान्ति मे॥
एतदिच्छामि विज्ञातुं परं कौतूहलं हि मे।
त्वदीयं वचनं सत्यं पुण्यञ्च मधुसूदन!॥
वैशम्पायनः। एवं धर्मप्रसक्तेन पृष्टः पाण्डुसुतेन वै।
उवाच वासुदेवोऽथ धर्मान्धर्मैषां पाण्डवम्॥
श्रीभगवानुवाच॥ शृणु राजन्यथान्यायं वचनं तथ्यमुत्तमम्।

कथ्यमानं सदा पुण्यं सर्वपापव्यपोहनम् ॥
वृथा च दश दानानि चत्वारिंच नराधिप ! ।
वृथा दानानि पञ्चाशत् पञ्च चैव यथाक्रमम् ॥
वृथा च जीवितं येषां ते च सर्षपकीर्त्तिताः ।
अनुक्रमेण सर्वाणि तानि वक्ष्यामि पाण्डव ! ॥
धर्मघ्नानां तथा चैव लुब्धानां पापिनां तथा ।
वृथापाकञ्च यत्सन्ति परदाररताश्च ये ॥
पाकभेदकरा ये च यथा स्युः सत्यवर्जिताः ।
मृष्टमश्नाति यश्चैको दृश्यमानस्तु बान्धवैः ॥
पितरं मातरञ्चैव उपाध्यायं गुरुं तथा ।
मातुलं मातुलानीञ्च योऽहि कन्याञ्चपेत्तथा ॥
ब्राह्मणाश्चैव ये भूत्वा सन्ध्योपासनवर्जिताः ।
निर्ब्राह्मणो निःस्वधश्चैव यश्च गुर्वन्नभुग्द्विजः ।
मम वा शङ्करस्यापि ब्रह्मणो वा युधिष्ठिर ! ॥
पूर्वोक्तब्राह्मणानान्तु ये न भक्ता नराधिप ! ।
वृथा जन्मव्यथैतेषां पापानां विद्धि पाण्डव ! ॥
अश्रद्धया च यद्दत्तं चौर्य्येणावर्जितन्तु यत् ।
अभिशस्ताहृतं यत्तु यद्दानं पतिते द्विजे ॥
अमन्त्राभिहितं यत्तु यद्दत्तं सर्वयाचके ।
प्राप्ते तु वह्नि तद्दान मारूढपतिते च यत् ॥
यत्ग्रामयाचकर्णान्तं यत्कृतघ्नहृतस्तथा ।
उपपातकिने दत्तं वेदविक्रयिणे च यत् ॥
स्त्रीजीविते च यद्दत्तं यच्च देवलकाय च ।
देवपूर्वाग्निने दत्तं नित्यकर्म.न कारिणे ॥

रङ्गोपजीविने दत्तं यच्च मांसोपजीविने।
सेवकाय च यद्दत्तं यद्दत्तं ब्राह्मणब्रुवे॥
परद्वेषिणे च यद्दत्तं दत्तं वार्धुषिकाय च।
यद्नाचारिणे दत्तं यच्च दत्तं वृथाग्निने॥
असभ्योपासिने दत्तं यच्च ग्रामनिवासिने।
यन्मिथ्यालिङ्गिने दत्तं दत्तं सर्वाशिने च यत्॥
नास्तिकाय च यद्दत्तं धर्मविक्रयिणे च यत्।
कारकाय च यद्दत्तं दत्तं यत् कूटसाक्षिणे॥
नचात्मानं तरिष्यन्ति न दातारं युधिष्ठिर!।
यज्ञेभ्यो दत्तमात्राणि दानानि सुबहून्यपि॥
वृथा भवन्ति राजेन्द्र! भस्मन्याज्याहुतिर्यथा।
यदिष्टं यत्फलं किञ्चित् भविष्यति कथञ्चन॥
राक्षसाश्च पिशाचाश्च तद्विलुम्पन्ति संस्थिताः।
वृथा ह्येतानि दानानि कथितानि समासतः॥
जीवितञ्च वृथा तेषां तच्छृणुष्व युधिष्ठिर!।

श्रीभगवानुवाच।

ये च मां न प्रपद्यन्ते शङ्करं वा नराधमाः।
ब्राह्मणं वा महीदेवा वृथा जीवन्ति ते नराः॥
येच निन्दन्ति मां मूढाः शङ्करं वा नराधमाः।
कुशलैः कृतशास्त्राणि पठित्वा ये नराधमाः॥
विप्रा निन्दन्ति यज्ञांश्च वृथा जीवन्ति ते नराः।
विद्यमानधनोयस्तु दानधर्मविवर्जितः॥
मृष्टमश्नाति यश्चैको वृथा जीवति सोऽपि च।
वृथा जीवितमाख्यातं दानकालं ब्रवीमि ते॥

तमोनिविष्टचित्तेन दत्तं दानञ्च यद्भवेत्।
न तस्य फलमश्नाति नरो गर्भगतो नृप!॥
ईर्ष्यामात्सर्य्यसंयुक्तो भगवद्वाक्यकारणाम्।
ददाति दानं यो मर्त्यो बालभावस्तदश्नुते॥
श्रद्धायुक्तः शुचिः स्नातः प्रसन्नोभयमानसः।
ददाति दानं यो मर्त्यो यौवने स तदश्नुते॥
स्वयं नीत्वा तु यद्दानं भक्त्या पात्रे प्रदीयते।
तत् सार्वकामिकं विद्धि दानं मामरणान्तिकम्॥
सात्त्विकं राजसञ्चैव तामसञ्च युधिष्ठिर!।
दानं दानफलञ्चैव गतिञ्च त्रिविधां शृणु॥
दानं दातव्यमित्येव मतिं कृत्वा द्विजाय वै।
उपकारविमुक्ताय दत्तं यत्तद्धि सात्त्विकम्॥
श्रोत्रियाय दरिद्राय बहुभृत्याय पाण्डव!।
दीयते यत्प्रहृष्टाय तत् सात्त्विकमुदाहृतम्॥
वेदाक्षरविहीनाय यत्तु पूर्वोपकारिणे।
समृद्धाय च यद्दानं तद्राजसमुदाहृतम्॥
सम्बन्धिने च यद्दानं व्रताय चैव पाण्डव!।
लाभादिभिरपात्राय तद्राजसमुदाहृतम्॥
वैश्वदेवविहीनाय यद्दानं श्रोत्रियाय च।
दीयते तस्करायापि तद्दानं तामसं स्मृतम्॥
सरोषमवधूतञ्च शोकयुक्तमवज्ञया।
सेवकाय च यद्दत्तं तद्दानं तामसं स्मृतम्॥
देवाः पितृगणाश्चैव जनयन्त्याग्नयस्तथा।

सात्विकं दानमश्नन्ति तुष्यन्ति च नरेश्वर! ॥
अथवा दैत्यसङ्घाश्च गुह्यकाश्चाञ्च राक्षसाः।
राजसं दानमश्नन्ति वर्जितं पितृदैवतैः।
पिशाचाः प्रेतसङ्घाश्च कश्मला ये मलीमसाः।
तामसं दानमश्नन्ति गतिञ्च त्रिविधां शृणु ॥
सात्विकानां तु दानाना मुत्तमं फलमिष्यते।
मध्यमं राजसानान्तु तामसानां तु पश्चिमम् ॥
अभिगत्योपनीतानां दानानामुत्तमं फलम्।
मध्यमन्तु समाधाय जघन्याय च ते फलम् ॥
अयाचितप्रदाता वै स याति गतिमुत्तमाम्।
समाहूय तु यो दद्यात् मध्यमां स गतिं व्रजेत् ॥
याचितोयस्तु वै दद्यात् जघन्यां स गतिं व्रजेत्।
उत्तमा दैवकी ज्ञेया मध्यमा मानुषी गतिः ॥
जघन्या याति तिर्यक्षु गतिरेषा क्रिया मता।
पात्रभूतेषु विप्रेषु स्थितेषु चाहिताग्निषु ॥
यस्य वच्छति तीर्थेषाम्‌ अयकात् स प्रकीर्त्यते।
श्रोत्रियाणां दरिद्राणां भरणं कुरु पाण्डव! ॥
सम्पन्नानां द्विजातीनां कार्य्यं किं परिरक्षणम्।
दरिद्रान् वृत्तिहीनानां प्रदानैस्तांस्तु पूजयेत् ॥
आतुरस्यौषधैः कार्य्यं नीरुजस्य किमौषधैः।
पापं प्रतिग्रहीतारं प्रदातु मुपगच्छति।
प्रतिग्रहीतुर्य्यत्पुण्यं प्रदातारमुपैति तत् ॥
तस्माद्दानं सदा कार्य्यं परमं हितमिच्छता।
वेदविद्याव्रता तेषु सदा गुर्व्वन्तवर्जनम् ॥

प्रयत्नेन हि दातव्यो महादानमयोनिधिः।
यस्तु दाता प्रयच्छेत सहस्रस्यावलम्बनम्॥
भुक्तशेषस्य भक्तस्य तं निमन्त्रय भारत!।
अमन्त्रस्तु निराशास्ते न कर्तव्या हि पाण्डव!॥
कुलानि सन्ततिः प्राप्ता नैषामाशा हता भवेत्।
मद्भक्ता ये नरश्रेष्ठ! मद्गता मत्परायणाः।
मद्याजिनो मन्नियमास्तान् प्रयत्नेन पूजयेत्॥
तेषान्तु पावनायाह नित्यमेव युधिष्ठिर!।
उभे सर्वे प्रतिष्ठामि व्यसनं तच्च सुव्रतम्॥
तस्मादष्टाक्षरं मन्त्रं मद्भक्तै र्वीतकल्मषैः।
सन्ध्याकालेष्वकालेषु जप्तव्यश्चात्मशुद्धये॥
अन्येषामपि विप्राणां किल्बिषं हि प्रणश्यति।
उभे सर्वे च पुरुषा स्तस्माद्विप्रो विशुद्धये॥
दैवे श्राद्धे च विप्रः सन् विधियुक्तो जुगुप्सितः।
जुगुप्सितस्तु तत् श्राद्धं दहत्यग्निरिवेन्धनम्॥
भारतं मानवोधर्मः साङ्गवेदश्चिकित्सितम्।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः॥
न ब्राह्मणान् परीक्षेत दैवे कर्मणि मन्त्रवित्।
महान् भवेत् परीवादो ब्राह्मणानां परीक्षणे॥
ब्राह्मणानां परीवादं यः करोति नराधमः।
सहस्रैव शुनां योनिं स गच्छेत् ब्रह्मदूषकः॥
स्वल्पपापेन निन्दित्वा परीवादात् खरो भवेत्।
परिभाय कृमिर्भवति कीटो भवति मत्सरी॥
दुर्वृत्ता वा सुवृत्ता वा प्राकृता वा सुसंस्कृताः।

ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः॥
क्षत्रियश्चैव सर्पश्च ब्राह्मणश्च बहुश्रुतम्।
नावमन्येत मेधावी कृशानपि कदाचन॥
एतत्त्रयापि पुरुषं निर्दहेदवमानितम्।
तस्मादेतं प्रयत्नेन नावमन्येत बुद्धिमान्॥
यथा सर्वास्ववस्थासु पावको दैवतं महत्।
तथा सर्वास्ववस्थासु ब्राह्मणो दैवतं महत्॥
व्यङ्गान् काणांश्च कुब्जांश्च वामनान् गांस्तथैव च।
स निर्वदेद्युक्तांश्च मिश्रिता वेदपारगैः॥
मन्यून्नोत्पादयेत्तेषां नचानिष्टं समाचरेत्।
मन्युप्रहरणा विप्रा न विप्राः शस्त्रपाणयः॥
मन्युना घ्नन्ति ते शत्रून् वज्रेणेन्द्र इवासुरान्।
ब्राह्मणो हि महद्दैवं कथितं वेदपारगैः॥
द्विजाश्च सर्वभूतानां धर्मकोषस्य गुप्तये।
किं पुनस्ते च कौन्तेय! सर्वे नित्यमुपासते॥
यस्यास्येन सदाश्नन्ति हव्यानि विविधानि च।
तदामस्तान् द्विजान् वै किमभूतमधिकन्ततः॥
उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती।
स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते॥
भुक्तेषु तेषु स्ववशे तस्य धर्मं ददाति च।
यद्युर्यंस्मात् ब्राह्मणस्य भुक्तेऽपीतरे जनाः॥
तस्मात्ते नावमन्तव्या मद्भक्ताश्च द्विजाः सदा।
आरण्यकोपनिषदि ये तु पश्यन्ति मां द्विजाः॥
कल्यावस्थान् द्विजान् सर्वान् प्रयत्नेन प्रपूजयेत्।
स्वगृहे वा प्रवासे वा दिवा रात्रौ तथैव च॥

इत्याश्च ब्राह्मणाः पूज्या मद्भक्ता येच पाण्डव ! ।
नास्ति विप्रसमो देवो नास्ति विप्रसमो गुरुः ॥
नास्ति विप्रात् परो बन्धु र्नास्ति विप्रात् परोनिधिः ।
नास्ति विप्रात् परं तीर्थं न पुण्यं ब्राह्मणात्परम् ॥
नास्ति विप्रात् परो धर्मो नास्ति विप्रात्परा गतिः ।
पापकर्मसमाक्षिप्तं पतन्तं नरके नरम् ॥
त्रायते दानमप्येकं पात्रभूते कृते द्विजे ।
बाला हिताग्नयो येच शान्ताः स्वर्वान्नवर्जिताः ॥
मामर्चयन्ति मद्भक्तास्तेभ्यो दत्तं महाफलम् ।
प्रदानैः पूजितो विप्रो वन्दितो वापि कृत्स्नशः ॥
संभावितो वा विप्रो वै मद्भक्तो दिवमुन्नयेत् ।
ये पठन्ति नमस्यन्ति ध्यायन्ति पुरुषास्तुतम् ॥
तं श्रुत्वा वाथवा दृष्ट्वा नरैः पापात् प्रमुच्यते ।
मद्भक्ता मद्गतप्राणा मद्भक्त्या मत्परायणाः ॥
बीजयोनिविशुद्धा ये श्रोत्रियाः संयतेन्द्रियाः ।
श्रुत्वाविरला नित्यन्ते पुनन्तीह दर्शनात् ॥
स्वयं नीत्वा विशेषेण दानन्तेषां गृहेष्वथ ।
निधापयेत्तु मद्भक्ता तद्दानङ्कोटिसम्मितम् ॥
जाग्रतः स्वपतोवापि प्रवासे स्वगृहेऽथ वा ।
हृदयानि प्रपश्यामि यस्य विप्रस्य भारत ! ॥
स पूजितो वास्पृष्टो वा दृष्टोवापि द्विजोत्तमः ।
सम्भाषितो वा राजेन्द्र ! पुनातीह नरः सदा ॥
एवं सर्वास्ववस्थासु सर्वदानानि पाण्डव ! ।
मद्भक्तेभ्यः प्रदत्तानि तानि स्वर्गप्रदानि वै ॥
इति गौतमीये श्रीवैष्णवधर्मशास्त्रे तृतीयोऽध्यायः ।

## चतुर्थोऽध्यायः ।

वैशम्पायनः । श्रुत्वैवं सात्त्विकं दानं राजसन्तामसन्तथा ।
पृथक् पृथक् फलञ्चैव गतिञ्चैव पृथक् पृथक् ॥
अवितृप्तः प्रसन्नात्मा पुण्यधर्मामृतं पुनः ।
युधिष्ठिरो धर्मनित्यः केशवं पुनरब्रवीत् ॥

युधिष्ठिरः । द्विजयोनिविशुद्धानां लक्षणानि वदस्व मे ।
वीजदोषेण लोके च जायते च कथन्तराम् ॥
आचारदोषं देवेश ! वक्तुमर्हस्यशेषतः ।
ब्राह्मणानां विशेषञ्च गुणदोषौ च केशव ! ॥
चातुर्वर्ण्यस्य कृत्स्नस्य वर्तमानाः प्रतिग्रहे ।
केन विप्रा विशेषेण तरन्ते तारयन्ति च ॥
एतत्कथय देवेश ! त्वद्भक्तस्य नमोऽस्तु ते ।

श्रीभगवानुवाच । शृणु राजन्यथातत्त्वं वीजयोनिशुभाशुभम् ।
येन तिष्ठति लोकोऽयं विनश्यति च पाण्डव ! ॥
अवस्थितब्रह्मचर्यो यं च विप्रो यथाविधि ।
स द्विजानामविज्ञेय तस्य वीजं शुभम्भवेत् ॥
कन्या चाक्षतयोनिः स्यात् कुलीना पितृमातृतः ।
ब्राह्मादिषु विवाहेषु परिणीता यथाविधि ॥
सा प्रशस्ता वरारोहा शुद्धयोनिः प्रशस्यते ।
कानीनश्च सहोढश्च तावुभौ कुण्डगोलकौ ॥
आरूढवनितो जातः पतितस्यापि यः सुतः ।
षडेते विप्रचण्डाला निषिद्धाः श्वपचादपि ॥
यो यत्र तत्र वा रेतः सिक्त्वा गुर्वीषु वाचयेत् ।
कामचारी स पापात्मा वीजं तस्याशुभम्भवेत् ॥
अशुभं तद्भवेद्वीजं शुद्धां योनिन्नचार्हति ।

दूषयत्येव तां वाणीं शृणुध्वं च हविर्यथा ॥
गुर्व्वीयोनौ पतत् वीजं श्राद्धावद्धो द्विजन्मनाम् ।
कुर्यात् पुरीषगर्त्तेषु पतितास्ति मतिः कुतः ॥
मामधः पातयेदेष कामात्मा पापमोहितः ।
अधोगतिं व्रजेत् क्षिप्र मिति मत्वा यतेन्तु यत् ॥
आत्मा हि शुक्रमुद्दिष्टं दैवतं परमं महत् ।
तस्मात्सर्व्वप्रयत्नेन निरुन्ध्यात् शुक्रमात्मनः ॥
आयुस्तेजो बलं वीर्य्यं प्रज्ञा श्रीश्च महायशः ।
पुण्यञ्च मत्प्रियत्वञ्च हन्यते ब्रह्मचर्य्यया ॥
अविप्लुतब्रह्मचर्य्यैर्गृहस्थाश्रममाश्रितैः ।
पञ्चयज्ञपरैर्धर्म्मः स्थाप्यते पृथिवीतले ॥
सायं प्रातस्तु ये सन्ध्यां सम्यक् नित्यमुपासते ।
नावं वेदमधिष्ठात्य तारयन्ति तरन्ति च ॥
यो जपेत् पावनीं देवीं गायत्रीं वेदमातरम् ।
न सीदेत् प्रत्यगृह्णीत पृथिवीञ्च ससागराम् ॥
ये च स्युः संस्थिताः केचित् गृहे सूर्य्योदयादिव ।
ते चास्य सौम्या जायन्ते शिवाशुभकरास्तथा ॥
यत्र यत्रास्थितास्चैव दारुणाः पिशिताशनाः ।
घोररूपा महाकाया वीजं न घोषयन्ति च ॥
पुनन्तीह पृथिव्यां हि चीर्णा सत्यव्रता नराः ।
ये चीर्णा व्रतवेदा ये विकर्म्मपथमाश्रिताः ॥
ब्राह्मणा नाममात्रेण तेऽपि पूज्या युधिष्ठिर ! ।
किं पुनर्यश्च सन्ध्ये द्वे नित्यमेवोपतिष्ठति ॥
शीलमध्ययनं दानं शौचमार्दवमार्जवम् ।

तस्माद्वेदान् विशिष्टान्वै मनुराह प्रजापतिः॥
भूर्भुवः स्वरिति ब्रह्म यो वेद परमद्विजः।
स्वदारनिरतो दान्तः स च विद्वान् स भूसुरः।
सन्ध्यामुपासते विप्रा नित्यमेव द्विजोत्तमाः॥
ते यान्ति नरशार्दूल! ब्रह्मलोक मसंशयम्।
सावित्रीमात्रसारोऽपि वरोऽपि प्रसुयन्त्रितः॥
नायन्त्रित चतुर्वेदी सर्वाशी सर्वविक्रयी।
सावित्रीञ्चैव वेदांश्च तुलया तुलयन् पुरा॥
देवा ऋषिगणाश्चैव सर्वे ब्रह्मपुरःसराः।
चतुर्णामपि वेदानां साहि राजन्! गरीयसी॥
यथा विकसिते पुष्पे मधु गृह्णन्ति षट्पदाः।
समुत्सृज्य रसं सर्वं निरातङ्कमसारवत्॥
एवं हि सर्ववेदानां सावित्री प्राणमुच्यते।
निर्जपा हीतरे वेदा सावित्री मन्त्रेणाच॥
एवं हि यश्चतुर्वेदी शीलभ्रष्टः स कुत्सितः।
शीलव्रतसमायुक्तः सावित्रीपाठको वरः॥
सहस्रं परमां देवीं शतमध्यान्दशावराम्।
सावित्रीं जप कौन्तेय! सर्वपापप्रणाशिनीम्॥

युधिष्ठिरः। त्रिलोकनाथ! भोः कृष्ण! सर्वभूतात्मकोह्यसि।
नानायोगपरश्रेष्ठ! तुष्यसे केन कर्मणा॥

श्रीभगवानुवाच। यदि भारसहस्रन्तु गुग्गुल्यादि प्रधूपयेत्।
करोषि च नमस्कार मुपहारञ्च कारयेत्॥
पूजयेत् स्तुतिभिर्माञ्च ऋग्यजुःसामतस्तथा।
न तुष्यन्ति ते विप्रा नाहन्तुष्यामि भारत!॥

ब्राह्मणे पूजिते नित्यं पूजितोऽस्मि न संशयः ।
आतुष्टेचाहमाक्रोष्टोभवामि भरतर्षभ ! ॥
यस्माद्विगतिस्तेषां पूजयन्ति च मां हि ते ।
यदहं द्विजरूपेण वसामि वसुधातले ॥
यस्मात् पूजयति प्राज्ञो मद्गतेनान्तरात्मना ।
तमहं स्वेन रूपेण पश्यामि नरपुङ्गव ! ॥
काणाः कुब्जा वामनाश्च दरिद्रा व्याधितास्तथा ।
नाश्रमान्या द्विजाः प्राज्ञैर्मम रूपा हि ते द्विजाः ॥
ये तेऽपि सागरान्तायां पृथिव्यां द्विजसत्तमाः ।
मम रूपेषु तेष्वेव सर्चितैर्व्यर्चितो भवान् ॥
बहवस्तु न जानन्ति नरा ज्ञानबहिष्कृताः ।
यथाहं द्विजरूपेण वसामि वसुधातले ॥
अवमन्यन्ति ये विप्रान्विकर्मापादयन्ति च ।
प्रेषयन्ते च सततं सुश्रूषाक्कारयन्ति च ॥
भूतांस्तान् करपत्रेण यमदूता महाबलाः ।
निष्कृन्तन्ति यथाकाष्ठं सूत्रमार्गेण शिल्पिना ॥
आक्रोशपरिवादाभ्यां ये रमन्ते द्विजादिषु ।
तान् दूता यमलोकस्थान् निपात्य धरणीतले ॥
आक्रम्योरसि पादेन क्रुद्धासंरक्तलोचनाः ।
अग्निवर्णैस्तु सदृशैर्यमो हिंसन माचरेत् ॥
येच विप्रा निरीक्षन्ते पापाः पापेन चक्षुषा ।
अब्रह्मण्यश्रुतेर्वाक्या नित्यं ब्रह्मद्विषो नराः ॥
तेषां घोरमहाकायं वज्रतुल्या महाबलाः ।
उद्धरन्ति मुहूर्तेन खगाश्चक्षुर्यमाज्ञया ।

यः प्रहारं द्विजेन्द्राय दद्यात्कुर्य्याच्च शोणितम्।
अस्थिभङ्गञ्च यः कुर्यात् प्राणैर्वा विप्रयोजयेत्॥
सोऽनुपूर्व्वेण यातीमान्नरकानेकविंशतिम्।
शूलमारोपितो गत्वा वह्निनापि दह्यते॥
बहुवर्षसहस्राणि पच्यमानस्त्वशाक्शिराः।
नावमुच्येत दुर्मेधा न तस्य क्षीयते गतिः॥
ब्राह्मणानविचार्य्यैव जयन्ते धर्म्मकाङ्क्षया।
शतवर्षसहस्राणि तामिस्त्रोपरि पच्यते॥
उत्पाद्य शोणितं गात्रात् संरम्भा इति पूर्वकम्।
स पर्य्यायेण यातीमान्नरकानेकविंशतिम्॥
तस्मान्नाकुशलं ब्रूयात् न शुष्कां गिरमीरयेत्।
तच्छ्रुत्वा परुषां वाणीं नैवैतानप्यतिक्रमेत्।
ये विप्रं स्निग्धया वाचा पूजयन्ति नरोत्तमाः॥
तच्छ्रुत्वा वै स्तुतस्तेव भवामि च युधिष्ठिर!॥
सन्तर्जयन्ति च ये विप्रान् क्रोधयन्ति च भारत!।
आक्रुष्टस्तर्जितश्चाहं तैर्भवामि न संशयः॥
यश्चन्दनैश्चागुरुधूपदीपैरभ्यर्च्य वस्त्राच्छमधूनमर्च्यात्।
तेनार्च्चितो नैव भवामि वस्त्रो विप्रार्चनादर्च्चितोऽहं भवामि॥
विप्रप्रसादाद्धरणीधरोऽहं विप्रप्रसादादसुरान् जयामि।
विप्रप्रसादाच्च सदर्चिषोऽहं विप्रप्रसादादजितोऽहमस्मि॥
इति गौतमीये श्रीवैष्णवधर्मशास्त्रे चतुर्थोऽध्यायः।

---

## पञ्चमोऽध्यायः ।

युधिष्ठिरः । देव ! देवेश ! दैत्यघ्न ! परं कौतूहलं हि मे ।
एतत्कथय सर्वज्ञ ! त्वद्भक्तस्य ममाच्युत ! ॥
मानुष्यस्य च लोकस्य यमलोकस्य चान्तरे ।
कीदृशं किं प्रमाणं वा किमधिष्ठानमेव च ॥
तरन्ते मानवा देवाः केनोपायेन मानवाः ।
क्व वास्थिमांसनिर्मुक्ते पञ्चभूतविवर्जिते ॥
कथयस्व महादेव ! सुखदुःख मशेषतः ।
जीवस्य यमलोके तु कर्मभिश्च शुभाशुभैः ॥
अनुबद्धस्य तैः पाशैर्नीयमानस्य दारुणैः ।
चतुरदूतै र्दुराधर्षै र्घोरै र्घोरपराक्रमैः ॥
बद्धस्य क्षिप्यमाणस्य जनस्य च यमाज्ञया ।
पुण्यं पापं कथन्तिष्ठेत् सुखदुःखमशेषतः ॥
दुराधर्षैर्नीयते वा मानुषैः सैः कथं पुनः ।
किं वा तत्र महादेवाः कर्म कुर्वन्ति मानवाः ॥
कथं धर्मरता यान्ति देवता द्विजपूजकाः ।
कथं वा प्रेतकर्माणो धर्मं प्रेतपुरं नराः ॥
किं रूपं किं प्रदानं वा वर्णाः को वास्य केशव ! ।
जीवस्य क्रोशतो नित्यं यमलोकं ब्रवीषि मे ॥
श्रीभगवानुवाच । शृणु राजन्यथातत्त्वं यमात्त्वं यत्प्रपृच्छसि ।
तत्त्वाहं कथयिष्यामि मद्भक्तस्य नरेश्वर ! ॥
षडशीतिसहस्राणि योजनानां शतानि च ।
मानुषस्य च लोकस्य यमलोकस्य चान्तरम् ॥

न तत्र वृक्षच्छाया च न तटाकं सरोऽपि वा।
न वाप्यो दीर्घिका वापि न कूपं वा युधिष्ठिर!॥
न मण्डपं सभा वापि न प्रपा न निवेशनम्।
न पर्वतो नदी वापि न भूमेर्विवरं क्वचित्॥
न ग्रामो नाश्रमो वापि नोद्यानं काननानि च।
न किञ्चिद्विश्रमस्थानं पथि तस्मिन्युधिष्ठिर!॥
जन्तोः सम्प्राप्तकालस्य वेदनार्त्तस्य वै भृशम्।
करणैस्तत्र देहस्य प्राणैः कण्ठगतैः पुनः॥
शरीरात्त्याज्यते जीवो ह्यवशो मातरिश्वना।
निर्गतो वायुभूतस्तु रूपकौशिकविग्रहात्॥
शारीरं यस्य तद्रूप्यं तद्वर्णस्तत्प्रमाणकम्।
चक्षुष्यं संप्रविष्टस्तु सोऽप्यदृष्टो न केनचित्॥
सोऽन्तरात्मा देववतामष्टाङ्गो यस्तु सञ्चरेत्।
छेदनाद्भेदनाद्दाहात्ताडनाद्वा न नश्यति॥
नानारूपधरैर्घोरैः प्रचण्डैश्चण्डशासनैः।
नीयमानो दुराधर्षैर्यमदूतैर्यमाज्ञया॥
पुत्रदारं यैश्च पाशैः सन्निरुद्धो वशीकृतात्।
कर्मभिश्चापि सुगतैः कृतैः सुकृतदुष्कृतैः॥
आक्रन्द्यमानकरुणां बन्धुभिर्दुःखपीडितैः।
त्यक्त्वा बन्धुजनं सर्वं निरपेक्षस्तु गच्छति॥
मातृभिः पितृभिश्चैव भ्रातृभिर्मातुलैस्तथा।
दारैः पुत्रैर्वयस्यैश्च रुदद्भिस्त्यज्यते पुनः॥
दृश्यमानस्तैर्दीनैरश्रुपूर्णमुखेक्षणैः।
स्वशरीरं परित्यज्य वायुभूतस्तु गच्छति॥

अन्धकारं परतरं महाघोरं तमोहृतिम् ।
दुःखाय दुष्प्रक्रामश्च तमाशु पापकर्मणाम् ॥
दुःसहं यमपूरञ्च दुर्निरीक्ष्यं दुरासदम् ।
दुराप मतिदुर्गञ्च पापिष्ठान्वान्नरोत्तमम् ॥
ऋषिभिः कथ्यमानन्तु पारम्पार्येण पार्थिव ! ।
त्रासं जनयति प्रायः पूयमानकथास्वपि ॥
अपि तैश्चैव गन्तव्या स्वद्धर्मात् वा युधिष्ठिर ! ।
प्राप्तकालेन सन्त्यज्य बन्धून् भोगान् धनानि च ॥
जरायुजैश्चाण्डजैश्च उद्भिज्जैः स्वेदजै स्तथा ।
जङ्गमैः स्थिरसंज्ञैश्च गन्तव्यं हि यमालयम् ॥
देवासुरमनुष्याद्यै र्वैवस्वतवशानुगैः ।
स्त्रीपुंनपुंनकैश्चापि पृथिव्यां जीवसंज्ञकैः ॥
मध्यमै र्युवभिर्बालै र्वृद्धैर्वापि तथैव च ।
जातमात्रैश्च गर्भस्थैर्गन्तव्यः स महालयः ॥
पूर्वाह्णे वा पराह्णे वा सन्ध्याकालेऽथवा पुनः ।
प्रदोषे पाश्चरात्रे वा प्रत्यूषे वाप्युपस्थिते ॥
प्रवासस्थैर्वनस्थैर्वा पर्वतस्थै र्जलस्थितैः ।
क्षेत्रस्थैर्वा स्थलस्थैर्वा गृहमध्यस्थितैरपि ॥
भुञ्जद्भिर्वा लिखद्भिर्वा खादद्भिर्वा नरोत्तम ! ।
आसीनै श्चास्थितैर्वापि शयनीयागतैरपि ॥
जाग्रद्भिर्वा प्रसुप्तैर्वा गन्तव्यः स महापथः ।
यमदूतै र्दुराधर्षैः प्रचण्डै श्चण्डविक्रमैः ॥
आक्षिप्यमाणा ह्यवशा यान्ति भीमं यमालयम् ।
क्वचिद्भीतैः क्वचित्स्तब्धैः प्रस्खलद्भिः क्वचित्क्वचित् ॥

दद्भिर्वेदनार्त्तैस्तु गन्तव्यं यमसादनम् ।
निर्भत्स्यमानै रुद्विग्नै र्विक्रोशै र्भयविह्वलैः ॥
कण्टकाकीर्णमार्गेण तप्तवल्युकपांशुना ।
दह्यमानैस्तु गन्धर्वै र्वा नरैर्दानवर्जितैः ॥
काष्ठोपलशिलाघातैर्दण्डोल्मुककशाङ्कुशैः ।
हन्यमानै र्यमपुरं गतव्यं धर्मवर्जितैः ॥
मेदःशोणितपूयाद्रैर्विस्वै र्गात्रैश्च भीषणैः ।
विद्धस्तेनं प्रपाकीर्णै र्गन्तव्यं जीवघातकैः ॥
क्रुश्यद्भिश्च रुदद्भिश्च क्रोशद्भिश्चापि विस्वरम् ।
वेदनार्त्तैः पतद्भिश्च गन्तव्यं जीवघातकैः ॥
श्वभिर्व्याघ्रै र्वृकैः कङ्कै र्भक्ष्यमाणाः समन्ततः ।
तुद्यमानाश्च गच्छन्ति राक्षसैर्मांसखादिभिः ॥
महिषैश्च मृगैश्चापि शूकरैः क्रूरकर्मभिः ।
वीक्ष्यमाणाः स्वरध्वानं गन्तव्यं मांसखादिभिः ॥
सूचीसूतीक्ष्णतुण्डाभि र्मक्षिकाभिः समन्ततः ।
तुद्यमानैस्तु गन्तव्यं पापिष्ठै र्मधुघातकैः ॥
विवस्त्रं स्वामिनमिमं स्त्रियं वा घ्नन्ति ये नराः ।
शस्त्राणि भिद्यमानैस्तु गन्तव्यं तैर्यमक्षयम् ॥
घातयन्ति च ये पापा दुःखमापादयन्ति च ।
राक्षसैश्च श्वभिश्चैव भक्ष्यमाणा व्रजन्ति ते ॥
ये हरन्तीह वस्त्राणि शय्याप्रावरणानि च ।
ते यान्ति विद्रुता नग्नाः पिशाचा इव तत्पथम् ॥
गोधयान् ये हिरण्यञ्च खलु धनगृहं तथा ।
ये हरन्ति दुरात्मानः परस्परं पापकारिणः ॥

पाषण्डे वज्रकैर्दण्डैः काष्ठपातैर्मरीचरैः ।
हन्यमानैः सुतार्कीर्णैर्गन्तव्यं यमसादनम् ॥
ये ब्रह्मस्वं हरन्तीह नरा नाकनिपातिनम् ।
आक्रोशयन्ति वा नित्यमाहरन्ति च ये द्विजान् ॥
शुष्ककण्ठा निबध्यन्ते छिन्नजिह्वाछिन्ननासिकाः ।
पूयशोणितदुर्गन्धैर्भक्ष्यमाणाश्च जम्बुकैः ॥
चण्डालैर्दुर्वर्णैश्चण्डैर्भक्ष्यमाणाः समन्ततः ।
क्रोशन्तः करुणं घोरं गच्छन्ति यमसादनम् ॥
तत्रैव पतिताः पापाः विष्ठापूयेष्वनेकशः ।
मज्जन्ते वर्षकोटीसु क्लिश्यन्ते वेदनान्विताः ॥
ततश्च मुक्ताः कालेन लोके चास्मिन्नराधमाः ।
विष्ठाक्रिमित्वं गच्छन्ति पतन्ति च ततोऽर्णवे ॥
विद्यमानधनैर्यैस्तु लोभदम्भाहतान्वितैः ।
श्रोत्रियेभ्यो न दत्तानि धनानि बहुधा नृप ! ॥
श्रीपाशनिबद्धास्ते हन्यमानाश्च राक्षसैः ।
क्षुत्पिपासाश्रमार्तास्तु यान्ति प्रेतपुरं नराः ॥
बहुत्तदाना गच्छन्ति शुष्ककण्ठास्तथाकुलाः ।
अन्नं पानीयसहितं प्रार्थयन्तः पुनः पुनः ॥
स्वार्ते विभवात्तथार्ता गन्तुं नैकामयाक्रमम् ।
ममान्ते दीयतां स्वामिन् ! पानीयं दीयतामिति ॥
इति ब्रुवन्तस्ते दूताः प्राप्नुवन्ति यमालयम् ॥

वैशम्पायनः । तच्छ्रुत्वा वचनं विष्णोः पपात भुवि पाण्डवः ।
निःसंज्ञोऽभूद्भयत्रस्तो निश्चेष्टो भयविह्वलः ॥
ततोऽलब्ध्वा शनैः संज्ञां समाश्वस्तोऽच्युतेन सः ।

नेत्रे प्रक्षाल्य तोयेन भूयः केशव मब्रवीत् ॥

युधिष्ठिरः । भीतोऽस्म्यहं महादेव ! श्रुत्वा वाक्यस्य विस्तरम् ।

केन दानेन तं मार्गं तरन्ति पुरुषाः सुखम् ॥

श्रीभगवानुवाच । इह ये धार्मिका लोके जीवघातकवर्जिताः ।

गुरुशुश्रूषया युक्ता देवब्राह्मणपूजकाः ॥

अयान्त्यामुष्यलोकान्ते ससहायाः सबान्धवाः ।

यमध्वानन्तु ते यान्ति यथावत्तु निबोध मे ॥

ब्राह्मणेभ्यः प्रदानानि नानारूपाणि पाण्डव ! ।

ये प्रयच्छन्ति निदङ्का स्ते सुखा यान्ति तत्पदम् ॥

अन्नञ्च ये प्रयच्छन्ति ब्राह्मणेभ्यः सुसंस्कृतम् ।

श्रोत्रियेभ्यो विशेषेण भक्त्या परमया युताः ॥

ते विमानै र्महात्मानो यान्ति चित्रै र्यमालयम् ।

सेव्यमाना वरस्त्रीभि र्देवसङ्घै र्महापथे ॥

ये तु नित्यं प्रभाषन्ते प्रियं मकिल्बिषं वचः ।

ते च यान्ति महाजाभै र्विमानै स्तै र्यमालयम् ॥

कपिलादीनि दानानि श्रद्दायुक्ताश्च ये नराः ।

ब्राह्मणेभ्यः प्रयच्छन्ति श्रोत्रियेभ्यो विशेषतः ॥

ते यान्त्यादित्यवर्णाभै र्विमानै र्हेमभूषणैः ।

वैवस्वतपुरं रम्य मप्सरोभिर्निषेविताः ॥

उपानहौ च च्छत्रञ्च शयनान्यासनानि च ।

विप्रेभ्यो ये प्रयच्छन्ति वस्त्राण्याभरणानि च ॥

ते यान्त्यश्वै र्वृषैश्चैव कुञ्जरैश्चाप्यलङ्कृतैः ॥

धनदस्य पुरं रम्यं दण्डच्छत्रविभूषिताः ।

येच वृत्तांश्च दास्यन्ति भोज्यं रम्य तथैव च ।

स्निग्धतां यान्ति विप्रेभ्यश्छायया परया युताः ॥
ते यान्ति काञ्चनैर्यानैर्युता वैवस्वतालयम् ।
वरस्त्रीभिर्युवतिभिः सेव्यमानाः समन्ततः ॥
येच क्षीरं प्रयच्छन्ति घृतं दधि गुडं मधु ।
ब्राह्मणेभ्यः प्रयच्छन्ति श्रद्दधानाः सुसंस्कृताः ॥
चक्रवाकप्रयुक्तैस्तु यानैरुक्मरथैः शुभैः ।
यान्ति गन्धर्ववादित्रैः सेव्यमाना यमालयम् ।
ये फलानि प्रयच्छन्ति पुष्पाणि सुरभीणि च ॥
हंसयुक्तैर्विमानैस्तु यान्ति ब्रह्मपुरं नराः ।
ये प्रयच्छन्ति विप्रेभ्यो विविधान्नं घृतप्लुतम् ॥
ते यान्त्यमलवर्णाभैर्विमानैर्वायुवेगिभिः ।
पुरं तत्प्रेतनाथस्य नानाजनसमाकुलम् ॥
पानीयं ये प्रयच्छन्ति सर्वभूतप्रजीवनम् ।
ते सुतृप्ताः सुखा यान्ति विमानैर्हंसचोदितैः ॥
ये तिलांस्तिलधेनूंश्च घृतं सर्वं तथापि वा ।
श्रोत्रियेभ्यः प्रयच्छन्ति सौम्यभावसमन्विताः ॥
सोममण्डलसङ्काशैर्यानैस्ते यान्ति निर्मलैः ।
गीयमानास्तु गन्धर्वैर्वैवस्वतपुरस्वरः ॥
येषां वाप्यश्चतुःपञ्च तटाकानि सरांसि च ।
दीर्घिकाः पुष्करिण्यश्च सजलाश्च जलाशयाः ॥
यानैस्ते यान्ति स्वर्णाभैर्दिव्यघण्टानिनादितैः ।
चामरैस्तालवृन्तैश्च वीज्यमाना महाप्रभाः ॥
नित्यतृप्ता महात्मानो गच्छन्ति यमसादनम् ।
येषां देवगृहाणीह चित्राण्याभरणानि च ॥

मनोहराणि कान्तानि दर्शनीयानि भूमिप ! ।
ते व्रजन्त्यमलाभ्राभै विमानैर्वायुवेगिभिः ॥
पुरं तत् प्रेतनाथस्य नानाजनसमाकुलम् ।
वैवस्वतञ्च पश्यन्ति सुखचित्तं सुखस्थितम् ॥
यमेन पूजिता यान्ति यमसालोक्यतां गतिम् ।
मृतानुद्दिश्य लोकेषु प्रपातश्चालमुच्छ्रितम् ॥
शीतलं सलिलं रम्यं तिष्ठ तेभ्यो दिशन्ति ये ।
ते तु तृप्तिं परामाप्ताः सुखं यान्ति महापथम् ॥
काष्ठपादुकतदीयां तमध्वानं सुखन्तथा ।
सुवर्णमणिपीठेषु पादौ कृत्वा रथोत्तमम् ।
आरामान् वृक्षषण्डांश्च रोपयन्ति च ये नराः ॥
सम्वर्द्धयन्तिचाव्यग्राः फलपुष्पोपशोभितान् ।
वृक्षच्छायासु रम्यासु तमध्वानं स्वलङ्कृतम् ॥
यानैस्तु वाहनैर्दिव्यैः पूज्यमाना मुहुर्मुहुः ।
सुवर्णं रजतं वापि विद्रुमं मौक्तिकं तथा ॥
ये प्रयच्छन्ति ते यान्ति विमानैः कनकोज्ज्वलैः ।
ते व्रजन्ति वरस्त्रीभि सेव्यमाना यथासुखम् ॥
भूमिदा यान्ति तं लोकं सर्वकामैः सुतर्पिताः ।
उदितादित्यसङ्काशैर्विमानै हंसयोजितैः ।
कन्याश्च ये प्रयच्छन्ति विप्राय श्रोत्रियाय च ॥
दिव्यकन्यावृता यान्ति विमानैस्ते यमालयम् ।
सुगन्धान् गन्धसंयोगान् पुष्पाणि सुरभीणि च ॥
प्रयच्छन्ति द्विजाग्रेभ्यो ये भक्त्या परया युताः ।
दीपदा यान्ति यानैश्च दीपयन्तो दिशो दश ॥

आदित्यसदृशाकारै र्दीप्यमाना यथाग्नयः।
यद्यावसथदाना ये दत्तैः काञ्चनवेदिभिः॥
व्रजन्ति बालसूर्य्याभै र्धर्मराजपुरन्वराः।
जलभाजनदातारः कुण्डिकाकरकाप्रदाः॥
पूज्यमाना वरस्त्रीभि र्यान्ति तस्मान्महागजैः।
पादाभ्यङ्गं शिरोऽभ्यङ्गं यानपादोदकं ततः॥
ये प्रयच्छन्ति विप्रेभ्यस्ते यान्त्यश्वैर्यमालयम्।
विश्रामयति यो विप्रं श्रान्तमध्वनि कर्शितम्॥
चक्रवाकैः प्रयुक्तेन याति यानेन सोऽपि च।
स्वागतेन च यो विप्रं पूजयेदासनानि च॥
स गच्छति त मध्वानं परमनिर्वृतम्।
नमोब्रह्मण्यदेवाय सर्वदाचाभिवादयेत्॥
प्रयतं प्रयतोनित्यं स सुखं याति तत्फलम्।
नमः सर्वसमेभ्यश्च त्वभियाय दिने दिने॥
नमस्करोति यो भक्त्या स सुखं याति तत्फलम्।
नमोऽस्तु विप्रदत्ताय तुभ्यं देवि दिने दिने॥
भूमिमाक्रमतेप्रातः शयनादुत्थितस्तु यः।
स सर्वकामतृप्तात्मा सर्वभूषणभूषितः॥
याति यानेन दिव्येन सुखं वैवस्वतालयम्।
अनन्तराशितोये तु दम्भाहङ्कारवर्जितः॥
तेऽपि सारसयुक्तेन यान्ति यानेन वै सुखम्।
येचाप्येकेन भक्तेन वर्तन्ते दम्भवर्जिताः॥
हंसयुक्तै र्विमानैस्ते सुखं यान्ति यमालयम्।
चतुर्थेनैव भुक्तेन वर्तन्ते ये जितेन्द्रियाः॥

यान्ति ते धर्मनगरं यानैर्वर्हिणयोजितैः।
आनीय द्विजेनैव भुञ्जन्ते ये जितेन्द्रियाः॥
तेऽपि हंसरथैर्यान्ति तत्पथं कनकोज्ज्वलैः।
षष्ठानुकामिकोयस्तु वर्षमेकन्तु वर्त्तते॥
कामक्रोधविनिर्मुक्तः शुचिर्नित्यजितेन्द्रियः।
स याति कुञ्जरस्थस्तु जयशङ्खरवैर्युतः।
पक्षोपवासिनो यान्ति यानैः शार्दूलयोजितैः।
धर्मराजपुरं रम्यं दिव्यस्त्रीगणसेवितम्॥
ये मासोपवासं वै कुर्वन्ते संयतेन्द्रियाः।
तेऽपि सूर्योदयप्रख्यै र्यान्ति यानै र्यमालयम्॥
अग्निप्रवेशं यश्चापि कुरुते मद्गतात्मना।
स यात्यग्निप्रकाशेन विमानेन यमालयम्॥
प्राणांस्त्यजति यो विप्रो मां प्रपन्नोऽघनाशकम्।
स बालार्कप्रकाशेन व्रजेद्यानेन तत्फलम्॥
प्रविष्टोऽन्तर्जले यस्तु प्राणांस्त्यजति मानवः।
सोममण्डलकल्पेन याति यानेन तत्पथम्॥
स्वशरीरं हि गृध्राणां मज्जनाय प्रयच्छति।
स याति रथमुख्येन काञ्चनेन यमालयम्॥
गोकृते स्त्रीकृते चैव तथापि प्रकृतेऽपि च।
ते यान्त्यमरकन्याभिः सेव्यमानो रविप्रभः।
ये यजन्ति द्विजश्रेष्ठाः क्रतुभिर्भूरिदक्षिणैः॥
हंससारसयुक्तेन याति यानेन तत्पथम्।
परपीड़ामकृत्वैव भृत्यान् बिभ्रति ये नराः॥
तत्पथं ते सुखं यान्ति विमानैः काञ्चनोज्ज्वलैः।

ये समास्थाय भूतेषु जीवानामभयप्रदाः ॥
क्रोधलोभविनिर्मुक्ता निर्जितेन्द्रियास्तथा ।
पूर्णचन्द्रप्रतिकाशै र्विमानैस्ते महाप्रभाः ॥
यान्ति वैवस्वतपुरं देवगन्धर्वसेविताम् ।
ये मामेकात्मभावेन भक्त्या त्र्यम्बकमेव वा ॥
पूजयन्ति नमस्यन्ति स्तुवन्ति च दिने दिने ।
धर्मराजपुरं यान्ति यानैस्तत्र समप्रभैः ॥
पूजितास्तत्र धर्मेण स्वधर्मोद्यादिभिर्गुणैः ॥
यान्त्येव मम लोकं वा रुद्रलोक मथापिवा ॥
इति श्रीगौतमीये वैष्णवधर्मशास्त्रे पञ्चमोऽध्यायः ।

---

## षष्ठोऽध्यायः ।

वैशम्पायनः । श्रुत्वा धर्मपुरार्थं वा जीवानां गमनं तथा ।
धर्मपुत्रः प्रहृष्टात्मा केशवं पुनरब्रवीत् ।
युधिष्ठिरः । देव ! देवश ! दैत्यघ्न ! सदा देवैरभिष्टुत ! ॥
भवान् भयकर ! श्रीमान् सहस्रादित्यतेजसः ।
सर्वसंहारसमर्थ ! सर्वधर्मप्रवर्तक ! ॥
सर्वदानफलं सौम्य ! कथयस्व ममाच्युत ! ।
दानं कृत्वा कथं कृष्ण ! कीदृशाय द्विजाय वै ॥
कीदृशं वा तपः कृत्वा तत्फलं वाथ भुज्यते ।
वैशम्पायनः । एवमुक्तो हृषीकेशो धर्मपुत्त्रेण धीमता ॥
उवाच धर्मपुत्त्राय धर्मान् पुण्यान् महोदयान् ।
श्रीभगवानुवाच । श्रृणुष्वावहितो राजन्! पूतम्पावनमुत्तमम् ।
सर्वदानफलं सौम्य ! तेन आत्मकर्मणाम् ॥

यच्छ्रुत्वा पुरुषः स्त्री वा नष्टपापाः समाहिताः।
तत्श्रवणात्पूततां यान्ति पापकर्मरता अपि॥
एकाहमपि कौन्तेय! भूमावुत्पादितं जलम्।
सप्तं तारयते पूर्वां तृष्णा यत्र च गोर्भवेत्॥
पानीयं परमं लोके जीवानां जीवनं परम्।
पानीयस्य प्रदानेन तृप्तिर्भवति शाश्वती॥
पानीयस्य गुणा दिव्याः परलोकसुखावहाः।
तत्र पुण्योदकी नाम नदी परमपावनी॥
कामन्ददाति राजेन्द्र! तोयदानं यमालये।
शीतलं सलिलं तस्यामक्षय्यममृतोपमम्॥
क्षीरतोयं प्रदातॄणां भवेद्दीर्घं सुखावहम्।
ये चापि तोयदातारो भूयस्तेषां विधीयते॥
प्रशान्तश्रमपानेन विश्रमा च युधिष्ठिर!।
तृषितस्य नचान्येन पिपासापि प्रशाम्यति॥
तस्मात्तोयं सदा देयं तृषितेभ्यो विजानता।
अग्निर्मूर्त्तिः क्षितेर्योनिः अमृतस्य च सम्भवः॥
तत्तोयं सर्वदानानां मूलमित्युच्यते बुधैः।
यतः सर्वाणि भूतानि जीवन्ति प्रभवन्ति च॥
तस्मात्सर्वेषु दानेषु तोयदानं विशिष्यते।
सर्वदानतपोयज्ञैर्यत्प्राप्यं फलमुत्तमम्॥
तत्सर्वं तोयदानेन प्राप्यते नात्र संशयः।
ये प्रयच्छन्ति विप्रेभ्यः अन्नदानं सुसंस्कृतम्।
तस्मात्ताताः स्वयं प्राणा भवन्ति पुरुषर्षभ!॥
अन्नभुक्तस्य भुक्तस्य अन्ने जीवः प्रतिष्ठितः।

इन्द्रियाणि च बुद्धिश्च पुष्यन्तोऽन्नेन नित्यशः ॥
अन्नेनैव हि जीवन्ति सर्वभूतानि पाण्डव ! ।
तेजोबलञ्च रूपञ्च सत्वं वीर्यं द्युतिर्मतिः ॥
ज्ञानमेव तथायुश्च सर्वमन्ने प्रतिष्ठितम् ।
देवदानवतिर्यक्षु सर्वलोकेषु सर्वथा ॥
सर्वकालं हि सर्वेषां अन्नं प्राणाः प्रतिष्ठिताः ।
अन्नं पूज्यं यतो रूप अन्नं नित्यं नमस्कृतम् ॥
सर्वभूतमयञ्चैव सर्वप्राणमयं स्थितम् ।
अन्नेनाधिष्ठितप्राणोऽप्यपानो व्यानमेव च ॥
उदानश्च समानश्च धारयन्ति शरीरिणः ।
शयनोत्थानगमनग्रहणाकर्षणानि च ॥
सर्वसत्वकृतं कर्म अन्नादेव प्रवर्तते ।
चतुर्विधानि भूतानि जङ्गमानि स्थिराणि च ॥
अन्नाद्भवन्ति राजेन्द्र ! श्रुतिरेषा सनातनी ।
विद्यास्थानानि सर्वाणि सर्वयज्ञाश्च पावनाः ॥
अन्नाद्यस्मात् प्रवर्त्तन्ते तस्मादन्नं परं स्मृतम् ।
देवा रुद्रादयः सर्वे पितरो जनयस्तथा ॥
यस्मादन्नेन तुष्यन्ति तस्मादन्नं विशिष्यते ।
यस्मादन्नात्प्रजाः सर्वाः कल्पे कल्पेऽसृजत्प्रभुः ॥
तस्मादन्नात्परं दानं न भूतो न भविष्यति ।
यस्मादन्नं प्रवर्तन्ते धर्मार्थकाममेव हि ॥
तस्मादन्नात्परं दानं नामुत्रेह च पाण्डव ! ।
यक्षरक्षोगणा नागा भूता दैत्याश्च दानवाः ॥
तुष्यन्त्यन्नेन यस्मात्तु तस्मादन्नं परम्भवेत् ।

परान्नमुपभुञ्जानो यत्कर्म कुरुते शुभम् ॥
तच्छुभैकस्य भागस्तु कर्तुर्भवति भारत ! ।
अन्नदस्य त्रयो भागा भवन्ति भरतर्षभ ! ॥
तस्मादन्नं प्रदातव्यं ब्राह्मणेभ्यो विशेषतः ।
ब्राह्मणाय दरिद्राय योऽन्नं सम्वत्सरं नृप ! ॥
श्रोत्रियाय प्रयच्छन् वै पाकभेदविवर्जितः ।
दम्भाचारवियुक्तस्तु परां भक्तिमुपागतः ॥
स्वधर्मेणार्जितायान्नं तस्य पुण्यफलं शृणु ।
गोसहस्रप्रदानेन यत्पुण्यं समुदाहृतम् ॥
तत्पुण्यफलमाप्नोति नरो वै नात्र संशयः ।
अर्धसम्वत्सरं दद्याद्यभैक्षमयाचते ॥
विविधं परमं भूप ! तस्य पुण्यफलं शृणु ।
कपिलाद्यसहस्रे तु दत्ते यत्पुण्यमिष्यते ॥
तत्पुण्यमखिलं प्राप्य शक्रलोके महीयते ।
स शक्रभवने रम्ये वर्षकोटिशतं नृप ! ॥
यथाकामं महातेजाः क्रीड़त्यप्सरसाङ्गणैः ।
अग्रान्नं यो दिनं दद्याद्द्विजाय नियतव्रतम् ॥
दशवर्षाणि राजेन्द्र ! तस्य पुण्यफलं शृणु ।
कपिलाशतसहस्रस्य विधिदत्तस्य यत्फलम् ॥
तत्पुण्यफलमादाय पुरन्दरपुरं व्रजेत् ।
स शक्रभवने रम्ये कामरूपी यथासुखम् ॥
दशकोटिसमा राजन् ! क्रीड़ते सुरपूजितः ।
शक्रतुल्यावतीर्णश्च अक्लेशेन महर्षुतिम् ॥
चतुर्वेदी द्विजः श्रीमान् जायते राजपूजितः ।

अध्वश्रान्ताय विप्राय क्षुधितायान्नकाङ्क्षिणे ॥
देशकालाभियाताय दीयते पाण्डुनन्दन ! ।
याचतेऽन्नं न दद्याद्वा हसमाने पराक्रमे ॥
स लुब्धो नरकं याति क्षमीणां कालसूत्रकम् ।
स तत्र नरके घोरे लोभमोहितचेतनः ॥
शतवर्षसहस्राणि क्लिश्यते वेदनार्दितः ।
तस्माच्च नरकान्मुक्तः कालेन महता हि सः ॥
दरिद्रो मानुषे लोके चण्डालेष्वथ जायते ।
यस्तु पांसुलपादस्तु दूराध्वश्रमकर्षितः ॥
क्षुत्पिपासाश्रमार्त्तश्च श्रमखिन्नमति र्द्विजः ।
प्रयच्छन् वै तु दातारं मच्चस्यान्ते च यस्य वै ॥
तं पूजयति वाक्येन सोऽतिथिः स्वर्गसंक्रमः ।
तस्मिंस्तुष्टे नरश्रेष्ठ ! तुष्टाः स्युः सर्वदेवताः ॥
न तथा हविषा होमैर्न पुष्पैर्नानुलेपनैः ।
अग्नयः प्रार्थयिष्यन्ति यथाह्यतिथिपूजनात् ॥
कपिलायान्तु दत्तायां विधिवज्ज्येष्ठपुष्करे ।
न तत्फलमवाप्नोति यत्पुनर्विप्रभोजनात् ॥
द्विजपादजलक्लिन्ना यावत्तिष्ठति मेदिनी ।
तावत् पुष्करपर्णेन पिबन्ति पितरो जलम् ॥
देवमालापनयनं द्विजोच्छिष्टापमार्जनम् ।
श्रान्तसं वाहनञ्चैव तथा पादावसेचनम् ॥
प्रतिश्रयप्रदानञ्च तथा शय्यासनस्य च ।
एकैकं पाण्डवश्रेष्ठ ! गोप्रदानाद्विशिष्यते ॥
पादोदकं पादघृतं जीवमन्नं प्रतिश्रयम् ।

ये प्रयच्छन्ति विप्रेभ्यो नोपसर्पति तान् यमः॥
विप्रातिथ्ये कृते राजन्! भक्त्या शुश्रूषितेऽपि च।
देवाः शुश्रूषिताः सर्वे त्रयस्त्रिंशच्छतक्रतुः॥
अभ्यागतो ज्ञानपूर्वस्त्वज्ञातोऽतिथिरुच्यते।
तयोः पूजामधः कुर्यादिति पौराणिकी श्रुतिः॥
पादाभ्यङ्गोऽन्नपानैस्तु योऽतिथिं पूजयेन्नरः।
पूजितस्तेन राजेन्द्र! भवेद्देव न संशयः॥
शीघ्रं पापविनिर्मुक्तो मया चानुग्टहीतकः।
विमानेनैव कल्पेन यमलोकं स गच्छति॥
अभ्यागतं श्रान्तमनुव्रजन्ति देवाश्च सर्वे पितरोऽग्नयश्च।
अस्मिन् द्विजे तत्र च पूजिताः स्युर्गते निराशा अपि ते प्रयान्ति॥
अतिथिर्यस्य भग्नाशो ग्टहात्प्रतिनिवर्तते।
पितरस्तस्य नाश्नन्ति दशवर्षाणि पञ्च च॥
वर्जितः पितृभिर्लुब्धः स देवैरग्निभिः सदा।
निरयं रौरवं गत्वा दशवर्षाणि पच्यते॥
ततश्चापि च्युतः कालादिह लोके नराधमः।
श्वा वै द्वादशवर्षाणि जायते क्षुत्पिपासितः॥
चण्डालोऽप्यतिथिः प्राप्तो देशकालौ च काङ्क्षया।
अभ्युद्गतम्टहस्थेन पूजनीयः स सर्वथा॥
अनर्चयित्वा योऽश्नाति लोभमोहितचेतसः।
चण्डालत्व मवाप्नोति दशवर्षाणि पाण्डव!॥
निराशमतिथिं कृत्वा भुक्तवान् स प्रणष्टवान्।
न जानात्यात्मनात्मानं विष्ठाकूपे निपातितम्॥
मोघं धूपं प्रोक्षयन्ति मोघं स्नात्वा तु दह्यते।

मोघमन्नस्य चाश्नन्ति योऽतिथिं न प्रपूजयेत् ॥
साङ्गोपाङ्गांस्तु यो वेदान् पठतीह दिने दिने।
नचातिथिं पूजयति वृथा स पठति द्विजः ॥
नित्यमग्नौ पाकयज्ञैः सोमसंस्थाभिरेव च।
ये यजन्ति नचाश्नन्ति गृहेष्वतिथिमागतम् ॥
तेषां यशोभिः कामानां दत्तमिष्टञ्च यद्भवेत्।
वृथा भवति तत्सर्वमाशया यतया हृतम् ॥
देशं कालञ्च पात्रञ्च स्वशक्तिञ्च निरीक्ष्य च।
अल्पं वा सुमहद्वापि कुर्य्यादातिथ्यमात्मवान् ॥
सुमुखः सुप्रसन्नात्मा धीमानतिथिमागतम्।
स्वागतेनासनेनाद्भिरन्नाद्येन च पूजयेत् ॥
प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डितएव वा।
प्राप्तो यो वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः ॥
क्षुत्पिपासाश्रमार्त्ताय देशकालगताय च।
सत्कृत्यान्नं प्रदातव्यं यज्ञस्य फलमिच्छता ॥
भोजयेदात्मनश्श्रेष्ठान्विधिवत्पूजितात्मनः।
अन्नं प्राणो मनुष्याणा मन्नदः प्राणदोभवेत् ॥
तस्मादन्नं विशेषेण दातव्यं भूति मिच्छता।
अन्नदः सर्वकामैस्तु स्वरूपप्तरूलकृतः ॥
पूर्णचन्द्रप्रकाशेन विमानेन विराजितः।
सेव्यमानो वरस्त्रीभि र्देवलोकं स गच्छति ॥
क्रीडित्वा तु तत स्तस्मिन्वर्षकोटिं यथामरम्।
ततश्चापि च्युतः कालादिह लोके महायशाः ॥
वेदशास्त्रार्थतत्त्वज्ञो भोगवान् ब्राह्मणो भवेत्।

सर्वातिथ्यन्तु यः कुर्य्यान्मनुष्य स्तूपजायते॥
महाधनपतिः श्रीमान् वेदवेदाङ्गपारगः।
सर्वशास्त्रार्थविद्विद्वान् भोगवान् ब्राह्मणोभवेत्॥
सर्वातिथ्यन्तु यः कुर्य्याद्वर्षमेकमकल्मषम्।
धर्म्मार्जितधनोभूत्वा पाकभेदविवर्जितः॥
देवाग्निं स्वयं विप्रानर्चयित्वा पितॄनपि।
विप्रो नाग्राग्रनाशी य स्तस्य पुण्यफलं शृणु॥
वर्षेणैकेन यावन्ति पुण्यानश्नन्ति वै द्विजाः।
तावद्वर्षसहस्राणि मम लोके महीयते॥
ततश्चापि च्युतः कालादिह लोके महीयते।
वेदशास्त्रार्थतत्त्वज्ञो भोगवान् ब्राह्मणोभवेत्॥
सर्वातिथ्यन्तु यः कुर्य्याद्वर्षाण्यष्टनरेश्वर!।
एककालनियमेनापि सत्यवादी जितेन्द्रियः॥
सत्यसन्धो जितक्रोधः सदा धर्मेषु निष्ठितः।
अधर्मभीरु धर्मिष्ठो मायामात्सर्य्यवर्जितः॥
श्रद्दधानः शुचिर्नित्यं पाकभेदविवर्जितः।
स विमानेन दिव्येन दिव्यरूपी महायशाः॥
पुरन्दरपुरं याति गीयमानोऽप्सरोगणैः।
मन्वन्तरञ्च तत्रैव क्रीड़ित्वा देवपूजितः॥
मानुष्यं लोकमागम्य भोगवान् ब्राह्मणोभवेत्।
दशजन्मानि भूपत्वं प्राप्नुयाद्राजपूजितः॥
जातिस्मरश्च भवति यत्र तत्रैव जायते।
अतः परं प्रवक्ष्यामि भूमिदान मनुत्तमम्॥
यः प्रयच्छति विप्राय भूमिं रम्यां सुदक्षिणाम्।

श्रोत्रियाय दरिद्राय साग्निहोत्राय पाण्डव ! ॥
स सर्व्वकामतृप्तात्मा सर्व्वरत्नविभूषितः ।
सर्व्वपापविनिर्मुक्तो दीप्यमानो रविर्य्यथा ॥
बालसूर्य्यप्रकाशेन विचित्रध्वजशोभिना ।
याति यानेन दिव्येन मम लोकं महातपाः ॥
तत्र दिव्याङ्गनाभिस्तु सेव्यमानो यथासुखम् ।
कामगः कामरूपी च क्रीडत्यप्सरसाङ्गणैः ॥
यावद्बिभर्त्ति लोकान्वै भूमिः कुरुकुलोद्वह ! ।
भूमिदानस्य पुण्यस्य क्षयो नैवोपपद्यते ॥
ब्राह्मणाय दरिद्राय भूमिं दत्त्वा तु यो नरः ।
न हिंसति नरव्याघ्र ! तस्य पुण्यफलं शृणु ॥
सप्तद्वीपसमं प्राप्तं यत्र धान्यसमाकुला ।
सशैलवनदुर्गान्ता तेन दत्ता भवेन्मही ॥
भूमिं हि दीयमानाञ्च श्रोत्रियायाग्निहोत्रिणे ।
सर्व्वभूतानि मन्यन्ते मे ददातीति च श्रुतिः ॥
सुवर्णमणिरत्नानि धनधान्यवसूनि च ।
सर्व्वदानानि वै राजन् ददाति वसुधान्ददत् ॥
सागरान् सरितः शैलान् ! समानि विषमाणि च ।
सर्व्वगन्धान्रसान् स्नेहान् ददाति वसुधां ददत् ॥
ओषधिः फलसम्पन्नान् नगान् पुष्पफलोपगान् ।
कमलोत्पलषण्डानि ददाति वसुधां ददत् ॥
धर्म्मान् कामान् तथार्थंश्च वेदान् यज्ञांस्तथैव च ।
स्वर्गमोक्षगतिञ्चैव ददाति वसुधां ददत् ॥
अग्निष्टोमादिभिर्य्यज्ञैर्ये यजन्ति सदक्षिणैः ।

न तत्फलं भवेत्तेषां भूमिदानस्य यत्फलम् ॥
श्रोत्रियाय महीं दत्त्वा यो छिनत्ति न पाण्डव ! ।
तज्जनाः कथयिष्यन्ति यावल्लोकाः प्रतिष्ठिताः ॥
तावत्स्वर्गोपभोगानां भोक्तारं पाण्डुनन्दन ! ।
शस्यपूर्णां महीं यस्तु श्रोत्रियाय प्रयच्छति ॥
पितरस्तस्य तुष्यन्ति यावदाभूतसंप्लवम् ।
मम रुद्रस्य सवितुस्त्रिदशानां तथैव च ॥
प्रीतये विद्धि राजेन्द्र ! भूमिं दत्त्वा द्विजाय वै ।
स च पुण्येन पूतात्मा दाता भूमे र्युधिष्ठिर ! ॥
मयि सायुज्यतां याति नात्र कार्या विचारणा ।
यत्किञ्चित्कुरुते पापं पुरुषो वृत्तिकर्षितः ॥
स च गोकर्णमात्रेण भूमिदानेन शुध्यति ।
वेदानां पारगो यस्तु परं पुण्य मुदाहृतम् ॥
भूमेर्गोकर्णमात्रेण तत्फलन्तु विधीयते ।
मासोपवासे यत्पुण्यं चीर्णे चान्द्रायणेऽपि वा ॥
भूमे र्गोकर्णमात्रेण तत्फलन्तु विधीयते ॥

युधिष्ठिरः। देवदेव ! नमस्तेऽस्तु वासुदेव ! सुरेश्वर ! ।
गोकर्णस्य प्रमाणं मे वक्तुमर्हसि माधव ! ॥

श्रीभगवानुवाच। शृणु गोकर्णमात्रस्य प्रमाणं पाण्डुनन्दन ! ।
त्रिंशद्दण्डप्रमाणेन प्रमितं सर्वतोदिशम् ॥
प्रत्यक्पराग्पि राजेन्द्र ! तत्तथा दक्षिणोत्तरम् ।
तत् गोकर्णमिति प्राहुः प्रमाणोदरणे नृप ! ॥
सर्वेषां गोशतं यत्र सुखं तिष्ठति यन्त्रतः ।
स वत्स ! नरशार्दूल ! वै तद्गोकर्ण मुच्यते ॥

किङ्करा मृत्युदण्डाश्च कुम्भपाकाश्च दारुणाः ।
घोराश्च वारुणाः पापा: नोपसर्पन्ति भूमिदम् ॥
निराधारा रवाद्यास्तु तथा वैतरणी नदी ।
तीव्रास्तु यातना: कष्टाः नोपसर्पन्ति भूमिदम् ॥
चित्रगुप्त: कलिः कालो म्रुत्युर्वै मृत्युरेव च ।
यमश्च भगवान् साक्षात्पूजयन्ति महीप्रदम् ॥
रुद्रः प्रजापतिः शक्रः सुराः ऋषिगणास्तथा ।
अहञ्च प्रीतिमान् राजन् ! पूजयामो महीप्रदम् ॥
कृशवृत्तस्य वृत्तस्य क्षीणगोश्च कृशातिथेः ।
भूमिर्देया नरश्रेष्ठ ! सन्निधिः पारलौकिकम् ॥
सीदमानं कुटुम्बाय श्रोत्रियायाग्निहोत्रिणे ।
वृत्तस्थाय दरिद्राय भूमिर्देया नराधिप ! ॥
यथा जननी क्षीरेण पुत्रं वर्द्धयति स्वकम् ।
दातारमनुगृह्णाति दत्ता ह्येवं वसुन्धरा ॥
यथाविभर्ति गौर्वत्सं सृजति क्षीरमात्मनः ।
तथासर्वगुणोपेतं भूमिदम्पाति सम्पदा ॥
यथा द्विजा निराहन्ति जलसिक्तानि भूतले ।
तथा कामचिपुरो हन्ति भूमिदस्य दिने दिने ॥
यथोदयस्थसूर्य्यस्तु तमः सर्वं व्यपोहति ।
तथा पापान्नरस्येह भूमिदानं व्यपोहति ॥
दानाद्दयानुगृह्णाति यो हरेद्दश हन्तिसः ।
अतीतानागतानीह कुलानि कुरुनन्दन ! ॥
आश्रित्य भूमिमदत्त्वा दत्त्वा वा यो हरेत् पुनः ।
सबान्धो वारुणैः पाशैः क्षिप्यते पूयशोणिते ॥

स्वदत्तां परदत्तां वा यो हरेत् वै वसुन्धराम्।
न तस्य नरका घोरा निवर्तन्ते न निष्कृतिः॥
ब्राह्मणस्य हृते क्षेत्रे हन्याद्द्वादशपूरुषान्।
प्राप्नोति भूमियोनिञ्च नच मुच्येत जातु सः॥
दत्त्वा भूमिं द्विजेन्द्राय यस्तामेवोपजीवति।
षष्ठिं शतसहस्रस्य हन्तुः स लभ्यते फलम्॥
सोऽवाक्शिरास्तु पापात्मा कुम्भीपाकेषु पच्यते।
दिव्यैर्वर्षसहस्रैस्तु कुम्भीपाकाद्विनिर्गतः॥
इह लोके भवेच्छ्वापैः शतजन्मानि पाण्डव!।
दत्त्वा भूमिं तु देवानां यस्तामेवोपजीवति॥
विनाश्य स्वकुलं याति नरकानेकविंशतिम्।
नरकेभ्योविनिर्मुक्तः शुनां योनिं स गच्छति॥
श्वयोनेश्च परिभ्रष्टो विष्ठाया जायते क्रिमिः।
तत्र तत्रैव जायेत नोत्तरं विन्दते पुनः॥
फालाकृष्टा मही देया सबीजा शस्यमालिनी।
अथवा सोदका देया दरिद्राय द्विजाय वै॥
एवं दत्त्वा महीं राजन्! प्रहृष्टेनान्तरात्मना।
सर्वान् कामानवाप्नोति मनसा चिन्तितानपि।
बहुभिर्वसुधा दत्ता दीयन्ते च नराधिपैः॥
यस्य यस्य यदा भूमि स्तस्य तस्य तदा फलम्।
यः प्रयच्छन्ति कन्यां वै सभूषां श्रोत्रियाय च॥
स ब्रह्मदो हि राजेन्द्र! तस्य पुण्यफलं शृणु।
बलीवर्दसहस्राणां दत्तानां धूर्यवाहिनाम्॥
यत्फलं लभ्यते राजन्! कन्यादानेन तत्फलम्।

षष्टिवर्षसहस्राणि मम लोके महीयते ॥
ततश्चापि च्युतः कालादिह लोके स जायते ।
पितरस्तस्य तृप्यन्ति ये प्रयच्छन्ति कन्यकाम् ॥
यावन्ति चैव रोमाणि कन्यायाः कुरुनन्दन ! ।
तावद्वर्षसहस्राणि मम लोके महीयते ॥
ततश्चापि च्युतः कालादिह लोके स जायते ।
षडङ्गविच्चतुर्वेदी सर्वलोकार्चितो द्विजः ॥
यः सुवर्णं दरिद्राय ब्राह्मणाय प्रयच्छति ।
श्रोत्रियाय सुवृत्ताय बहु भूयश्च पाण्डव ! ॥
स मुक्तः सर्वपापेभ्यो बालसूर्य्यसमप्रभः ।
दिव्यं विमानमारूढः कामगः कामरूपवान् ॥
वर्षकोटिं महातेजा मम लोके महीयते ।
ततः कालावतीर्णश्च सोऽस्मिन् लोके महीयते ॥
वेदवेदाङ्गविद्विप्रः कोटियश्च पति महान् ।
यश्च रूप्यं प्रयच्छेत दरिद्राय द्विजातये ।
शक्रहन्तः शक्रसङ्गः स मुक्तः सर्वकिल्विषैः ॥
पूर्णचन्द्रप्रकाशेन विमानेन विराजता ।
कामरूपी यथाकामं स्वर्गलोके महीयते ॥
ततोऽवतीर्णः कालेन लोकेऽस्मिन् स महायशाः ।
सर्वलोकार्चितः श्रीमान् राजा भवति वीर्यवान् ॥
तिलपर्वतकं यस्तु श्रोत्रियाय प्रयच्छति ।
विशेषेण दरिद्राय तस्यापि शृणु यत्फलम् ।
पुण्यं दृषायुतोत्सर्गे यत्प्रोक्तं पाण्डुनन्दन ! ॥
तत्पुण्यं समनुप्राप्तस्तत्क्षणाद्विरजा भवेत् ।

यथा त्वचं भुजङ्गो वै त्यक्त्वा शुभ्रतनुर्भवेत् ।
तथा तिलप्रदानाद्वै पापं त्यक्त्वा विशुध्यति ।
तिलवर्णप्रयुक्तश्च जाम्बूनदविभूषितः ॥
विमानवरमारूढः पितृलोकं स गच्छति ।
षष्टिवर्षसहस्राणि कामरूपी महायशाः ॥
तिलप्रदानाद्रमते पितृलोके यथासुखम् ।
यः प्रयच्छति विप्राय तिलधेनुं नराधिप ! ॥
श्रोत्रियाय दरिद्राय शृणु तस्यापि यत्फलम् ।
गोसहस्रप्रदानेन यत्पुण्यं समुदाहृतम् ॥
तत्पुण्यफलमाप्नोति तिलधेनुप्रदो नरः ।
तिलानान्तु यवैर्यस्तु तिलधेनुं प्रयच्छति ॥
तावत्कोटिसहस्राणि स्वर्गलोके महीयते ।
आषाढकैस्तिलैः कृत्वा तिलधेनुं नराधिप ! ॥
द्वात्रिंशत्प्रस्थसंयुक्तां विष्णवे यः प्रयच्छति ।
मद्भक्तो मद्गतात्मा च तस्य पुण्यफलं शृणु ।
कन्यादानसहस्रस्य विधिदत्तस्य यत्फलम् ॥
तत्पुण्यं समनुप्राप्तो मम लोके महीयते ।
मम लोकावतीर्णश्च सोऽस्मिन् लोके हि जायते ॥
ऋग्यजुः सामवेदानां पारगो ब्राह्मणर्षभः ।
गान्तु यस्तु दरिद्राय ब्राह्मणाय प्रयच्छति ॥
प्रसन्नाङ्गीं रिणीं पुण्यां सवत्सां कांस्यदोहनाम् ।
यत्किञ्चित् दुष्कृतं कर्म तस्य पूर्वकृतं नृप ! ॥
तत्सर्वं तत्क्षणादेव विनश्यति न संशयः ।
यानञ्च दीप्तसंयुक्तं दीप्यमानमलङ्कृतम् ॥

आरूढ: कामगन्दिव्यङ्गोलोकमभिगच्छति ।
यावन्ति चैव रोमाणि तस्या गोस्तु नराधिप ! ॥
तावद्वर्षसहस्राणि गवां लोके महीयते ।
गोलोकादवतीर्णस्तु लोकेऽस्मिन् ब्राह्मणो भवेत् ॥
सत्रयाजी शतायुश्च जायते सद्भिरर्चित: ।
तिला गाव: सुवर्णञ्च तथा कन्या वसुन्धरा ॥
तारयन्तीह दत्तानि ब्राह्मणेभ्यो महाभुज ! ।
ब्राह्मणं वृत्तसम्पन्नमाहिताग्निमलोलुपम् ॥
दापयेद्विधिवद्राजन् ! सन्निधि: पारलौकिक: ।
आहिताग्निं दरिद्रञ्च श्रोत्रियञ्च जितेन्द्रियम् ॥
स्वकर्मनिरतञ्चैव द्विजं यत्नेन पूजयेत् ।
आहिताग्नि: सदा पात्रं सदा पात्रञ्च वेदवित् ॥
पात्राणामपि तत्पात्रं शूद्रान्नं यस्य नोदरे ।
सर्वं वेदमयं पात्रसर्वं पात्रं तपोमयम् ॥
असङ्कीर्णञ्च यत्पात्रं तत्पात्रं तारयिष्यति ।
दृढस्वाध्यायनियमा: स्वप्रकीर्णेन्द्रियाश्च ये ॥
पञ्चयज्ञरता नित्यं पूजितास्तारयन्ति ते ।
ये चान्तदान्ताश्च तथाभिपूर्णा
जितेन्द्रिया: प्राणिवधे निवृत्ता: ॥
प्रतिग्रहे सङ्कुचिता गृहस्था
स्तेब्राह्मणास्तारयितुं समर्था: ॥
नित्योदकी नित्ययज्ञोपवीती
नित्यस्वाध्यायी वृषलान्नवर्जी ।

ऋतञ्च छत्रादिकं योविधिनाददाति
स ब्राह्मणस्तारयितुं समर्थः।
ब्राह्मणो यस्तु मद्भक्तो मद्याजी मत्परायणः॥
मयि सन्न्यस्तकर्माच स विप्रस्तारयिष्यति।
द्वादशाक्षरतत्वज्ञश्चातुर्वर्ण्यं विभागवित्॥
षच्छिद्रः पञ्चकालज्ञः सविप्र स्तारयिष्यति॥
इति श्रीगौतमीये वैष्णवधर्मशास्त्रे अष्टमोऽध्यायः।

---

## सप्तमोऽध्यायः।

वैशम्पायनः। वासुदेवेन दानेषु कथितेषु यथाक्रमम्।
अवितृप्तस्तु धर्मेषु राजा केशवमब्रवीत्॥
देव! धर्मामृतमिदं शृण्वतोऽपि परन्तप!।
न विद्यते नरश्रेष्ठ! मम तृप्तिर्हि माधव!॥
अनडुत्सम्प्रदानस्य यत्फलन्तु विधीयते।
तत्फलं कथयस्वेह तव भक्तस्य मेऽच्युत!॥।
यानि दानानि वार्ष्णेय! त्वयानोक्तानि कानि च।
तान्याचक्ष्व सुरश्रेष्ठ! तेषाञ्चापि क्रमात्फलम्॥
भगवानुवाच। शृणु धर्मविदां श्रेष्ठ! दत्तस्यानडुहः फलम्।
पवित्रत्वात् सुपुण्यत्वात् पावनत्वात्तथैव च॥
दशधेनुसमोऽनड्वानेकोऽपि कुरुपुङ्गव!।
मेदोमांसविपुष्टाङ्गोनीरोगः पापवर्जितः॥
युवा भद्रः सुशीलश्च सर्वदोषविवर्जितः।
धुरन्धरास्तारयति दत्ता विप्राय पाण्डव!॥

स तेन पुण्यदानेन पञ्चकोटी युधिष्ठिर!।
यथा मम महातेजा मम लोके महीयते॥
दरिद्रायैव दातव्यं न समृद्धाय पाण्डव!।
वर्षाणां हि तटाकेषु पञ्चदश्यां समाहितः॥
योहि दद्यादनड्वाहौ द्वौ युक्तौ च धुरन्धरौ।
सुवृत्ताय दरिद्राय श्रोत्रियाय विशेषतः॥
तस्य यत्पुण्यमाख्यातं तच्छृणुष्व युधिष्ठिर!।
गोसहस्रप्रदानेन यत्प्रोक्तं फलमुत्तमम्॥
तत्पुण्यफलमासाद्य याति लोकान् स मामकान्।
यावन्ति चैव रोमाणि तयोश्चानडुहो र्नृप!॥
तावद्वर्षसहस्राणि मम लोके महीयते।
दरिद्रायैव दातव्यं न समृद्धाय पाण्डव!॥
वर्षाणां हि तटाकेषु फलं नैव पयोधिषु।
तस्मादनडुहन्दद्याद्दरिद्राय हिताय वै॥
स तेन पुण्यदानेन पूतात्मा कुरुपुङ्गव!।
विमानन्दिव्यमारूढो दिव्यरूपी यथासुखम्॥
मम लोकेषु रमते यावदाभूतसंप्लवम्।
गृहं दीपप्रभायुक्तं शय्यासनविभूषितम्॥
भाजनोपस्करैर्युक्तं धान्यं पूर्णमलङ्कृतम्।
दासीगोभूमिसंयुक्तं संयुक्तं सर्वसाधनैः॥
ब्राह्मणाय दरिद्राय श्रोत्रियाय युधिष्ठिर!।
दद्यात्सदक्षिणं यस्तु तस्य पुण्यफलं शृणु॥
देवाः पितृगणाश्चैव सिद्धयक्षर्षयस्तथा।
प्रयच्छन्ति प्रणम्या वै यानमादित्यसन्निभम्॥

तेन गच्छेच्छ्रियायुक्तो ब्रह्मलोकमनुत्तमम्।
स्त्रीसहस्रभृते दिव्ये भवने तत्र काञ्चने॥
मोदते ब्रह्मलोकेषु यावदाभूतसंप्लवम्।
शय्यामास्तरणोपेतां यः प्रयच्छति पाण्डव!॥
अर्चयित्वा द्विजं भक्त्या वस्त्रमाल्यानुलेपनैः।
भोजयेच्च विचित्राणि तस्य पुण्यफलं शृणु॥
आहिताग्निसहस्रस्य तर्पितस्य च यत्फलम्।
तत्पुण्यफलमाप्नोति यस्तु विप्राय यच्छति॥
छन्दोभिः सह युज्यन्ते विमानेन विराजितः।
सप्तर्षिलोकान् व्रजति पूज्यते ब्रह्मवादिभिः॥
चतुर्युगानि वै तत्र क्रीड़ित्वा तत्र देववत्।
इहैव मानुषे लोके विप्रो भवति वेदवित्॥
विश्रामयति यो विप्रं श्रान्तमध्वपरिश्रमात्।
विनश्यति तदा पापं तस्य वर्षशतं नृप!॥
अथ प्रक्षालयेत्पादौ तस्य तोयेन भक्तिमान्।
दशवर्षकृतं पापं व्यपोहति न संशयः॥
घृतेन वाथ तैलेन पादौ यस्तस्य पूजयेत्।
तद्द्वादशाब्द समारूढं पापमाशु व्यपोहति॥
येन दानस्य दत्तस्य यच्च पुण्यमुदाहृतम्।
तत्पुण्यफलमाप्नोति यस्त्वेवं विप्रमर्चयेत्॥
स्वागतेन च यो विप्रं पूजयेदासनेन च।
प्रत्युत्थानेन वा राजन्! स देवानां प्रियो भवेत्॥
स्वागतेनाग्नयोराजन्नासनेन शतक्रतुः।
प्रत्युत्थानेन पितरः प्रीतिं यान्त्यतिथिप्रियाः॥

अग्निशक्रपितृणाञ्च तेषां प्रीत्या नराधिप!।
सम्बत्सरकृतं पापन्तत्र सद्यो विनश्यति॥
यः प्रयच्छति विप्राय यानमाल्यविभूषितः।
स याति मणिचित्रेण रथेनेन्द्रनिकेतनम्॥
पुरन्दरपुरे तत्र दिव्यनारीनिषेविते।
षष्टिवर्षसहस्राणि क्रीड़तेऽप्सरसाङ्गणैः॥
वाहनं ये प्रयच्छन्ति ब्राह्मणाय युधिष्ठिर!।
ते यान्ति रत्नचित्रेण वाहनेन सुरालयम्॥
स तत्र कामं क्रीड़ित्वा सेव्यमानोऽप्सरोगणैः।
इह लोके भवेद्विप्रो वेदवेदाङ्गतत्त्ववित्॥
पादपं पल्लवाकीर्णं पुष्पितं सफलन्तथा।
गन्धमाल्यार्चितं कृत्वा वस्त्राभरणभूषितम्।
यः प्रयच्छति विप्राय श्रोत्रियाय दरिद्रिणे।
भोजयित्वा यथाकामं तस्य पुण्यफलं शृणु॥
जाम्बूनदविचित्रेण विमानेन विराजता।
पुरन्दरपुरं याति जयशब्दरवैर्युतः॥
तत्र शक्रपुरे रम्ये शक्रस्य कल्पपादपम्।
ददाति चेप्सितं सर्वं मनसा यद्यदिच्छति॥
यावन्ति तस्य पत्राणि पुष्पाणि च फलानि च।
तावद्वर्षसहस्राणि शक्रलोके महीयते॥
शक्रलोकावतीर्णश्च मानुष्यं लोकमागतः।
रथाश्वगजसम्पूर्णं पुरं राष्ट्रञ्च रक्षति॥
स्थापयित्वा तु मद्भक्त्या यो मत्प्रकृतिमान् नरः।
न स्नानं विधिवत्कृत्वा पूजाकर्माणि कारयेत्॥

स्वयं वा पूजयेद्भक्त्या तस्य पुण्यफलं शृणु ॥
अश्वमेधसहस्रस्य यत्फलं समुदाहृतम् ।
तत्फलं समनुप्राप्य मत्सालोक्यं प्रपद्यते ॥
न जाने निर्गमं तस्य मम लोकाद्युधिष्ठिर ! ।
देवालये विप्रगृहे गोवाटे चत्वरेऽपि वा ॥
प्रज्वालयति यो दीपं तस्य पुण्यफलं शृणु ।
आरुह्य काञ्चनं यानं द्योतयन् सर्वतोदिशम् ॥
गच्छेदादित्यलोकं स सेव्यमानः सुरोत्तमैः ।
तत्र प्रकामं क्रीडित्वा वर्षकोटिं महायशाः ॥
इह लोके भवेद्विप्रो वेदवेदाङ्गपारगः ।
देवालयेषु वा राजन् ! ब्राह्मणावसथेषु वा ॥
चत्वरेषु चतुष्के वा रात्रौ वा यदि वा दिवा ।
माल्यागान्धर्ववाद्यानि धर्मश्रावणिकाश्च याः ॥
यस्तु कारयते भक्त्या मद्गतेनान्तरात्मना ।
तस्य देवा नरश्रेष्ठ ! पितरश्चापि हर्षिताः ॥
सुप्रीताः सम्प्रयच्छन्ति विमानं कामगं शुभम् ।
स च तेन विमानेन याति देवपुरं नरः ॥
तत्र दिव्याप्सरोभिस्तु देवमानं प्रमोदते ।
देवलोकावतीर्णश्च स लोकेऽस्मिन्नराधिप ! ॥
वेदवेदाङ्गतत्त्वज्ञो भगवान् ब्राह्मणो भवेत् ।
चत्वरे वा सभायां वा तोरणे वा गृहाङ्गणे ॥
कृत्वाग्निकुण्डं विपुलं स्थण्डिलं वा युधिष्ठिर ! ।
तत्राग्निश्चतुरोमासान् ज्वालयेद्यस्तु भक्तिमान् ॥
समाप्तेषु तु मासेषु पौष्यादिषु तथा द्विजान् ।

भोजयेत्पायसं मृष्टं सघृतं मद्गतात्मना ॥
दक्षिणाञ्च यथाशक्ति ब्राह्मणेभ्यो निवेदयेत् ।
एवं नित्यन्तु यः कुर्य्यात् नित्य मेवार्चयंस्तुमाम् ॥
तस्य पुण्यफलं यद्वै तन्निबोध युधिष्ठिर ! ।
तेनाहं शङ्करश्चास्मि पितरो ह्यग्नयस्तथा ॥
यास्याम: परमां प्रीतिं नात्र कार्य्या विचारणा ।
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ॥
सोऽस्मत्प्रीतिकर: श्रीमान् मम लोके महायशा: ।
वेदवेदाङ्गविद्विप्रो जायतेऽमरपूजित: ॥
य: करोति नरश्रेष्ठभरणं ब्राह्मणस्य तु ।
श्रोत्रियस्याभिजातस्य दरिद्रस्य विशेषत: ॥
तस्य पुण्यफलं यद्वै तन्निबोध युधिष्ठिर ! ।
गवां कोटिप्रदानेन यत्पुण्यं समुदाहृतम् ॥
तत्पुण्यफलमाप्नोति वर्षेणैकेन पाण्डव ! ।
काञ्चनेन विचित्रेण यानेनाम्बरशोभिना ॥
स याति मामकं लोकं दिव्यस्त्रीशतसेवित: ।
गीयमानोऽमरस्त्रीभि र्वर्षाणां कोटिविंशतिम् ॥
क्रीडित्वा मामके लोके तत्र देवैरभिष्टुत: ।
मानुष्य मवतीर्णस्तु वेदविद् ब्राह्मणो भवेत् ॥
करकं कुण्डिकां वापि यो मज्जलभाजनम् ।
य: प्रयच्छति विप्राय तस्य पुण्यफलं शृणु ॥
ब्रह्मचर्य्येतु यत्प्रोक्ते फलं प्रोक्तं यथाविधि ।
तत्पुण्यफलमाप्नोति जलभाजनदो नर: ॥
सुतृप्त: सुप्रभ: सौम्य: प्रहृष्टेन्द्रियमानस: ।

हंससारससंयुक्तेन विमानेन विराजता ॥
स याति वारुणं लोकं दिव्यगन्धर्वसेवितम्।
पानीयं यः प्रयच्छेद्वै जीवानां जीवनं परम् ॥
नैष्ठिकेषु च मासेषु तस्य पुण्यफलं शृणु।
कपिलाकोटिदानस्य यत्पुण्यन्तु विधीयते ॥
तत्पुण्यफलमाप्नोति पानीयं यः प्रयच्छति।
पूर्णचन्द्रप्रकाशेन विमानेन विराजता ॥
स गच्छेद्विष्णुसदनं सेव्यमानोऽप्सरोगणैः।
त्रिंशत्कोटिसमास्तत्र दिव्यगन्धर्वसेवितः ॥
क्रीड़ित्वा मानुषे लोके चतुर्वेदी द्विजोभवेत्।
शिरोऽभ्यङ्गप्रदानेन तेजस्वी प्रियदर्शनः ॥
सुभगो रूपवान् शूरः पण्डितश्च भवेन्नरः।
वस्त्रदायीतु तेजस्वी रूपवान् प्रियदर्शनः ॥
भवेच्च सुभगस्त्रीणां स्त्रीणां नित्यं मनोहरः।
उपानहञ्च च्छत्रञ्च यो ददाति नरोत्तमम् ॥
स याति रथमुख्येन काञ्चनच्छत्रशोभिना।
शक्रलोकं महातेजा सेव्यमानोऽप्सरोगणैः ॥
काष्ठपादुकदा यान्ति विमानैर्हंसयोजितैः।
धर्मराजपुरं रम्यं सेव्यमाना सुरोत्तमैः ॥
दन्तकाष्ठप्रदानेन दृष्टधातुर्भवेन्नरः।
सुगन्धवदनः श्रीमान् मेधासौभाग्यसंयुतः।
क्षीरं दधि घृतं वापि गुडं मधु रसं तथा ॥
ये प्रयच्छन्ति विप्रेभ्यः परां भक्तिं मुपागताः।
ते हृष्टै रत्नयानैश्च श्वेतैः स्रगदामभूषितैः।

गीयमानैश्च गन्धर्वैर्यान्ति शक्रपुरं नरः ॥
तत्र दिव्याप्सरोऽभिस्तु सेव्यमानो यथासुखम् ।
षष्टिवर्षसहस्राणि मोदन्ते देवसन्निभाः ॥
ततः कालावतीर्णाश्च जायन्ते त्विह मानवाः ।
प्रभूतधनधान्याश्च भोगवन्तो नरोत्तमाः ॥
वैशाखे मासि वैशाखे दिवसे पाण्डुनन्दन ! ।
वैवस्वतं समुद्दिश्य परां भक्ति मुपागताः ॥
अभ्यर्च्य विधिवद्विप्रास्तिलान् गुडसमायुतान् ।
ये प्रयच्छन्ति विप्रेभ्य स्तेषां पुण्यफलं शृणु ॥
गोप्रदानेन यत्पुण्यं विधिवत् पाण्डुनन्दन ! ।
तत्पुण्यं समनुप्राप्तो यम लोके महीयते ॥
ततश्चापि च्युतः कालादिह राजा भविष्यति ।
तस्मिन्नेव दिने विप्रान् भोजयित्वा सदक्षिणाम् ॥
तोयपूर्णानि रम्याणि भाजनानि दिशन्ति ये ।
ते यान्त्यादित्यवर्णाभै र्विमानै र्वरुणालयम् ॥
तत्र दिव्याङ्गनाभिस्तु रमन्ते कामगामिना ।
ततोऽवतीर्णाः कालेन तेचास्मिन् मानुषे पुनः ॥
भोगवन्तो द्विजश्रेष्ठा भविष्यन्ति न संशयः ।
अनन्तराशी यश्चापि वर्तते व्रतवत्सदा ॥
सत्यवान् क्रोधरहितः शुचिः स्नानरतः सदा ।
स विमानेन दिव्येन याति रत्नपुरं नरः ॥
तत्र दिव्याप्सरोभिस्तु वर्षकोटिं महातपः ।
क्रीडित्वा मानुषे लोके जायते वेदविद्द्विजः ॥
एक भुक्तेन यश्चापि वर्षमेकन्तु वर्तते ।

ब्रह्मचारी जितक्रोधः सत्यशौचसमन्वितः ॥
स विमानेन शुभ्रेण याति शक्रपुरं नरः ॥
दशकोटिसमास्तत्र क्रीड़ित्वाप्सरसाङ्गणैः ।
इह मानुष्यके लोके ब्राह्मणो वेदविद्भवेत् ॥
चतुर्थेनेह भक्तेन ब्रह्मचारी जितेन्द्रियः ।
वर्त्तते वर्षमेकं यस्तस्य पुण्यफलं शृणु ॥
चित्रवर्हिणयुक्तेन विचित्रध्वजशोभिना ।
याति यानेन दिव्येन स महेन्द्रपुरन्नरः ॥
कन्याभि र्वरस्त्रीभिः सेव्यमानो यथासुखम् ।
तत्रच द्वादशकोटिसमाः सुखं प्रमोदते ॥
ततो लोकावतीर्णश्च लोके चास्मिन् नराधिप ! ।
भवेद्वै ब्राह्मणो विद्वान् क्षमावान् वेदपारगः ॥
षष्टकाले तु योऽश्नाति वर्षमेकन्तु कल्पशः ।
ब्रह्मचर्य्याकृते युक्तः शुचिः क्रोधविवर्जितः ॥
तपोयुक्तस्य तस्यापि शृणुष्व फलमुत्तमम् ।
अग्न्यादित्यप्रकाशेन विमानेनाग्निसन्निभः ॥
स याति मम लोकं वै दिव्यनारीनिषेवितः ।
तत्र सर्वैर्मरुद्भिश्च सेव्यमानो यथासुखम् ॥
पश्यत्येव सदा मान्तु क्रीडत्यप्सरसाङ्गणैः ।
पक्षोपवासं यश्चापि कुरुते मद्गतात्मना ॥
समाप्ते तु व्रते तस्मिंस्तर्पयेच्छ्रोत्रियं द्विजम् ।
सोऽपि यानेन दिव्येन सेव्यमानो महर्षिभिः ॥
द्योतयन् प्रथमं व्योम मम लोकं प्रवर्त्तते ।
तत्रवै मोदते कामं कामरूपी यथासुखम् ।

त्रिंशत्कोटिसमा राजन् ! क्रीड़ित्वा देववत् सुखम् ॥
इह मानुष्यके लोके पूजनीयो द्विजोत्तमः ।
त्रयाणामपि वेदानां साङ्गानां पारगो भवेत् ॥
यश्च मासोपवासं वै कुरुते मद्गतात्मना ।
जितेन्द्रियो जितक्रोधो जितधीः स्नानतत्परः ॥
समाप्ते नियमे तत्र भोजयित्वा द्विजोत्तमान् ।
दक्षिणाञ्च ततोदद्यात् प्रहृष्टेनान्तरात्मना ।
स गच्छति महातेजा ब्रह्मलोक मनुत्तमम् ॥
सिंहयुक्तेन यानेन दिव्यस्त्रीगणसेवितः ।
तत्रैव ब्रह्मणो लोके देवर्षिगणसेवितः ॥
शतकोटिसमा राजन् ! यथाकामं प्रमोदते ।
ततः कालावतीर्णश्च सोऽस्मिन् लोके द्विजोभवेत् ॥
षड़ङ्गविच्चतुर्वेदी त्रिंशजन्मन्यरोगवान् ।
यः स्नात्वा सर्वकामस्तु शुचिः क्रोधविवर्जितः ॥
महाप्रस्थानमेकाग्रो याति तद्गतमानसः ।
स गच्छेदिन्द्रसदनं विमानेन महातपाः ॥
महामणिविचित्रेण सुवर्णेन विराजता ।
शतकोटिसमास्तत्र सुराधिपतिपूजितः ॥
नागपृष्ठे निवसति दिव्यस्त्रीशतसेवितः ।
शक्रलोकावतीर्णश्च मानुषेषु प्रजायते ॥
राज्ञां राजन् ! महातेजाः सर्वलोकार्चितः प्रभुः ।
प्रायोपवेशं यः कुर्य्यात् मद्गतेनान्तरात्मना ॥
नमो ब्रह्मण्यदेवायेत्युक्त्वा मन्त्रं समाहितः ।
पुनः स्वस्थो जितक्रोधस्तस्य पुण्यफलं शृणु ॥

कामगः कामरूपी च बालसूर्य्यसमप्रभः।
स विमानेन दिव्येन याति लोकांस्तु मामकान्॥
स्वर्गात्स्वर्गमहातेजा गत्वा दत्त्वा यथासुखम्।
मम लोकेषु रमते यावदाभूतसंप्लवम्॥
अग्निप्रवेशं यश्चापि कुरुते मद्गतात्मना।
सोऽपि यानेन दिव्येन मम लोकं प्रपद्यते॥
तत्र सर्वगुणोपेतः पश्यत्येव च मां सदा।
त्रिंशत्कोटिसमा राजन्! मोदते मम सन्निधौ॥
ततोऽवतीर्णः कालेन वेदविद्ब्राह्मणो भवेत्।
करीषं साधयेद्यस्तु मां प्रपन्नः शुचिव्रतः॥
नमो ब्रह्मण्यदेवायेत्येतन्मन्त्रमुदीरयेत्।
बालसूर्य्यप्रकाशेन विमानेन विराजता॥
मम लोकं समासाद्य पद्मकोटीः प्रमोदते।
मम लोकावतीर्णश्च लोकेऽस्मिन् क्षत्रियो भवेत्॥
निवेदयति मन्मूर्त्त्यां मन्मना मद्गतः शुचिः।
रुद्रं दक्षिणमूर्त्तिं वा चतुर्दश्यां विशेषतः॥
सिद्धैर्ब्रह्मर्षिभिश्चैव देवैः सर्वैश्च पूजितः।
गन्धर्वैर्भूतसङ्घैश्च गीयमानो महातपाः॥
प्रविशेत् स महातेजा मां वा शङ्करमेव वा।
तस्यापुनर्भवं राजन्! विद्धि नात्र विचारणा॥
स्त्रीग्रहे गोग्रहे वाथ गुरुविप्रग्रहेऽथवा।
हन्यते यैस्तु राजेन्द्र! शक्रलोकं व्रजन्ति ते॥
तत्र जाम्बूनदमये विमाने कामगामिनि।
मन्वन्तरं प्रमोदन्ते दिव्यनारीनिषेविताः॥

अश्रुतस्याप्रदानेन दत्तस्य हरणेन च ।
जन्मप्रभृति यद्दत्तं सर्वं नश्यति भारत ! ॥
नागोप्रदा स्तत्र पयः पिबन्ति
न भूमिदा भूमि मथाश्नुवन्ति ।
अन्यान् कामान् ब्राह्मणेभ्यो ददाति
तां स्तान् कामान् स्वर्गलोके स भुङ्क्ते ॥
यद्यदिष्टतमं द्रव्यं न्यायेनोपार्जितञ्च यत् ।
ततो गुणवते देयं न देवात् चयमिच्छता ॥
अनुपोष्य च रात्रिञ्च तीर्थान्यनभिगम्य च ।
अदत्त्वा काञ्चनञ्चापि दरिद्रो नाम जायते ॥
दानं यत्सफलं नैव श्रोत्रियाय न दीयते ।
न तद्गुणवते देयं न देवात् चय मिच्छता ॥
अनुपोष्य च रात्रिञ्च तीर्थान्यनभिगम्य च ।
श्रोत्रिया यत्र नाश्नन्ति न देवा स्तत्र भुञ्जते ॥
श्रोत्रियेभ्यः परं नास्ति दैवतं तारणं महत् ।
निधानञ्चापि राजेन्द्र ! नास्त्यश्रोत्रियभाजनात् ॥
इति गौतमीये श्रीवैष्णवधर्मशास्त्रे सप्तमोऽध्यायः ।

---

## अष्टमोऽध्यायः ॥

युधिष्ठिरः । विप्रयोगे शरीरस्य सेन्द्रियस्य विशेषतः ।
अन्तरा वर्तमानस्य गतिः प्राणस्य कीदृशी ॥
श्रीभगवानुवाच । शुभाशुभकृतं सर्वं प्राप्नोतीह फलं नरः ।
स तु सर्वस्य भूतस्य परत्वन्नाम विद्यते ॥

पञ्चत्वं पाण्डवश्रेष्ठ! पञ्चीभूतकरं परम्।
तेषां पञ्चमहायज्ञान् ये कुर्वन्ति द्विजोत्तमाः॥
पञ्चत्वं पञ्चभिर्भूतै र्वियोगं सम्प्रपद्यते।
न जायते न म्रियते पुरुषः शाश्वतः सदा॥
प्रायेण मरणं नाम पापिनामेव पाण्डव!।
येषान्तु न गतिः पुण्या तेषां मरणमुच्यते॥
प्रायेणाकृतकृत्यत्वाद्भूय उद्विजते जनः।
कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम्॥
युधिष्ठिरः। पञ्चयज्ञाः कथं देव! क्रियन्ते तु द्विजातिभिः।
तेषान्नाम च देवेश! वक्तुमर्हस्यशेषतः॥
भगवानुवाच। शृणु पञ्च महायज्ञान् कीर्त्यमानान् युधिष्ठिर!।
यैरेव ब्रह्मसालोक्यं लभ्यते गृहमेधिना॥
ऋषियज्ञं ब्रह्मयज्ञं भूतयज्ञञ्च पार्थिव!।
नृयज्ञं पितृयज्ञं पञ्चयज्ञान् प्रचक्षते।
तर्पणं ऋषियज्ञः स्यात् स्वाध्यायो ब्रह्मयज्ञकम्।
भूतयज्ञो बलियज्ञो नृयज्ञोऽतिथिपूजनम्॥
पितृनुद्दिश्य यत्कर्म पितृयज्ञः प्रकीर्तितः।
हुतञ्चाप्यहुतञ्चैव तथा प्रहुतमेव च॥
प्राशितं बलिदानञ्च पाकयज्ञान् प्रचक्षते।
वैश्वदेवादयो होमा हुतमित्युच्यते बुधैः॥
अहुतन्तु भवेद्दत्तं प्रहुतं ब्राह्मणाशितम्।
प्राणाग्निहोत्रहोमश्च प्राशितं विधिवद्द्विज॥
बलिश्च कर्म राजेन्द्र! पाकयज्ञाः प्रकीर्तिताः।
केचित्पञ्च महायज्ञाः पाकयज्ञान् प्रचक्षते॥

अपरे क्षत्रियश्चादि महायज्ञ वेदोविदुः।
सर्व्व एते महायज्ञाः सर्व्वथा परिकीर्त्तिताः॥
ब्राह्मणोभूणु रेतांस्तु यथाशक्तिमुपाहरेत्।
अहन्यहनि ये त्वेतानकृत्वा भुञ्जते स्वयम्॥
केवलं मलमश्नन्ति ते नरेन्द्र! न संशयः।
तस्मात् स्नात्वा द्विजो विद्वान् कुर्य्यादेतान् दिने दिने॥
अतोऽन्यथा तु भुञ्जन्वै प्रायश्चित्तीयते द्विजः।
युधिष्ठिरः। देवदेव! नमस्तेऽस्तु त्वद्भक्तस्य जनार्द्दन!॥
वक्तुमर्हसि देवेश! स्नानस्य तु विधिं मम।
भगवानुवाच। शृणु पाण्डव! तत्त्वेन पवित्रं पापनाशनम्।
स्नात्वा येन विधानेन मुच्यते किल्बिषाद् द्विजः॥
मृदश्च गोमयं चैव तिलदर्भांस्तथैव च।
पुष्पाण्यपि यथालाभमादाय तु जलं व्रजेत्॥
नद्यां सत्यां न च स्नायादन्यत्र द्विजसत्तमः।
सति प्रभूते पयसि नाल्पे स्नायात्कदाचन॥
गत्वोदकसमीपेतु शुचौ देशे मनोहरे।
ततो मृद्गोमयादीनि तत्र प्रोक्ष्य विनिक्षिपेत्॥
प्रदक्षिणं समावृत्त्या नमस्कुर्य्यात्तु तज्जलम्।
न च प्रक्षालयेत्तीर्थन्ताभिर्विद्वान् कदाचन॥
न च पादेन वा हन्याद्धस्तेनैव च वा जलम्।
सर्व्वदेवमया ह्यापो मम याः पाण्डुनन्दन!॥
तस्मात्तास्तु न हन्यव्यास्ताभिर्निग्राहयेत् स्थलम्।
केवलं प्रथमं मज्जेत् नाङ्गानि विमृजेद्बुधः॥
ततस्तीर्थं समासाद्य कुर्य्यादाचमनं बुधः।

गोपुच्छाकृतिवत् कृत्वा करेण प्रपिबेज्जलम् ॥
द्विस्त्वपरिमृजेद्वक्त्रं पादावभ्युक्ष्य चात्मनः।
शीर्षण्यांस्तु ततः प्राणान् सकृदेव समं स्पृशेत् ॥
बाहू द्वौ च ततः स्पृष्ट्वा हृदयं नाभिमेव च।
प्रत्यङ्गमुदकं स्पृष्ट्वा मूर्धानन्तु ततः स्पृशेत् ॥
आपः पुनन्त्वित्युक्त्वा च पुनराचमनञ्चरेत्।
सोङ्कारं व्याहृतिं वापि सदसस्पतिमित्यृचम् ॥
आचम्य प्रथमं पश्चात् तत्र कृत्वा समालभेत्।
ऋग्वेदं विष्णुरित्यङ्गमुत्तमाधममध्यमम् ॥
आलभ्य वारुणैः सूक्तैर्नमस्कृत्य जलं ततः।
स्रवन्त्याश्चेत्प्रतिस्रोतः प्रतिकूलञ्च वारिषु ॥
मज्जेदोमित्युदाहृत्य न च प्रक्षोभयेज्जलम्।
गोमयञ्च त्रिधा कृत्वा यथापूर्वं समालभेत् ॥
सव्याहृतिकां सप्रणवां सावित्रीञ्च जपेत् पुनः।
पुनराचमनं कृत्वा मद्गतेनान्तरात्मना ॥
आपोहिष्ठेति तिसृभिर्दर्भपूतेन वारिणा।
तथातरत् समन्दीति सिञ्चेत्तेतिजलं क्रमात् ॥
गोसूक्तेनाश्वसूक्तेन शुद्धवर्णेन चाप्यथ।
वैष्णवैर्वारुणैः सूक्तैः सावित्रै रुद्रदैवतैः ॥
वामदेवेन चात्मानं मन्त्रैर्मन्मयसामभिः।
सिक्तान्तः सलिले सूक्तं जपेच्चैवाघमर्षणम् ॥
सव्याहृतिकां सप्रणवां सावित्रीं वा ततो जपेत्।
आश्वासमोक्षात् प्रणवं जपेद्वा मामनुस्मरन् ॥
ऋक्पादं वा जपेन्मन्त्रमष्टाक्षरमथापिवा।

संस्पृत्य तीर्थमासाद्य धौते शुक्ले च वाससी ॥
शुक्लेनाच्छादयेत् कच्छे न कुर्य्यात् कटिपार्श्वके ।
पार्श्वनिबन्धकच्छोयत् कुरुते कर्म वैदिकम् ॥
राक्षसा दानवा दैत्या तद्विलुम्पन्ति हर्षिताः ।
तस्मात्सर्वप्रयत्नेन कच्छं पार्श्वे न धारयेत् ॥
ततः प्रक्षाल्य पादौ द्वौ हस्तौ चैव मृदाशनैः ।
आचम्य पुनराचामेत् सावित्र्याञ्जलिना जपेत् ॥
जले जलगतः शुद्धः स्थलएव स्थलस्थितः ।
उभयत्र स्थितस्तस्मादाचामेदात्मशुद्धये ॥
दर्भेषु दर्भपाणिः सन् प्राङ्मुखस्तु समाहितः ।
प्राणायामस्ततः कुर्य्यान्मद्ध्यानान्तरात्मना ॥
सहस्रकृत्वः सावित्रीं शतकृत्वस्तु वा जपेत् ।
समाप्ते तु जपे तस्मिन् सावित्र्या चानुमन्त्र्य च ॥
मन्देहानां विनाशाय रक्षसां विक्षिपेज्जलम् ।
मद्गर्गोऽसीत्यथाचान्तः प्रायश्चित्तजलं क्षिपेत् ॥
अथादाय स पुष्पाणि तोयान्यञ्जलिना क्षिपेत् ।
प्रक्षिप्य प्रतिसूर्य्यञ्च व्योममुद्रां प्रकल्पयेत् ॥
ततो द्वादशकृत्वस्तु सूर्य्यस्यैकाक्षरं जपेत् ।
ततष्षडक्षरादीनि त्रिः कृत्वा परिवर्तयेत् ॥
प्रदक्षिणं परावृत्य मुद्रायाः स्वमुखन्तथा ।
ऊर्द्ध्वबाहुस्ततो भूत्वा सूर्य्यमीक्षन् समाहितः ॥
तन्मण्डलस्थं मां ध्यायेत् ततो मूर्त्तिञ्चतुर्भुजम् ।
उदुत्यञ्च जपेन्मन्त्रं चित्रन्तच्चक्षुरित्यपि ॥
सावित्रीञ्च यथाशक्ति जप्त्वा सूक्तञ्च मामकम् ।

मन्त्रवाणि च सामानि पूरुषं सूक्तमेव तु ॥
ततश्चालोकयेदर्कं हंसशुचिषदित्यृचा ।
प्रदक्षिणं समावृत्य नमस्कृत्य दिवाकरम् ॥
ततस्तु तर्पयेदद्भिर्मां ब्रह्माणञ्च शङ्करम् ।
प्रजापतिञ्च देवांश्च तथा देवमुनीनपि ॥
साङ्गानपि तथा वेदानितिहासपुराणं तथा ।
पुराणानि च दिव्यानि कुलान्यप्सरसान्तथा ॥
ऋतून् संवत्सरञ्चैव कालञ्चालात्मकं तथा ।
भूतग्रामांश्च भूतानि सरितः सागरांस्तथा ॥
शैलांश्चैव स्थितान् देवानोषधीः सवनस्पतीन् ।
तर्पयेदुपवीती तु प्रत्येकं तृप्यतामिति ॥
अन्वारभ्यतु सव्येन पाणिना दक्षिणेन तु ।
निवीती तर्पयेत्पश्चादृषीन् मन्त्रकृतस्तथा ॥
मरीच्यादीन्मुनीं श्चैव नारदान्तान् समाहितः ।
प्राचिनावीत्यथैतांस्तु तर्पयेद्दैवतान् पितॄन् ॥
ततस्तु कव्यमानाग्निं सोमं वैवस्वतं तथा ।
ततश्च पितरश्चापि चाग्निष्वात्ता स्तथैव च ॥
सोमपांश्चैव दर्भैस्तु सतिलैरेव वारिभिः ।
तृप्यध्वमिति पश्चात्तु स्वपितॄंस्तर्पयेत्ततः ॥
पितॄन् पितामहांश्चैव तथैव प्रपितामहान् ।
पितामहीं तथा चापि तथैव प्रपितामहीम् ॥
मातृष्वसा मथाचापि तथैव च पितृष्वसाम् ।
मातर चात्मनश्चापि तथा मातामहीमपि ॥
मातुर्मातामहीं चापि गुरुमाचार्य्यमेव च ।

उपाध्यायांस्तु सम्बन्धीन् शिष्यर्त्विक्ज्ञातिपुत्रकान् ॥
प्रीतिमानात्मनस्त्वार्थं तर्पयेत्तानमत्सरः।
तर्पयित्वा तथाचम्य स्नानवस्त्रं प्रपीड़येत् ॥
तद्धि भृत्यजनस्यान्नं स्नानपानञ्च तद्विदुः।
अतर्पयित्वा तान् पूर्वं स्नानवस्त्रन्न पीड़येत् ॥
पीड़येद्यदि तन्मोहाद्देवाः सर्षिगणास्तथा।
पितरश्च निराशास्तं शप्त्वा यान्ति यथागमम् ॥
प्रक्षाल्य तु मृदा पादावाचम्य प्रयतः पुनः।
दर्भेषु दर्भपाणिः सन् स्वाध्यायन्तु समाचरेत् ॥
वेदवादौ समारभ्य तथोपर्य्युपरि क्रमात्।
यदधीते वदन् चित्या तत् स्वाध्यायं प्रचक्षते।
ऋचं वाथ यजुर्वापि सामगाथा तथापि वा ॥
इतिहासपुराणं वा यथाशक्ति न हापयेत्।
उत्थाय तु नमस्कृत्वा दिशो दिग्देवता अपि ॥
ब्रह्माणं श्वसनञ्चाग्निं पृथिवी मोषधीस्तथा।
वाचं वाचस्पतिञ्चापि विष्णुञ्च पितरं तथा ॥
नमस्कारान्तमद्भिस्तु प्रणवादि च पूजयेत्।
ततो नमोऽस्तु इत्युक्त्वा नमस्कुर्य्यात्तु तज्जलम्।
घृणी सूर्य्य स्तथादित्य इत्युक्त्वा त्रिः स्वमूर्धनि ॥
सिक्त्वावलोकयेदन्तं प्रणतेन समाहितः।
ततो मामर्चयेत् पुष्पै मत्प्रियैरेव नित्यशः ॥
युधिष्ठिरः। त्वत्प्रियाणि प्रसूनानि त्वदनिष्टानि माधव!।
सर्वाण्याचक्ष्व देवेश! त्वद्भक्तस्य ममाच्युत!॥
भगवानुवाच। शृणुष्वावहितो राजन्! पुष्पाणि विविधानि मे।

कुमुदं करवीरञ्च गणकञ्चम्पकन्तथा।
मल्लिका जातिपुष्पञ्च नद्यावर्त्तञ्च मे प्रियम्॥
पलाशपत्रं पुष्पञ्च दूर्वाभ्रङ्गकमेव च।
वनमाला च राजेन्द्र! मत्प्रियाणि विशेषतः॥
सर्वेषा मपि पुष्पाणां सहस्र गुणमुत्पलम्।
तस्मात्पद्मं तथा राजन्! पद्मात्तु शतपत्रकम्॥
तस्मात्सहस्रपत्रन्तु पुण्डरीकं ततः परम्।
पुण्डरीकसहस्रात्तु तुलसी गुणतोऽधिका।
वकपुष्पं ततस्तस्याः सौवर्णन्तु ततोऽधिकम्॥
सौवर्णाच्च प्रसूनात्तु मत्प्रियं नास्ति पाण्डव!।
पुष्पालाभे तुलस्यास्तु पत्रैर्मामर्चयेद्बुधः॥
पत्रालाभे तु शाखाभिः शाखालाभे शिफालवैः।
शिफालाभे मृदा तत्र भक्तिमानर्चयेत माम्॥
वर्जनीयानि पुष्पाणि शृणु राजन्! समाहितः।
किङ्किणीं मुनिपुष्पञ्च धूस्तूरं पाटलन्तथा।
तथामुक्तवैभितकं पुन्नागनक्तमालकम्।
यौधिकं चीरिकापुष्पं निर्गुण्डी जागली जपा।
कर्णिकारन्तथाशोकं शाल्मलीपुष्पमेव च॥
ककुभं कोविदारञ्च वैभीतकमथाऽपि च।
कुरण्डकप्रसूनञ्च तिल्वकं धातकी तथा॥
अङ्कोलं गिरिकर्णी च नीपादन्यच्च सर्वशः।
एवं वर्णानि चान्यानि सर्वाण्येव विवर्जयेत्।
अर्कपुष्पाणि वर्ज्याणि चार्कपत्रस्थितानि च॥
व्याघात मपि चान्यानि सर्वाण्येव विवर्जयेत्।

अन्यैस्तु मुक्तपुष्पैस्तु गन्धवद्भिर्नराधिप ! ॥
अवर्जितै र्यथालाभं मद्भक्तो मां सदार्चयेत् ।
युधिष्ठिरः । कथं त्वमर्चनीयोऽसि मूर्तयः कीदृशास्तु ते ॥
वैखानसाः कथं ब्रूयुः कथं वा पञ्चरात्रिकाः ॥
भगवानुवाच ॥ शृणु पाण्डव ! तत्सर्वमर्चनाक्रममुत्तमम् ।
स्थण्डिले पद्मकं कृत्वा चाष्टपत्रं स्वकं स्थितम् ॥
अष्टाक्षरविधानेनाप्यथवा द्वादशाक्षरैः ।
वैदिकैरथवा मन्त्रै मम सूक्तेन वा पुनः ॥
स्थापितं मान्ततस्तस्मिन्नुदरीत विचक्षणः ।
पूरुषस्य ततः सूक्त मच्युतस्य युधिष्ठिर ! ॥
अनिरुद्धस्य मां प्राहुर्वैखानसविदो जनाः ।
अन्ये त्वेवं विजानन्ति मां राजन् ! पाञ्चरात्रिकाः ॥
वासुदेवस्य राजेन्द्र ! संकर्षण मथापि वा ।
प्रद्युम्नस्याऽनिरुद्धस्य चतुर्मूर्तिं प्रचक्षते ॥
एतान्यन्यानि राजेन्द्र ! संज्ञाभेदेन मूर्तयः ।
विध्यनर्थान्तरायैव मामेवस्वार्चयेद्बुधः ॥
युधिष्ठिरः । त्वद्भक्ताः कीदृशा देव ! कानि वृत्तानि तन्नृणाम् ।
एतत्कथय देवेश ! त्वद्भक्तस्य ममाच्युत ! ॥
भगवानुवाच । अनन्यदेवता भक्त्या ये मद्भक्तजनप्रियाः ।
मामेव शरणं प्राप्ता मद्भक्तास्ते प्रकीर्तिताः ॥
स्वर्गाण्यपि यशस्यानि मत्प्रियाणि विशेषतः ।
मद्भक्ताः पाण्डवश्रेष्ठ ! वृत्तानीमानि धारयेत् ॥
नान्यदाच्छादयेद्वस्त्रं मद्भक्तो जलतारणे ।
स्वस्थस्तु न दिवा स्वप्यात् मधुमांसानि वर्जयेत् ।

प्रदक्षिणं व्रजेद्विद्वान्गामश्वत्थं हुताशनम् ॥
निशाविपतिते वर्षे नाग्रभिक्षांश्च लोपयेत्।
प्रत्यक्षलवणं नाद्यात्मौढाशनकवर्ज्जितौ ॥
ग्रासमेषाञ्च वे दद्यात् धान्यान् पञ्चैव वर्जयेत्।
तथा पर्युषितञ्चान्नं पक्वं परम्हायुतम्।
वैदिकञ्चैव यद्द्रव्यं तत्प्रयत्नेन वर्जयेत्।
विभीतक करञ्जानां छायां दूरात्तु वर्जयेत् ॥
विप्रवादपरीवादं न वदेत् पीड़ितोऽपि सन्।
सात्विका राजसाश्चापि तामसाश्चापि पाण्डव ! ॥
मामर्चयन्ति भक्तास्तेषामीदृग्विधा गतिः।
तिर्यङ्मानुषदेहेषु तामसा भुञ्जते फलम् ॥
नागयक्षम्हस्थाने राजसा भुञ्जते फलम्।
सात्विकाः सत्वसम्पन्ना मत्पदं यान्ति मानवाः ॥
ये सिद्ध्यन्तिच साङ्ख्येन योगसत्वबलेन च।
नभस्यादित्यचन्द्राभ्यां पश्यन्ति पदविस्तरम् ॥
एकस्तम्भे नवद्वारे त्रिस्थूणे पञ्चधातुके।
एतस्मिन् देहनगरे ये वसन्ति शृतं शृणु ॥
उदिते तस्य विप्रस्य क्रियायुक्तस्य धीमतः।
चतुर्वेदविदश्चापि देहे षड् वृषलाः स्थिताः ॥
क्षत्रियः सप्तविज्ञे या वैश्यस्त्वष्टौ प्रकीर्तिताः।
नियताः पाण्डवश्रेष्ठ ! शूद्राणामेकविंशतिः ॥
कामः क्रोधश्च लोभश्च मानश्च मद एव च।
महामोहस्तथेत्येते देहे षड्वृषलाः स्थिताः ॥
गर्वोदम्भोऽप्यहङ्कार ईर्ष्याभिद्रोहएव वा।

पारुष्यं क्रूरताचेति एते ते क्षत्रियाश्रिताः ॥
तीक्ष्णता निकृतिर्माया शाठ्यं दम्भोऽप्यनार्जवम् ।
पैशुन्यमनृतञ्चैव वैश्यस्याष्टौ प्रकीर्त्तिताः ॥
तृष्णां बुभुक्षां चालस्यं निद्रां चाप्यतृषां दमम् ।
अधृतिश्च विवादश्च प्रमादश्च हीनसत्वता ॥
भयं विस्मयतां जाड्यं पापतां मन्युरेव च ।
आशां चाश्रद्दधानत्वादनवस्थाप्य यन्त्रणाम् ॥
अशौचं मलिनत्वंच शूद्रास्ते ते प्रकीर्त्तिताः ।
यस्मिन्नेते न दृश्यन्ते सर्वे ब्राह्मणउच्यते ।
येषु येषु हि भावेषु यत्कालं वर्तते द्विजः ।
तत्कालं नैव विप्रो यो ब्राह्मणो ज्ञानदुर्बलः ॥
प्राणायामन्तु यत्काले येन मास्वापि चिन्तयेत् ।
तत्कालं वै द्विजोऽज्ञेयः शेषकाल मथेरितः ॥
तस्मात्तु सात्विको भूत्वा शुचिः क्रोधविवर्जितः ।
मामर्चयेद्गुरुः सततं मत्प्रियत्वं यदृच्छति ॥
अलोलजिह्वः समुपस्थितो धृतीर्निधाय चक्षुर्युगमात्र मेव।
मानञ्च वाचञ्च निगृह्य चञ्चलोभोगान्निवृत्तो भगवान्निरुच्यते ।
संरम्भशास्त्राणि दहेति ब्राह्मणो नियतेन्द्रियाः ।
येषां श्राद्धेषु भोक्ष्यन्ति तेषां तृप्ताः पितामहाः ॥
धर्मो जयति नाधर्मः सत्यं जयति नानृतम् ।
क्षमा जयति न क्रोधः क्षमावान् ब्राह्मणो भवेत् ॥
इति गौतमीये वैष्णवधर्मशास्त्रे अष्टमोऽध्यायः ।

---

# नवमोऽध्यायः।

वैशम्पायनः। दानधर्मफलं श्रुत्वा तपः पुण्यफलानि च।
धर्मपुत्रः प्रहृष्टात्मा केशवं पुनरब्रवीत्॥
या चैषा कपिला देया पूर्वं सम्पादिता विभो!।
होमधेनुः सदा पुण्या चतुर्वक्त्रेण माधव!॥
सा कथं ब्राह्मणेभ्यो हि देया कस्मिन् दिनेऽपिवा।
कीदृशाय च विप्राय दातव्या पुण्यलक्षणा॥
कति वा कपिलाः प्रोक्ताः स्वयमेव स्वयम्भुवा।
कैर्वा देयाश्च ता देव! ज्ञातुमिच्छामि तत्त्वतः॥
एवमुक्तो हृषीकेशो धर्मपुत्रेण संसदि।
अब्रवीत्कपिलासङ्ख्यां तासां माहात्म्यमेव च॥
शृणु पाण्डव! तत्त्वेन पवित्रं पापनाशनम्।
यच्छ्रुत्वा पापकर्मापि नरः पापै विमुच्यते॥
अग्निमध्योद्भवां दिव्या मग्निज्वालासमप्रभाम्।
अग्निज्वालोज्ज्वलच्छीर्षां प्रदीप्ताङ्गारलोचनाम्॥
अग्निपुच्छा मग्निखुरा मग्निरोमप्रभाविताम्।
तामाग्नेयी मग्निजिह्वा मग्निग्रीवां ज्वलत्प्रभाम्॥
भुञ्जते कपिलां येतु शूद्रा लोभेन मोहिताः।
पतितांस्तान् विजानीया च्चण्डालसदृशा हिते॥
न तेषां ब्राह्मणः कश्चिद्दृष्टे कुर्य्यात् प्रतिग्रहम्।
दूराच्च परिहर्त्तव्या महापातकिनो हि ते॥
सर्वकालं हि ते सर्वे वर्जिताः पितृदैवतैः।
ते सदा ह्यप्रतिग्राह्या असम्भाष्याश्च पापिनः॥
पिबन्ति कपिलां यावत्तावत्तेषां पितामहाः।

अमेध्य मुपभुञ्जन्ति भूयां वै श्वसृगालवत् ॥
कपिलाया घृतं क्षीरं दधि तक्र मथापि वा ।
ये शूद्रा उपभुञ्जन्ते तेषां गति मिमां शृणु ॥
कपिलोपजीवी शूद्रस्तु मृतो गच्छति रौरवम् ।
क्लिश्यते रौरवे घोरे वर्षकोटिशतं नृप ! ॥
ततश्च मुक्तः पापेन शुनां योनिशतं व्रजेत् ।
श्वयोन्याश्च परिभ्रष्टो विष्ठायां जायते क्रिमिः ॥
विष्ठावर्गेषु पापिष्ठो दुर्गन्धेषु सहस्रशः ।
तत्र तत्रैव जायेत नोत्तरं तत्र विन्दति ॥
ब्राह्मणश्चापि यस्तेषां गृहे कुर्य्यात्प्रतिग्रहम् ।
ततः प्रभृति तस्यापि पितरः स्युरमेध्यपाः ॥
न तेन सार्द्धं सम्भाषेन्नचाप्येकासनं व्रजेत् ।
स नित्यं वर्जनीयो हि दूराद्ब्राह्मणोहि सः ॥
यस्तेन सह सम्भाषेदेकशय्यां व्रजेत वा ।
प्राजापत्यञ्चरेत्कृच्छ्रं सच तेनैव शुध्यति ॥
कपिलोपजीविनः शूद्राद्यः करोति प्रतिग्रहम् ।
प्रायश्चित्तं भवेत्तस्य विप्रस्येदं न संशयः ॥
वर्षं ब्रह्मकृच्छ्रान् कुर्वीत चान्द्रायण मथापि वा ।
मुच्यते किल्बिषात्तस्मात्तेन स्याद् ब्राह्मणो हि सः ॥
कपिला ह्यग्निहोत्रार्थे विप्रार्थे च स्वयम्भुवा ।
सर्वतेजः समुद्धृत्य निर्मिता ब्रह्मणा पुरा ॥
पवित्रञ्च पवित्राणां मङ्गलानाञ्च मङ्गलम् ।
पुण्यानां परमं पुण्यं कपिला पाण्डुनन्दन ! ॥
तपसान्तप एवाग्र्यं व्रताना मुत्तमं व्रतम् ।

दानानामपरं दानं विमानं हैममक्षयम् ॥
पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च।
पवित्राणि च रम्याणि सर्वलोकेषु पाण्डव ! ॥
तेभ्य स्तेजः समुद्धृत्य ब्रह्मणा लोक कारिणा।
लोकनिस्तरणार्थाय निर्मिता कपिला स्वयम् ॥
सर्वतेजोमयी ह्येषा कपिला पाण्डुनन्दन ! ।
सदाव्रतवहा मेध्या शुचिः पावनमुत्तमम् ॥
क्षीरेण कपिलायास्तु दध्ना चैव घृतेन च।
होतव्यान्यग्निहोत्राणि सायम्प्रात र्द्विजातिभिः ॥
कपिलाया घृतेनापि दध्ना क्षीरेण वा नृप ! ।
जुह्वते येऽग्निहोत्राणि ब्राह्मणो विधिवत्सदा ॥
पूजयन्त्यतिथींश्चैव परां भक्ति मुपागताः।
शूद्रान्नविरता नित्यं दम्भानृतविवर्जिताः ॥
ते यान्त्यादित्यकल्पेन विमानेन द्विजोत्तमाः।
सूर्य्यमण्डलमध्येन ब्रह्मलोक मनुत्तमम् ॥
ब्रह्मणो भवने दिव्ये कामगाः कामरूपिणः।
ब्रह्मणा पूज्यमानास्तु मोदन्ते कल्प मक्षयम् ॥
एवं हि कपिला राजन् ! पुण्यं पापौघतारिणी।
आदावेवाग्निहोत्रात्तु मन्त्रै र्ब्रह्मादिनिर्मिता ॥
शृङ्गाग्रे कपिलायास्तु सर्वतीर्थाणि पाण्डव ! ।
ब्रह्मणोहि नियोगेन निवसन्ति दिने दिने ॥
प्रातरुत्थाय यो मर्त्यो कपिलाशृङ्गमस्तकात्।
च्युतात्पयस्तुशीर्षेण धारयेत्प्रयतः शुचिः ॥
स तेन पुण्यस्नानेन तत्क्षणाद्गतकिल्विषः।

वर्षमेकमहोरात्रं प्रदहत्यग्निवत्तृणम् ॥
मूत्रेण कपिलायास्तु यस्तु प्रातरुपस्पृशेत् ।
स्नानेन तेन पुण्येन नष्टपापः समाहितः ॥
त्रिंशद्वर्षकृतात्पापान्मुच्यते नात्र संशयः ।
प्रातरुत्थाय यो भक्त्या प्रयच्छेत्तृणमुष्टिकम् ॥
तस्य नश्यति तत्पापं त्रिंशद्रात्रकृतं नृप ! ।
प्रातरुत्थाय भक्त्या कुर्य्याद्यस्तां प्रदक्षिणाम् ॥
प्रदक्षिणीकृता तेन पृथिवी नात्र संशयः ।
प्रदक्षिणेन चैकेन श्रद्धायुक्तस्य पाण्डव ! ॥
दशरात्रकृतं पापं तत्क्षणादेव नश्यति ।
दृष्ट्वा तु कपिलां भक्त्या श्रुत्वा हुम्बारवं तथा ॥
व्यपोहति नरः पाप महोरात्रकृतं नृप ! ।
यत्र वा तत्र वा चाङ्गे कपिलायाः स्पृशेच्छुचिः ॥
संवत्सरकृतं पापं स नाशयति पाण्डव ! ।
गोसहस्रञ्च यो दद्यादेकाञ्च कपिलां नरम् ॥
समन्तस्य फलम्प्राह ब्रह्मलोके पितामहः ।
यस्त्वेतां कपिलां हन्यान्नरः किञ्चित्प्रमादतः ॥
गोसहस्रहतं तेन भवेन्नात्र विचारणा ।
यस्त्वेकां कपिलां दद्याच्छ्रोत्रियायाग्निहोत्रिणे ॥
गवां सहस्रन्तेनेह दत्तं भवति पाण्डव ! ।
दशेह कपिलाः प्रोक्ताः स्वयमेव स्वयम्भुवा ॥
या दत्ता श्रोत्रियेभ्यो वै स्वर्गं गच्छतितत् शृणु ।
प्रथमा सुवर्णा कपिला द्वितीया गौरपिङ्गला ॥
तृतीया रक्तपिङ्गाक्षी चतुर्थी वह्निपिङ्गला ।

पञ्चमी ब्रह्मवर्णा स्यात् षष्ठी स्यात् श्वेतपिङ्गला ॥
सप्तमी कृष्णपिङ्गाक्षी अष्टमी खुरपिङ्गला।
नवमी पाटला ज्ञेया दशमी पुच्छपिङ्गला ॥
दशैताः कपिला प्रोक्ता स्तारयन्ति नरान् सदा।
मङ्गल्यश्च पवित्राश्च सर्वपापप्रणाशनाः ॥
एव मेवाप्य नड्वाहो दश प्रोक्ता नरेश्वर ! ।
ब्राह्मणो वाहयेत्तास्तु नान्यवर्णः कथञ्चन।
वाहयेत्कपिलायास्तु क्षेत्रे वाध्वनि पाण्डव ! ॥
वाहयेद्हुङ्कृतेनैव शाखया वा सपत्रया।
सुतृप्तेषु तु भुञ्जीयात् पिबेत्पीतेषु चोदकम् ॥
गुर्वीषद्भावितास्त्वेते पितरस्ते प्रकीर्तिताः।
अन्नः पूर्वे त्रिभागे तु धूर्याणां वाहनं स्मृतम्।
विश्रामो मध्यमे भागे भाग्ये स्यान्ते यथासुखम् ॥
यत्र वा त्वरया कृत्य संशयो यत्र वाञ्छति।
वाहयेत्तत्र धुर्यांस्तु न स पापेन लिप्यते ॥
अन्यथा वाहनादेव निरयं याति रौरवम्।
रुधिरं पातयेत्तेषां यस्तु किञ्चिन्नराधमः ॥
भ्रूणहत्यासमं पापं तस्य स्यात्पाण्डुनन्दन ! ।
तेन पापेन पापात्मा नरकं याति सर्वशः ॥
नरकेषु स सर्वेषु समाः स्थित्वा शतं ततः।
इह मानुष्यके लोके बलीवर्दो भविष्यति ॥
तस्मात्त्वि मुक्तिमन्विच्छन् दद्यात्तु कपिलान्नरः।
कपिलां वाहयेद्यस्तु वृषलो लोभमोहितः ॥

तेन देवास्त्रयस्त्रिंशत्पितरश्चापि वाञ्छिताः ।
स देवैः पितृभिर्नित्यं वर्जितास्तु सदुर्मतिः ॥
नरकान्नरकं घोरं गच्छेदाप्रलयं नृप ! ।
ब्रह्मा रुद्र स्तथाग्निश्च कपिलानां गतिङ्गताः ॥
तस्मात्ते तु न गन्तव्याः पुण्याश्चैव विशेषतः ।
निवसन्ति यदा श्रान्तास्तद्दहन्त्युश्च तत्कुलम् ॥
यावन्ति तेषां रोमाणि तावद्वर्षशतन्नृप ! ।
नरके परिपच्यन्ते तत्र तद्दाहका नराः ॥
कपिला सर्वयज्ञेषु दक्षिणार्थं विधीयते ।
तस्मात्ता दक्षिणा देया यज्ञेष्वेव द्विजातिभिः ॥
होमार्थं चाग्निहोत्रस्य यः प्रयच्छेत्स यत्नतः ।
श्रोत्रियाय दरिद्राय प्रशान्ताय यतात्मने ॥
तेन दानेन पूतात्मा सोऽग्निलोके महीयते ।
यावन्ति चैव रोमाणि कपिलाया युधिष्ठिर ! ॥
तावद्वर्षसहस्राणि सोऽग्निलोके महीयते ।
सुवर्णखुरशृङ्गीं यः कपिलां हि प्रयच्छति ॥
विषुवेत्यापि येनैव सोऽश्वमेधफलं लभेत् ।
तेनाश्वमेधतुल्येन मम लोकं स गच्छति ॥
सुवर्णशृङ्गी रूप्यखुरा सवत्सा कांसदोहना ।
वस्त्रैरलङ्कृता पुष्टा पुष्पमाल्यैश्च पूजिता ॥
पवित्रं हि पवित्राणां सुवर्णमिति मे मतिः ।
तस्मात् सुवर्णाभरणा दातव्या चाग्निहोत्रिणे ॥
एवं दत्त्वा तु राजेन्द्र ! सत्यपूर्वान् परानपि ।

तारयिष्यति राजेन्द्र ! नात्रकार्या विचारणा ॥
अग्निष्टोमसहस्रञ्च वाजपेयञ्च तत्समम्।
वाजपेयसहस्रञ्च अश्वमेधञ्च तत्समम्॥
अश्वमेधसहस्रञ्च राजसूयञ्च तत्समम्।
कपिलानां सहस्रेण विद्धि दत्तेन पाण्डव !॥
राजसूयफलं प्राप्य मम लोके महीयते।
न तस्य पुनरावृत्ति विद्यते कुरुपुङ्गव !॥

यच्छन्ति ये कपिलां सचेलां सकांस्यदोहां कनकाग्रशृङ्गीम्।
तैस्तैर्गुणैः कामदुघाभिभूत्वा नरं प्रदातार मुपैति सा गौः।
सा कर्मभिश्चाप्यनबुध्यमानातीव्रान्धकारे नरके पतन्तम्॥
महार्णवे नौरिव वायुनीता दत्ताहि गौस्तारयते मनुष्यम्।
पुत्रांश्च पौत्रांश्च कुलञ्च सर्वमासन्ननाशं तारयते परत्र॥
यावन्मनुष्यः पृथिवीं बिभर्ति तावत्प्रदातार मुपैति तत्र।
यथौषधं मन्त्रकृत नरस्य प्रयुक्तमात्रं विनिहन्ति रोगम्।
तथैव दत्ता कपिला सुपात्रेपापं निहन्त्याशुनरस्य सर्वम्॥
यथैव दृष्ट्वा भुजगाः सुपर्णं नश्यन्ति दूराद्विवशा भयार्ताः।
तथैव दृष्ट्वा कपिलाप्रदानं नश्यन्ति पापानि नरस्य शीघ्रम्॥
यथा त्वचं स्वां भुजगोविहाय पुनर्नवं रूपमुपैति पुण्यम्।
तथैव मुक्तः पुरुषः स्वपापाद्विराजते वै कपिलाप्रदानात्॥
यथान्धकारं भुवनेषु लग्नं दीपो हि निर्वापयति प्रदीप्तः।
तथा नरे पाप मपि प्रलीनं निर्वापयेद्धि कपिलाप्रदानं॥
यावन्ति रोमाणि भवन्ति तस्या वत्सान्विताया स्वशरीरजानि
तावत्प्रदाता युगवर्षकोटी स ब्रह्मलोके रमते मनुष्यः।

यथा स्थितोऽग्नेरतिथिः प्रियस्य पूर्वाल्लदूरस्य जितेन्द्रियस्य॥
सत्यव्रतस्याध्ययनान्वितस्य दत्ताहि गौस्तारयते परत्र।

इति श्रीगौतमीये वैष्णवधर्मशास्त्रे कपिलादान
प्रशंसोनाम नवमोध्यायः।

---

## दशमोऽध्यायः।

वैशम्पायनः। उक्तं श्रुत्वावचः पुण्यं कपिलादानमुत्तमम्।
धर्मपुत्त्रः प्रहृष्टात्मा केशवं पुनरब्रवीत्॥
देवदेवेश! कपिला सदा विप्राय दीयते।
कथं सर्वेषु चाङ्गेषु तस्या स्तिष्ठन्ति देवताः॥
याश्चैताः कपिलाः प्रोक्ता देवदेव! त्वया मम।
तासाङ्कति सुरश्रेष्ठ! कपिलाः पुण्यलक्षणाः॥
कथं वानुग्टहीतास्ता सुरैः पितृगणैरपि।
के नामयुक्ता वर्णेन श्रोतुं कौतूहलं हि मे।
वैशम्पायनः। युधिष्ठिरेणैवमुक्ते केशवः सत्यभल्लभः॥
गुह्यानामपरङ्गुह्यं वक्तुमेवोप चक्रमे।
भगवानुवाच। शृणु राजन्! पवित्रं वै रहस्यन्धर्ममुत्तमम्।
सृहणीयमिदं श्राव्यं उत्तमं हेतुवादिनाम्।
यथा वत्सस्य पादौ द्वौ प्रसवे शिरसा सह॥
दृश्यते कालदानन्तमाज्ञ दीन विदोजनाः।
अन्तरीक्षगतोवत्सो यावद्भूमिं न यास्यति।
गौस्तावत् पृथिवी ज्ञेया तस्माद्देया तु तादृशि॥
यावन्ति धेन्वारोमाणि सवत्सायाः युधिष्ठिर!।

यावन्त्यः सिकताश्चापि गर्भोदकपरिश्रुताः ॥
तावद्वर्षसहस्राणि दाता स्वर्गे महीयते ।
सुवर्णाभरणां कृत्वा सवत्सां कपिलान्तु यः ॥
तिलैः प्रच्छादितां दद्यात् सर्वरत्नै रलङ्कृताम् ।
ससमुद्रनदी तेन सशैलद्वीपपत्तना ।
चतुरन्ता भवेद्दत्ता पृथिवी नात्र संशयः ॥
पृथिव्यास्तु स्वतुल्येन तेन दानेन मानवः ।
संसारसागरात्तीर्णो याति लोकं प्रजापतेः ॥
ब्रह्महत्यादि वा गोघ्नो भ्रूणहा गुरुतल्पगः ।
महापातकयुक्तोऽपि दानेनानेन शुद्ध्यति ॥
इदं पठति यः पुण्यं कपिलादानमुत्तमम् ।
प्रातरुत्थाय मद्भक्तः तस्य पुण्यफलं शृणु ॥
मनसा कर्मणा वाचा मतिपूर्वं युधिष्ठिर ! ।
पापं रात्रिकृतं हन्यादस्याध्यायस्य पाठतः ॥
इदमावर्त्तमानस्तु श्राद्धे यस्तर्पयेद्द्विजान् ।
तस्याप्यमृत मश्नन्ति पितरोऽत्यन्त हर्षिताः ॥
यश्चेदं शृणुयाद्भक्त्या मद्गतेनान्तरात्मना ।
तस्य रात्रि कृतं सर्वं पापमाशु व्यपोहति ॥
अतः परं विशेषन्तु कपिलानां शृणु क्रमात् ।
यस्त्वेताः कपिलाः प्रोक्ता दश राजन्मया तव ॥
तासाञ्च तस्य प्रवराः पुण्यं पापप्रणाशनम् ।
नमस्कृता वा स्पृष्टा वा घ्नन्ति पापं नरस्य तु ॥
यस्यैताः कपिला सन्ति गृहे पापप्रणाशनाः ।
तत्र श्रीर्विजयः कीर्तिः स्थितानित्यं युधिष्ठिर ! ॥

ये तासां प्रीतिमायान्ति ददतस्त्रिदशाः सदा ।
पयसा पितरः सर्वे घृतेनच हुताशनाः ॥
ततः पितामहाश्चैव तथैव प्रपितामहाः ।
सकृद्दत्तेन तुष्यन्ति वर्षकोटिं युधिष्ठिर ! ॥
कपिलाया घृतं क्षीरं दधिपायसमेव च ।
श्रोत्रियस्य सकृद्दत्त्वा नरः पापैर्विमुच्यते ॥
उपवासन्तु यः कृत्वा अहोरात्रं जितेन्द्रियः ।
कपिलापञ्चगव्यन्तु पीत्वा चान्द्रायणात्परम् ॥
सौम्ये मुहूर्त्ते तत्प्राश्य शुद्धात्माशुद्धमानसः ।
क्रोधानृतविनिर्मुक्तो मद्गतेनान्तरात्मना ॥
कपिलापञ्चगव्येन समन्त्रेण पृथक् पृथक् ।
यो मत्कृतिकृतं वापि शङ्कराकृतिमेव वा ॥
स्नापयेद्विषुवे भक्त्या सोऽश्वमेधफलं लभेत् ।
स मुक्तपापः पूतात्मा यानेनाम्बरशोभिना ॥
मम लोकं व्रजेद्युक्तो रुद्रलोक मथापिवा ।
ब्रह्मणातु पुरा सृष्टा कपिला काञ्चनप्रभा ॥
अग्निकुण्डात्परैर्मन्त्रै र्होमधेनु र्महाप्रभा ।
सृष्टमात्रान्तु तां दृष्ट्वा देवाः शक्रादयो दिवि ॥
सिद्धा ब्रह्मर्षयश्चैव वेदाः साङ्गाः सहाध्वराः ।
सागराः सरित श्चैव पर्वताः सबलाहकाः ॥
गन्धर्वाप्सरसो यक्षाः पन्नगाश्चाप्युपस्थिताः ।
सर्वे विस्मयमापन्ना अग्निमध्ये महाप्रभाम् ॥
मन्त्रै स्तोत्रैश्च विविधै स्तुष्टवुस्तामनेकशः ।
कृताञ्जलिपुटाः सर्वे तान्निरीक्ष्य त्रिलोचनाम् ॥

शिरोभिः प्रणता भूमौ वचसा स्ततारिणीम्।
ऊचुः प्राञ्जलयः सर्वे चतुर्वक्त्रं पितामहम्॥
किमिदं देव! देवेश! सर्वलोकपितामह!।
आज्ञापय महादेव! किं कुर्मस्ते प्रियं प्रभो!॥
एवमुक्तः सुरैः सर्वैः प्रहृष्टेनान्तरात्मना।
तत्र सानुनयं प्रीत्या ब्रह्मावचन मब्रवीत्॥
भवन्तो ह्यनुगृह्णन्तु दोग्ध्रीमेतां पयस्विनीम्।
होमधेनुरियं ज्ञेया ह्यग्निं सन्तर्पयिष्यति॥
पीतक्षीरा येऽपि वास्याः जातवीर्य्यपराक्रमाः।
जयिष्यथ यथाकामं दानवान् सर्व एवतु॥
जातवीर्य्यबलैश्वर्य्याः सत्ववन्तो जितारयः।
अदेवमातृकाः सर्वाः पालयिष्यथ वै प्रजाः॥
पालिताश्च प्रजाः सर्वा भवद्भिरिह धर्मतः।
पूजयिष्यति यो नित्यं यज्ञैर्विविधदक्षिणैः॥
एवमुक्ताः सुराः सर्वे ब्रह्मणा परमेष्ठिना।
ततः संहृष्टमनसः कपिलायै वरं ददुः॥
यस्माल्लोकहितायाद्य ब्रह्मणा त्वं विनिर्मिता।
तस्मात् पूता पवित्राच भव पापव्यपोहिनी॥
ये त्वां दृष्ट्वा नमस्यन्ति स्पृशन्ति च करैर्नराः।
तेषां वर्षकृतं पापं त्वद्भक्तानां विनश्यतु॥
कामतः कृतमज्ञात मकृतं यच्चु पातकम्।
त्वां दृष्ट्वा ये नमस्यन्ति गावः सर्वसहेति च॥
तेषां तद्विलयं यातु तमः सूर्य्योदये यथा।

भगवानुवाच। इत्युक्त्वा च वरं दत्त्वा प्रययौ सो यथागतम्॥
लोकनिस्तारणार्थन्तु सा च लोकं चचार ह।
तस्या एव समुद्भूताः शेषास्तु कपिला अपि॥
विचरन्ति महीमेतां लोकानुग्रहकारणात्।
तस्मात्तु कपिला देया परत्र हितमिच्छता।
यदा च दीयते राजन्! कपिला ह्यग्निहोत्रिणे॥
तदाग्रशृङ्गयोस्तस्या विष्णू रुद्रश्च तिष्ठतः।
चन्द्रवज्रधरौचापि तिष्ठतः शृङ्गमूलयोः॥
शृङ्गमध्ये तथा ब्रह्मा ललाटे गोवृषध्वजः।
कर्णयो रश्विनौ देवौ चक्षुषोः शशिभास्करौ॥
करयो र्वरुणो राजन्! हृदये हव्यवाहनः।
रोमान्ते मुनयः सर्वे चर्मण्येव प्रजापतिः॥
निश्वासेषु स्थिता वेदाः सषडङ्गपदक्रमाः।
नासापुटे स्थिता गन्धाः पुष्पाणि सुरभीणि च॥
अधरे वसवः सर्वे मुखे चाग्निः प्रतिष्ठितः।
साध्यु देवाः स्थिताः कण्ठे ग्रीवायां पार्वती स्थिता॥
पृष्ठे च नक्षत्रगणाः कटिदेशे यमः स्थितः।
अपाने सर्वतीर्थानि गोमूत्रे जाह्नवी स्वयम्॥
श्रोणीतटस्थाः पितरो रोमलाङ्गूल माश्रिताः।
पार्श्वयो रुभयोः सर्वे विश्वे देवाः प्रतिष्ठिताः॥
तिष्ठत्युरसि तस्यास्तु प्रीतः शक्तिधरो गुहः।
जानुजङ्घोरुदेशेषु पञ्च तिष्ठन्ति वायवः॥
खुरमध्येषु गन्धर्वाः खुराग्रेषु च पन्नगाः।
चत्वारः सागराः पूर्णा स्तस्याश्च सपयोधराः॥

रतिर्मेधा स्वधा स्वाहा श्रद्धा शान्तिः स्मृतिर्धृतिः ।
कीर्तिर्दीप्तिस्तथा कान्तिः पुष्टिस्तुष्टिस्तु सन्नतिः ॥
दिशश्च विदिशश्चैव सेवन्ते कपिलां सदा ।
देवाः पितृगणाश्चापि गन्धर्वाप्सरसाङ्गणाः ॥
लोका द्वीपार्णवाश्चैव गणाद्याः सरितस्तथा ।
रुद्रा मातृगणाश्चैव वेदाः साङ्गाः सहाध्वरैः ॥
वेदोक्तै र्विविधैर्मन्त्रैः स्तोत्रैः स्तुवन्ति हर्षिताः ।
विद्याधराश्च ये सिद्धा भूतास्तारागणास्तथा ॥
पुष्पवृष्टिं प्रमुञ्चन्ति प्रनृत्यन्ति च हर्षिताः ।
ब्रह्मणोत्पादिते ! देवि ! वाग्निकुण्डाम्बुदाप्रभे ! ॥
नमस्ते कपिले ! पुण्ये ! सर्वदेवै र्नमस्कृते ! ।
कपिले ! च महासत्वे ! सर्वतीर्थमये ! शुभे ! ॥
दातारं स्वजनोपेतं ब्रह्मलोकं नय स्वयम् ।
अहोरात्र मिदं पुण्यं सर्वदुःखघ्न मुत्तमम् ॥
अहो धर्मार्जितश्चैव मिदमग्र्यं महाधनम् ।
इत्याकाशगतास्ते तु जल्पन्ति च रमन्ति च ॥
तस्याः प्रतिगृह्णीता च भक्त्यां च द्विजोत्तमः ।
तावद्देवगणाः सर्वे कपिलाञ्च नमन्ति वै ॥
स्वर्णशृङ्गी रौप्यखुरा गन्धैः पुष्पैश्च पूजिता ।
वस्त्राभ्यामेव ताभ्यान्तु धावंस्तिष्ठत्यलङ्कृताम् ॥
तावद्यदिच्छेत् कपिला मन्त्रपूता सुसंस्कृता ।
भूलोकवासिनः सर्वान् ब्रह्मलोकन्नयेत् स्वयम् ॥
भूरश्वः कनकं गावो रौप्यं कृष्णातिला यवाः ।
दीयमानानि विप्राय प्रहृष्यति दिने दिने ।

अथवा श्रोत्रियेभ्यो वै तानि दत्तानि पाण्डव ! ।
तानि निन्दन्त्यथात्मानमशुभं किन्नु नः कृतम् ॥
अहोरात्रं पिशाचैश्च भर्त्स्यमानाः समन्ततः ।
यास्यामो विलयं शीघ्रमिति शोचन्ति तानि वै ॥
अथैतानि द्विजेभ्यो वै श्रोत्रियेभ्यो विशेषतः ।
दीयमानानि वर्धन्ते दातारं तारयन्ति च ॥
युधिष्ठिरः । देव ! देवेश ! दैत्यघ्न ! कालः को ह्यव्यकव्ययोः ।
के तत्वपूजा मर्हन्ति वर्जनीयाश्च के द्विजाः ॥
भगवानुवाच । दैवं पूर्वाह्णिकं कर्म पैतृकञ्चापराह्णिकम् ।
कालहीनञ्च यद्दानं तद्दानं राक्षसं विदुः ॥
खादितं चावलीढञ्च कलिपूर्वञ्च यत्कृतम् ।
रजस्वलाभिदृष्टञ्च तद्दानं राक्षसं विदुः ॥
अवकृष्टञ्च यद्भक्त्या अव्रतेनापि भारत ! ।
परामृष्टं शुना चापि तद्भागं राक्षसं विदुः ॥
यावन्तः पतिता विप्रा संसर्गात् पतितास्तथा ।
दैवे वा पैतृके वापि राजन् ! नार्हन्ति सत्कृतिम् ॥
क्लीव श्वित्री: च कुष्ठी च राजयक्ष्मान्वितश्च यः ।
अपस्मारी च यश्चाधः पित्र्ये नार्हन्ति सत्कृतिम् ॥
चिकित्सका देवलका वृथा नियमधारिणः ।
सोमविक्रयिणश्चापि श्राद्धे नार्हन्ति सत्कृतिम् ॥
एकोद्दिष्टस्य ये चान्नं भुञ्जते विधिवद्द्विजाः ।
चान्द्रायण मकृत्वा ते पुनर्नार्हन्ति सत्कृतिम् ॥
गायका नर्तकाश्चैव प्लावका वादकास्तथा ।

कथका योधकाश्चैव श्राद्धेनार्हन्ति सत्कृतिम् ॥
अनग्नयश्च ये विप्रा मृतनिर्यातकाश्च ये ।
ते नराहि विकर्मस्था राजन्! नार्हन्ति सत्कृतिम् ॥
अपरिज्ञातपूर्वश्च गणपुत्रश्च यो द्विजः ।
पुत्रिकापूर्वपुत्रश्च श्राद्धेनार्हन्ति सत्कृतिम् ॥
ऋणकर्ता च यो विप्रो यश्च वाणिजको द्विजः ।
प्राणिविक्रयवृत्तिश्च श्राद्धेनार्हन्ति सत्कृतिम् ॥
चीर्णावृता गुणैर्युक्ता येच स्वाध्यायतत्पराः ।
सावित्रीज्ञाः क्रियावन्त स्ते श्राद्धे सत्कृतिक्षमाः ॥
श्राद्धस्य ब्राह्मणः कालः प्राप्तं दधि घृतं तथा ।
दर्भाः सुमनसां क्षेत्रं तत्कालं श्राद्धदो भवेत् ॥
चारित्रनियता राजन्! कृशा ये कृशवृत्तयः ।
अर्थिनश्चोपगच्छन्ति तेभ्यो दत्तं महत्फलम् ॥
तपस्विनश्च ये युक्ता स्तथा भैक्ष्यचराश्च ये ।
अर्थिनः किञ्चिदिच्छन्ति तेषां दत्तं महत्फलम् ॥
एवं धर्मविदां श्रेष्ठ! ज्ञात्वा सर्वात्मना सदा ।
श्रोत्रियाय दरिद्राय प्रयच्छानुपकारिणे ॥
दानं यत्ते प्रियं किञ्चिच्छ्रोत्रियाणाञ्च यत्प्रियम् ।
तत्प्रयच्छ स्वधर्मज्ञ! यदिच्छसि त मक्षयम् ॥
निरयं ये च गच्छन्ति तच्छृणुष्व युधिष्ठिर! ।
गुर्वर्थं वा गणार्थं वा नोचेदन्यत्र पाण्डव! ॥
वदन्ति येऽनृतं विप्रास्ते वै निरयगामिनः ।
परदारापहर्तारः परदाराभिमर्शकाः ॥

परदारप्रयोक्तार स्ते वै निरयगामिनः।
अनाथान् प्रमदा बालान् वृद्धान् भीतान् तपस्विनः॥
प्रयच्छन्ति नरा ये च ते वै निरयगामिनः।
वृत्तिच्छेदं गृहच्छेदं दारच्छेदञ्च भारत!॥
मित्रच्छेदं तथा कुर्य्यु स्ते वै निरयगामिनः।
वर्णाश्रमाणां ये संस्थाः पाषण्डा येच पापिनः॥
उपासते चतान्येतु ते सर्वे नरकालयाः।
वेदविक्रयिणश्चैव वेदानाञ्चैव दूषकाः॥
वेदानां लेखिनश्चैव ते वै निरयगामिनः।
रसविक्रयिणो राजन्! विषविक्रयिणश्च ये॥
चीरविक्रयिणश्चापि ते वै निरयगामिनः।
चण्डालेभ्यश्च ये चीरं प्रयच्छन्ति नराधमाः॥
अर्थार्थमथवा स्नेहात्ते वै निरयगामिनः।
ब्राह्मणानाङ्गवाञ्चैव वृद्धानाञ्च युधिष्ठिर!॥
ये तरयन्ति कार्येषु ते वै निरयगामिनः।
उपाध्यायञ्च पितरं गुरुञ्च भरतर्षभ!।
ये त्यजन्ति सहायांश्च ते वै निरयगामिनः॥
अदातारं समर्था ये द्रव्याद्यालोभकारणात्।
दीनानाथान्न पश्यन्ति ते वै निरयगामिनः॥
श्रान्तान्दान्तान् कृशान् प्राज्ञान् दीर्घकालं सहोषितान्।
त्यजन्ति कृतकृत्या ये ते वै निरयगामिनः॥
बालानामथ वृद्धानां श्रान्तानाञ्चापि ये नराः।
अदत्त्वाश्नन्ति मृष्टान्नन्ते वै निरयगामिनः॥

एते पूर्वर्षिभिः प्रोक्ताः पुराणानां च दूषकाः ।
ये च विप्रान् प्रदुष्यन्ति ते वै निरयगामिनः ।
ये स्वर्गन्तु समायान्ति तान् शृणुष्व युधिष्ठिर ! ॥
दानेन तपसा चैव सत्येन च दमेन च ।
ये धर्ममनुवर्तन्ते ते नराः स्वर्गगामिनः ॥
शुश्रूषाभिरुपाध्यायाच्छ्रुतिमादाय भारत ! ।
ये प्रतिग्रहनिःस्नेहा स्ते नराः स्वर्गगामिनः ॥
प्रतिप्रदानदातारः श्रद्धयाश्रद्धयापि वा ।
दातारश्चापि विद्यानान्ते नराः स्वर्गगामिनः ।
क्षमावन्तश्च धीराश्च धर्मकार्येषु चोत्थिताः ॥
मङ्गलाचार युक्ताश्च ते नराः स्वर्गगामिनः ।
मधुमांसासवेभ्यस्तु निवृत्ताऋतुमत्यापि ॥
परदारनिवृत्ताश्च ते नराः स्वर्गगामिनः ।
वैवाह्विकन्तु कन्यानां दरिद्राणाञ्च ये नराः ॥
कारयन्ति च कुर्वन्ति ते नराः स्वर्गगामिनः ।
तपसा चैव दानेन येत्वशक्ता नरेश्वर ! ।
धर्मोपदेशान् कुर्वन्ति ते नराः स्वर्गगामिनः ॥
दानाना मुपदेशञ्च तपसो नियमञ्च तु ।
व्रतानामपि ये कुर्य्युस्ते नराः स्वर्गगामिनः ॥
येच मार्गोपदेष्टार स्तथा संक्रमकारिणः ।
मार्गशुद्धिकरा ये च ते नराः स्वर्गगामिनः ॥
रसानामथबीजाना मौषधानान्तथैव च ।
दातारः श्रद्धयोपेता स्तेनराः स्वर्गगामिनः ॥

सायं प्रातर्द्विवा सन्ध्यां नित्यं ये चाप्युपासते ।
हव्यकव्यकरा नित्यं ते नराः स्वर्गगामिनः ॥
क्षेमाक्षेमञ्च मार्गेषु समानि विषमाणि च ।
अध्वानं ये च वक्ष्यन्ति ते नराः स्वर्गगामिनः ॥
हव्यकव्यविदो येच ते नराः स्वर्गगामिनः ।
पर्वद्वये चतुर्दश्या मष्टम्यां सन्ध्ययोर्द्वयोः ॥
आर्द्रायां जन्मनक्षत्रे विषुवे श्रावणे हि ये ।
ग्रामधर्माद्धि विरता स्ते नराः स्वर्गगामिनः ॥
धर्माधर्मौ च कथितौ भूयः श्रोतुं किमिच्छसि ॥

इति श्रीगौतमीये वैष्णवशास्त्रे धर्माधर्मकथनोनाम दशमोऽध्यायः ।

---

## एकादशोऽध्यायः ।

युधिष्ठिरः । इदं मे तत्त्वतोदेव ! वक्तुमर्हस्यशेषतः ।
हिंसा मकृत्वा योमर्त्यो ब्रह्महत्या मवाप्नुयात् ॥
भगवानुवाच । ब्राह्मणं स्वयमाहूय भैक्षार्थं कृशवृत्तिकम् ।
ब्रूयान्नास्तीति यः पश्चात् तमाहुर्ब्रह्मघातकम् ।
उच्यते सहि विप्रस्य यस्य तस्य च भारत ! ।
वृत्तिं हरति दुर्बुद्धिस्तमाहु र्ब्रह्मघातकम् ॥
यः प्रवृत्तां श्रुतिं सम्यक् शास्त्रं वा मुनिभिः कृतम् ।
दूषयेत्परमार्थं यस्तं विद्याद्ब्रह्मघातकम् ॥
गोकुलस्य तृषार्त्तस्य वलात्तु वसुधाधिप ! ।

उत्पादयति यो विघ्नं तं विद्याद्ब्रह्मघातकम् ॥
आश्रमे वा वने वापि ग्रामे वा नगरेऽपि वा।
अग्निं यः प्रक्षिपेत्क्रूरस्तं विद्याद्ब्रह्मघातकम् ॥
मातरं पितरं वापि भृत्यं दत्त्वा भयं सुतम्।
त्यजेच्च करुणां भार्य्यां तं विद्याद्ब्रह्मघातकम् ॥
क्रोधाद्वा यदि वा द्वेषादाक्रुष्टस्तर्जितोऽपि वा।
ऋतौ स्त्रियं यो नोपेयात्तं विद्याद्ब्रह्मघातकम् ॥
यावत्पारो भवेद्दीनस्तन्नाशे यस्य दुःस्थितिः।
तत्सर्वं संहरेद्यो वै तं विद्याद्ब्रह्मघातकम् ॥
युधिष्ठिरः। सर्वेषामेव दानानां यत्तु दानं विशिष्यते।
अभोज्यानाञ्च ये विप्राः तान् ब्रवीहि सुरेश्वर ! ॥
भगवानुवाच। अन्नमेव प्रशंसन्ति देवा ब्रह्मपुरःसराः।
अन्नेन सदृशं दानं न भूतं न भविष्यति ॥
अन्नकुण्डं शरीरं स्वंप्राणाश्चान्ने प्रतिष्ठिताः।
अभोज्यान्नानिमान् सर्वान् निखिशंतन्निबोध मे ॥
दीक्षितस्य कदर्य्यस्य बद्धस्य निगड़ेन तु।
अभिशस्तस्य षण्डस्य पाकभेदकरस्य च ॥
चिकित्सकस्य सर्वस्य तथाचोच्छिष्टभोजिनः।
शूद्रान्नं सूतकान्नञ्च शूद्रोच्छेषणमेव च।
द्विषदान्नं नगर्य्यन्नं पतितान्न मनर्च्चितम्।
तथा च पिशुनस्यान्नं यज्ञविक्रयिणस्तथा ॥
शैलूषान्नन्तु पापान्नं कृतघ्नस्यान्नमेव च।
अम्बष्ठस्य निषादस्य रङ्गावतरणस्य च ॥

सुवर्णिककस्य वैश्यस्य शस्त्रविक्रयिणस्तथा ।
सुदुष्टं शौण्डिकान्नञ्च चेल निर्णेजकस्य च ॥
अनिर्दशस्य प्रेतान्नं गणिकान्नं तथैव च ।
वन्दिनोद्यूतकर्त्तुश्च तथाद्यूतविदामपि ॥
परिवित्तस्य यच्चान्नं परिवेत्तु स्तथैव च ।
यस्याग्रेदिधीषुर्विप्रो दिधीषुरेव वा पति ॥
तयोरप्युभयो रन्नं सर्वत्रापि विवर्जयेत् ।
गोलकस्य च कुण्डस्य राजान्नञ्चापि वर्जयेत् ॥
राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ।
आयुः सुवर्णकारान्नं यशश्चर्मावकर्त्तिनः ॥
गणान्नं गणिकान्नञ्च लोकेभ्यः परिकृन्तति ।
पूयचिकित्सकस्यान्नं शूकन्तु वृषलीपतेः ॥
विष्ठावार्द्धुषिकस्यान्नं तस्मात् तत्परिवर्जयेत् ।
तेषां त्वगस्थिरोमाणि भुङ्क्ते योऽन्नं तु भक्षयेत् ॥
दानानान्तु फलञ्चान्यत् शृणु पाण्डव ! तत्त्वतः ।
वारिद स्तृप्तिमाप्नोति सुखमक्षयमन्नदः ।
तिलदस्तु प्रजामिष्टां दीपदाश्चक्षुरुत्तमम् ॥
भूमिदो भूमिमाप्नोति दीर्घमायु र्हिरण्यदः ।
गृहदोऽग्र्याणि वेश्मानि रूप्यदोरूपमुत्तमम् ॥
वासदश्चन्द्रसालोक्य मश्विसालोक्यमश्वदः ।
अनडुहः श्रिया जुष्टोऽन्नदोब्रध्नस्य विष्टपम् ॥
यानशय्याप्रदो भार्य्यां मैश्वर्य्य मभयप्रदः ।
याति दग्गतं सौख्यं ब्रह्मदो ब्रह्मसत्यताम् ॥

सर्व्वेषान्तु प्रदानानां ब्रह्मदानं विशिष्यते ।
हिरण्यभूगवाश्वाज वस्त्रशय्यासनादिषु ॥
योवित्तं प्रतिगृह्णीते ददात्यर्च्चितमेव च ।
ता वुभौ गच्छतः स्वर्गे नरकन्तु विपर्य्यये ॥
अनृतं न वदेद्दत्वा तपस्तप्त्वा न विस्मयेत् ।
नातोत्त्यपवदेद्विप्रोविप्रान्नत्वात् प्रकीर्त्तयेत् ॥
यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् ।
आयुश्च पापवादेन दानन्तु परिकीर्त्तितम् ॥
एकः प्रजायते जन्तुरेकएव प्रलीयते ।
एकोहि भुङ्क्ते सुकृतमेकश्चाप्नोति दुष्कृतम् ॥
मृतं शरीरं मुत्सृज्य काष्ठलोष्ट्र समं चितौ ।
विमुखा बान्धवा यान्ति धर्म्मस्तमनुगच्छति ॥
अनागतानि कार्य्याणि कर्त्तुङ्गणयते जनः ।
स शिरःकम्पमुद्वीक्ष्य स्तूयते दिनमन्तकम् ॥
तस्माद्धर्म्मं सहायोऽस्तु धर्म्मं सञ्चिनुयात्सदा ।
धर्म्मेण हि सहायेन तमस्तरति दुस्तरम् ॥

येषान्तटाकानि समाः प्रपाश्च कूपांश्च यूपांश्च प्रतिश्रयांश्च ।
अन्नप्रदानं मधुराच वाणी यमस्य ते निर्वचना भवन्ति ।

इति गौतमीये वैष्णवधर्म्मशास्त्रे भोज्याभोज्यान्नविधिरेकादशोऽध्यायः ।

---

## द्वादशोऽध्यायः।

युधिष्ठिरः। अनेकान्तं बहुद्वारं धर्ममाहुर्मनीषिणः।
किं लक्षणोऽसौ भवति तन्मे ब्रूहि सुरेश्वर!॥
भगवानुवाच। शृणु राजन्! समासेन धर्मशौचविधिक्रमम्।
अहिंसा सत्यमस्तेय मानृशंस्यं दमः शमः॥
आर्जवञ्चैव राजेन्द्र! निश्चितं धर्मलक्षणम्।
ब्रह्मचर्य्यं तपः क्षान्तिर्मधुमांसस्य वर्जनम्॥
मर्यादाया स्थितिश्चैव मशौचस्यच लक्षणम्।
बाल्ये विद्यान्निषेवेत यौवने दारसंग्रहम्॥
स्थाविर्य्ये मोक्षमातिष्ठेत् सर्वदा धर्ममाचरेत्।
ब्राह्मणान्नावमन्येत गुरून् परिवदेन्नच॥
यतीना मनुकूलः स्यादेष धर्मः सनातनः।
यतिर्गुरुर्द्विजानीनां वर्णानां ब्राह्मणो गुरुः॥
पतिरेव गुरुः स्त्रीणां सर्वेषां पार्थिवो गुरुः।
यद्गृहस्थार्जितं पापं ज्ञानतोऽज्ञानतोऽपि वा॥
निर्दहिष्यति तत्सर्वं मेकरात्रोषितो यतिः।
दुर्वृत्तोवा सुवृत्तोवा ज्ञानिनोऽज्ञानिनोऽपि वा॥
गृहस्थैर्यतयः पूज्याः परत्र हितकाङ्क्षिभिः।
एकदण्डी त्रिदण्डीवा शिखी मुण्डी तथैव च।
काषायमात्रसारोऽपि यतिः पूज्यो युधिष्ठिर!।
अपूजितो गृहस्थैर्वा तथाचाप्यवमानितः॥
यतिः सर्वातिथिर्वापि नरके पातयिष्यति।
तस्मात्त्र यतयः पूज्या मद्भक्ता मत्परायणाः॥

मयि सन्न्यस्तकर्माणः परत्र हितकाङ्क्षिभिः।
प्रहरेन्न द्विजान् प्राज्ञो गा न हन्यात् कदाचन॥
भ्रूणहत्यासमञ्चैतदुभयं यो निषेवते।
नाग्निमुखे नोपयमे न च पादौ प्रतापयेत्।
नान्तरागमनं कुर्य्यान्नचामेध्यं विनिक्षिपेत्।
उच्छिष्टो न स्पृशेदग्निमशौचस्थश्च जातुचित्॥
श्वचण्डालादिभिः स्पृष्टेनाङ्गमग्नौ प्रतापयेत्।
सर्व्वदेवमयो वह्निस्तस्माच्छुद्धतमः स्पृशेत्॥
प्राप्तमूत्रपुरीषस्तु न स्पृशेद्वह्निमात्मवान्।
यावत्तु धारयेद्वेदाः स्तावदप्रयतो भवेत्॥
पचनाग्निं न गृह्णीयां परवेश्मनि जातुचित्।
तेन दत्तेन चान्नेन यत्कर्म कुरुते शुभम्॥
तत्कर्मणः फलस्यार्द्धं मग्निदस्य भवेत् नृप!।
तस्माच्च लिङ्गितं वह्निं कुर्य्याद्देवाविनाशिनम्॥
प्रमादाद्यदिवाज्ञानात् तस्य नाशो भविष्यति।
गृह्णीयात्तुमथित्वा वा श्रोत्रियागारतोऽपिवा॥
युधिष्ठिरः। कीदृशाः साधवो विप्राः केभ्यो दत्तं महत्फलम्।
कीदृशेभ्यो हि दातव्यं तन्मे ब्रूहि जनार्द्दन!।
भगवानुवाच। अक्रोधनाः सत्यपरा! धर्मनित्या दमे रताः।
तादृशाः साधवो लोके तेभ्यो दत्तं महत्फलम्॥
अमानिनः सर्व्वसहा अदृष्टार्थो जितेन्द्रियाः।
सर्व्वभूतहिता मैत्रास्तेभ्यो दत्तं महत्फलम्॥
अलुब्धार्व्वयो येषां श्रीमन्तः सत्यवादिनः।

स्वधर्मनिरतायैतु तेभ्यो दत्तं महत्फलम् ॥
साङ्गांश्च चतुरो वेदान् योऽधीयीत दिने दिने।
शूद्रान्नं रसवो देहे तस्मात्न ऋषयो विदुः ॥
शम्भाश्रुताभ्यां वृत्तेन शीलेन च समन्वितः।
तारयेत् सकुलं सर्वमेकोऽपीह युधिष्ठिर! ॥
गामन्नमश्वं वित्तं वा तद्विधे प्रतिपादयेत्।
नियच्छेच्च गुणोपेतं ब्राह्मणं साधुसम्मतम् ॥
दूरादाभूय सत्कृत्य प्रयत्नेनैव पूजयेत्।
युधिष्ठिरः। धर्माधर्मविधिः कृत्स्नो मम भीष्मेण भाषितः।
भीष्मवाक्यात्सारभूतं वद धर्मं सुरेश्वर! ॥
भगवानुवाच। अन्नेन धार्यते सर्वं जगदेतच्चराचरम्।
अन्नात्प्रभवति प्राणः प्रत्यक्षो नास्ति संशयः ॥
अन्नं च पीडयित्वातु देशकाले च भक्तितः।
दातव्यं विषुवे चान्नं आत्मनो भूतिमिच्छता।
विप्रमध्वपरिश्रान्तं बालं वृद्धमथापि वा ॥
अर्चयेद्गुरुवत् प्रीतो गृहस्थो गृहमागतम्।
क्रोधमुत्पादितं कृत्वा सुशीलो वीतमत्सरः॥
अर्चयेदतिथिं प्रीतः परत्रेह च भूतये।
अतिथीन्नावमन्येत न शुष्कां गिरमीरयेत् ॥
न पृच्छेत् गोत्रचरणं नाधिकं वा कदाचन।
चण्डालो वा श्वपाको वा काले यः कश्चिदागतः ॥
अन्नेन पूजनीयः स परत्र हितमिच्छता।
यः पिधाय गृहद्वारं भुङ्क्तेऽन्नं प्रहृष्टवत् ॥
स्वर्गद्वारं विधानं वै कृतन्तेन युधिष्ठिर!।

विप्रदेवानृषीन् विप्रानतिथींश्च निराश्रयान् ॥
यो नरः प्रीणयत्यन्नैस्तस्य पुण्यफलं महत्।
कृत्वापि बहुशः पापं यो दद्यादन्नमर्थिने ॥
ब्राह्मणाय विशेषेण सर्वपापैः प्रमुच्यते।
अन्नदः प्राणदो लोके प्राणदः सर्वदो भवेत् ॥
तस्मादन्नं प्रयत्नेन दातव्यं भूतिमिच्छता।
अन्नं ह्यमृतमित्याहुरन्नं पूजितकं स्मृतम् ॥
अन्नप्रणाशे सीदन्ति शरीरे सर्वधातवः।
बलं बलवतो नश्येदन्नं तस्य च देहिनः ॥
तस्मादन्नं प्रदातव्यं श्रद्धयाऽश्रद्धयापि वा।
आदित्योऽपि रसं सर्वमादत्ते स गभस्तिभिः ॥
वायुस्तस्मात्समाधाय रसमभ्रे निषेचयेत्।
तत्तु मेघगतं भूमौ शक्रो वर्षति पाण्डव ! ॥
तस्यां शस्यानि रोहन्ति यैर्जीवन्त्यखिलाः प्रजाः।
मांसमेदोऽस्थिमज्जानां सम्भवस्तत्र एव हि ॥
एवमन्नस्य सूर्यश्च पवनः शक्र एव च।
एक एव स्मृतोराशिर्यतो भूतानि जज्ञिरे ॥
वरं ददाति भूतानां तेजश्च भरतर्षभ !।
अन्नदानेन सम्प्रीता देवाश्च पितृभिः सह ॥
तस्मात्तेजो यशो वीर्य्यं बलायुर्द्दृढयः सदा।
श्रद्धयान्नं प्रदातव्यमिति पौराणिकी श्रुतिः ॥
अन्नदानं तु ये लोके कुर्वन्ति श्रद्धया नराः।
भवनानि च दिव्यानि दिवि तेषां महात्मनाम् ॥
नानासंस्थानि रूपाणि नानाभूतयुतानि च।

चन्द्रमण्डलशुभ्राणि किङ्किणीजालवन्ति च ॥
तरुणादित्यवर्णानि स्थावराणि महान्ति च।
अनेकशतसंख्यानि सान्तर्जलवनानि च ॥
वैदूर्यमणिचित्राणि रूप्यरुक्ममयानि च।
तत्र पुष्पफलोपेताः कामदाः सुरपादपाः ॥
वाप्यो वीथ्यः सभाः कूपाः दीर्घिकाश्चैव सर्वशः।
निर्घोषवन्ति यानानि युक्तानि च सहस्रशः ॥
भक्ष्यभोज्यमयाः शैला वासांस्याभरणानि च।
क्षीरस्रवन्त्यः सरितस्तथा चैवान्नपर्वताः ॥
प्रासादाः पाण्डराभ्राभाः शय्याश्च कनकोज्ज्वलाः।
अन्नदानात्तु सिध्यन्ति तस्मादन्नप्रदो भवेत् ॥

इति श्रीगौतमीये वैष्णवधर्मशास्त्रे अन्नदानविधिर्नाम द्वादशोऽध्यायः।

---

## त्रयोदशोऽध्यायः।

अन्नदानफलं श्रुत्वा प्रीतोऽस्म्यसुरसूदन!।
भोजनस्य विधिं वक्तुं देवदेव! त्वमर्हसि ॥
भगवानुवाच। भोजनस्य द्विजातीनां विधानं शृणु पाण्डव!।
स्नातः शुचिः शुचौ देशे निर्जने हुतपावकः ॥
मण्डलं कारयित्वा तु चतुरस्रं द्विजोत्तमः।
क्षत्रियस्य ततो वृत्तं वैश्यस्य धनुसन्निभम् ॥
कुर्षपादस्तु भुञ्जीयात् प्राङ्मुखश्चासने शुचौ।
पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन वा पुनः ॥

नैकग्रासास्तु भुञ्जीयान्नैवान्तर्धाय वै द्विजः ।
न भिन्नपात्रे भुञ्जीत पर्णपृष्ठे तथैव च ॥
अन्नं पूर्वं नमः कुर्यात् प्रहृष्टेनान्तरात्मना ।
नान्यदालोकयेदन्नान्न जुगुप्सेत वा पुनः ॥
जुगुप्सितन्तु यच्चान्नं राक्षसा एव भुञ्जते ।
पाणिना जलमुद्धृत्य कुर्यादन्नं प्रदक्षिणम् ॥
अपेयं तद्विजानीयात् पीत्वा चान्द्रायणञ्चरेत् ।
परिषेकबलादन्यत् पेयत्वे त्वनुमन्त्रवत् ॥
पञ्चप्राणाहुतिं कुर्यात् समन्त्रन्तु पृथक् पृथक् ।
यथा रसं न जानाति जिह्वा प्राणाहुतौ नृप ! ॥
तथा समाहितः कुर्यात् प्राणाहुतिमतन्द्रितः ।
विदित्वा चान्नमन्नादं पञ्च प्राणांश्च पाण्डव ! ॥
यः कुर्यादाहुतीः पञ्च तेनेष्टाः पञ्च वायवः ।
अतोऽन्यथा तु भुञ्जानो ब्राह्मणो ज्ञानदुर्बलः ॥
तेनान्नेन सुरान् प्रेतान् राक्षसांस्तर्पयिष्यति ।
वक्त्रप्रमाणपिण्डानि ग्रासेनैकेन वा पुनः ॥
वक्त्राधिकन्तु यत्पिण्डमात्मोच्छिष्टन्तदुच्यते ।
दृष्टावशिष्टमन्नञ्च वक्त्रनिःसृतमेव च ॥
अभोज्यन्तद्विजानीयान् भुक्त्वा चान्द्रायणञ्चरेत् ।
स्वमुच्छिष्टन्तु यो भुङ्क्ते यो भुङ्क्ते मुक्तभाजने ॥
चान्द्रायणञ्च यत्कृच्छ्रं प्राजापत्यमथापि वा ।
पिबतः पतिते तोये भाजने मुखनिःसृते ॥
अभोज्यन्तद्भवेदन्नं भुक्त्वा चान्द्रायणञ्चरेत् ।
केशकीटावपन्नञ्च मुखमारुतवीजितम् ॥

अभोज्यं तद्विजानीयाद् भुक्त्वा चान्द्रायणञ्चरेत्।
उत्थाय च पुनर्भुक्तं पादस्पृष्टञ्च लङ्घितम्॥
अन्नं तद्राक्षसं विद्यात्तस्मात्तत्परिवर्जयेत्।
राक्षसोच्छिष्टभुग्विप्रः सप्तपूर्वान् परानपि॥
निरये रौरवे घोरे स पितॄन् पातयिष्यति।
तस्मिन्नाचमनं कुर्यात् यस्मिन् पात्रे स भुक्तवान्॥
यस्तु तिष्ठत्यनाचान्तो भुक्तवानासने ततः।
स्नानं सद्यः प्रकुर्वीत नान्यथा प्रयतो भवेत्॥
युधिष्ठिरः। तृणमुष्टिविधानञ्च तिलमाहात्म्यमेव च।
इक्षुसोमसमुद्भूतिं वक्तुमर्हसि मानद!॥
भगवानुवाच। पितरो वृषभा ज्ञेया गावो लोकस्य मातरः।
तासान्तु पूजया राजन्! पूजिताः पितृमातरः॥
सभा विप्रगृहाश्चापि देवतायतनानि च।
शुध्यन्ति स्वत एवासां किम्भूतमधिकं ततः॥
ग्रासमुष्टिं परगवे दद्यात् संवत्सरन्तु यः।
अकृत्वा स्वयमाहारं व्रतवत्सार्वकामिकम्॥
गावो मे मातरः सर्वाः पितरश्चैव मे वृषाः।
ग्रासमुष्टिं मया दत्तां प्रतिगृह्णन्तु मातरः॥
इत्युक्त्वा तेन मन्त्रेण सावित्र्या वा समाहितः।
दद्यात्तु ग्रासमुष्टिं यस्तस्य पुण्यफलं शृणु॥
यत् कृतं दुष्कृतन्तेन ज्ञानतोऽज्ञानतोऽपि वा।
तस्य नश्यति तत्सर्वं दुःस्वप्नञ्च विनश्यति॥
तिलाः पवित्रा पापघ्ना नारायणसमुद्भवाः।
तिलाः श्राद्धे प्रशंसन्ति दानमेतदनुत्तमम्॥

तिलानश्याक्तिलान् दद्यात्तिलान् प्रातरुपस्पृशेत्।
तिलास्तिला इति ब्रूयात् महत्पापविमुक्तये॥
तिलास्तु देवतारूपा नावमन्या द्विजातिभिः।
भोजनाभ्यञ्जनाद्दानाद्यो न तत् कुरुते तिलैः॥
क्रमिर्भूत्वाश्वविष्ठायां पितृभिः सह मज्जति।
तिलान् यो पीडयेद्विप्रो स्वहस्तेन स्वयं नृप!॥
पीडयेद्यदि तान् मोहान्नरकं याति रौरवम्।
इतिवंशोद्भवे सोमः सोमवंशोद्भवे द्विजः॥
इक्षून् यः पीडयेत्तस्मादिक्षुघात्यात्मघातकः।
इक्षुदण्डसहस्रेण एकैकेन द्विजोत्तमः॥
ब्रह्महत्यामवाप्नोति ब्राह्मणो यत्र पीडकः।
तस्मान्न पीडयेदिक्षून् मन्त्रयन्त्रे द्विजोत्तमः॥

इति श्रीगौतमीये वैष्णवधर्मशास्त्रे तिलान्नदानादिप्रशंसा-
नाम त्रयोदशोऽध्यायः।

---

## चतुर्दशोऽध्यायः।

युधिष्ठिरः। समुच्चयं तु धर्माणां भोज्याभोज्यस्य केशव!।
श्रुतं मया त्वत्प्रसादादापद्धर्मं ब्रवीहि मे॥

भगवानुवाच। दुर्भिक्षे राष्ट्रसम्पाते त्वशौचे सूतसूतके।
कर्मकालेऽध्वनि तथा नियमस्थो न लुप्यते॥
दूराध्ववासनात्खिन्नो द्विजालाभे तु शूद्रतः।
अकृतान्नञ्च यत्किञ्चिद्गृह्णीयादात्मवृत्तये॥
आतुरो दुःखितो वापि भयार्तो वा बुभुक्षितः।

भुञ्जन्विधिं । विप्रः प्रायश्चित्तीयते न च ॥
यत्किञ्चिदपि कुर्वाणो विद्वान् गुरुनियोगकः ।
तेषां वचनसामर्थ्यात्प्रायश्चित्तीयते न च ॥
अनृतावृतुकाले वा दिवा रात्रौ तथापि वा ।
प्रोषितस्तु स्त्रियं गच्छेत् प्रायश्चित्तीयते न च ॥
निमन्त्रितस्तु यो विप्रो विधिवद्धव्यकव्ययोः ।
मांसादीन्यपि भुञ्जानः प्रायश्चित्तीयते न च ॥
अष्टौ तान्यव्रतघ्नानि आपोमूलं घृतं पयः ।
हवि ब्राह्मणकामाया गुरोर्वचन मौषधम् ॥
अशक्तं विधिवत्कर्तुं प्रायश्चित्तानि यो नरः ।
विदुषां कल्पनेनापि दानेनापि विशुद्ध्यति ॥

युधिष्ठिरः । प्रशस्यः कीदृशो विप्रो निन्द्यश्चापि सुरेश्वर ! ।
अष्टकापङ्क्तिकः कश्च तन्मे कथय माधव ! ॥

भगवानुवाच । सत्यं यदि द्विजं दृष्ट्वा स्थानाद्वेपति भास्करः ।
एष मे मण्डलं भित्वा याति ब्रह्म सनातनम् ॥
कुलीनः कर्मकृद्वैद्य स्तथैवाप्यनृशंसकः ।
सदानृजुः सत्यवादी पात्रं सर्वं इमे द्विजाः ॥
ये ते चाग्रासने स्थातुं भुञ्जानाः प्रथम द्विजाः ।
तस्यां पंक्त्यां तु ये चान्ये तत् पुनन्त्येव दर्शनात् ॥
मद्भक्ता ये द्विजश्रेष्ठा मद्गता मत्परायणाः ।
तान् पङ्क्तिपावनान् विद्धि पूज्यांश्चैव विशेषतः ॥
निन्द्यान् शृणु द्विजान् राजन् ! मपिवा वेदपारगान् ।
ब्राह्मणोच्चाश्रमनालोक्य चरन्तः पापकर्मणः ॥
अनग्निरनधीयानः प्रतिग्रहरुचिस्तु यः ।

यत्र कुत्र च भुञ्जान स्तं विद्यात् पङ्क्तिदूषकम्॥
चतस्तूतकपुष्टाङ्गो यस्तु शूद्रान्नभोजनः।
अहश्चापि न जानामि गतिमस्य नराधिप!॥
शूद्रान्नरसपुष्टाङ्गो ह्यधीयानोऽपि नित्यशः।
जपतोजुह्वतो वापि गतिरूर्द्धं न विद्यते॥
आहिताग्निस्तु यो विप्रः शूद्रान्नेनापि वर्त्तते।
पञ्च तस्य प्रणश्यन्ति आत्मा ब्रह्म त्रयोऽग्नयः॥
शूद्रप्रेषणकर्त्तुश्च ब्राह्मणस्य युधिष्ठिर!।
भूम्यामन्नं प्रदातव्यं श्वशृगालसमो हि सः॥
प्रेतीभूतश्च यः शूद्रं ब्राह्मणोज्ञानदुर्बलः।
अनुगच्छेन्नीयमान स्त्रिरात्र मशुचिर्भवेत्॥
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम्।
प्राणायामशतं कृत्वाघृतं प्राश्य विशुद्ध्यति॥
अनाथब्राह्मणं प्रेतं ये वहन्ति द्विजोत्तमाः।
पदे पदेऽश्वमेधस्य फलं ते प्राप्नुवन्ति हि॥
न तेषा मशुभं किञ्चित् पापं वा शुभकर्मणाम्।
जलावगाहनादेव सद्यः शौचं विधीयते॥
शूद्रवेश्मनि विप्रेण चीरं वा यदि वा दधि।
हतन्तेन न भोक्तव्यं विद्धि शूद्रान्नमेव तत्॥
विप्राणां भोक्तुकामाना मत्यन्तश्चान्तकाङ्क्षया।
यो विघ्नं कुरुते मर्त्य स्ततोऽन्यो नास्ति पापकृत्॥

सर्वे च वेदाः ऋषिभिसहाङ्गैः साङ्ख्यं पुराणञ्च कुलञ्च जन्मनोः।
एतानि सर्वाणि गतौ भवन्ति शीलव्यपेतस्य न हि द्विजस्य॥
ग्रहोपरागे विषुवायनादि सुपुण्यतिथ्याञ्च सुते च जाते।

नवेषु पक्षेषु च पाण्डुपुत्र ! गच्छेत्मनिष्कान्तु सहस्र तुल्यम् ॥
नभस्यमासस्य च कृष्णपक्षे त्रयोदशी पञ्चदशी च माघे ।
उपप्लवे चन्द्रमसोरवेश्च श्राद्धस्य काले ह्ययनद्वयंन ॥
य स्त्वेकपंक्त्यां विषमं ददाति स्नेहाद्भयाद्वा यदि वार्थहेतोः ।
क्रूरं दुराचार मनात्मवन्तं ब्रह्मघ्नमेनं मुनयो वदन्ति ॥
धनानि येषां विफलानि सन्ति नित्यं रमन्ते परलोकमूढाः ।
तेषा मयं शत्रुवरघ्नलोको नासौ सदेहः ससुखं रमेत ॥
ये युक्तयोगास्तपसि प्रयुक्ताः स्वाध्यायशीला जरयन्ति देहम् ।
जितेन्द्रिया भूतहिते निविष्टास्तेषा मसौ नायमरिघ्नलोकः ॥
ये धर्ममेव प्रथमञ्चरन्ति अमण लब्ध्वा निधनानि काले ।
दारानवाप्य क्रतुभि र्यजन्ति तेषा मयञ्चैव परश्च लोकः ॥
ये नैवविद्या न तपो न दानं न चापि मूढाः प्रजने यतन्ते ।
न चापि गच्छन्ति सुखान्यभावात् तेषामयञ्चैव परश्च नास्ति ॥
युधिष्ठिरः । नारायण ! पुराणेश ! योगवास ! नमोऽस्तु ते ।
श्रोतुमिच्छामि कात्स्न्येन धर्मसारसमुच्चयम् ॥
भगवानुवाच । धर्मसारं महाराज ! मनुना प्रोक्त मादितः ।
प्रवक्ष्यामि मनुप्रोक्तं पौराणं श्रुतिसन्ततम् ॥
चग्निचित्कपिलासत्री राजा भिक्षु र्महोदधिः ।
दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत तान् सदा ॥
गौरेकस्य प्रदातव्या न बहूनां युधिष्ठिर ! ।
यागौर्विक्रयमापन्नादहत्यासप्तमं कुलम् ॥
बहूनां न प्रदातव्या गौर्वस्त्रं शयनं स्त्रियः ।
तादृक् भूतन्तु यद्दानं दातारं नोपतिष्ठति ॥
चाहत्य ब्राह्मणो मत्त मर्त्त येषान्तु वेश्मनि ।

गोभिश्च पुरुषश्चैव तेषां राजसूयादि शिष्यते ॥
मातृश्या इति यो ब्रूयाद्गोरग्ने ब्राह्मणस्य च।
तिर्य्यग्योनिशतं गत्वा चण्डालेषु प्रजायते ॥
ब्राह्मणस्य तु देवस्य दरिद्रस्य च यद्धनम्।
गुरोश्चापि हृतं राजन्! स्वर्गस्थमपि पातयेत् ॥
धर्मजिज्ञासमानानां प्रमाणं प्रथमं श्रुतिः।
द्वितीयन्तु स्वशास्त्राणि तृतीयं लोकसंग्रहः ॥
आसमुद्राच्च वै पूर्वादासमुद्राच्च पश्चिमात्।
हिमवद्विन्ध्ययोर्मध्य मार्यावर्तं प्रचक्षते।
सरस्वतीदृषद्वत्यो स्सया नद्योर्यदन्तरम् ॥
तद्देव मातृकं देशं ब्रह्मावर्तं प्रचक्षते।
तस्मिन्देशे सदाचारः पारम्पर्य्यक्रमागतः ॥
वर्णानां सान्तरालानां स सदाचार उच्यते।
कुरुक्षेत्रञ्च मत्स्याश्च पाञ्चालाः शूरसैनिकाः ॥
एते महर्षिदेशास्तु ब्रह्मावर्तादनन्तरम्।
एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ॥
स्वं स्वं चरित्रं शिक्षन्ते पृथिव्यां सर्वमानवाः।
हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि ॥
प्रत्यगेव प्रयागच्च मध्यदेशः प्रकीर्तितः।
कृष्णसारस्तु चरति मृगोयत्र स्वभावतः ॥
संज्ञया ज्ञायते देशो म्लेच्छदेशस्तु तत्परम्।
एतान् विज्ञाय देशांस्तु संश्रयेरन् द्विजातयः
शूद्रस्तु यस्मिन् कस्मिन् वा निवसेद्वृत्तिकर्षितः।
आचारप्रभवो धर्मो ह्यहिंसा सत्यमेव च ॥

दानञ्चैव यथा शान्ति र्नियमानियमैः सह।
वैदिकैः कर्मभिः पुण्यैः निषेकादि द्विजात्मनाम् ॥
कार्य्यः शरीरसंस्कारः पावनः प्रेत्य चेह च।
गर्भे होमैर्जातकर्म नामचौडोपनायनैः ॥
स्वाध्यायैस्तर्पणैश्चैव विवाहस्नातकव्रतैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयः क्रियते ततः ॥
धर्मार्थौ यस्य महतां शुश्रूषा मपि तद्विधः।
न तस्य विद्या वक्तव्या कदाचिदपि चोषरे॥
लौकिकं वैदिकं वापि तथाध्यात्मिकमेव च।
यतो ज्ञानागमं प्राप्त स्तं पूर्वमभिवादयेत् ॥
सव्येषु सव्यं स्पृष्टव्यो दक्षिणेन तु दक्षिणाम्।
न कुर्य्यादेकहस्तेन गुरोः पादाभिवन्दनम् ॥
निषेकादीनि कर्माणि यः करोति यथाविधि।
अध्यापयन्ति वेदांश्च स विप्रो गुरुरुच्यते ॥
दृष्टोपनयनं वेदान्योऽध्यापयति नित्यशः।
सुकल्पान् इतिहासांश्च स उपाध्याय उच्यते।
साङ्गान् वेदांश्च योऽध्याप्य शिक्षयित्वा व्रतानि च ॥
विवृणोति च मन्त्रार्था नाचार्यः सोऽभिधीयते।
उपाध्यायाद्दशाचार्य्य आचार्य्याणां शतं पिता ॥
पितुर्दशगुणं माता गौरवेणातिरिच्यते।
तस्मात्तेषां वशे तिष्ठेत् तच्छुश्रूषापरो भवेत् ॥
अवमानात्तु तेषां हि नरकान्याति सर्वशः।
अनङ्गानतिरिक्ताङ्गान् विद्याहीनान् वयोऽधिकान् ॥
रूपद्रविणहीनांश्च जातिहीनांश्च नाक्षिपेत्।

अपतो यत् कृतं पुण्यं सेव्यमानस्तु गच्छति ॥
सेव्यमानस्य यत्पापं अपन्ना मनुगच्छति ।
नास्तिक्यं लोकनिन्दाञ्च देवतानाञ्च तुच्छनम् ।
द्वेषं स्तम्भञ्च मोहञ्च क्रोधन्त्वैच्यं विवर्जयेत् ॥
यस्य यस्य हि यो भाव स्तेन तेन हि तं रयम्।
अनुप्रविश्य मेधावी चिप्रमात्मवशन्नयेत् ॥

इति गौतमीये श्रीवैष्णवधर्मशास्त्रे धर्मसारसमुच्चयोनाम चतुर्दशोऽध्यायः।

---

## पञ्चदशोऽध्यायः।

युधिष्ठिरः। भगवंस्तव भक्तस्य मम धर्मजनप्रिय!।
धर्मं पुण्यतमं देव! पृच्छतः कथयस्व मे ॥
यदेकमग्निहोत्रं वै सृष्टं वर्णत्रयस्य तु।
मन्त्रस्य हुत्वा तं सम्यग्विधिना चाप्युपासितम् ॥
आहिताग्निस्त्रयत्यूर्द्धं सपत्नीकं सबान्धवम्।
कथं तद्ब्राह्मणैर्देव! होतव्यं चत्रियैः कथम् ॥
वैश्यैर्वा देव! देवेश! कथं वा सुकृतं भवेत्।
कस्मिन् काले कथं कस्यचेयोऽग्निः स्यात् सुरेश्वर! ॥
आहितस्य कथं वापि सम्यगाचरणं भवेत्।
कत्यग्नयः किमात्मानं स्थानं किं कस्य वा विभो! ॥
कतरस्मिन्नु वा स्थाने किं व्रजेदग्निहोत्रकः।
अग्निहोत्रनिमित्तञ्च किमुत्पन्नं पुराऽनघ! ॥

कथमेवाथ ह्रूयन्ते प्रीयन्ते च सुरैः कथम्।
विधिवन्मन्त्रवद्भक्त्या पूजिता स्त्वग्नयः कथम्॥
कां गतिं वदतां श्रेष्ठ! नयन्ति त्वग्निहोत्रिणम्।
दुर्हुताश्चाग्निहुताश्चाप्यविज्ञातास्त्वयोऽग्नयः॥
किमाहिताग्नेः कुर्वन्ति चीर्णा वा अपि केशव!।
उत्सन्नाग्निस्तु पापात्मा कां योनिं देव! गच्छति॥
एतत्सर्वं हि देवेश! भक्त्या भूपगतस्य मे।
वक्तुमर्हसि धर्मज्ञ! सर्वावास! नमोऽस्तु ते॥

भगवानुवाच। शृणु राजन्! महत् पुण्यमिदं धर्मामृतं परम्।
यत्त् तारयते भक्तान् ब्राह्मणानग्निहोत्रिणः॥
ब्रह्मा त्वेतान् सृजन् लोकान् महदाद्यान् महाद्युतीन्।
सृष्टोऽग्निर्मुखतः पूर्वं लोकानां हितकाम्यया॥
यस्मादग्रे स भूतानां सर्वेषान्निर्मितो मया।
तस्मादग्नीत्यभिहितं पुराणज्ञैर्महर्षिभिः॥
यस्मात्तु सर्वकृत्येषु पूर्वमस्मै प्रदीयते।
आहुतिर्दीप्यमानाय तस्मादग्नीति कथ्यते॥
यस्माच्च नयति ह्यग्र्यां गतिं विप्रान् सुपूजिताम्।
तस्माच्च नयनाद्राजन्! वेदेष्वग्नीति चोच्यते॥
यस्माच्च दुर्हुतान् सोऽय मलमभक्षयितुं क्षणात्।
यजमाना नरश्रेष्ठाः क्रव्यादोऽग्निस्तु न स्थितः॥
सर्वभूताधिपो राजन्! देवानामेष वै मुखम्।
प्रथमं मन्मुखात् सृष्टो लोकार्थे पचनप्रभुः॥
सृष्टमात्रो जगत्सर्वं मुक्तमेष युतं खलु।

ततः प्रशमितः सोऽग्निरूपः स मायया पुरा ॥
स्मृतादुपासनात् सोऽयमौपासन इति स्मृतः।
आहुतिः सर्वमाख्यातस्तस्मिन् वसति योऽनलः।
आवसथ इति ख्यातस्तेनासौ ब्रह्मवादिभिः॥
तस्मिन् पञ्च महायज्ञा वर्त्तन्ते यस्य धर्मतः।
सोममण्डलमध्येन गतिस्तस्य द्विजन्मनः॥
तेन सप्तर्षयः सिद्धाः संयतेन्द्रियबुद्धयः।
गतात्मभासा युज्यन्ते मेध्याग्नेश्च न तत्पराः॥
अपरे त्वावसथ्यन्तु पचनाग्निं प्रचक्षते।
तस्मिन् पञ्च महायज्ञा वैश्वदेवश्च वर्त्तते॥
स्थालीपाकाश्च गृह्याश्च सर्वे तस्मिन् प्रतिष्ठिताः।
गृह्यकर्मवशो यस्माद् ततो गृहपतिस्तु सः॥
औपासनश्चावसथ्यं सभ्यं पचनपावकम्।
आहुर्ब्रह्मविदः केचिदेतमेव ममापि च॥
अग्निहोत्रप्रकारन्तु शृणु राजन्! समाहितः।
त्रयाणां गणनामापि अग्नीनामुच्यते मया॥
गृहाणान्तु पतित्वाद्धि गार्हपत्यमिति स्मृतम्।
यजमानन्तु यस्मात्तु दक्षिणान्तु गतिं नयेत्॥
दक्षिणाग्निं तदाहुस्ते दक्षिणत्वाच्च तद्विदाः।
आहुतीः सर्वमाख्यातं हवनं हव्यवाहनम्॥
आहूय योऽग्निं नियतं यश्चाहवनसंरतः।
आभिमुख्येन होमस्तु यस्माद्यज्ञेषु वर्त्तते॥
तेनास्याहवनीयत्वं गतोवह्निर्महाद्युतिः।

आहोमादग्निहोत्रेषु यज्ञे ये यत्र सर्वशः ॥
यस्मादस्मिन् प्रवर्तन्ते ततोह्याहवनीयता ।
आवसथ्यन्तु येषाग्निं पचनाग्निं प्रचक्षते ॥
तेषां सभागतोवह्निः सभ्य इत्यभिधीयते ।
आवसथ्यस्तु यो वह्निः प्रथमः स प्रजापतिः ॥
ब्रह्मा वै गार्हपत्योऽग्नि स्तस्माद्देवो हि वा भवेत् ।
दक्षिणाग्निः स्वयं रुद्रः क्रोधात्मा चण्ड एव सः ॥
अहमाहवनीयोऽग्नि रन्तरीक्षञ्च दक्षिणः ।
स्वर्गमाहवनीयोऽग्निरेव मग्नित्रयं स्मृतम् ॥
वृत्तो वै गार्हपत्योऽग्नि र्यस्माद्वृत्ता च मेदिनी ।
अर्द्धचन्द्राकृतिः खं वै दक्षिणाग्नि स्तथा भवेत् ॥
चतुरस्रं ततः स्वर्गं निर्मलं ह्यग्निसन्निभम् ।
तस्मादाहवनीयोऽग्नि श्चतुरस्रो भवेन्नृप ! ॥
जुहुयाद्गार्हपत्यं यो भुवं जयति स द्विजः ।
जुहुयाद्दक्षिणाग्निं यः स जयत्यन्तरीक्षकम् ॥
पृथिवी मन्तरीक्षं वा दिवञ्चगणैः सह ।
जयत्याहवनीयं यो जुहुयाद्भक्तिमान् द्विजः ॥
यस्त्वावसथ्ये जुहुयात्तुलाग्निं विधिवद्द्विजः ।
सच सप्तर्षिलोकेषु सपत्नीकः प्रमोदते ॥
यश्चाप्युपास्ते सभ्यं वा विधिवत्प्रयतात्मवान् ।
स जयेद्वा यमभयं सर्वं तथाप्यर्हसभामपि ॥
अग्नीनामथवाग्नेस्तु यस्य होमः प्रदीयते ।
ईर्ष्योभवति सर्वोऽग्निरग्निहोत्रञ्च वै भवेत् ॥

त्रयाणामपि वह्नीनामग्निहोत्रमिति स्मृतम्।
त्राणाद्वै यजमानस्य चाग्निहोत्र मिति स्मृतम्॥
होदूत्येष विवादो वै विषादो दुःख मुच्यते।
दुःखं तापत्रयं प्रोक्तं तापो हि नरकं विदुः॥
यस्माद्वा त्रायते दुःखाद्यजमानं हुतोऽनलः।
तस्मात्तु विधिवत्प्रोक्त मग्निहोत्रमिति श्रुतम्॥
तदग्निहोत्रं सृष्टं वै ब्रह्मणा लोककारिणा।
वेदाश्चाप्यग्निहोत्रार्थं जज्ञिरे स्वयमेव तु॥
अग्निहोत्रं फला वेदाः शीलवृत्तफलं श्रुतम्।
रतिपुत्रफला नारी दानहोमफलं धनम्॥
त्रिवेदमन्त्रसंयोगादग्निहोत्र प्रचक्षते।
ऋग्यजुःसामभिः पुण्यैः स्थाप्यते सूत्रसंयतैः॥
वसन्ते ब्राह्मणस्य स्यादाधेयोऽग्नि नराधिप!।
वसन्तो ब्राह्मणः प्रोक्तो ब्रह्मयोनिः स उच्यते॥
अग्न्याधानन्तु येनाथ वसन्ते क्रियते नृप!।
तस्य श्रीर्ब्रह्मपुष्टिश्च ब्राह्मणस्य विवर्द्धते॥
ऋतवः सर्व एवैते त्रिभिर्वेदैरलङ्कृताः।
अग्निहोत्राः प्रवर्तन्ते यैरिदं ध्रियते जगत्॥
ग्राम्यारण्याश्च पशवस्तथा वृक्षास्तृणानि च।
फलान्योषधयश्चापि चाग्निहोत्रकृतेऽभवन्॥
रसाः स्नेहा स्तथा गन्धा रत्नानि मणयस्तथा।
काञ्चनाद्यानि लोहानि चाग्निहोत्रकृतेऽभवन्॥
आयुर्वेदो धनुर्वेदो मीमांसा न्यायविस्तरः।

धर्मशास्त्रञ्च तत्सर्वं मग्निहोत्रकृतेऽभवत् ॥
छन्दः शिक्षाश्च कल्पाश्च तथा व्याकरणं नृप ! ।
ज्योतिर्ज्ञानं निरुक्तञ्च ह्यग्निहोत्रकृते कृतम् ॥
इतिहासपुराणञ्च गाथाश्चोपनिषद्‌तथा ।
आथर्वणानि कर्माणि अग्निहोत्रकृतेऽभवन् ॥
यच्चैतस्यां पृथिव्यां हि किञ्चिदस्ति चराचरम् ।
तत्सर्वं मग्निहोत्रस्य कृते सृष्टं स्वयम्भुवा ॥
अग्निहोत्रस्य दर्शस्य पौर्णमासस्य चाप्यथ ।
यूपेष्टिपशुयज्ञानां सोमपानक्रियावताम् ॥
तिथिनक्षत्रयोगानां मुहूर्तकरणात्मनाम् ।
कालानां वेदनार्थन्तु ज्योतिर्ज्ञानं कृतं पुरा ॥
ऋग्यजुःसाममन्त्राणां लोकचित्तार्थचिन्तनात् ।
प्रत्यापत्तिविकल्पार्थं छन्दोज्ञानं प्रकल्पितम् ॥
वर्णाक्षरपदार्थानां सुपि लिङ्गविभक्तितः ।
नामधातुविवेकार्थं पुरा व्याकरणं कृतम् ॥
यूपवेद्यध्वरार्थन्तु प्रोक्षणं ग्रहणाय तु ।
यज्ञदैवतयोगार्थं शिक्षाज्ञानं प्रकल्पितम् ॥
यज्ञपात्रपवित्रार्थं द्रव्यसम्भरणाय च ।
सर्वयज्ञविकल्पाय पुरा तुल्यं प्रकल्पितम् ॥
नाममन्त्रविभक्तानां तत्त्वार्थनियमाय च ।
सर्ववेदनिरुक्तञ्च निरुक्तं ऋषिभिः कृतम् ॥
वेद्यर्थं पृथिवी सृष्टा सम्भारार्थं तथैव च ।
इध्मनार्थञ्च यूपार्थं ब्रह्मा चक्रे वनस्पतीन् ॥

ग्राम्यारण्याश्च पशवः स्तूयन्ते यश्च कारणात्।
मन्त्राणां विनियोगश्च प्रोक्षणं श्रवणं तथा॥
अनुयाजप्रयाजांश्च महतां शासिनस्तथा।
उद्गातश्चैव साम्नां वै वह्निप्रस्थानमेव च॥
विष्णुक्रमाणां क्रमणं दक्षिणावभृतं तथा।
त्रिकालं चैव भूमिश ! स्थानेषू पश्यतन्तथा॥
अवघ्राणोक्षणाश्चैव हविषा श्रवणान्तथा।
नावगुल्यन्ति ये विप्रा निहन्तारश्च पशोर्वशम्॥
ते यान्ति नरकं घोरं रौरवं तमसावृतम्।
शतवर्षसहस्राणि तत्र स्थित्वा नराधमाः॥
क्रिमिभि र्भक्ष्यमाणाश्च तिष्ठेयुः पूयशोणिते।
यूपास्तु उक्तसंस्कारै रोषध्यः पशवस्तथा॥
यजमानेन सहिताः स्वर्गं यान्ति नरेश्वर !।
यावत्कालं हि यज्ञो वै स्वर्गलोके महीयते॥
तावत्कालं प्रमोदन्ते पशवोऽप्यध्वरे हताः।
हत्वा यूपत्वमिच्छन्ति पशुत्वं पशवस्तथा॥
तृणा इच्छन्ति दर्भत्व मोषध्यश्च हविष्मताम्।
सोमत्वञ्च लताः सर्वा वेदित्वञ्च वसुन्धरा॥
यस्मात्पशुत्वमिच्छन्ति पशवः स्वर्गलिप्सया।
तस्मात्पशुवधे हिंसा नास्ति यज्ञेषु पाण्डव !॥
अहिंसा वैदिकं कर्म ब्रह्मकर्मेति तत् स्मृतम्।
वेदोक्तं ये न कुर्वन्ति हिंसाबुध्या क्रतुं द्विजाः॥
सद्यः शूद्रत्वमायान्ति प्रेत्य चण्डालतामपि।
गावो यज्ञार्थ मुत्पन्ना दक्षिणार्थं तथैव च॥

सुवर्णं रजतञ्चैव पात्रिकं भार्यमेव च ।
दर्भसंस्कारणार्थन्तु रचसां रचणाय च ॥
यजनार्थं द्विजाः सृष्टा तारका भुवि दैवताः ।
चत्रिया रचणार्थन्तु वैश्या वार्तानिमित्ततः ॥
शुश्रूषार्थं त्रयाणान्तु शूद्राः सृष्टाः स्वयम्भुवा ।
एवमेतत् जगत्सर्वं मग्निहोत्रकृते कृतम् ॥
नावबुध्यन्ति ये चैतदीदृशन्तत्समाहृतम् ।
ते यान्ति नरकं घोरं रौरवं नाम विश्रुतम् ॥
रौरवाद्विप्रमुक्तास्तु क्रमियोनिं व्रजन्ति ते ।
यथोक्तमग्निहोत्राणि शुश्रूषन्ति च ये द्विजाः ॥
तैस्तु दत्तं हुतं तप्तं जप्तमध्यापितं भवेत् ।
एवमिष्टञ्च पूर्तञ्च यद्द्विजैः क्रियते नृप ! ॥
तत्सर्वं सम्यगाहृत्य चादित्ये स्थापयाम्यहम् ।
मया स्थापितमादित्ये लोकस्य सुकृतं हि यत् ॥
तारयेत्तत् सहस्रांशुः सुकृतं ह्यग्निहोत्रिणाम् ।
तावत्तेषां हि पुण्येन दीप्यते रविरम्बरे ॥
स्वर्गे स्वर्गं गतानान्तु वीर्याद्भवति वीर्यवान् ।
तत्र ते ह्युपयुज्यन्ति ह्यग्निहोत्रस्य यत् फलम् ॥
समानरूपा देवानां तिष्ठन्त्याभूतसंप्लवम् ।
वृथाग्निना च ये केचिद्दृश्यन्ते ह्यग्निहोत्रिणः ॥
न तेऽग्निहोत्रिणां लोकान् मनसापि व्रजन्ति वै ।
वीरघ्नास्ते दुराचाराः सुदरिद्रा नराधमाः ॥
विकला व्याधिकाश्चापि जायन्ते शूद्रयोनिषु ।
तस्मात्सोपितकै र्नित्य मग्निहोत्रं द्विजन्मभिः ॥

होतव्यं विधिवद्राजन्नूर्ध्वमिच्छन्ति ते गतिम्।
अमृज्यं स्मृतमेतस्मादग्निहोत्रं युधिष्ठिर!॥
न त्याज्य मप्येतदूस्त्हीतव्यं द्विजातिभिः।
हुत्वेऽप्यग्निहोत्रं ये गच्छन्ति विधिवद्‌द्विजा॥
शूद्रान्नाद्विरताः सन्तः संयन्तेन्द्रियबुद्धयः।
पञ्चयज्ञपरा नित्यं क्रोधलोभविवर्जिताः॥
द्विकाल मतिथिञ्चैव पूजयन्ति च भक्तितः।
तेऽपि सूर्योदयप्रख्यै र्विमानै र्वायुवेगिभिः॥
मम लोके प्रमोदन्ते दृष्ट्वा माञ्च युधिष्ठिर!।
मन्वन्तरञ्च तत्रैकं मोदित्वा द्विजसत्तमाः॥
इह मानुष्यके लोके भवन्ति द्विजपुङ्गवाः।
बाला हिताग्नयो ये च शूद्रान्नाद्विरताः सदा॥
क्रोधलोभविनिर्मुक्ताः प्रातःस्नानपरायणाः।
यथोक्त मग्निहोत्रं वै जुह्वति संयतेन्द्रियाः॥
संतिष्ठेद्वा सदा सौम्यो द्विकालं मत्परायणाः।
ते यान्त्यपुनरावृत्तिं भित्वा चादित्यमण्डलम्॥
मम लोकं सपत्नीका यानैः सूर्योदयप्रभैः।
तत्र बालाः ससंस्काराः कालगाः कामरूपिणः॥
ऐश्वर्यगुणसम्पन्नाः क्रीडन्ति च यथासुखम्।
इत्येषा ह्याहिताग्नीनां विभूतिः पाण्डुनन्दन!॥
ये च वेदश्रुतिञ्चैकंचित् निन्द्यमाना ह्यबुद्धयः।
इति श्रीगौतमीये वैष्णवधर्मशास्त्रे पञ्चदशोऽध्यायः।

# षोड़शोऽध्यायः ।

युधिष्ठिरः । चक्रायुध ! नमस्तेऽस्तु देवेश ! गरुड़ध्वज ! ।
चान्द्रायणविधिं पुण्य माख्याहि भगवन्मम ॥
भगवानुवाच । शृणु पाण्डव ! तत्त्वेन सर्वपापप्रणाशनम् ।
पापिनो येन शुध्यन्ति तत्ते वक्ष्यामि सर्वशः ॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वाचरितव्रतः ।
यथावत्कर्तुकामोयस्तस्य यं प्रथमन्तु यः ।
शोधयेत्तु शरीरं स्वं पञ्चगव्ये पवित्रितः ॥
सशिरः कर्तु पचान्तं ततः कुर्वीत पावनम् ।
शुक्लवासाः शुचिर्भूत्वा मौञ्जीं बध्नीत मेखलाम् ॥
पालाशदण्डमादाय ब्रह्मचारीव्रते स्थितः ।
कृतोपवासः पूर्वन्तु शुक्लप्रतिपदि द्विजः ॥
नदीसङ्गमतीर्थेषु शुचौ देशे गृहेऽपि वा ।
गोमयेनोपलिप्तेऽथ स्थण्डिलेऽग्निं निधापयेत् ॥
आधारावाज्यभागौ च प्रणवं व्याहृतिस्तथा ।
वारुणाश्चापि पञ्चैव हुत्वा सर्वान्यथाक्रमम् ॥
सत्याय विष्णवे चेति ब्रह्मर्षिभ्योऽथ ब्रह्मणे ।
विश्वेभ्यश्चैव देवेभ्योऽथ प्रजापतये तथा ॥
षट् पञ्च जुहुयात्पश्चात्प्रायश्चित्ताहुतीर्द्विजः ।
ततः समापयेदग्निं शान्तिं कृत्वाथ पौष्टिकम् ॥
प्रणम्याग्निस्तु सोमस्य भस्म दत्त्वा तथात्मनः ।
नदीकृत्वा विविक्तानां सोमाय वरुणाय च ॥
आदित्याय ततः स्नायादन्नं कृत्वा समाहितः ।

शुचिर्वोदकमाचम्य स्वाधीनः पूर्वतोमुखः॥
प्राणायामन्ततः कृत्वा पवित्रैरभिषेचनम्।
आचान्तस्त्वभिवीक्षेत चोर्द्धबाहुर्दिवाकरम्॥
कृताञ्जलिरुपस्थान्तः कुर्य्याच्चापि प्रदक्षिणम्।
नारायणं वा रुद्रं वा स्वाध्यायं ब्राह्मणान्तथा॥
आरण्यं मम सूक्तं वा प्राक् भोजनमथापि वा।
वीरघ्नमृषभस्यापि तथावाप्यघमर्षणम्॥
गायत्रीं मम वा देवीं सावित्रीं वा जपेत्ततः।
शतं वाष्टशतं वापि सहस्रमथवा परम्॥
ततो मध्याह्नकाले वै पायसं यावकन्तु वा।
पाचयित्वा प्रयत्नेन प्रयतः सुसमाहितः॥
ततः पात्रं समादाय सौवर्णं राजतन्तु वा।
ताम्रं वा मृण्मयं वापि ह्यौदुम्बरमथापि वा॥
वृक्षाणां याज्ञियानान्तु पर्णैरद्यैरकुत्सितैः।
पुटकेन तु शुभ्रेन चरेद्भैक्षं समाहितः॥
ब्राह्मणानां गृहाणान्तु सप्तानान्नापरं व्रजेत्।
गोदोहमात्रन्तिष्ठेत्तु वाग्यतः संयतेन्द्रियः॥
न हसेच्च न वीक्षेत नाभिभाषेत वा स्त्रियम्।
विष्ठामूत्रपुरीषञ्च चण्डालं वा रजस्वलाम्॥
पतितञ्च तथाश्वानमादित्यमवलोकयेत्।
यो हि पादुकमारुह्य सर्वदा प्रचरेद्द्विजः॥
तद्दृष्ट्वा पापकर्माणमादित्यमवलोकयेत्।
ततस्त्वावसथं प्राप्तो भिक्षान्निक्षिप्य भूतले॥
प्रक्षाल्य पादावाचम्य हस्तौ वा कोऽपरः पुनः।

आचम्य वारुणास्तेन वह्निं विप्रांश्च पूजयेत् ॥
पञ्च सप्ताथ वा कुर्याद्भागान् भैक्षस्य तस्य वै ।
तेषामन्यतमं पिण्डमादित्याय निवेदयेत् ॥
ब्रह्मणे चाग्नये चैव सोमाय वरुणाय च ।
विश्वेभ्यश्चैव देवेभ्यो ह्यादित्याय यथाक्रमम् ॥
अवशिष्टमथैकन्तु वक्तुं मात्रं प्रकल्पयेत् ।
अङ्गुल्यग्रे स्थितं पिण्डं गायत्रे चाभिमन्त्रयेत् ॥
अङ्गुलीभि स्त्रिभिः पुण्यं प्राश्नीयात्प्राङ्मुखः पुनः ।
यथाच वर्धते सोमो ग्रसते च तथा पुनः ॥
तथा पिण्डाश्च वर्धन्ते ह्रसन्ते च दिने दिने ।
त्रिकालस्नानमस्योक्तं द्विकालमथवा सकृत् ॥
ब्रह्मचारी सदा चापि न च वक्षं प्रपीड़येत् ।
स्थाने च दिवसे तिष्टेत् रात्रौ वीरासनं व्रजेत् ॥
भवेत् स्थण्डिलशायी वा ह्यथवा वृक्षमूलकः ।
वल्कलं यदि वा क्षौमं शाणकार्पासकन्तथा ॥
आच्छादनं भवेत्तस्य वस्त्रार्थं पुरुषर्षभ ! ।
एवञ्चान्द्रायणो पूर्णे मासस्यान्ते प्रहृष्टिमान् ॥
ब्राह्मणान् भोजयेद्भक्त्या दद्याच्चैव तु दक्षिणाम् ।
चान्द्रायणेन चीर्णेन यत्कृतन्तेन दुष्कृतम् ।
तत्सर्वन्तत्क्षणादेव भस्मीभवति काष्ठवत् ।
ब्रह्महत्याथ गोहत्या सुवर्णस्तैन्यमेव तु ॥
भ्रूणहत्या सुरापानं गुरोर्दारव्यतिक्रमः ।
एवमन्यानि पापानि पतनीयानि यानि च ॥
चान्द्रायणेन नश्यन्ति वायुना पांशवो यथा ।

अनिर्द्दशाया गो: क्षीरं औष्ट्रमाविकमेव च ॥
मृतसूतकयोश्चान्नं भुक्त्वा चान्द्रायणञ्चरेत्।
सुरामांसामिषं सर्पिर्लाक्षा लवणमेव च॥
तैलं सोमञ्च विक्रीणन् द्विजश्चान्द्रायणञ्चरेत्।
एकोद्दिष्टञ्च योभुङ्क्ते योभुङ्क्ते वासनस्थित: ॥
भिन्नभाण्डेतु योभुङ्क्ते द्विजश्चान्द्रायणञ्चरेत्।
आकाशस्थितश्चैव आसनस्थस्तथैव च॥
परस्य स्थितस्यैव भुक्त्वा चान्द्रायणञ्चरेत्।
आसनस्थश्च योभुङ्क्ते शयनीयगतोऽपि वा॥
योभुङ्क्ते वासनस्थस्तु द्विजश्चान्द्रायणञ्चरेत्।
यो भुङ्क्तेऽनुपनीतेन यो भुङ्क्ते च स्त्रिया सह॥
योभुङ्क्ते अन्यथा सार्द्धं द्विजश्चान्द्रायणञ्चरेत्।
उच्छिष्टं स्थापयेद्विप्रो योमोहाद्भोजनान्तरे॥
दद्याद्वा यदि सोहाद्द्विजश्चान्द्रायणञ्चरेत्।
तुम्बं कोशातकञ्चैव पलाण्डुं गृञ्जनन्तथा॥
छत्राकं लशुनञ्चैव जग्ध्वा चान्द्रायणञ्चरेत्।
तथा पर्य्युषितं चान्नं पक्वं परगृहागतम्॥
द्विपक्वञ्च वृथामांसं जग्ध्वा चान्द्रायणञ्चरेत्।
उदक्या च शुना वापि चण्डालैर्वा नराधिप!॥
स्पृष्टमन्नन्तु भुञ्जानो द्विजश्चान्द्रायणञ्चरेत्।
एतत्परं हि शुध्यर्थमृषिभिश्चरितव्रतम्॥
पावनं सर्वपापानां पुण्यं पाण्डव! चोत्तमम्।
एतेन वसवो रुद्रा आदित्याश्च दिवङ्गता:॥
एतदाद्यं परं गुह्यं पवित्रं पावनं स्मृतम्।

यथोक्तमेतद्यः कुर्य्याद्वृष्णिः पापप्रणाशनम् ।
स दिवं याति पूतात्मा निर्मलादित्यसन्निभः ॥

इति श्रीगौतमीये वैष्णवधर्मशास्त्रे षोड़शोऽध्यायः ।

---

## सप्तदशोऽध्यायः ।

वैशम्पायनः । केशवेनैवमाख्याते चान्द्रायणविधिक्रमे ।
पप्रच्छ पुनरप्यन्यान् धर्मान् धर्मात्मजो नृपः ॥

युधिष्ठिरः । सर्वभूतहिते श्रीमन् ! सर्वभूतनमस्कृत ! ।
सर्वभूतहितं धर्मं सर्वज्ञ! कथयस्व मे ।
यद्दरिद्रजनस्यापि स्वर्गं सुखकरम्भवेत् ॥
सर्वपापप्रशममन्नत् शृणुष्व युधिष्ठिर ! ।
कार्त्तिकाद्यास्तु ये मासा द्वादशैव प्रकीर्त्तिताः ॥
तेष्वेकभक्तनियमः सर्वेषा सुच्यते मया ।
कार्त्तिके यस्तु वै मासे नन्द्या संयतो नरः ॥
एकभुक्तेन मद्भक्तो मासमेकं तु वर्तते ।
जलपानं पिबेन्मासो नान्तराभोजनात्परम् ।
चादित्यरूपमांश्चापि नित्यमध्ये समाहितः ॥
व्रतान्ते भोजयेद्विप्रान् दक्षिणाञ्चापि तत्पुनः ।
क्रोधलोभविमुक्तस्य तस्य पुण्यफलं शृणु ॥
विधिवत्कपिलादाने यत्पुण्यं समुदाहृतम् ।
तत्पुण्यं समनुप्राप्य सूर्य्यलोके महीयते ॥
ततश्चापि च्युतः कालाम् मानुषेषूपजायते ।
तत्र प्रकामं क्रीड़ित्वा सर्वलोकेषु पूजितः ॥

राजराजार्च्चितोविप्रः कोटीधनपतिर्भवेत् ।
मार्गशीर्षे तु यो मासे एकभुक्तेन वर्त्तते ॥
कामं क्रोधञ्च लोभञ्च परित्यज्य यथाविधि ।
स्नात्वा चादित्यरूपं मा मर्चयन्ति यतेन्द्रियाः ॥
जपन्नेवतु गायत्रीं मामिकां वाग्यतः शुचिः ।
मासे परिसमाप्ते तु भोजयित्वा द्विजान् शुचीन् ॥
तानर्च्चयन्ति भक्त्या तस्य पुण्यफलं शृणु ।
अग्निहोत्रे कृतं पुण्य माहिताग्नेस्तु यद्भवेत् ॥
तत्पुण्यफलमाप्नोति यानेनाम्बरयोगिना ।
सप्तर्षिलोके चरति यथाकामं यथासुखम् ॥
ततश्चापि च्युतः कालाद्धरिवर्षेषु जायते ।
तत्र प्रकामं क्रीड़ित्वा राजा पश्चाद्भविष्यति ॥
पौषमासं क्षपेदेक मेकभक्तेन यो नरः ।
अर्च्चयेत्तुच मां नित्यं मद्गतेनान्तरात्मना ॥
अहिंसासत्यनिरतः क्रोधहर्षविवर्जितः ।
एवं युक्तस्य राजेन्द्र ! शृणुयाः फलमुत्तमम् ॥
विप्रातिथ्यसहस्रे तु यत्पुण्यं समुदाहृतम् ।
तत्फलं समनुप्राप्तः शक्रलोके महीयते ॥
अवतीर्य्य स्ततः कालादिलावर्षेषुजायते ।
तत्र स्थित्वा चिरं काल मिह विप्रो भविष्यति ॥
माघमासन्तथा यस्तु वर्त्तते चैकभुक्ततः ।
मदर्च्चनपरो भूत्वा हर्षक्रोधविवर्जितः ।
मामिका मपि गायत्रीं सन्ध्यायां तु जपेद्द्विजः ॥
दत्त्वा तु दक्षिणामन्ते भोजयित्वा द्विजानपि ।

नमस्करोति तान् भक्त्या मद्गतेनान्तरात्मना ॥
त्रिकालस्नानयुक्तस्य तस्य पुण्यफलं शृणु ।
नीलकण्ठप्रयुक्तेन यानेनसचरो भवेत् ॥
पितृलोकं पूजयित्वा सेव्यमानोऽप्सरोगणैः ।
तत्र प्रकामं क्रीडित्वा भद्राश्वेषूपजायते ॥
तत्र च्युतश्चतुर्वेदी विप्रो भवति भूतले ।
क्षपेत् फाल्गुनमासं य एकभक्तेन संयतः ॥
नमो ब्रह्मण्यदेवायेत्यजस्रं त्रिर्जपन् सदा ।
पायसं भोजयेद्विप्रान् व्रतान्ते संयतेन्द्रियः ॥
मदर्चनपरः क्रोधलोभमोहविवर्जितः ।
सदाचारव्रतपरस्तस्य पुण्यफलं शृणु ॥
विमानैः सारसैर्युक्तमारूढः कामगं सुखम् ।
नक्षत्रलोके रमते सर्वनक्षत्रशोभितः ॥
ततश्चापि च्युतः कालात् केतुमालेषु जायते ।
तत्र प्रकामं क्रीडित्वा मानुषे नृपतिर्भवेत् ॥
चैत्रमासेषु योमर्त्य एकभुक्तेन वर्तते ।
ब्रह्मचारी तु मद्भक्तस्तस्य पुण्यफलं शृणु ॥
यदग्निहोत्रं यः पुण्यं यथोक्तव्रतचारिणः ।
तत्पुण्यफलमासाद्य चन्द्रलोके महीयते ॥
ततोऽवतीर्णो जायेत वर्षे रमणके पुनः ।
भुक्त्वा कामांस्ततस्त्विह राजा भविष्यति ॥
वैशाखं यस्तु वै मास मेकभुक्तेन वर्तते ।
द्विजमग्रासने कृत्वा भुञ्जन् भूमौ च वाग्यतः ॥
नमो ब्रह्मण्यदेवायेत्यर्चयित्वा दिवाकरम् ।

व्रतान्ते भोजयेद्विप्रांस्तस्य पुण्यफलं शृणु ॥
फलं यद्विधिवत्प्रोक्त मग्निष्टोमातिरात्रयोः ।
तत्पुण्यफलमासाद्य देवलोके महीयते ॥
ततो हैमवते वर्षे जायते कालपर्ययात् ।
तत्र प्रकामं मोदित्वा विप्रः पश्चाद्भविष्यति ॥
ज्यैष्ठमासे तु भो राजन्नेकभक्तेन वर्त्तते ।
विप्रमग्रासरु कृत्वा भूमौ भुञ्जन् जितेन्द्रियः ॥
नमो ब्रह्मण्यदेवायेत्यर्चयन्मां समाहितः ।
दम्भानृतविनिर्मुक्तस्तस्य पुण्यफलं शृणु ।
चीर्णे चान्द्रायणे सम्यक् यत्पुण्यं समुदाहृतम् ॥
तत्पुण्यफलमासाद्य देवलोके महीयते ।
अथोत्तरकुरुष्वेव जायते निर्गतस्ततः ॥
ततश्चापि च्युतः कालादिह लोके द्विजो भवेत् ।
आषाढमासं यो राजन्नेकभक्तेन वर्त्तते ॥
ब्रह्मचारी जितक्रोधो मदर्चनपरायणः ।
विप्रमग्रासने कृत्वा भुञ्जन् भूमौ जितेन्द्रियः ॥
कृत्वा त्रिषवणस्नान मष्टाक्षरविधानतः ।
व्रतान्ते भोजयेद्विप्रान् पायसेन युधिष्ठिर ! ॥
गुडौदनेन वा राजंस्तस्य पुण्यफलं शृणु ।
कपिलाशतदत्तस्य यत्पुण्यं पाण्डुनन्दन ! ॥
तत्पुण्यफलमासाद्य देवलोके महीयते ।
ततोऽवतीर्णः कालेन शाकद्वीपे प्रजायते ॥
ततश्चापि च्युतः कालादिह विप्रो भविष्यति ।
श्रावणं यः क्षपेन्मासमेकं भक्त्वे न संशयः ॥

नमो ब्रह्मण्यदेवायेत्युक्त्वा मा मर्चयेत्सदा।
विप्रमग्रासने कृत्वा भूमौ भुञ्ज्याद्यथाविधि॥
पायसेनार्चयन्विप्रान् जितक्रोधो जितेन्द्रियः।
लोभमोहविनिर्मुक्तस्तस्य पुण्यफलं शृणु॥
कपिलाशतस्य यत्पुण्यं विधिदत्तस्य वासव!।
तत्पुण्यं समनुप्राप्तः शक्रलोके महीयते॥
ततश्चापि च्युतः कालात् कुशद्वीपे प्रजायते।
तत्र प्रकामं क्रीड़ित्वा विप्रो भवति मानुषे॥
यस्तु भाद्रपदं मासमेकभुक्तेन वर्तते।
ब्रह्मचारी जितक्रोधः सत्यरूपो जितेन्द्रियः॥
विप्रमग्रासने कृत्वा पाकभेदविवर्जितः।
नमो ब्रह्मण्यदेवायेत्युक्त्वा सुचरणौ स्पृशेत्॥
तिलान्वाथ घृतं वापि व्रतान्ते दक्षिणां दिशेत्।
मद्भक्तस्य नरश्रेष्ठ! तस्य पुण्यफलं शृणु॥
यत्फलं विधिवत्प्रोक्तं राजसूयाश्वमेधयोः।
तत्पुण्यफलमासाद्य शक्रलोके महीयते॥
ततश्चापि च्युतः कालाज्जायते धनदालये।
तत्र प्रकामं क्रीड़ित्वा राजा भवति मानुषे॥
यश्चाप्याश्वयुजं मासमेकभुक्तेन वर्तते।
गायत्रीं जपन्विप्रो मन्त्रेणान्तरात्मना॥
द्विसन्ध्यं वा त्रिसन्ध्यं वा शतमष्टशतन्तु वा।
विप्रमग्रासने कृत्वा संयतेन्द्रियमानसः॥
व्रतान्ते भोजयेद्विप्रांस्तस्य पुण्यफलं शृणु।
अश्वमेधेन यत्पुण्यं विधिवत्पाण्डुनन्दन!॥

तत्पुण्यफलमासाद्य मम लोके महीयते।
ततश्चापि च्युतः कालात् श्वेतद्वीपे प्रजायते॥
तत्र भुक्त्वा महान् भोगांस्तत्र विप्रो हि जायते।
इति श्रीगौतमीये वैष्णवधर्मशास्त्रे सप्तदशोऽध्यायः।

---

## अष्टादशोऽध्यायः॥

युधिष्ठिरः। देव! संवत्सरं पुण्यमेकभुक्तेन यः क्षपेत्।
तस्य पुण्यफलं यद्वै तन्ममाचक्ष्व केशव!॥
भगवानुवाच। शृणु पाण्डव! सत्यं मे वचनं पुण्यमुत्तमम्।
यच्छ्रुत्वा वाथ कृत्वा वा नरः पापैर्विमुच्यते॥
एकभुक्तेन वर्त्तेत नरः संवत्सरन्तु यः।
ब्रह्मचारी क्षमी शान्तो जितक्रोधो जितेन्द्रियः॥
शुचिः स्नानरतोऽव्यग्रः सत्यवागनसूयकः।
अर्चयत्येव तु मां नित्यं मद्गतेनान्तरात्मना॥
सन्ध्ययोस्तु जपेन्नित्यं मन्त्रगायत्रीं समाहितः।
नमो ब्रह्मण्यदेवायेत्यसकृन्मां प्रणम्य च॥
विप्रमग्रासने कृत्वा यावकं भैक्षमेव वा।
भूत्वा तु वाग्यतो भुक्त्वा वाचयेत्स्य द्विजन्मनः॥
नमोऽस्तु वासुदेवायेत्युक्त्वा तु चरणं स्पृशेत्।
मासे मासे समाप्ते तु भोजयित्वा द्विजः शुचीन्॥
संवत्सरे ततः पूर्णे दद्यात्तु घृतदक्षिणाम्।
नवनीतमयीं गां वा तिलधेनुमथापि वा॥
विप्रहस्तच्युतैस्तोयैः सहिरण्यैः समुक्षितः।

तस्य पुण्यफलं राजन् ! कथ्यमानं मया शृणु ॥
दशजन्मकृतं पापं ज्ञानतोऽज्ञानतोऽपि वा ।
तद्विनश्यति तस्याशु नात्र कार्या विचारणा ॥
युधिष्ठिरः । सर्वेषामुपवासानां यच्च यत् सुमहाफलम् ।
तत्सर्वं श्रेयसे लोके तद्भवान् वक्तुमर्हति ॥
भगवानुवाच । शृणु राजन् ! यथापूर्वं यथाहीनन्तु भारत ! ।
कथान्ते कथयिष्यामि मद्भक्तस्य युधिष्ठिर ! ॥
यस्तु भक्त्या शुचिर्भूत्वा पञ्चम्यां मे नराधिप ! ।
उपवासन्नतं कुर्यात्त्रिकालञ्चार्चयंस्तु माम् ॥
सर्वक्रतुफलं लब्ध्वा मम लोके महीयते ।
युधिष्ठिरः । भगवन् ! देवदेवेश ! पञ्चमी नामकातिथिः ॥
तामहं श्रोतुमिच्छामि कथयस्व ममाच्युत ! ॥
भगवानुवाच । पर्वद्वयञ्च द्वादश्यां श्रवणञ्च नराधिप ! ।
मत्पञ्चमीति विख्याता मत्प्रियञ्च विशेषतः ॥
तस्माद्भागवतैर्भक्तैर्मय्यावेशितबुद्धिभिः ।
उपवासस्तु कर्तव्यो मत्प्रियार्थं युधिष्ठिर ! ॥
द्वादश्यामेव वा कुर्यादुपवासमशक्नुवन् ।
तेनाहं परमां प्रीतिं यास्यामि नरपुङ्गव ! ॥
अहोरात्रेण द्वादश्यां मार्गशीर्षे च केशवम् ।
उपोष्य पूजयेद्यो मां सोऽश्वमेधफलं लभेत् ॥
द्वादश्यां पुष्यमासे तु भक्त्या नारायणन्तु माम् ।
उपोष्य पूज्य सद्यः स वाजपेयफलं लभेत् ॥
द्वादश्यां माघमासे तु मामुपोष्य तु माधवम् ।
पूजयेद्यः समाप्नोति पौण्डरीकफलं नृप ! ॥

उपोष्य मां यो वैशाख्यां द्वादश्यां मधुसूदन!।
पूजयन् फलमाप्नोति सोऽग्निष्टोमस्य पाण्डव!॥
द्वादश्यां ज्यैष्ठमासे मां समुपोष्य त्रिविक्रमम्।
अर्चयेद्यः समाप्नोति गवां मेधफलं नृप!॥
आषाढे वामनाख्यं मां द्वादश्यां समुपोष्य यत्।
पूजयेन्नरमेधस्य तत्फलं प्राप्नुयान्नृप!॥
द्वादश्यां श्रावणे मासि श्रीधराख्यमुपोष्य माम्।
पूजयेद्यः समाप्नोति पञ्चयज्ञफलं नृप!॥
मासे भाद्रपदे यो मां हृषीकेशाख्यमर्चयेत्।
उपोष्य पुनराप्नोति सौत्रामणिफलं नृप!॥
द्वादश्या माश्वयुङ्मासे पद्मनाभमुपोष्य माम्।
अर्चयेद्यः समाप्नोति गोसहस्रफलं नृप!॥
द्वादश्यां कार्तिके मासि मां दामोदरसंज्ञितम्।
उपोष्य पूजयेद्यः स सर्वक्रतुफलं लभेत्।
केवलेनोपवासेन द्वादश्यां पाण्डुनन्दन!॥
फलं यत्पूर्वमुद्दिष्टन्तस्यार्द्धं लभते फलम्।
अवणेऽप्येवमेवं मां योऽर्चयेद्भक्तिमान्नरः।
मम सालोक्य मायाति नात्र कार्य्या विचारणा।
मासे मासे समभ्यर्च्य योनरो मामतन्द्रितः॥
एवं द्वादशवर्षाणि मद्भक्तो मत्परायणः।
अविघ्न मर्च्चमानस्तु मम सालोक्यमाप्नुयात्॥
अभ्यस्येत्प्रीतिमान् सम्यक् द्वादश्यां वेदसंहिताम्।
स पूर्वोक्तफलं राजन्! लभते नात्र संशयः॥
गन्धं पुष्पं फलं तोयं पत्रं वा मूलमेव वा।

द्वादश्यां मम यो दद्यात्ततो नैवास्ति मत्प्रियः ॥
एतेन विधिना सर्वे देवाः शक्रपुरोगमाः ।
मद्भक्ता नरशार्दूल ! स्वर्गलोकांस्तु भुञ्जते ॥
वैशम्पायनः । एवं वदति देवेशे केशवे पाण्डुनन्दनः ।
कृताञ्जलिपुटं न्यस्य मिदं भक्त्या त्ववाच ह ॥
युधिष्ठिरः । यज्ञात्मन्यज्ञसम्भूत ! यज्ञनाथ नमोनमः ।
चतुर्मूर्ते ! चतुर्बाहो ! चतुर्व्यूह ! नमोनमः ॥
लोकात्मन् ! लोकनाथेश ! लोकवास ! नमोनमः ।
सर्वज्ञ ! सर्वलोकेश ! हृषीकेश ! नमोनमः ॥
सहस्रशिरसे तुभ्यं सहस्राक्ष ! नमोनमः ।
पञ्चयज्ञ ! नमस्तेऽस्तु सर्वयज्ञ ! नमोनमः ॥
त्रयीमय ! त्रयीनाथ ! त्रयीलभ्य ! नमोनमः ।
सृष्टिसंहारकर्त्तेति नारसिंह ! नमोनमः ॥
भक्तप्रिय ! नमस्तेऽस्तु सोमनाथ ! नमोनमः ।
हयवक्त्र नमस्तेऽस्तु चक्रपाणे ! नमोनमः ॥
पञ्चभूत ! नमस्तेऽस्तु पञ्चायुध । नमोनमः ।
वैशम्पायनः । भक्तिगद्गदया वाचा स्तुवन्नेव युधिष्ठिरः ।॥
गृहीत्वा केशवो हस्ते प्रीतात्मा तं न्यवारयत् ।
निवार्य्य च पुनर्वाचा भक्तिनम्रं युधिष्ठिरम् ॥
वक्तुमेव नरश्रेष्ठं धर्मपुत्रं प्रचक्रमे ।
भगवानुवाच । अन्यवत्किमिदं राजन्मां स्तौषि नरपुङ्गव ! ॥
तिष्ठ पृच्छ यथापूर्वं धर्मानेव युधिष्ठिर ! ।
युधिष्ठिरः । भगवन् ! त्वत्प्रसादं तु श्रुत्वा श्रुत्वा पुनः पुनः ॥
न शान्तिरस्ति देवेश ! तृप्यतीव च मे मनः ।

इदञ्च मम संप्रश्नं वक्तु मर्हसि माधव ! ॥
द्वादश्यां कृष्णपक्षे तु अर्च्चनीयः कथं भवेत् ।
भगवानुवाच । शृणु राजन् ! यथातथ्यं तत्सर्वं कथयामि ते ॥
माहात्म्यं कृष्णद्वादश्या मर्च्चनीयम् फलं मम ।
एकादश्या मुपोष्याथ द्वादश्यामर्च्चयेत्तु माम् ॥
विप्रानपि यथालाभं भोजयेद्भक्तिमान्नरः ।
स गच्छेद्दक्षिणामूर्त्तिर्मोक्ष नात्र विचारणा ॥
चन्द्रसालोक्य मथवा ग्रहनक्षत्रपूजितः ।

---

## ऊनविंशोऽध्याय ।

इति श्रीगौतमीये वैष्णवधर्मशास्त्रे अष्टादशोऽध्यायः ।
वैशम्पायनः । केशवेनैव माख्याते धर्मपुत्त्रः पुनः प्रभुम् ॥
पप्रच्छ दानकालस्य विशेषस्य विधिं नृपः ।
युधिष्ठिरः । दैवकीफलमाख्यातं विषुवेष्वमरेश्वर ! ॥
सूर्य्यपर्व्ववे चैव दत्ते दाने च किं फलम् ।
भगवानुवाच । शृणुष्व राजन् ! विषुवे सोमार्कग्रहणेषु च ।
व्यतीपातेऽयने चैव दानं स्यादक्षयन्नृप ! ॥
राजन्नयनयोर्मध्यं विषुवं संप्रचक्षते ।
समरात्रिदिने तत्र सन्ध्यायां विषुवे नृप ! ॥
ब्रह्माहं शङ्करश्चापि तिष्ठामः सहिता स्ततः ।
तस्मिन् मुहूर्त्ते ते सर्वे चिन्तयन्तः परंपदम् ॥
शक्रश्च पितरोरुद्रा वसवश्चाश्विनौ तथा ।
साध्या विश्वे सगन्धर्वाः सिद्धा ब्रह्मर्षय स्तथा ॥
सोमो ग्रहगणश्चैव सागराः सरितस्तथा ।

मरुतोऽप्सरसो नागा यक्षराक्षसगुह्यकाः ॥
एते चान्ये च राजेन्द्र ! विषुवे संयतेन्द्रियाः ।
सोपवासाः प्रयत्नेन भजन्ते ध्यानतत्पराः ॥
अन्नं गावस्तिलान् भूमिं कन्यादानं तथैव च ।
गृहमाच्छादनं धान्यं वाहनं शयनं तथा ॥
यच्चान्यच्च मया नोक्तं तत्प्रयच्छ युधिष्ठिर ! ।
दीयते विषुवे चैव श्रोत्रियेभ्यो विशेषतः ॥
तस्य दानस्य कौन्तेय ! क्षयो नैवोपपद्यते ।
वर्धते हरतः पुण्यं तद्दानं कोटिसम्मितम् ।
विषुवे स्नापनं यस्तु मम कुर्य्याद्धरस्य वा ॥
अर्च्चनाञ्च यथान्यायं तस्य पुण्यफलं शृणु ।
दशजन्मकृतं पापं तस्य सद्यो विनश्यति ॥
दशानामश्वमेधानामिष्टानां लभते फलम् ।
विमानं दिव्यमारूढः कामरूपी यथासुखम् ॥
स याति कामगं लोकं रुद्रलोकमथापि वा ।
तत्र वै देवगन्धर्वैं र्गीयमानो यथासुखम् ।
दिव्यवर्षसहस्राणि कोटिमेकन्तु मोदते ॥
ततश्चापि च्युतः कालादिह लोके द्विजोभवेत् ।
चतुर्णामपि वेदानां पारगो ज्ञानविद्भवेत् ॥
चन्द्रसूर्य्यग्रहे यान्ति मम वा शङ्करस्य वा ।
गायते मम वा राजन् ! जपेद्वा शङ्करस्य वा ॥
शङ्खं कुर्व्वन्ति नादैश्च कांसघण्टाध्वनैरपि ।
कारयेत्तु ध्वनिं भक्त्या तस्य पुण्यफलं महत् ॥
गान्धर्वैं र्भीमजपैश्च शब्दैरुत्कृष्टनादिभिः ।

दुर्बलोऽभिभवेद्राहुः सोमश्च बलवान् भवेत् ॥
सूर्य्येन्दूपप्लवे यद्दै श्रोत्रियेभ्यः प्रदीयते।
तत्सहस्रगुणं भूत्वा दातार मुपतिष्ठति ॥
महापातकसंयुक्तो यद्यपि स्यान्नरो नृप!।
निर्लेप स्तत्क्षणादेव तेन दानेन जायते ॥
चन्द्रसूर्य्यप्रकाशेन विमानेन विराजता।
याति सोमपुरं रम्यं सेव्यमानोऽप्सरोगणैः ॥
यावन्नक्षत्राणि तिष्ठन्ति गगने शशिना सह।
तावत्कालं स राजेन्द्र! सोमलोके महीयते ॥
ततश्चापि च्युतः कालादिह लोके युधिष्ठिर!।
वेदवेदाङ्गविद्विप्रः कोटीधनपति र्भवेत् ॥
युधिष्ठिरः। भगवं स्तव गायत्री जप्यते तु कथं नृभिः।
किं वा तस्याः फलं देव! ममाचक्ष्वसिताम्बर! ॥
भगवानुवाच। द्वादश्यां विषुवे चैव चन्द्रसूर्य्यग्रहे तथा।
अयने श्रवणे चैव व्यतीपाते तथैव च।
अश्वत्थदर्शनेचैव तथा मद्दर्शनेऽपि च ॥
जप्यात्तु मम गायत्री मथवाष्टाक्षरन्नृप!।
आजन्म दुष्कृतन्तस्य नाशयेन्नात्र संशयः ॥
युधिष्ठिरः। अश्वत्थदर्शनं देव! किं त्वदर्शितसन्निभम्।
एतत्कथय देवेश! परं कौतूहलं हि मे ॥
भगवानुवाच। अहमश्वत्थरूपेण पालयामि जगत्त्रयम्।
अश्वत्थो न स्थितो यत्र नाहन्तत्र प्रतिष्ठितः ॥
यत्राहं न स्थितो राजन्नश्वत्थश्चापि तत्र न।
यस्त्वेनमर्च्चयेद्भक्त्या मां स साक्षात्समर्च्चति ॥

यस्त्वेनं प्रहरेत्कोपान्मामेव प्रहरेत्तु सः।
तस्मात्प्रदक्षिणं कुर्यान्नभिवादेन प्रत्यहम्॥
गावोविप्रा स्तथाश्वत्थो मम रूपं युधिष्ठिर!।
एतत्त्रयं हि मद्भक्तो नावमन्येत कर्हिचित्॥
अवमानितं चेत्तु हन्यादहत्यासप्तमं कुलम्।
अश्वत्थोब्राह्मणोगावो मन्मया स्तारयन्ति हि।
तस्मादेतत्प्रयत्नेन राजन्! पूजितु मर्हसि॥
युधिष्ठिरः। ब्राह्मणस्तेन देहेन शूद्रत्वं कथमाप्नुयात्।
ब्रह्म वा नश्यति कथं तत् देव! वक्तु मर्हसि॥
भगवानुवाच। अपस्नानन्तु यो विप्रः कुर्य्याद् द्वादशवार्षिकम्।
स तेनैव शरीरेण शूद्रत्वं याति पाण्डव!॥
शूद्रग्रामे तथाप्येको वसेद्वा दशवार्षिकम्।
शद्रोक्तमपि कुर्वीत शूद्रत्वं याति वै द्विजः॥
यस्तु राजाश्रयेणैव जीवेद् द्वादशवार्षिकम्।
स शूद्रत्वं व्रजेद्विप्रो वेदानां पारगो यदि॥
वर्तते नगरे वापि यो वा द्वादशमावसेत्।
स शूद्रत्वं वजेद्विप्रो नात्र कार्या विचारणा॥
उत्पादयति यत्पुत्रं शूद्रायां कामतोद्विजः।
तस्य कायगतं ब्रह्म सर्वमेव विनश्यति॥
मद्यपस्त्रीमुखं मोहादास्वादयति यो द्विजः।
तस्य कायगतं ब्रह्म सद्यएव विनश्यति॥
मैथुनं कुरुते यस्तु जिह्वायां ब्राह्मणो नृप!।
तस्य कायगतं ब्रह्म सद्यएव विनश्यति॥
यः सोमलतिकां विप्रः केवलं भक्षयेद्वृथा।

तस्य कायगतं ब्रह्म सद्यएव विनश्यति ॥
विप्रत्वं दुर्लभं प्राप्य वैमार्गैरेवमादिभिः।
विनाशयन्तु यत्तत्तु तज्जीवापि युधिष्ठिर ! ॥
तस्मात्सर्वप्रयत्नेन मत्प्रियार्थं युधिष्ठिर ! ।
जातिभ्रंशकरं कर्म न कुर्यात् सदृशो द्विजः ॥
इति श्रीगौतमीये वैष्णवधर्मशास्त्रे एकोनविंशतिरध्यायः।

## विंशोऽध्यायः।

युधिष्ठिरः। देशान्तरे गते विप्रे संयुक्ते कालधर्मणा।
शरीरनाशे संप्राप्ते कथा विप्रप्रकल्पना ॥
भगवानुवाच। श्रूयतामाहिताग्नेस्तु तथाहृत्तस्य संस्क्रिया।
पलाशवृन्दैः प्रतिमाकर्तव्या कल्पचोदिता ॥
त्रीणि षष्टिशतान्याङ्गरस्थीन्यस्य नराधिप ! ।
तेषां विकल्पना कार्या यथाशास्त्रविनिश्चयम् ॥
अशीत्यर्धं तु शिरसि ग्रीवा वा दश एव च।
बाह्वोश्चापि शतं दद्यादङ्गुलीषु पुनर्दश।
शिरसि त्रिंशतं दद्याज्जाठरे वापि विंशतिम् ॥
वृषणे द्वादशार्धन्तु शिश्ने चाष्टार्द्धमेव च।
दद्यात्तु शतमुर्वोस्तु षष्ठार्धं जानुजङ्घयोः ॥
दश दद्याच्चरणयोरेषा प्रेतविकल्पना।
एवं विकल्पनां कृत्वा कुर्य्याद्विप्रस्तु संस्क्रियाम् ॥
युधिष्ठिरः। विशेषतीर्थं सर्वेषां संवृत्तानामनुग्रहात्।
भक्तानान्तारणार्थं वै वक्तुमर्हसि धर्मतः ॥
भगवानुवाच। प्रवरं सर्वतीर्थानां सत्यज्ञायन्ति सामगाः।

सत्यं प्रवचनन्तीर्थं हिंसातीर्थं समुच्यते ॥
दानन्तीर्थं दयातीर्थं शीलतीर्थं युधिष्ठिर ! ।
अर्थसन्तोषणन्तीर्थं नारीतीर्थं पतिव्रता ॥
सन्तुष्टो ब्राह्मणस्तीर्थं ज्ञानं वै तीर्थमुच्यते ।
मद्भक्ताः सततं तीर्थं यतयस्तीर्थमुच्यते ॥
शरण्यः पुरुषस्तीर्थमन्नं तत्तीर्थमुच्यते ।
आतिथेयिः परन्तीर्थं मतिथीस्तीर्थमुच्यते ॥
व्रतस्य धारणन्तीर्थं मार्जनन्तीर्थमुच्यते ।
देवशुश्रूषणन्तीर्थं गुरुशुश्रूषणन्तथा ॥
द्विजशुश्रूषणन्तीर्थं तीर्थं ज्ञानस्य धारणम् ।
दारसन्तोषणं तीर्थङ्गतं सन्तीर्थमुच्यते ॥
ब्रह्मचर्यं परन्तीर्थं त्रेताग्निस्तीर्थमुच्यते ।
मूलधर्मः स विज्ञेय मनसस्तत्रैव वा शुतम् ॥
गच्छं स्तीर्थानि कौन्तेय ! धर्मोधर्मेण वर्तते ।
द्विविधन्तीर्थमित्याहुः स्थावरं जङ्गमन्तथा ॥
स्थावराज्जङ्गमं श्रेष्ठं तत्वेज्ञानपरिग्रहात् ।
कर्मणा हि विशुद्धस्य पुरुषस्यैव भारत ! ॥
हृदये सर्वतीर्थानि तीर्थभूतः स उच्यते ।
गुरुतीर्थपरं ज्ञान मतस्तीर्थं न विद्यते ॥
ज्ञानतीर्थन्तपस्तीर्थं ब्रह्मतीर्थं सनातनम् ।
क्षमातु परमन्तीर्थं सर्वतीर्थेषु पाण्डव ! ॥
क्षमावतामयं लोकः परश्चैव क्षमावताम् ।
मानितोऽमानितोवापि पूजितोऽपूजितोऽपि वा ।
आक्रुष्टस्ताड़ितो वापि क्षमावां स्तीर्थमुच्यते ॥

क्षमा दमः क्षमा दानं क्षमा सत्यं क्षमा तपः।
क्षमा ऽहिंसा क्षमा धर्मः क्षमा चेन्द्रियनिग्रहः॥
क्षमा दया क्षमा यज्ञः क्षमा धैर्य्यधृतं जगत्।
क्षमावान् प्राप्नुयात् स्वर्गं क्षमावान् प्राप्नुयाद्यशः॥
क्षमावान् प्राप्नुयान्मोक्षं क्षमावांस्तीर्थमुच्यते।

आत्मा नदी भारत! पुण्यतीर्थं नत्वा तीर्थं सर्व्वतीर्थं प्रधानतः।
श्रुत्वा तीर्थं सर्व्वमात्मन्ययोच्चैः स्वर्गो मोक्षः सर्व्वमात्मन्यधीनम्॥
आचारवक्रान्तरगात्रशोभिना सत्यप्रसन्नेन मनोहरेण।
ज्ञानाम्बुना स्नाति च यो हि नित्यं किन्तस्य भूयः सलिलेन कृत्यम्

युधिष्ठिरः। भगवन्! सर्व्वपापघ्नं प्रायश्चित्तमनुत्तमम्।
त्वद्भक्तस्य नरश्रेष्ठ! मम वक्तुं त्वमर्हसि॥
रहस्यमिदमत्यर्थं न श्राव्यं पापकर्मणाम्।
अवैष्णवानामश्राव्यं प्रायश्चित्तं ब्रवीमि ते॥
वामनं ब्राह्मणं दृष्ट्वा मद्भक्तेनान्तरात्मना।
नमो ब्रह्मण्यदेवायेत्यभिवादनमाचरेत्॥
प्रदक्षिणन्तु त्रिः कुर्यात् पुनरष्टाक्षरेण तु।
तेन तुष्टो नरश्रेष्ठ! तत्पापं क्षपयाम्यहम्॥
पोतदृष्टां वराहस्य मृत्तिकां शिरसा वहन्।
प्राणायामशतं कृत्वा नरः पापैर्विमुच्यते॥
दक्षिणावर्त्तशङ्खाद्वा कपिलाशृङ्गमेव च।
प्रातः स्नातो नदीं गत्वा मम सूक्तेन शंसतः॥
सलिलेन तु यः स्नायात् सतिलेन रविग्रहे।
तस्य यत्सञ्चितं पापन्तत्क्षणादेव नश्यति॥
मस्तकान्निःसृतैस्तोयैः कपिलाया युधिष्ठिर!।

गोमूत्रेणापि यः स्नायाद्गोर्हिंस्यान् ममवादिनः ॥
विप्रपादच्युतैर्वापि तोयैः पापं प्रणश्यति ।
नमस्येयस्तु मद्भक्त्या शिंशुमारप्रजापतिम् ॥
चतुर्दशाङ्गयुक्तस्य तस्य पापं प्रणश्यति ।
ततश्चतुर्दशाङ्गानि शृणु तस्य नराधिप ! ॥
शिरो धर्मो हनू ब्रह्म यज्ञमुत्तरदक्षिणौ ।
हृदयन्तु भवेद्विष्णुर्हस्तौ स्यातान्तथाश्विनौ ।
अविमध्यं भवेद्राजन् ! लिङ्गं संवत्सरो भवेत् ॥
मित्रावरुणकौ पादौ पुच्छमूलं हुताशनः ।
ततः पश्चाद्भवेदिन्द्रः ततः पश्चात्प्रजापतिः ॥
अभयञ्च ततः पश्चात् स एव ध्रुवसंज्ञितः ।
एतान्यङ्गानि सर्वाणि शिंशुमारप्रजापतेः ॥
पिबेत्तु पञ्चगव्यं यः पौर्णमास्यामुपोषितः ।
तस्य नश्यति तत्सर्वं यत्पापं पूर्वसंञ्चितम् ॥
अथैव ब्रह्मकुर्चन्तु समन्त्रं तु पृथक् पृथक् ।
मासि मासिपिबेद्यस्तु तस्य पापं प्रणश्यति ॥
पात्रञ्च ब्रह्मकूर्चस्य शृणु मन्त्रञ्च भारत ! ।
पलाशं पद्मपत्रं वा ताम्रं वाथ हिरण्मयम् ॥
सादयित्वा तु गृह्णीयात्तत्तु पात्रमुदाहृतम् ।
गायत्र्या गृह्य गोमूत्रं गन्धद्वारेति गोमयम् ॥
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ।
आज्यं शुक्रमसीत्येव देवस्येति कुशोदकम् ।
आपोहिष्ठेति संगृह्य यवचूर्णं यथाविधि ॥
ब्रह्मणे च तथाहुत्वा समिद्धे तु हुताशने ।

आलोड्य प्रणवेनैव निर्मथ्य प्रणवेन तु॥
उद्धृत्य प्रणवेनैव पिबेच्च प्रणवेन तु।
महतापि स पापेन त्वचेवाहिर्विमुच्यते॥
इन्द्रान इति यः पादं पठेद्यः संहितामिमाम्।
अन्तर्जलेऽथवादित्ये तस्य पापं प्रणश्यति॥
मम सूक्तं जपेद्यस्तु नित्यं मद्गतमानसः।
न स पापेन लिप्येत पद्मपत्रमिवाम्भसा॥

इति श्रीगौतमीये वैष्णवधर्मशास्त्रे रहस्यप्रायश्चित्तं नाम विंशोऽध्यायः।

---

## एकविंशोऽध्यायः।

युधिष्ठिरः। कीदृशा ब्राह्मणाः पुण्या भावसिद्धाः सुरेश्वर।!
तत्कर्म सफलं वेति कथयस्व ममाच्युत!॥
भगवानुवाच। शृणु पाण्डव! तत्सर्वं ब्राह्मणानां यथाक्रमम्।
सफलं निष्फलञ्चेति तेषां कर्म ब्रवीमि ते॥
त्रिदण्डधारणं मौनं जटाधारणमुण्डनम्।
वल्कलाजिनसर्वाशो व्रतचर्याभिषेचनम्॥
अग्निहोत्रं वनेवासः स्वाध्यायो ध्यानसंक्रिया।
सर्वाण्येतानि वै मिथ्या यदि भावो न निर्मलः॥
अग्निहोत्रं वृथा राजन्! वृथा वेदास्तथैव च।
शीलो देवास्तु तुष्यन्ति श्रूयतां तत्र कारणम्॥
क्षान्तीदान्तीजितक्रोधी जितात्मानं जितेन्द्रियम्।
तमेव ब्राह्मणं मन्ये शेषाः शूद्रा इति स्मृताः॥

अग्निहोत्रव्रतपरान् स्वाध्यायनिरतान् शुचीन्।
उपवासरतान् दान्तां स्तां न्देवा ब्राह्मणा विदुः॥
न जातिः पूज्यते राजन्! गुणाः कल्याणकारकाः।
चण्डालमपि वृत्तस्थं तन्देवा ब्राह्मणं विदुः॥
मनः शौचं कर्मशौचं कुलशौचञ्च भारत!।
शरीरशौचं वाक्शौचं शौचं पञ्चविधं स्मृतम्॥
पञ्चस्वेषु च शौचेषु हृतिशौचं विशिष्यते।
हृदयस्य तु शौचेन स्वर्गं गच्छन्ति मानवाः॥
अग्निहोत्रपरिभ्रष्टः प्रसक्तः क्रयविक्रये।
वर्णसङ्करकर्ता च ब्राह्मणो वृषलैः समः॥
यस्य वेदश्रुतिर्नष्टा कर्षकश्चापि यो द्विजः।
विकर्मस्थोऽपि कौन्तेय! स वै वृषल उच्यते॥
वृषो धर्मो हि विज्ञेयस्तस्य यः कुरुते लयम्।
विषदन्तं विदुर्देवा निन्दितं श्वपचादपि॥
स्तुतिभिः ब्रह्मपूर्वाभिर्यश्चेन्द्रं स्तौति मान्नृप!।
न च मां स्तौति पापात्मा स मामाक्रोशते भृशम्॥
श्वदृतौ च यथा क्षीरं ब्रह्म वै वृषले तथा।
अदुष्टो दुष्टतामेति शुना स्पृष्टं हविर्यथा॥
अङ्गानि चतुरो वेदा मीमांसा न्यायविस्तरम्।
धर्मशास्त्रपुराणानि विद्या ह्येताश्चतुर्दश॥
यान्युक्तानि मया सम्यक् विद्याजन्मानि भारत!।
उत्पन्नानि पवित्राणि पावनार्थन्तथैव च॥
तस्मात्तानि न शूद्राय स्प्रष्टव्यानि युधिष्ठिर!।
सर्वं तच्छूद्रसंस्पृष्टं न पवित्रं न संशयः॥

लोके त्रीण्यपवित्राणि पञ्चामेध्यानि भारत ! ।
श्वा शूद्रश्वपाकश्चेत्यपवित्राणि पाण्डव ! ॥
देवलः शूककीटो यूपश्चण्डका वृषलीपतिः ।
पञ्चैते स्युरमेध्याश्च न स्पृष्टव्याः कथञ्चन ॥
स्पृष्ट्वैतानष्ट वै विप्रः सचेलो जलमाविशेत् ।
मद्भक्तान् शूद्रसामान्यादवमन्यन्ति ये नराः ।
नरकेष्वेव तिष्ठन्ति वर्षकोटिं नराधमाः ॥
चण्डालमपि मद्भक्तं नावमन्येत बुद्धिमान् ।
अवमन्य पतत्येव नरके रौरवे नरः ॥
मम मद्भक्तभक्तेषु सम्प्रतिश्चाधिका भवेत् ।
तस्मान्मद्भक्तभक्ताश्च पूजनीया विशेषतः ॥
कीटपक्षिमृगाणाञ्च मयि सन्न्यस्तचेतसाम् ।
ऊर्द्ध्वामेव गतिं विद्धि किं पुन र्ज्ञानिनान्नृप ! ॥
पत्रं वाप्यथवा पुष्पं फलं वा तोयमेव वा ।
ददाति मम शूद्रोऽपि शिरसा धारयामि तम् ॥
विप्रानेवार्च्चयेद्भक्त्या शूद्रः प्राणैश्च मत्प्रियः ।
तेषान्तेनैव रूपेण पूजां गृह्णामि भारत ! ॥
वेदोक्तेनैव मार्गेण सर्वभूतहृदि स्थितम् ।
मामर्च्चयन्ति ये विप्राः सायुज्यं यान्ति ते मम ॥
परित्राणाय भक्तानां प्रादुर्भावः कृतोमया ।
प्रादुर्भावाकृतिः काचिदर्च्चयेत्तां युधिष्ठिर ! ।
यासामन्यतमं मूर्तिं यो भक्त्या च समर्च्चति ॥
तेनैवपरितुष्टोऽहं भविष्यामि न संशयः ।
कदाच मच्चिरत्नैश्च ताम्रेण रजतेन वा ॥

अर्चा प्रतिकृतिं कुर्यादर्चनां काञ्चनेन वा ।
पुण्यं दशगुणं दद्यादेतेषामुत्तमोत्तमम् ॥
जयकामोऽर्चयेद्राजा; विद्याकामो द्विजोत्तमः ।
वैश्योऽपि धनकामस्तु शूद्रः पुण्यफलप्रियः ॥
सर्वकामाः स्त्रियो वापि सर्वान् कामानवाप्नुयुः ॥
इति श्रीगौतमीये वैष्णवधर्मशास्त्रे भक्त्यार्चनविधि
नाम एकविंशोऽध्यायः ।

---

## द्वाविंशोऽध्यायः ।

युधिष्ठिरः । कीदृशानान्तु शूद्राणां नानुगृह्णासि चार्चनम् ।
उद्वेग स्तव कस्मात्तु तत् ब्रवीहि सुरोत्तम ! ॥
श्रीभगवानुवाच । व्रतेनाप्यभक्तेन स्पृष्टा शूद्रेण यार्चना ।
तां वर्जयामि यत्नेन श्वपाकविहितामिव ॥
त्रैलोक्येऽस्मिन्निरुद्विग्नो न बिभेमि कुतश्चन ।
दिवा वा यदि वा रात्रौ बुद्विग्नं कुरु लाघवात् ॥
न भवेद्देवदैत्येभ्यो रक्षोभ्यश्चैव यो नृप ! ।
शूद्रवक्त्रार्चिताहेदाद्भयन्तु सुमहन्मम ।
तस्मात्सप्रणवं शूद्रोमन्त्रं मे नैव कीर्तयेत् ॥
प्रणवं हि परं ब्रह्म नित्यं ब्रह्मविदो विदुः ।
द्विज शुश्रूषणं धर्मं शूद्राणां भक्तितो मयि ॥
ते न गच्छन्ति वै स्वर्गं चिन्तयन्तो हि मां सदा ।
द्विजशुश्रूषया शूद्रः परं श्रेयोऽधिगच्छति ॥
द्विजशुश्रूषणादन्यन्नास्ति शूद्रस्य निष्कृतिः ।

रागो द्वेषश्च मोहश्च पारुष्यञ्चानृशंसता ॥
शाठ्यञ्च दीर्घवैरत्व मतिमान मनार्जवम् ।
अनृतञ्चापवादश्च पैशुन्यमतिलोभता ॥
हिंसासूयाभ्यसूयावादो वञ्चना रोषलोलुता ।
अबुद्धिता च नास्तिक्यं भयमालस्यमेव च ॥
अशौचत्वञ्चाकृतज्ञत्वं दम्भता स्तम्भ एव च ।
निकृतिश्चाप्यवज्ञानं पातके शूद्रमाविशेत् ॥
दृष्ट्वा पितामहः शूद्रमभिभूतन्तु तामसैः ।
द्विजशुश्रूषणं धर्मं शूद्राणान्तु प्रयुक्तवान् ॥
नश्यन्ति तामसा भावाः शूद्रस्य मयि भक्तितः ।
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ॥
तदहं भक्त्युपहृतं यत् मूर्ध्ना गृह्णामि हृष्टतः ।
चण्डालो वा प्रियः कश्चित् सर्वपापसमन्वितः ॥
यदि मां सततं ध्यायेत् स पापेभ्यः प्रमुच्यते ।
विद्याविनयसम्पन्ना ब्राह्मणा वेदपारगाः ॥
मयि भक्तिन्न कुर्वन्ति चण्डालसदृशा हि ते ।
वृथा दत्तं वृथा जप्तं वृथाचेष्टं वृथाहुतम् ॥
वृथा तीर्थेतु दत्तं स्याद् यो न भक्तो मयि द्विजः ।
यत्कृतञ्च हुतञ्चापि यदिष्टं दत्तमेव वा ॥
अवैष्णवोक्तं तत्सर्वं राक्षसा एव भुञ्जते ।
स्थावरो जङ्गमो वापि सर्वभूतेषु पाण्डव ! ॥
समत्वेन दयां कुर्यान्मद्भक्तो मित्रशत्रुषु ।
आनृशंस्य मह्हिंसाच दया सत्यं तथार्जवम् ॥
अद्रोहं मम भक्तानाम्भूतानामभय नृप ! ।

इत्येवमादयो ब्रूयान्मद्भक्त्या श्रद्धयान्वितः॥
तस्मात्त्वयो भवेल्लोकः श्वपाकस्यापि पार्थिव!।
किं पुनर्ये समर्चन्ति मद्भक्तविधि पूर्वकम्॥
मद्भक्ता मद्गतप्राणाः स्तुवन्ति ये तु मां सदा।
बहुवर्षसहस्राणि तपस्तप्यति यो नरः॥
नासौ तत्पदमाप्नोति मद्भक्तैर्यदवाप्यते।
मामेव तस्माद्राजर्षे! ध्याहि नित्यमतन्द्रितः॥
अवाप्स्यसि ततः सिद्धिं निश्चयं हि अनुत्तमाम्।
अपार्थकं प्रभाषन्ते शूद्रा भागवता इति॥
न शूद्रा भगवद्भक्ता विप्रा भागवता स्मृताः।
द्वादशाचरतत्त्वज्ञ चतुर्व्यूहविधानवित्॥
अच्छिद्रः पञ्चकालज्ञः सर्वे भागवताः स्मृताः।
ऋग्वेद यजुषो होता यजुषाध्वर्युरेव च॥
सामवेदेन चोद्गाता पुण्येनाभिस्तुवन्ति माम्।
अथर्वशिरसा चैव नित्यमाथर्वणा द्विजाः॥
स्तुवन्ति सततं येचतेहि भागवता स्मृताः।
वेदाधीनाः सदा यज्ञा यज्ञाधीनाश्च देवताः॥
देवता ब्राह्मणाधीना तस्माद्विप्रास्तु देवताः।
अनाश्रिताश्रयन्नास्ति मुख्यमाश्रय माश्रयेत्॥
रुद्रं समाश्रिता देवा रुद्रो ब्रह्माण माश्रितः।
ब्रह्मा मामाश्रितो राजन्नाहं किञ्चिदुपाश्रितः॥
ममाश्रयो न किञ्चित्तु सर्वेषा माश्रयोऽस्म्यहम्।
एवमेतन्मया प्रोक्तं रहस्यमिदमुत्तमम्॥
धर्मप्रिय! ब्रुवे राजन्नित्यमेव समाचर।

इदं पवित्र माख्यानं पुण्यं वेदेन सम्मितम्॥
यः पठेन्मामकं धर्म्म महन्यहनि भारत!।
धर्म्मोऽपि वर्धते तस्य बुद्धिश्चापि प्रसीदति।
पापक्षय मुपैत्येव कल्याणञ्च विवर्धते॥
एतत्पुण्यं पवित्रञ्च पापनाशन मुत्तमम्।
श्रोतव्यं श्रद्धया युक्तै र्मद्भक्तैश्च विशेषतः॥
श्रावयेद्यस्त्विदं भक्त्या प्रयतोऽथ शृणोति वा।
स गच्छेन्मम सायुज्यं नात्र कार्य्या विचारणा॥
यश्चेदं श्रावयेच्छ्राद्धे मद्भक्तो मत्परायणः।
पितरस्तस्य तृप्यन्ति यावदाभूतसंप्लवम्।
वैशम्पायनः। प्रहृष्टः सुमना भूत्वा चिन्तयेताद्भुतां कथाम्॥
पूजयामास गोविन्दं धर्म्मपुत्त्रः पुनः पुनः।
देवा ब्रह्मर्षयः सिद्धा गन्धर्वाप्सरसस्तथा॥
भूता यक्षा ग्रहाश्चैव गुह्यका भुजगा स्तथा।
बालखिल्या महात्मनो मुनय स्तत्त्वदर्शिनः॥
तथा भागवताश्चैव पञ्चकालरता स्तथा।
कौतूहलसमायुक्ता भगवद्भक्तिमागताः॥
श्रुत्वा तु परमं पुण्यं वैष्णवं धर्म्मशासनम्।
विमुक्तपापाः पूतास्ते संपूता स्तत्क्षणेन तु॥
प्रणम्य शिरसा विष्णुं प्रसादसुमुखेक्षणाः।
यथागतं ययुर्देवाः सिद्धाश्चर्षिगणैः सह॥
गतेषु तेषु सर्वेषु केशवः केशिहा तदा।
विसृज्य पाण्डवान् सर्वान् प्रणतान् द्वारकां ययौ॥

ततः प्रणम्य गोविन्दं तदा प्रभृति पाण्डवाः ।
कपिलाद्यानि दानानि दत्त्वा विष्णुपरायणाः ॥
मधुसूदनवाक्यानि स्मृत्वा चैव पुनः पुनः ।
मनसा पूजयामासुर्हृदिस्थं पञ्च पाण्डवाः ॥
युधिष्ठिरोऽपि धर्मात्मा हृदि कृत्वा जनार्दनम् ।
तद्भक्तस्तन्मना युक्तस्तद्याजी तत्परोऽभवत् ॥
एवमेतत्पुरावृत्तं वैष्णवं धर्मशासनम् ।
मया ते कथितं राजन् ! पवित्रं पापनाशनम् ॥
चिन्तयस्व सदा विष्णुं अप्रमत्तः कुरूद्वह ! ।
लोका गच्छन्ति नान्येन तद्विष्णोः परमं पदम् ॥

इति श्रीवृद्धगौतमीये वैष्णवधर्मशास्त्रे द्वाविंशतितमोऽध्यायः ।

समाप्तमुत्तरार्द्धम् ।

समाप्तोऽयं ग्रन्थः ।